**बिन्दुर्नादो बीजमिति तस्य भेदास्समीरिताः ॥ ५० ॥**

फिर वही परशक्तिमय परमेश्वर स्वयं तीन भेदों वाला हो गया, जो बिन्दु, नाद एवं बीज—ये तीन उसके भेद कहे गये हैं ॥ ५० ॥

**बिन्दुः शिवात्मको बीजं शक्तिर्नादस्तयोर्मिथः ।**
**समवायः समाख्यातः सर्वागमविशारदैः ॥ ५१ ॥**

बिन्दु शिवात्मक है, बीज शक्ति है और दोनों का मिथुनीभाव नाद है । इस प्रकार का समवाय सर्वागमविशारदों ने प्रतिपादित किया है ॥ ५१ ॥

**रौद्री बिन्दोस्ततो नादाज्ज्येष्ठा बीजादजायत ।**
**वामा ताभ्यः समुत्पन्ना रुद्र-ब्रह्म-रमाधिपाः ॥ ५२ ॥**
**सञ्ज्ञानेच्छाक्रियात्मानो वह्नीन्द्वर्कस्वरूपिणः ।**

उस बिन्दु से रौद्री तथा नाद से ज्येष्ठा एवं बीज से वामा की उत्पत्ति हुई । फिर उनके मिथुनीभाव से रुद्र, ब्रह्मा और महाविष्णु उत्पन्न हुये, जो सञ्ज्ञान, इच्छा और क्रियात्मा हैं । अग्नि, चन्द्रमा तथा सूर्य इनके स्वरूप हैं ॥ ५२-५३ ॥

**एतदेव प्रयोगसारे—**

**नित्यः सर्वगतः सूक्ष्मः सदानन्दो निरामयः ।**
**विकाररहितः साक्षी शिवो ज्ञेयः सनातनः ॥ ५३ ॥**

यही बात प्रयोगसार में भी कही गई है—नित्य, सर्वगत, सूक्ष्म, सदानन्द, निरामय, विकाररहित, साक्षी इस प्रकार सनातन शिव को जानना चाहिये ॥ ५३॥

**तत् शक्तिभूतः सर्वेशो भिन्नो ब्रह्मादिमूर्तिभिः ।**
**कर्त्ता भोक्ता च संहर्त्ता सकलः स जगन्मयः ॥ ५४ ॥**
**तस्माद् विनिर्गता नित्या सर्वगा विश्वसम्भवा ॥ ५५ ॥**

निम्न भिन्न ब्रह्मादि मूर्त्तियों में वही सर्वेश अपनी शक्ति से प्रगट हुये हैं । वही कर्त्ता, वही भोक्ता, वही संहर्त्ता हैं वही सबकुछ हैं, वही जगन्मय हैं । उन्हीं से नित्या सर्वगा विश्वसम्भवा उत्पन्न हुई है ॥ ५४-५५ ॥

**वायवीयसंहितायामपि—**

**शिवेच्छया पराशक्तिः शिवतत्त्वैकतां गता ।**
**ततः परिस्फुरत् पादौ सर्गे तैलं तिलादिवत् ॥ ५६ ॥**

वायवीयसंहिता में भी बतलाया गया है—शिव की इच्छा से ही वह पराशक्ति शिवतत्त्व से एक हो जाती है । जिस प्रकार तिल में तेल परिस्फुरित होता है, उसी प्रकार उसके पाद परिस्फुरित होते रहते हैं ॥ ५६ ॥

**पञ्चरात्रे च—**

**एवमालोक्य सर्गादौ सच्चिदानन्दरूपिणीम् ।**
**समस्ततत्त्वसङ्घातस्फूर्त्यधिष्ठानरूपिणीम् ॥ ५७ ॥**

पञ्चरात्र में भी बतलाया गया है—उस परम पुरुष ने इस प्रकार अपने मन में विचार कर सृष्टि के आदि में, सच्चिदानन्दस्वरूपा, समस्त तत्त्व सङ्घात स्फूर्त्ति की अधिष्ठान स्वरूपा, उस नित्या प्रकृति को अपने से उत्पन्न किया ॥ ५७ ॥

**व्यक्तां करोति नित्यां तां प्रकृतिं परमः पुमान् ।**
**नादात्मना प्रबुद्धा सा निरामयपदोन्मुखी ।**
**शिवोन्मुखी यदा शक्तिः पुंरूपा सा तदा स्मृता॥ ५८ ॥**

फिर वही निरामय पदोन्मुखी शक्ति, जब 'नाद' करती हुई प्रबुद्ध होकर शिवोन्मुखी हो जाती है, तब वह 'पुरुष' स्वरूपा हो जाती है ॥ ५८ ॥

**अन्यत्रापि—**

**अभिव्यक्ता पराशक्तिरविनाभावलक्षणा ।**
**अखण्डपरचिच्छक्तिर्व्याप्ता चिद्रूपिणी विभुः ॥ ५९ ॥**
**समस्ततत्त्वभावेन विवर्त्ते या समन्विता ।**
**प्रयाति बिन्दुभावं च क्रियाप्राधान्यलक्षणम् ॥ ६० ॥**

अन्यत्र भी बतलाया गया है—वह अविनाभावलक्षणा (जिसके बिना जो न रह सके उसे अविनाभाव कहते हैं यहाँ शिव के बिना वह शक्ति नहीं रह सकती इसलिये अविनाभाव कहा गया) विभु चिद्रूपिणी पराशक्ति, अभिव्यक्त होने पर सर्वत्र व्याप्त हो जाती है । जो समस्त तत्त्व भाव से विवर्त्त समन्वित होकर क्रिया प्राधान्य लक्षण बिन्दुभाव के रूप में परिणत हो जाती है ॥ ५९-६० ॥

**प्रयोगसारे—**

**बिन्दुः शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् ।**
**तयोर्योगेऽभवन्नादस्तेभ्यो जातास्त्रिशक्तयः ॥ ६१ ॥**
**रौद्री बिन्दोः समुद्भूता ज्येष्ठा नादादजायत ।**
**वामा बीजादभूच्छक्तिस्ताभ्यो देवास्त्रयोऽभवन् ॥ ६२ ॥**
**ब्रह्मविष्णवीश्वरास्तत्तन्मण्डलेषु व्यवस्थिताः ॥ इति ॥**

प्रयोगसार में भी कहा गया है—बिन्दु शिवात्मक है और बीज शक्त्यात्मक है। जब वे दोनों एक में मिल जाते हैं तब 'नाद' उत्पन्न होता है । फिर उन तीनों से तीन शक्तियाँ उत्पन्न हुई—बिन्दु से रौद्री शक्ति, नाद से ज्येष्ठा शक्ति, बीज से वामा शक्ति । फिर उन तीनों शक्तियों से क्रमशः ब्रह्मा, विष्णु, ईश्वर उत्पन्न होकर

अपने-अपने मण्डल में व्यवस्थित हो गये ॥ ६१-६२ ॥

**अथ बिन्दुसृष्टिः**

**शारदयाम् (१.११-१४)—**

**भिद्यमानात् परादु विन्दोरव्यक्तात्मा रवोऽभवत् ।**
**शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः ॥ ६३ ॥**

अब शारदातिलक में बिन्दु सृष्टि का प्रतिपादन करते हैं—जब वह पर बिन्दु स्फुरित हुआ तब अव्यक्त स्वरूप महान् शब्द हुआ । सर्वागमविशारद उसी र द को शब्द ब्रह्म कहते हैं ॥ ६३ ॥

**शब्दब्रह्मेति शब्दार्थः शब्दमित्यपरे जगुः ।**

**तस्य चैतन्यात्मकत्वम्**

**न हि तेषां तयोः सिद्धिर्जडत्वादुभयोरपि ॥ ६४ ॥**

यहाँ कोई शब्दब्रह्म का अर्थ 'शब्दसहित अर्थ' कहते हैं अन्य लोग केवल शब्द कहते हैं । किन्तु इस अर्थ से दोनों बातें सिद्ध नहीं होती, क्योंकि दोनों ही जड़ है ॥ ६४ ॥

**चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः ।**

**तस्य कुण्डलीरूपेण प्राणिदेहे स्थितिः**

**तत् प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।**
**वर्णात्मनाऽऽविर्भवति गद्यपद्यादिभेदतः ॥ ६५ ॥**

मेरा मत है कि सभी प्राणियों में रहने वाला 'चैतन्य' ही शब्दब्रह्म है । वही समस्त प्राणियों के शरीर के मध्य में कुण्डली रूप धारण कर गद्य-पद्यादि भाव से वर्ण रूप होकर उत्पन्न होता है ॥ ६५ ॥

**तथा च योगिनीहृदये—**

**स्वरव्यञ्जनभेदेन सप्तत्रिंशत् प्रभेदिनी ।**
**सप्तत्रिंशत् प्रभेदेन षट्त्रिंशत्तत्त्वरूपिणी ॥ ६६ ॥**

जैसा कि योगिनीहृदय नामक ग्रन्थ में भी कहा है—वह कुण्डलिनी स्वर व्यञ्जन भेद से सैंतीस भेदों वाली है । फिर उसी सैंतीस भेदों से वह छत्तीस तत्त्वों वाली हो जाती है ॥ ६६ ॥

**तत्त्वानां लक्षणानि सौभाग्यसुभगोदये—**

**चिदियमनुत्तरशक्तिर्निजेच्छया निखिलमपि जगत्स्रष्टुम् ।**

**पस्पन्दे सस्पन्दः प्रथमः शिवतत्त्वमुच्यते तज्ज्ञैः ॥ ६७ ॥**

तत्त्वों के लक्षण सौभाग्यसुभगोदय में भी बतलाये गये हैं—सर्वप्रथम उत्पन्न होने वाली यह 'चिच्छक्ति' अपनी इच्छा से समस्त जगत् की सृष्टि करने के लिये स्पन्दन युक्त हुई । उसका वही प्रथम स्पन्दन सृष्टिवेत्ताओं द्वारा 'शिवतत्त्व' कहा जाता है ॥ ६७ ॥

**इच्छा सैव स्वेच्छा सन्ततसमवायिनी सती शक्तिः ।**
**सचराचरस्य जगतो बीजं निखिलस्य निजनिलीनस्य ॥ ६८ ॥**

वही इच्छा, वही स्वेच्छा, वही सन्तत समवायिनी, वही सती शक्ति, समस्त सचराचर जगत् का बीज कही गयी है, जिसमें पुनः वही जगत् अपने आप लीन हो जाता है ॥ ६८ ॥

**स्वेच्छा शक्त्युद्गीर्णं जगदात्मतया समाच्छाद्य ।**
**निवसन् स एव निखिलानुग्नहनिरतः सदाशिवोऽभिहितः।**
**विश्वं पश्चात् पश्यन्निदन्तया निखिलमीश्वरो जातः ॥ ६९ ॥**

स्वेच्छा से शक्ति द्वारा उगले हुये सारे जगत् को समावृत कर उसी में निवास करता हुआ, निखिल जगत् पर अनुग्रह में निरत, वही 'सदाशिव' नाम से कहे जाते हैं ॥ ६९ ॥

**सा भवति शुद्धविद्या येदन्ताहन्तयोरभेदमतिः ।**
**मायाविभेदबुद्धिर्निजांशजातेषु निखिलजीवेषु ॥ ७० ॥**

इसके पश्चात् समस्त विश्व को इदन्तया रूप से देखने के कारण 'ईश्वर' कहा जाने लगा । इस विश्व में जिससे इदन्ता और अहन्ता में अभेद मति उत्पन्न होती है वही 'शुद्धविद्या' कही जाती है । अपने अंश से उत्पन्न हुये समस्त जीवों में उसकी माया के कारण ही भेद बुद्धि होती है ॥ ७० ॥

**नित्यं तस्य निरंकुशविभव वेलेव वारिधे रुन्धे ।**
**स तया परिमितमूर्तिः संकुचितसमस्तशक्तिरेष पुमान् ॥ ७१ ॥**
**रविरिव सन्ध्यारक्तः संहृतशक्तिः स्वभासनेऽप्यपटुः ।**
**सम्पूर्णकर्तृताद्या बह्व्यः सन्त्यस्य शक्तयस्तस्य ।**
**सङ्कोचात् सङ्कुचिताः कलादिरूपेण रूढयत्येवम् ॥ ७२ ॥**
**तत् सर्वकर्तृता सा सङ्कुचिता कतिपयार्थमात्रपरा ।**
**किञ्चित् कर्तारममुं कलयन्ती कीर्त्यते कला नाम ॥ ७३ ॥**

जिसका विभव समुद्र की बेला के समान निरङ्कुश है, उसे रोककर वह महाशक्ति परिमित मूर्त्ति वाला तथा संकुचित समस्त शक्ति वाला जिसको बना देती

है वही 'पुरुष' कहा जाता है । उस पुरुष की समस्त शक्ति, अस्ताचलगामी सायङ्कालीन सूर्य के समान रक्त होने से, उपसंहृत हो जाती है । वह अपना तेज प्रसारित करने में भी अशक्त हो जाता है जबकि सम्पूर्ण कर्तृता आदि अनेक शक्तियाँ उस पुरुष में होती हैं । इस प्रकार वह अपने कलादि रूपों से पुरुष को सङ्कोच से भी सङ्कुचित बना देती है । उस महाशक्ति के प्रभाव से पुरुष की सर्वकर्तृता सङ्कुचित होकर, मात्र कतिपय कार्य परक रह जाती है । यतः वह पुरुष को अपनी कला से संकुचित बना कर कुछ ही कार्य की कर्तृता शेष रहने देती है इसलिये उसे 'कला' भी कहा जाता है ॥ ७१-७३ ॥

**सर्वज्ञतास्य शक्तिः परिमिततनुरल्पवेद्यमात्रपरा ।**
**ज्ञानमुपपादयन्ती विद्येति निगद्यते बुधैराद्यैः ॥ ७४ ॥**

अतः वह पुरुष की सर्वज्ञता शक्ति को संकुचित कर अल्पज्ञान मात्र परक बना देती है । पुनः उसमें ज्ञान का उपपादन करती है । इसलिये पूर्व के विद्वानों ने उसे 'विद्या' भी कहा है ॥ ७४ ॥

**नित्यपरिपूर्णतृप्तिः शक्तिस्तस्यैव परिमितानु सती ।**
**भोगेषु रञ्जयन्ती सततममुं रागतत्त्वतां जाता ॥ ७५ ॥**

अतः वही पुरुष की नित्य परिपूर्णतृप्ति रूपा शक्ति को परिमित तृप्ति वाली बना देती है अतः 'राग तत्त्व' वाली कही जाती है ॥ ७५ ॥

**सा नित्यतास्य शक्तिर्निकृष्टनिधनोदयप्रदानेन ।**
**नियति परिच्छेदकरी क्लृप्ता स्यात् कालतत्त्वरूपेण ॥ ७६ ॥**

वही नित्या जब पुरुष की शक्ति को निकृष्ट, निधन तथा उदय प्रदान करती है, तब काल तत्त्व रूप से वह नियति की परिच्छेदकरी कही जाती है ॥ ७६ ॥

**याऽस्याः स्वतन्त्रताख्या शक्तिः सङ्कोचशालिनी सैव ।**
**कृत्याकृत्येष्टवशं नियतममुं नियमयन्त्यभून्नियतिः ॥ ७७ ॥**

उसी महाशक्ति की स्वतन्त्रता नाम वाली जो शक्ति है वही सङ्कोचशालिनी है । वह नियत रूप से पुरुष को कृत्य इष्टवश तथा अकृत्य इष्टवश में नियमित करती है इसलिये वह 'नियति' हो गई ॥ ७७ ॥

**मायापरिग्रहवशाद् बोधो मलिनः पुमान् पशुर्भवति ।**
**कालकलानियतिवशाद् रागाविद्यावशेन सम्बद्धः ॥ ७८ ॥**

माया के परिग्रह के कारण, जब पुरुष का ज्ञान मलिन हो जाता है, तब वही पुरुष पशु हो जाता है, वह काल कला और नियति के वशीभूत हो जाता है और राग अविद्या के वशीभूत हो उसी में बँध जाता है ॥ ७८ ॥

**इच्छादित्रिसमष्टिः शक्तिः शान्तास्य सङ्कुचद्रूपा ।**
**सङ्कलितेच्छाद्यात्मकसत्त्वादिकसाम्यरूपिणी तु सती॥ ७९ ॥**

ज्ञान इच्छा क्रिया इन तीनों की समष्टि शक्ति है जो शान्तरूपा है और सङ्कुचद्रूपा भी है । वह सङ्कलितेच्छाद्यात्मक सत्त्वादि साम्यरूपिणी भी है ॥ ७९ ॥

**बुद्ध्यादिसामरस्यस्वरूपचित्तात्मिका मता प्रकृतिः ।**
**इच्छास्य रजोरूपाहंकृतिरासीदहं प्रतीतिकरी ॥ ८० ॥**

बुद्ध्यादि सामरस्यस्वरूप चित्तात्मिका शक्ति 'प्रकृति' कही जाती है । पुरुष की रजोरूपा शक्ति 'इच्छा' है । अहं की प्रतीति से युक्त शक्ति 'अहङ्कृति' है ॥८०॥

**ज्ञानापि सत्त्वरूपा निर्णयबोधस्य कारणं बुद्धिः ।**
**तस्य क्रिया तमोमयमूर्तिर्मन उच्यते विकल्पकरी ॥ ८१ ॥**

सत्त्वरूपा शक्ति 'ज्ञाना' है निर्णय के ज्ञान में प्रधान जो कारण है वही 'बुद्धि' है शक्ति की तमोमयी मूर्त्ति 'क्रिया' है और विकल्पकरी शक्ति मन है ॥ ८१ ॥

**वामादिपञ्चभेदः स एव सङ्कुचितविग्रहो देवः ।**
**ज्ञानक्रियोपरागप्राधान्याद् विविधविषयरूपोऽभूत्॥ ८२ ॥**

वामादिपञ्चभेद रूप देव जब संकुचित रूप में हो गये, तब वही ज्ञान, क्रिया उपराग के प्राधान्य होने के कारण विविध विषय बन गये ॥ ८२ ॥

**श्रोत्रं चक्षुःस्पर्शनजिह्वाघ्राणानि बोधकरणानि ।**
**वाक्पाणिपादपायूपस्थाख्याकानि कर्मकरणानि ॥ ८३ ॥**

श्रोत्र, चक्षुः, स्पर्श, जिह्वा और घ्राण—ये ज्ञान में कारण हैं तथा वाक्, पाणि, पाद, पायू एवं उपस्थ—ये पाँच कर्म में कारण है ॥ ८३ ॥

**शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतसूक्ष्माणि ।**
**अयमेवातिनिकृष्टो जातो भूतात्मनापि भूतेशः ॥ ८४ ॥**

शब्द, स्पर्श, रूप, रस एवं गन्ध—ये सूक्ष्मभूत कहे जाते हैं । यही भूतेश अत्यन्त निकृष्ट पञ्चभूत रूप में परिणत हो गये ॥ ८४ ॥

**गगनमनिलश्च तेजः सलिलं भूमिश्च पञ्चभूतानि ।**
**श्रोत्रादिकरणवेद्याः शब्दाद्यास्तानि वेदकान्येषाम् ॥ ८५ ॥**

गगन, अनिल, तेज, सलिल और भूमि—ये पाँच महाभूत कहे जाते हैं । ये शब्दादि एवं श्रोत्रादि करणों से जाने जाते हैं । इसी प्रकार अन्य भी अन्यों से वेद्य होते हैं ॥ ८५ ॥

**वचनकरी वागासीत् पाणिः स्यात् करणभूत आदाने ।**
**गमनविसर्गानन्दत्रितये पादादिकं करणम् ॥ ८६ ॥**

वचन बोलने वाली 'वाणी' है । लेन-देन करने वाला 'पाणि' (= हस्त) है । गमन-विसर्ग और आनन्द में पादादि करण है ॥ ८६ ॥

**गन्धवती भूमिः स्यादापस्सांसिद्धिकद्रवास्तेजः ।**
**उष्णस्पर्शमरूपस्पर्शो वायुरम्बरं शब्दम् ॥ ८७ ॥ इति**

गन्धवती 'भूमि' है, सांसिद्धिक द्रव वाला 'जल' है और जिसका स्पर्श उष्ण है वह 'तेज' है । जिसका कोई रूप नहीं है, किन्तु स्पर्श वाला है वह 'वायु' है और जिसमें शब्द है वह 'आकाश' है ॥ ८७ ॥

**अन्यच्च शारदायाम् (५.७९)—**

**अथ तत्त्वानि बहुधा शैवाद्यागमभेदतः ।**
**षट्त्रिंशच्छिवतत्त्वानि द्वात्रिंशद् वैष्णवानि तु ॥ ८८ ॥**

शारदातिलक में और भी बतलाया गया है—अब शैवादि आगमों के भेद से तत्त्वों का निरूपण करते हैं । छत्तीस शिवतत्त्व कहे गये हैं, वैष्णवतत्त्वों की संख्या बत्तीस कही गई है ॥ ८८ ॥

**चतुर्विंशतितत्त्वानि मैत्राणि प्रकृतेः पुनः ।**
**उक्तानि दश तत्त्वानि सप्त च त्रिपदात्मनः ॥ ८९ ॥**

मैत्र के मत से चौबीस तत्त्व कहे गये हैं प्रकृति मत में दश तत्त्व तथा त्रिपदात्मा में सात तत्त्व कहे गये हैं ॥ ८९ ॥

**तत्त्वानि शैवान्युच्यन्ते शिवः शक्तिः सदाशिवः ।**
**ईश्वरो विद्यया सार्धं पञ्चशुद्धान्यमूनि हि ।**
**माया कालश्च नियतिः कला विद्या पुनः स्मृता ॥ ९० ॥**
**रागः पुरुष एतानि शुद्धाशुद्धानि सप्त च ।**
**प्रकृतिर्बुद्ध्यहङ्कारौ मनो ज्ञानेन्द्रियाण्यथ ॥ ९१ ॥**
**कर्मेन्द्रियाणि तन्मात्राः पञ्चभूतानि देशिकाः ।**
**एतान्याहुरशुद्धानि चतुर्विंशतिरागमे ॥ ९२ ॥**
**शैवानामपि तत्त्वानां विभागोऽत्र प्रदर्शितः ।**

अब शैवतत्त्व कहा जा रहा है—शिव, शक्ति, सदाशिव और विद्या के साथ ईश्वर ये पाँच तत्त्व शुद्ध कहे गये हैं । माया, काल, नियति, कला और विद्या फिर राग और पुरुष ये सात तत्त्व 'शुद्ध भी है और अशुद्ध' भी हैं । प्रकृति,

बुद्धि, अहङ्कार, मन, ज्ञानेन्द्रियाँ, कर्मेन्द्रियाँ, तन्मात्रायें और पञ्चमहाभूत—ये छत्तीस तत्त्व शैवतत्त्व हैं ऐसा आचार्य लोग कहते हैं। शैवागम में चौबीस तत्त्व केवल अशुद्ध तत्त्व हैं। यहाँ हमने प्रसङ्गवश शैव तत्त्वों का विभाग भी प्रदर्शित कर दिया है ॥ ९०-९३ ॥

### वैष्णवतत्त्वानि

**जीवप्राणधियश्चित्तं ज्ञानकर्मेन्द्रियाण्यथ ॥ ९३ ॥**
**तन्मात्राः पञ्चभूतानि हृत्पद्मं तेजसात् त्रयम् ।**
**वासुदेवादयश्चेति तत्त्वान्येतानि शार्ङ्गिणः ॥ ९४ ॥**

जीव, प्राण, बुद्धि, चित्त, पञ्चज्ञानेन्द्रियाँ, पञ्चकर्मेन्द्रियाँ, पञ्चतन्मात्रायें, पञ्चमहाभूत, हृत्पद्म, सूर्य, चन्द्र और अग्न्यात्मक तीन तेज तथा वासुदेव, सङ्कर्षण, प्रद्युम्न और अनिरुद्ध ये बत्तीस वैष्णव तत्त्व कहे गये हैं ॥ ९३-९४ ॥

### मैत्रतत्त्वानि

**पञ्चभूतानि तन्मात्रा इन्द्रियाणि मनस्तथा ।**
**गर्वो बुद्धिः प्रधानं च मैत्राणीति विदुर्बुधाः ॥ ९५ ॥**

पञ्चभूत, पञ्चतन्मात्रायें, दश इन्द्रियाँ मन, अहङ्कार, बुद्धि और प्रधान (प्रकृति)—ये चौबीस मैत्र तत्त्व कहे गये हैं, ऐसा बुद्धिमान् (सांख्यमत के) लोग कहते हैं ॥ ९५ ॥

### प्रकृतितत्त्वानि

**निवृत्त्याद्याः कलाः पञ्च ततो बिन्दुकलाः पुनः ।**
**नादः शक्तिः सदापूर्वः शिवश्च प्रकृतेर्विदुः ॥ ९६ ॥**

निवृत्यादि पाँच कलायें, तदनन्तर बिन्दु कलायें, नाद, शक्ति एवं सदाशिव—ये प्रकृति के तत्त्व कहे गये हैं ॥ ९६ ॥

### त्रिपदतत्त्वानि

**आत्मविद्या शिवः पश्चाच्छिवो विद्या स्वयं पुनः ।**
**सर्वतत्त्वं च तत्त्वानि प्रोक्तानि त्रिपदात्मनः ॥ ९७ ॥**

१. आत्मा, २. विद्या, ३. शिव, ४. सदाशिव, ५. विद्या, ६. आत्मा और ७. सर्वतत्त्व—ये सात त्रिपदात्मा तत्त्व कहे गये हैं ॥ ९७ ॥

### अथ नादसृष्टिक्रमः

**अथ नादात्मनः शम्भोः कालबन्धोः कलात्मनः ।**
**अजायत जगत्साक्षी सर्वव्यापी सदाशिवः ॥ ९८ ॥**

अब नादसृष्टि का क्रम कहते हैं—इसके बाद कालबन्धु, कलात्मा, नादात्मा शम्भु से जगत्साक्षी सर्वव्यापी सदाशिव उत्पन्न हुये ॥ ९८ ॥

**सदाशिवोद्भवस्त्वीशस्ततो रुद्रसमुद्भवः ।**
**ततो विष्णुस्ततो ब्रह्मा तेषामेवं समुद्भवः ॥ ९९ ॥**

सदाशिव से ईश पुनः ईश से रुद्र की उत्पत्ति हुई, उनसे विष्णु, उनसे ब्रह्मा इस प्रकार उनकी उत्पत्ति हुई ॥ ९९ ॥

**मूलभूतात्ततोऽव्यक्ताद् विकृतात् परवस्तुनः ।**
**आसीत् किल महत्तत्त्वं गुणान्तःकरणान्तकम् ॥ १०० ॥**

फिर मूलभूत-विकृत परवस्तु अव्यक्त से महत् तत्त्व उत्पन्न हुआ ॥ १०० ॥

**अभूत् तस्मादहङ्कारस्त्रिविधः सृष्टिभेदतः ।**
**वैकारिकादहङ्काराद्देवा वैकारिका दश ॥ १०१ ॥**

उस महत्तत्त्व से अहङ्कार हुआ जो सृष्टिभेद से तीन प्रकार का कहा गया है । प्रथम वैकारिक अहङ्कार से दश वैकारिक देवता उत्पन्न हुये ॥ १०१ ॥

**दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ।**
**तैजसादिन्द्रियाण्यासँस्तन्मात्राक्रमयोगतः ॥ १०२ ॥**

ये दिग्, वात, अर्क, प्रचेता, अश्विनी, वह्नि, इन्द्र, उपेन्द्र और मित्र नाम वाले हैं । फिर तन्मात्रा क्रम योग से तैजस इन्द्रियाँ उत्पन्न हुई ॥ १०२ ॥

**भूतादिकादहङ्कारात् पञ्चभूतानि जज्ञिरे ।**
**शब्दात् पूर्वं वियत् स्पर्शाद् वायुरूपाद् हुताशनः ॥ १०३ ॥**
**रसादम्भः क्षमा गन्धादिति तेषां समुद्भवः ।**
**स्वच्छं वियन्मरुत् कृष्णो रक्तोऽग्निर्विशदं पयः ॥ १०४ ॥**
**पीता भूमिः पञ्चभूतान्येकैकाधारतो विदुः ।**
**शब्दस्पर्शरूपरसगन्धा भूतगुणाः स्मृताः ॥ १०५ ॥**

फिर भूतादि अहङ्कार से पञ्चभूतों की उत्पत्ति हुई । शब्द से पूर्व आकाश, स्पर्श से पूर्व वायु, रूप से पूर्व हुताशन, रस से पूर्व जल तथा गन्ध से पूर्व पृथ्वी इस प्रकार पञ्चभूत उत्पन्न हुये । आकाश का वर्ण स्वच्छ है वायु का वर्ण काला है, अग्नि का वर्ण लाल है । जल का वर्ण स्वच्छ है और पृथ्वी का वर्ण पीत है । ये पञ्चभूत एक-एक आधार वाले कहे गये हैं । शब्द, स्पर्श, रूप, रस तथा गन्ध क्रमशः ये पञ्चभूतों के पाँच गुण कहे गये हैं ॥ १०३-१०५ ॥

 **धरादिपञ्चभूतानां निवृत्त्याद्याः कलाः स्मृताः ।**

**निवृत्तिः सप्रतिष्ठा स्याद् विद्या शान्तिरनन्तरम्।**
**शान्त्यतीतेति विज्ञेया नाददेहसमुद्भवाः ॥ १०६ ॥**

पृथ्व्यादि पाँच भूतों की निवृत्ति आदि पाँच कलायें कही गई हैं । प्रतिष्ठा के साथ निवृत्ति, इसके बाद विद्या, फिर शान्ति, तदनन्तर शान्त्यतीता—ये पाँच कलायें हैं जो नाद के शरीर से उत्पन्न हुई हैं ॥ १०६ ॥

**अन्यच्च वायवीयसंहितायाम्—**

**शक्तिः प्रथमसम्भूता शान्त्यतीतपदोत्तरा ।**
**शान्त्यतीतपदाच्छक्तेस्ततः शान्तिपदं क्रमात् ॥ १०७ ॥**
**ततो विद्यापदं तस्मात् प्रतिष्ठापदसंग्रहः ।**
**निवृत्तिपदमुत्पन्नं प्रतिष्ठापदतः परम् ॥ १०८ ॥**

वायवीयसंहिता में और भी बतलाया गया है—पहले शक्ति उत्पन्न हुई । इसके बाद शान्त्यतीता और शान्त्यतीत शक्ति के बाद शान्तिपद की उत्पत्ति हुई । इसके बाद विद्यापद की और विद्यापद से प्रतिष्ठापद की तथा प्रतिष्ठापद से निवृत्तिपद की उत्पत्ति हुई ॥ १०८ ॥

**एवमुक्ता समासेन सृष्टिरीश्वरचोदिता ।**
**आनुलोम्यादथैतेषां प्रातिलोम्येन संहृतिः ॥ १०९ ॥**

इस प्रकार ईश्वर से प्रेरित सृष्टि को हमने सङ्क्षेप में कहा । इनके अनुलोम क्रम से चराचर जगत् की 'सृष्टि' होती है और इन्हीं के प्रतिलोम क्रम से सृष्टि का 'संहार' होता है ॥ १०९ ॥

**अस्मात् पञ्चपदोद्दिष्टान्न सृष्ट्यन्तरमिष्यते ।**
**कलाभिः पञ्चभिर्व्याप्तं तस्माद्विश्वमिदं जगत् ॥ ११० ॥ इति**

इस पञ्चपदोपदिष्ट से अतिरिक्त अन्य कोई सृष्टि नहीं होती । इस कारण यह सारा विश्व पञ्चकलाओं से व्याप्त है ॥ ११० ॥

**अथ बीजस्य शक्तिमूलत्वात्, तत्सृष्टिक्रमो यथा—**

**ततश्चैतन्यरूपा सा सर्वगा विश्वरूपिणी ।**
**शिवसन्निधिमासाद्य नित्यानन्दगुणोदया ॥ १११ ॥**
**दिक्कालाद्यनवच्छिन्ना सर्वदेहानुगा शुभा ।**
**परापरविभागेन परशक्तिरियं स्मृता ॥ ११२ ॥**

यतः बीज शक्ति का मूल है अतः 'बीजसृष्टि' क्रम कहते हैं—इसके बाद सर्वगा, विश्वरूपिणी और नित्यानन्दगुणोदया वही चैतन्यरूपा शक्ति शिव का

सन्निधान प्राप्त करती है । वह दिक् एवं काल से अनवच्छिन्न है, सभी के शरीर में निवास करती है और जीवों का कल्याण करती है । यही परा एवं पर भेद से 'पराशक्ति' कही जाती है ॥ १११-११२ ॥

**योगिनां हृदयाम्भोजे नृत्यन्ती नित्यमञ्जसा ।**
**आधारे सर्वभूतानां स्फुरन्ती विद्युदाकृतिः ॥ ११३ ॥**

यह अकस्मात् योगियों के हृदय में नृत्य करती है और सभी प्राणियों के आधारस्थान अर्थात् मूलाधार में बिजली के समान स्फुरित होती रहती है ॥११३॥

**शङ्खावर्तक्रमाद्देवी सर्वमावृत्त्य तिष्ठति ।**
**कुण्डलीभूतसर्पाणामङ्गश्रियमुपेयुषी ॥ ११४ ॥**

जिस प्रकार शङ्ख के आवर्त्त के आकार के समान सारे संसार को आवृत्त कर स्थित रहती है और जिस प्रकार सूर्य कुण्डली के आकार में स्थित रहता है; उसी प्रकार का आकार बना कर यह मूलाधार में स्थित रहती है ॥ ११४ ॥

**सर्वदेवमयी देवी सर्वमन्त्रमयी शिवा ।**
**सर्वतत्त्वमयी साक्षात्सूक्ष्मात्सूक्ष्मतरा विभुः ॥ ११५ ॥**

यही कुण्डलिनी सर्वदेवी मयी है, सर्वमन्त्रमयी शिवा है और सर्वतत्त्वमयी है, यह साक्षात् सूक्ष्म से भी अत्यन्त सूक्ष्म है और विभु है ॥ ११५ ॥

**त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी ।**
**द्विचत्वारिंशदर्णात्मा पञ्चाशद्वर्णरूपिणी ॥ ११६ ॥**

तीनों लोकों की जननी है शब्द ब्रह्मस्वरूपा देवी है । द्विचत्वारिशद् वर्णात्मा है और पञ्चाशद् वर्ण स्वरूपा है ॥ ११६ ॥

**गुणिता सर्वगात्रेण कुण्डलीपरदेवता ॥ ११७ ॥**
**विश्वात्मना प्रबुद्धा सा सूते मन्त्रमयं जगत् ।**
**एकधा गुणिता शक्तिः सर्वविश्वप्रवर्तिनी ॥ ११८ ॥**

यही कुण्डली पर देवता, जब विश्वात्मा रूप से प्रबुद्ध होकर, जब एक गुणित होती है, तब मन्त्रमय जगत् उत्पन्न होता है और अपनी शक्ति से सारे जगत् का प्रवर्त्तन करती है ॥ ११७-११८ ॥

**वेदादिबीजं श्रीबीजं शक्तिबीजं मनोभवम् ।**
**प्रासादं तुम्बुरं पिण्डं चिन्तारत्नं गणेश्वरम् ॥ ११९ ॥**
**मार्त्तण्डं भैरवं दौर्गं नारसिंहं वराहजम् ।**
**वासुदेवं हयग्रीवं बीजं श्रीपुरुषोत्तमम् ॥ १२० ॥**

**अन्यान्यपि च बीजानि तदोत्पादयति ध्रुवम् ।**
**यदा भवति सा संविद् द्विगुणीकृतविग्रहा ॥ १२१ ॥**
**हंसवर्णौ परात्मानौ शब्दार्थौ वासरक्षपे ।**
**सृजत्येषा परा देवी तदा प्रकृतिपूरुषौ ॥ १२२ ॥**
**यद् यदन्यज्जगत्यस्यां युग्मं तत् तदजायत ।**

उसी समय वह—वेदादि बीज (ॐ), श्रीबीज (श्रीं), शक्ति बीज (ह्रीं), मनोभव बीज (क्लीं), प्रासाद, तुम्बुर, पिण्ड, चिन्तामाणी बीज, गणेश्वर बीज, मार्त्तण्ड बीज, भैरवबीज, दुर्गाबीज, नारसिंहबीज (क्ष्रौं), वराहबीज, वासुदेव बीज, हयग्रीव बीज, श्री पुरुषोत्तम बीज—इसी प्रकार अन्यान्य बीजों को निश्चित रूप से उत्पन्न करती है । जब वह ज्ञान रूप से द्विगुणित शरीर धारण करती है तब दो हंसवर्ण, आत्मा-परमात्मा, शब्द-अर्थ, दिन-रात, प्रकृति और पुरुष, इस प्रकार वह देवी जगत् में जितनी युग्म-युग्म वस्तुयें हैं उनको उत्पन्न करती है ॥ ११९-१२३ ॥

**त्रिगुणीकृतसर्वाङ्गी चिद्रूपा शिवगेहिनी ॥ १२३ ॥**
**प्रसूते त्रैपुरं मन्त्रं मन्त्रं शक्ति विनायकम् ।**
**पाशाद्यं त्र्यक्षरं मन्त्रं त्रैपुटश्चन्द्रनायकम् ॥ १२४ ॥**
**सौरं मृत्युञ्जयं शाक्तं शाम्भवं विनतासुतम् ।**
**वागीशी त्र्यक्षरं मन्त्रं नीलकण्ठं विषापहम् ॥ १२५ ॥**
**यन्त्रं त्रिगुणितं देव्या लोकत्रयगुणत्रयम् ।**
**धामत्रयं सा वेदानां त्रयं वर्णत्रयं शुभम् ॥ १२६ ॥**
**त्रिपुष्करं स्वरान् देवी ब्रह्मादीनां त्रयं त्रयम् ।**
**वह्नेः कालत्रयं शक्तेस्त्रयं वृत्तित्रयं महत् ॥ १२७ ॥**
**नाडीत्रयं त्रिवर्गं सा यद् यदन्यत् त्रिधा मतम् ।**
**चतुःप्रकारं गुणिता शाम्भवी शर्मदायिनी ॥ १२८ ॥**

जब वह चिद्रूपा शिवगेहिनी अपने शरीर को त्रिगुणित करती है । तब वह त्रिपुरा मन्त्र, शक्ति मन्त्र, विनायक मन्त्र, पाशादित्र्यक्षर मन्त्र, त्रैपुर-चन्द्रनायक और मृत्युञ्जय, शाक्त, शाम्भव, गारुड, वागीशी, त्र्यक्षर मन्त्र, नीलकण्ठ, विषापह, त्रिगुणित, देवीयन्त्र, तीन लोक, तीन गुण, धाम त्रय, वेदत्रय, वर्णत्रय, त्रिपुष्कर, तीन स्वर, तीन देवियाँ, ब्रह्मादित्रय, अग्नित्रय, कालत्रय शक्तित्रय, वृत्तित्रय, नाडीत्रय, त्रिवर्ग—इस प्रकार इस सृष्टि में जितनी तीन-तीन वस्तुयें हैं उनकी सृष्टि करती है ॥ १२३-१२८ ॥

**तदानीं पद्मिनीबन्धोः करोति चतुरक्षरम् ।**
**चतुर्वर्णं महादेव्या देवीतत्त्वचतुष्टयम् ॥ १२९ ॥**

**चतुरः सागरानन्तःकरणानां चतुष्टयम् ।**
**सूक्ष्मादींश्चतुरो भावान् विष्णोर्मूर्त्तिचतुष्टयम् ॥ १३० ॥**
**चतुष्टयं गणेशानामात्मादीनां चतुष्टयम् ।**
**ओजा पूकादिकं पीठं धर्मादीनां चतुष्टयम् ॥ १३१ ॥**
**दमकादीन् गजान् देवी यद् यदन्यच्चतुष्टयम् ।**

जब कल्याणकारिणी वह शाम्भवी देवी अपने शरीर को चतुर्गुणित करती है तब वह सूर्य को चतुरक्षर, महादेवी का चार वर्ण, देवीतत्त्व चतुष्टय, चार सागर, अन्तःकरण चतुष्टय, सूक्ष्मादि चार भाव, विष्णु की मूर्त्ति चतुष्टय, गणेश चतुष्टय, आत्म चतुष्टय, ओजा पूकादि पीठ चतुष्टय, धर्मादि चतुष्टय, दमकादि गज चतुष्टय, इस प्रकार इस जगत् में जितनी-जितनी चतुःसंख्याक वस्तुयें हैं वह उनका सृजन करती है ॥ १२९-१३२ ॥

**पञ्चधा गुणिता पत्नी शम्भोः सर्वार्थसाधिनी ॥ १३२ ॥**
**त्रिपुरा पञ्चकूटं सा तस्याः पञ्चाक्षरद्वयम् ।**
**पञ्चरत्नं महादेव्याः सर्वकामफलप्रदम् ॥ १३३ ॥**
**पञ्चाक्षरं महेशस्य पञ्चवर्णान् गरुत्मतः ।**
**सम्मोहनादिकान् पञ्च कामबाणान् सुरद्रुमान्॥ १३४ ॥**
**पञ्च प्राणादिकान् वायून् पञ्चवर्णान् महेशितुः ।**
**मूर्त्ताः पञ्चकलाः पञ्च पञ्चब्रह्मऋचः क्रमात् ॥ १३५ ॥**
**सृजत्येषा परा शक्तिर्वेदवेदार्थरूपिणी ।**

जब सर्वार्थदायिनी वह शम्भुपत्नी अपने को पञ्चगुणित बनाती है । तब वह त्रिपुरा, पञ्चकूट, दो त्रिपुरा पञ्चाक्षर, महादेवी का पञ्चरत्न, जो सभी कामनाओं को पूर्ण करने वाला है, महेश्वर का पञ्चाक्षर मन्त्र, गरुड के पाँच वर्ण, कामदेव के सम्मोहनादि पाँच बाण, पाँच सुरद्रुम, पञ्च प्राण, पञ्चवायु, महेश्वर के पाँच वर्ण, महेश्वर की पाँच मूर्त्तियाँ, पञ्चकलायें, पाँच-पाँच ब्रह्मऋचायें—इस प्रकार पाँच-पाँच संख्याक वस्तुओं की सृष्टि यही वेदवेदार्थरूपिणी पराशक्ति करती है ॥ १३२-१३६॥

**षोढा सा गुणिता देवी धत्ते मन्त्रं षडक्षरम् ॥ १३६ ॥**
**षट्कूटं त्रिपुरामन्त्रं गाणपत्यं षडक्षरम् ।**
**षडक्षरं हिमरुचेर्नरसिंहं षडक्षरम् ॥ १३७ ॥**
**ऋतून् वसन्तप्रभवान् षण्मोदादीन् गणाधिपान् ।**
**कोशानूर्मीन् रसान् शक्तीः शाकिन्याद्याः षडध्वनः॥ १३८ ॥**
**यन्त्रं षड्गुणितं शक्तेः षडाधारानजीजनत् ।**
**षड्विधं यज्जगत्यस्मिन् सर्वं तत् परमेश्वरी॥ १३९ ॥**

जब वह षड्गुणित रूप में होती है तब वह षडक्षर मन्त्र, षट्कूट त्रिपुरामन्त्र, षडक्षर गाणपत्य मन्त्र, षडक्षर चन्द्रमा का मन्त्र, षडक्षर नारसिंह मन्त्र, वसन्तादि षड् ऋतुयें, मोद-प्रमोदादि षड्विनायक, छह कोश, छह ऊर्मियाँ, छह रस, शाकिनी आदि छह शक्तियाँ, वर्णाध्वादि षडध्वा, शक्ति का षड्गुणित यन्त्र और शक्ति के षडाधार की सृष्टि करती है। इस प्रकार इस जगत् में जितनी छह संख्याक वस्तुयें हैं, परमेश्वरी ने उन्हें उत्पन्न किया ॥ १३६-१३९ ॥

**सप्तधा गुणिता नित्या शङ्करार्धशरीरिणी।**
**सप्तार्णं त्रिपुरामन्त्रं सप्तवर्णं विनायकम् ॥ १४० ॥**
**सप्तकं व्याहृतीनां सा सप्तवर्णं सुदर्शनम्।**
**लोकान् गिरीन् स्वरान् धातून् मुनीन् द्वीपान् ग्रहानपि ॥ १४१ ॥**
**समिधः सप्त संख्याताः सप्तजिह्वा हविर्भुजः।**
**अन्यत् सप्तविधं यद् यत्तदस्याः समजायत ॥ १४२ ॥**

जब वह शङ्करार्धशरीरिणी सप्तगुणित हुई, तब सात अक्षर का त्रिपुरा मन्त्र, सप्तवर्ण वाले विनायक मन्त्र, सप्तव्याहृतियाँ, सप्तवर्ण वाले सुदर्शन मन्त्र, स्वर्गादि सप्तलोक, सप्त मर्यादा पर्वत, सप्तस्वर, सप्तधातु, सप्तमुनि, सप्तद्वीप, सप्तग्रह, सप्त समिधायें और अग्नि की सप्त जिह्वायें—इस प्रकार जगत् में जितनी भी सप्त वस्तुयें हैं वे सभी उनसे उत्पन्न हुई ॥ १४०-१४२ ॥

**अष्टधा गुणिता शक्ति शैवमष्टाक्षरद्वयम्।**
**विष्णोः श्रीकरनामानं मन्त्रमष्टाक्षरं परम् ॥ १४३ ॥**
**अष्टाक्षरं हरेः शक्तेरष्टाक्षरयुगं परम्।**
**भानोरष्टाक्षरं दौर्गमष्टार्णं परमात्मनः ॥ १४४ ॥**
**अष्टार्णं नीलकण्ठस्य वासुदेवात्मकं मनुम्।**
**यन्त्रं कामार्गलं दिव्यं देवीयन्त्रं घटार्गलम् ॥ १४५ ॥**
**गन्धाष्टकं शुभं देवीदेवानां हृदयङ्गमम्।**
**ब्राह्माद्या भैरवान् शर्वमूर्त्तीराशावसूनपि ॥ १४६ ॥**
**अष्टपीठं महादेव्या अष्टाष्टकसमन्वितम्।**
**अष्टौ च प्रकृतीर्विघ्नान् वक्रतुण्डादिकान् क्रमात् ॥ १४७ ॥**
**अणिमादिगुणान् नागान् वह्नेर्मूर्त्तीर्यमादिकान्।**
**आत्माष्टकं जगत्यन्यत् सर्वं वितनुते तदा ॥ १४८ ॥**

जब वह देवी अष्टगुणित हुई तो उसने शिव के दो प्रकार के अष्टाक्षर मन्त्र, विष्णु का श्रीकर नाम वाला मन्त्र जिसमें आठ अक्षर हैं और विष्णु के अष्टाक्षर मन्त्र, शक्ति के दो अष्टाक्षर मन्त्र, सूर्य के अष्टाक्षर मन्त्र, दुर्गा के तथा परमात्मा

के अष्टाक्षर मन्त्र, नीलकण्ठ का अष्टाक्षर मन्त्र, वासुदेवात्मक अष्टाक्षर मन्त्र, दिव्य कामार्गलयन्त्र, देवी का घटार्गल यन्त्र, शुभकारक अष्टगन्ध जो देवियाँ और देवताओं का अत्यन्त प्रिय कारक है । ब्रह्मादि, भैरव, अष्ट शर्वमूर्त्ती, अष्ट दिशायें, अष्ट वसु, महादेवी के अष्टाष्टक समन्वित अष्ट पीठ, अष्ट प्रकृतियाँ, अष्ट विघ्न, अष्ट वक्रतुण्डादि, अष्ट अणिमादि, अष्टगुण, अष्ट नाग, अष्ट अग्नि की मूर्त्तियाँ, अष्ट यमादि और आत्माष्टक—इस प्रकार जगत् में जितने अष्टसंख्यक पदार्थ हैं, वह परमेश्वरी उनकी सृष्टि करती है ॥ १४३-१४८ ॥

**गुणिता नवधा नित्या सूते मन्त्रं नवात्मकम् ।**
**नवकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी ॥ १४९ ॥**
**नवकं पीठशक्तीनां श्रृङ्गारादीन् रसान् नव ।**
**माणिक्यादीनि रत्नानि नववर्गयुतानि सा ॥ १५० ॥**
**नवकं प्राणदूतीनां मण्डलं नवकं शुभम् ।**
**यद् यन्नवात्मकं लोके सर्वमस्या उदञ्चति ॥ १५१ ॥**

जब वह नित्या नवगुणित होती है तब नवात्मक मन्त्र, नव शक्ति तत्त्व, नवतत्त्व रूपा महेश्वरी, नव पीठ शक्तियाँ, नव श्रृङ्गार, नव रस, नव संख्याक माणिक्यादि रत्न, नव वर्ग, नव प्राणदूतियाँ, नव शुभकारक मण्डल—इस प्रकार लोक में जितनी भी नव संख्याक वस्तुयें हैं उन सभी का वह परमेश्वरी सर्जन करती है ॥ १४९-१५१ ॥

**दशधा गुणिता शम्भोर्भाविनी भवदुःसहा ।**
**दशाक्षरं गणपतेस्त्वरितायाा दशाक्षरम् ॥ १५२ ॥**
**दशाक्षरं सरस्वत्या यक्षिण्याश्च दशाक्षरम् ।**
**वासुदेवात्मकं मन्त्रमश्वारूढा दशाक्षरम् ॥ १५३ ॥**
**त्रिपुरा दशकूटं सा त्रिपुराया दशाक्षरम् ।**
**नाम्ना पद्मावती मन्त्रं रमामन्त्रं दशाक्षरम् ॥ १५४ ॥**
**दशकं शक्तितत्त्वानां तत्त्वरूपा महेश्वरी ।**
**नाडीनां दशकं विष्णोरवतारान् दश क्रमात् ॥ १५५ ॥**
**दशकं लोकपालानां यद् यदन्यत् सृजत्यसौ ।**

जब भवदुःसहा शम्भुपत्नी अपने शरीर को दशगुणित करती है तब गणपति के दशाक्षर मन्त्र, त्वरिता के दशाक्षर मन्त्र, सरस्वती के दशाक्षर मन्त्र, यक्षिणी के दशाक्षर मन्त्र, वासुदेवात्मक दशाक्षर मन्त्र, अश्वारूढा के दशाक्षर मन्त्र, त्रिपुरा के दशकूट, त्रिपुरा के दशाक्षर मन्त्र तथा दशाक्षर वाले पद्मावती मन्त्र, दशाक्षर रमा मन्त्र, दश भक्तितत्त्व, दश नाडियाँ, विष्णु के क्रमशः होने वाले दशावतार, दश

लोकपाल इनके अतिरिक्त और जितनी भी दश संख्याक वस्तुयें हैं उनकी सृष्टि करती है ॥ १५२-१५६ ॥

**एकादश क्रमात् संविद् गुणिता सा जगन्मयी ॥ १५६ ॥**
**रुद्रैकादशिनीमाद्यां शक्तेरेकादशाक्षरम् ।**
**एकादशाक्षरं वाण्या रुद्रानेकादश क्रमात् ॥ १५७ ॥**
**समुद्गिरति सर्वज्ञा गुणिता द्वादश क्रमात् ।**

जब वह जगन्मयी संवित् एकादशगुणित होती है, तब वह आद्या रुद्रैकादशिनी शक्ति के एकादशाक्षर मन्त्र को और वाणी के एकादशाक्षर मन्त्र को उत्पन्न करती है एवं एकादश रुद्रों का वह सर्वज्ञा समुद्गिरण करती है ॥ १५६-१५८ ॥

**नित्यामन्त्रं महेशान्या वासुदेवात्मकं मनुम् ॥ १५८ ॥**
**राशीन् मासान् हरेर्मूर्त्तीर्यन्त्र सा द्वादशात्मकम् ।**
**अन्यदेतादृशं सर्वं यत् तदस्या अजायत् ॥ १५९ ॥**
**यदा सूर्यगुणा देवी द्वादशी चण्डभैरवी ।**

जब वह द्वादशगुणिता होती है तब महेशानी का नित्यामन्त्र तथा वासुदेवात्मक द्वादशाक्षर मन्त्र, द्वादश राशियाँ, द्वादश मास, द्वादश विष्णुमूर्त्ती और द्वादशात्मक यन्त्र तथा अन्य भी जो ऐसे हैं; वे इसी से उत्पन्न कहे गये हैं । इसी प्रकार जब भी देवी द्वादश गुणित होती है, तब द्वादश संख्याक चण्ड भैरवी इनसे उत्पन्न होती है ॥ १५८-१६० ॥

**यदा कामगुणा देवी कामभेदा च तारिणी ॥ १६० ॥**
**चतुर्दशगुणा जाता वशीकरणकालिका ।**
**दशपञ्चगुणा जाता महापञ्चदशी स्मृता ॥ १६१ ॥**

जब वह देवी त्रयोदश गुणित होती है तब काम के त्रयोदश भेद तथा तारिणी को उत्पन्न करती है । जब वह चतुर्दशगुणित होती है तब वह 'वशीकरणकालिका' रूप में उत्पन्न होती है । जब वह पञ्चदश गुणित होती है तब 'महापञ्चदशी' रूप से उत्पन्न होती है ॥ १६०-१६१ ॥

**कलागुणा यदा शक्तिः श्रीमहाषोडशी तदा ।**
**यदा सप्तदशा देवी छिन्नमस्ता तदा भवेत् ॥ १६२ ॥**

जब वह कला गुण षोडश से गुणित होती है तब 'महाषोडशी' के रूप में उत्पन्न होती है और जब सप्तदश गुणित होती है तब 'छिन्नमस्ता' के स्वरूप में उत्पन्न हो जाती है ॥ १६२ ॥

**अष्टादशगुणा देवी महामधुमती भवेत् ।**

ऊनविंशद्गुणा देवी महापद्मावती तदा ॥ १६३ ॥

जब अष्टादशगुणित होती है तब 'महामधुमती' बन जाती है और जब उन्नीस गुणित होती है तब 'महापद्मावती' के स्वरूप में उत्पन्न हो जाती हैं ॥ १६३ ॥

गुणिता विंशति यदा विंशद्वर्णा रमा भवेत्।
एकविंशद्गुणा देवी प्रोक्ता श्रीकामसुन्दरी॥ १६४ ॥

जब वह विंशतिगुणा हो जाती है तब विंशति वर्णा 'रमा' हो जाती है और जब वह देवी एकविंशतिगुणा होती है तब 'श्रीकामसुन्दरी' बन जाती है ॥ १६४॥

द्वाविंशद्गुणिता विद्या दक्षिणा कालिका तदा।
त्रयोविंशद् गुणा देवी विद्येशी तु तदा भवेत् ॥ १६५ ॥

जब वह बाइसगुणित होती है तब वह 'विद्यादक्षिणकालिका' के रूप में हो जाती है और जब त्रयोविंशद्गुणा होती है तब वह 'विद्येशी' के स्वरूप में उत्पन्न होती है ॥ १६५ ॥

चतुर्विंशति तत्त्वात्मा यदा भवति शोभना।
गायत्रीं सवितुः शम्भोर्गायत्रीं मदनात्मिकाम् ॥ १६६ ॥
गायत्रीं विष्णुगायत्रीं गायत्रीं त्रिपदात्मनः।
गायत्रीं दक्षिणामूर्त्तेर्गायत्रीं शम्भुयोषितः॥ १६७ ॥
चतुर्विंशतितत्त्वानि तस्यामासन् परात्मनि।

जब वह शोभना चौबीस तत्त्वात्मा के रूप में हो जाती है तब वह सविता की गायत्री और शम्भु की गायत्री का स्वरूप हो जाती है। मदनात्मिका गायत्री, विष्णुगायत्री, त्रिपदागायत्री, दक्षिणामूर्त्ति की गायत्री, पार्वती की गायत्री—इस प्रकार चौबीस तत्त्व इत्यादि उस परात्मा में उत्पन्न हो जाते हैं ॥ १६६-१६८ ॥

पञ्चविंशद्गुणा देवी पञ्चमी सुन्दरी तदा ॥ १६८ ॥
षड्विंशगुणिता शक्तिः षष्ठी विद्या प्रकीर्तिता।
सप्तविंशद्गुणा देवी महारत्नेश्वरी भवेत् ॥ १६९ ॥

जब वह देवी पच्चीस गुणित होती है तब वह 'पञ्चमी सुन्दरी' के स्वरूप में उत्पन्न होती है। जब वह छब्बीस गुनी होती है तब शक्ति 'षष्ठी विद्या' कही जाती है। जब वह देवी सत्ताइस गुनी होती है तब वह 'रत्नेश्वरी' के स्वरूप में हो जाती है ॥ १६८-१६९ ॥

अष्टाविंशतिधा सा वै गुणिता परमा कला।
अष्टाविंशाक्षरी विद्याऽमृतसञ्जीवनी परा ॥ १७० ॥

जब वह अट्ठाइस गुनी होती है तब वह परमा कला 'अष्टविंशाक्षरी विद्या' तथा परा 'अमृत सञ्जीवनी' का स्वरूप बन जाती है ॥ १७० ॥

**ऊनत्रिंशद्गुणा देवी महानीलसरस्वती ।**
**त्रिंशद्गुणा यदा विद्या वसोर्धारा तदा स्मृता ॥ १७१ ॥**

जब वह उन्तीस गुनी होती है तब वह 'महानीलसरस्वती' के स्वरूप में उत्पन्न होती है और जब वह तीस गुनी हो जाती है तब वह 'वसोर्धारा' स्वरूप में उत्पन्न हो जाती है ॥ १७१ ॥

**एकत्रिंशद्गुणा देवी त्रैलोक्यमोहिनी भवेत् ।**
**द्वात्रिंशद्भेदगुणिता सर्वमन्त्रमयी विभुः ॥ १७२ ॥**

जब वह एकतीस गुनी होती है तब 'त्रैलोक्यमोहिनी' हो जाती है और जब बत्तीस भेदों से गुणित होती है तब सर्वमन्त्रमयी 'विभु' बन जाती है ॥ १७२ ॥

**सूते मृत्युञ्जयं मन्त्रं नारसिंहं महामनुम् ।**
**लवणाद्यं मनुं मन्त्रं वरुणस्य महात्मनः ॥ १७३ ॥**

उस समय वह मृत्युञ्जय मन्त्र एवं नारसिंह मन्त्र का सृजन करती है इसी प्रकार लवणादि मन्त्र एवं महात्मा वरुण का मन्त्र उत्पन्न करती है ॥ १७३ ॥

**हयग्रीवमनुं दौर्गं वाराहं वह्निनायकम् ।**
**गणेशितुर्महामन्त्रं मन्त्रमन्नाधिपस्य च ॥ १७४ ॥**
**मन्त्रं श्रीदक्षिणामूर्त्तेर्मालामन्त्रं मनोभुवः ।**
**त्रिष्टुभं वनवासिन्या अघोराख्यं महामनुम् ॥ १७५ ॥**
**भद्रकालीमनुं लक्ष्म्या मालामन्त्रं यमात्मकम् ।**
**मन्त्रं सा देवकीसूनोर्मन्त्रं श्रीपुरुषोत्तमम् ॥ १७६ ॥**
**श्रीगोपालमनुं भूमेर्मनुं तारामनुं क्रमात् ।**
**महामन्त्रं महालक्ष्म्या मन्त्रं भूतेश्वरस्य च ॥ १७७ ॥**
**क्षेत्रपालात्मकं मन्त्रं मन्त्रमापन्निवारकम् ।**
**सूते मातङ्गिनीं विद्यां सिद्धविद्यां शुभोदयाम् ॥ १७८ ॥**

उस समय वह हयग्रीव मन्त्र, दुर्गा मन्त्र, वाराह मन्त्र, वह्निनायक मन्त्र, गणेश मन्त्र, अन्नाधिप (अन्नपूर्णा) मन्त्र, दक्षिणामूर्त्ति मन्त्र, माला मन्त्र, काम मन्त्र, वनवासिनी का त्रिष्टुप् मन्त्र, अघोर नामक महामन्त्र, भद्रकाली मन्त्र, लक्ष्मी माला मन्त्र, यमात्मक मन्त्र, देवकीसूनु वासुदेव मन्त्र, पुरुषोत्तम मन्त्र, गोपाल मन्त्र, भूमि मन्त्र एवं तारा मन्त्र । इसी क्रम से महालक्ष्मी मन्त्र, भूतेश्वर मन्त्र, क्षेत्रपालकात्मक मन्त्र, आपन्निवारक मन्त्र, मातङ्गिनी विद्या, सिद्धविद्या और शुभोदया मन्त्र उत्पन्न

करती है ॥ १७४-१७८ ॥

**त्रयस्त्रिंशद् गुणा चेत् स्याद् भवेत् श्रीकामतारिणी ।**
**चतुस्त्रिंशद् गुणा शक्तिरघोराख्या तदा भवेत् ॥ १७९ ॥**

जब वह तैंतीस गुनी होती है तब वह 'कामतारिणी' के स्वरूप में उत्पन्न होती है । जब वह चौंतीस गुनी होती है तब 'अघोरा' नाम की शक्ति के स्वरूप में उत्पन्न होती है ॥ १७९ ॥

**पञ्चत्रिंशद् गुणा देवी सङ्गीतमोहिनी भवेत् ।**
**षट्त्रिंशद् गुणिता विद्या वगलाख्या तदा भवेत् ॥ १८० ॥**

जब वह पैंतीस गुनी होती है तब 'सङ्गीतमोहिनी' उत्पन्न होती है । जब छत्तीस गुनी होती है तब 'बगला' स्वरूप में उत्पन्न होती है ॥ १८० ॥

**षट्त्रिंशतं च तत्त्वानां शैवानां रचयत्यसौ ।**
**अन्यान् मन्त्राँश्च यन्त्राणि शुभदानि प्रसूयते ॥ १८१ ॥**

इतना ही नहीं उस समय वह शैव मत के छत्तीस तत्त्वों की रचना करती है और अन्य कल्याणकारी यन्त्र और मन्त्रों को उत्पन्न करती है ॥ १८१ ॥

**सप्तत्रिंशद्गुणा शक्तिः प्रोक्ता विद्या त्वरुन्धती ।**
**अष्टत्रिंशद्गुणा चेत् स्यादन्नपूर्णेश्वरी मता ॥ १८२ ॥**

जब वह सैंतीस गुनी होती है, तब वह शक्ति विद्या 'अरुन्धती' कही जाती है । जब वह अड़तीस गुनी होती है तब वह अड़तीस अक्षरों वाले 'अन्नपूर्णा मन्त्र' का सृजन करती है ॥ १८२ ॥

**गुणितैकोनचत्वारिंशन्नकुली परिकीर्तिता ।**
**चत्वारिंशद्गुणा शक्तिः प्रोक्ता विद्या त्रिकण्टकी ॥ १८३ ॥**

जब वह उन्तीस गुनी होती है तब नकुली होती है, जब चालीस गुनी होती है तब शक्ति विद्या 'त्रिकण्टकी' कही जाती है ॥ १८३ ॥

**गुणितैकचत्वारिंशत् तदा राजेश्वरी कला ।**
**द्विचत्वारिंशद्गुणिता त्रैलोक्याकर्षिणी तदा ॥ १८४ ॥**

जब वह एकतालिस गुनी हो जाती है तब 'राजेश्वरी कला' कही जाती है और जब वह बयालीस गुनी होती है तब 'त्रैलोक्याकर्षिणी' कही जाती है ॥ १८४ ॥

**त्रिचत्वारिंशद्गुणिता राजराजेश्वरी स्मृता ।**
**चतुश्चत्वारिंशद्गुणिता कुक्कुटी परिकीर्तिता ॥ १८५ ॥**

जब वह तिरालिस गुनी होती है तब 'राजराजेश्वरी हो जाती है और जब वह चौवालिस गुनी होती है तब 'कुक्कुटी' कही जाती है ॥ १८५ ॥

**पञ्चचत्वारिंशता च सिद्धविद्या प्रकीर्तिता ।**
**रसचत्वारिंशद्गुणा प्रोक्ता श्रीमृत्युहारिणी ॥ १८६ ॥**

जब वह पैंतालिस गुनी होती है तब 'सिद्धविद्या' कही जाती है और जब वह छियालिस गुनी होती है तब 'मृत्युहारिणी' हो जाती है ॥ १८६ ॥

**सप्तचत्त्वारिंशद्गुणा महाभोगवती मता ।**
**अष्टचत्वारिंशद्गुणा वासवी परिकीर्तिता ॥ १८७ ॥**

जब वह सैंतालिस गुनी होती है तब 'महाभोगवती' हो जाती है । जब वह अड़तालिस गुनी होती है तब वह 'वासवी' कही जाती है ॥ १८७ ॥

**नवचत्वारिंशद्गुणा फेत्कारी परिकीर्तिता ।**
**सा प्रसूते कुण्डलिनी शब्दब्रह्ममयी विभुः ॥ १८८ ॥**

जब वह उञ्चास गुनी होती है तब 'फेत्कारी' कही जाती है । शब्दब्रह्ममयी कुण्डलिनी इस प्रकार शब्दों को उत्पन्न करती है ॥ १८८ ॥

**शक्तिस्ततो ध्वनिस्तस्मान्नादस्तस्मान्निरोधिका।**
**ततोऽर्धेन्दुस्ततो विन्दुस्तस्मादासीत् परा ततः ॥ १८९ ॥**

पहले उससे शक्ति उत्पन्न होती है । फिर उससे ध्वनि, उसके बाद उससे नाद, तदनन्तर उससे निरोधिका, फिर उससे अर्धेन्दु और तत्पश्चात् उससे बिन्दु, फिर उससे परा वाणी उत्पन्न होती है ॥ १८९ ॥

**पश्यन्ती मध्यमा वाचि वैखरीसर्गजन्मभूः ।**
**इच्छाज्ञानक्रियात्माऽसौ तेजोरूपा गुणात्मिका ॥ १९० ॥**

तदनन्तर वाणी में परा से पश्यन्ती, फिर मध्यमा, तत्पश्चात् वैखरी की उत्पत्ति होती है । यही कुण्डलिनी इच्छा, ज्ञान एवं क्रिया रूपा है जो तेजोरूपा एवं गुणात्मिका कही गयी है ॥ १९० ॥

**क्रमेणानेन सृजति कुण्डली वर्णमालिकाम् ।**
**अकारादिसकारान्तां द्विचत्वारिंशदात्मिकाम् ॥ १९१ ॥**
**पञ्चाशद्वारगुणिता पञ्चाशद्वर्णमालिकाम् ।**
**सूते तद्वर्णतो भिन्नान् कलारुद्रादिकान् क्रमात् ॥ १९२ ॥**

यह कुण्डलिनी इसी क्रम से वर्णमाला का सृजन करती है । यह वर्णमाला

अकार से लेकर सकार पर्यन्त बयालिस वर्णों वाली है । फिर वही जब पचास गुनी होती है तब पचास वर्णमालायें उत्पन्न करती है । पुनः वही उन-उन वर्णों से क्रमशः कलाओं एवं रुद्रों को उत्पन्न करती है ॥ १९१-१९२ ॥

**निरोधिका भवेद् वह्निरर्धेन्दुः स्यान्निशाकरः ।**
**अर्कस्स्यादुभयोर्योगे विन्द्वात्मा तेजसांनिधिः॥ १९३ ॥**

निरोधिका का नाम अग्नि है और अर्धेन्दु का नाम निशाकर है । जब दोनों का योग होता है तब तेजों से पूर्ण विन्द्वात्मा उत्पन्न होता है ॥ १९३ ॥

**जाता वर्णा यतो विन्दोः शिवशक्तिमयादतः ।**
**अग्निसोमात्मकास्ते स्युः शिवशक्तिमयाद् रवेः ।**
**येन सम्भवमापन्नाः सोमसूर्याग्निरूपिणः ॥ १९४॥ इति।**

यतः इस शिवशक्तिमय बिन्दु से समस्त वर्ण उत्पन्न हुये हैं इसलिये वे अग्निसोमात्मक हैं । शिवशक्तिमय रवि से अग्नि तथा सोमा उत्पन्न हुये हैं । अतः वर्ण भी सोम, सूर्य एवं अग्नि स्वरूप ही हैं ॥ १९४ ॥

**शक्तिसङ्गमे—**

**एकैकं मातृकावर्णं प्रतिविद्यासकाशतः ।**
**उत्पन्ना परमेशानी विश्वोत्पत्तिपरायणा ॥ १९५ ॥**
**यो भावो यस्य वै प्रोक्तस्तेन भावेन संस्थिता ।**
**स्वेच्छया वलयं कृत्वा यथा कुण्डलिनी स्थिता॥ १९६ ॥**

शक्तिसङ्गम तन्त्र में कहा भी है—एक-एक विद्या के सम्बन्ध से एक-एक मातृका वर्णों की उत्पत्ति हुई । वही परमेशानी है और वही विश्वोत्पत्ति परायणा है । जिसका जिसप्रकार जो भाव है, वह उसी भाव से स्थित है । वह कुण्डलिनी अपनी इच्छा से वलयाकार रूप में स्थित है ॥ १९५-१९६ ॥

**तथा विद्यास्तु सञ्जाता ह्यक्षोभ्यमनुरूपिणी ।**
**एवं विद्याः समुत्पन्नाः कुण्डलीतो महेश्वरि ॥ १९७ ॥**
**सार्धत्रिवलया देवि! मनुष्यस्य प्रकीर्त्तिता ।**
**श्रीदेव्याः कुण्डली देवि! स्वेच्छया गुणिता शिवा ॥ १९८ ॥**

वह अक्षोभ्य है और मनुस्वरूपा है । हे महेश्वरि! इस प्रकार महाविद्याओं की उत्पत्ति उसी कुण्डलिनी से हुई । जो मनुष्य के आधार स्थान में साढ़े तीन हाथ लम्बी वलयाकार रूप में स्थित है । इस प्रकार श्री देवी से उत्पन्न वही कुण्डली शिवा अपनी इच्छा से गुणित होती है ॥ १९७-१९८ ॥

**योगिनीहृदयेऽपि—**

**यस्य यस्य पदार्थस्य या या शक्तिरुदीरिता ।**
**सा सा सर्वेश्वरी देवी स स सर्वो महेश्वरः ॥ १९९ ॥ इति**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे सृष्टिकथनं नाम प्रथमः पटलः ॥ १ ॥**

...❀...

योगिनीहृदय में भी कहा गया है—जिस-जिस पदार्थ की जो-जो शक्ति कही गई है वह-वह शक्ति सर्वेश्वरी देवी हैं और वह-वह पदार्थ महेश्वर हैं ॥ १९९ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में सृष्टिकथन नामक प्रथम पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १ ॥**



# द्वितीयः पटलः

## वर्णव्यक्तिकथनम्

**अथ वर्णव्यक्तिरारभ्यते, यदाह शारदायाम्—**

**ततो व्यक्तिं प्रवक्ष्यामि वर्णानां वदने नृणाम् ।**
**प्रेरिता मरुता नित्यं सुषुम्णा रन्ध्रनिर्गताः ।**
**कण्ठादिकरणैर्वर्णाः क्रमादाविर्भवन्ति ते ॥ १ ॥**

अब वर्णों की अभिव्यक्ति कहते हैं, जैसा शारदातिलक (२.१-२) में कहा गया है—अब मनुष्यों के मुख में जिस प्रकार वर्णों की अभिव्यक्ति होती है उसे कहता हूँ । ये वर्ण नित्य वायु से प्रेरित होकर सुषुम्ना नाडी के छिद्र से बाहर निकल कर तत्तत् कण्ठताल्वादि करणों से क्रमशः वर्ण रूप में प्रगट होते हैं ॥१॥

**योगार्णवे—**

**मूलाधारात् प्रथममुदितो यस्तु भावः पराख्यः**
**पश्चात् पश्यन्त्यथहृदयगो बुद्धियुङ्मध्यमाख्यः ।**
**वक्त्रे वैखर्य्यथरुरुदिषोरस्य जन्तोः सुषुम्णा**
**बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः ॥ २ ॥**

योगार्णव तन्त्र में भी कहा गया है—सर्वप्रथम 'परा' नामक भाव मूलाधार से उत्पन्न होता है । फिर वही भाव जब हृदय में जाता है तब 'पश्यन्ती' नाम वाला होता है । बुद्धि से युक्त होने पर वही 'मध्यमा' नाम वाला हो जाता है । जब मुख में पहुँचता है तब 'वैखरी' कहा जाता है । यह बोलने की इच्छा करने वाले इस जीव के सुषुम्ना से बँधा रहता है—इस कारण यह सारा वर्ण समुदाय पवन से प्रेरित होकर उत्पन्न होता है ॥ २ ॥

**यदाह शारदायाम् (२.२-८)—**

**एषु स्वराः स्मृताः सौम्याः स्पर्शाः सौराः शुभोदयाः ।**
**आग्नेया व्यापकाः सर्वे सोमसूर्याग्निदेवताः ॥ ३ ॥**

इन वर्णों में जो स्वर वर्ण हैं, वे सोमदेवताक हैं, स्पर्श सञ्ज्ञक वर्ण सूर्य देवताक हैं, यकारादि क्षकारान्त वर्ण आग्नेय एवं व्यापक हैं । इस प्रकार सभी वर्ण सोम, सूर्य, अग्नि देवता वाले हैं ॥ ३ ॥

**स्वराः षोडश विख्याताः स्पर्शास्ते पञ्चविंशतिः ।**
**तत्त्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः ॥ ४ ॥**

स्वरों की कुल संख्या सोलह है । स्पर्शों की संख्या पच्चीस है । मकार को छोड़कर शेष चौबीस स्पर्श तत्त्वात्मक कहे जाते हैं । क्योंकि मकार पुरुष है ॥४॥

**व्यापका दश ते कामधनधर्मप्रदायिनः ।**
**ह्रस्वः स्वरेषु पूर्वोक्तः परो दीर्घः क्रमादिमे ॥ ५ ॥**

इसमें व्यापक कहे जाने वाले क्षकारान्त दश वर्ण काम, धन और धर्म प्रदान करते हैं । स्वरों में पूर्व-पूर्व के पाँच अ इ उ ए ओ ह्रस्व कहे जाते हैं । पर के क्रमशः पाँच आ ई ऊ ऐ औ दीर्घ कहे जाते हैं ॥ ५ ॥

**शिवशक्तिमयास्ते स्युर्विन्दुसर्गावसानकाः ।**
**विन्दुः पुमान् रविः प्रोक्तः सर्गः शक्तिर्निशाकरः ॥ ६ ॥**

बिन्दु विसर्गान्त ये सभी वर्ण शिवशक्तिमय हैं । इनमें बिन्दु 'पुरुष' है; जो 'सूर्य' कहा जाता है और विसर्ग 'शक्ति' है; जो 'चन्द्रमा' कहा जाता है ॥ ६ ॥

**स्वराणां स्थितिस्थानानि**

**स्वराणां मध्यमं यत्तु चतुष्कं तन्नपुंसकम् ।**
**पिङ्गलायां स्थिता ह्रस्वा इडायां सङ्गताः परे ॥ ७ ॥**
**सुषुम्णा मध्यगा ज्ञेयाश्चत्वारो ये नपुंसकाः ।**

**वर्णानां शिवशक्तिमयत्वम्**

**विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा ।**
**शिवशक्तिमयान् प्राहुस्तस्माद् वर्णान् मनीषिणः ॥ ८ ॥**

स्वरों के मध्य में रहने वाले चार वर्ण ऋ ॠ ऌ ॡ ये नपुंसक वर्ण कहे जाते हैं । ह्रस्व वर्ण पिङ्गला में और दीर्घ वर्ण ईडा में स्थित हैं । मध्य में रहने वाले नपुंसक वर्ण सुषुम्ना में स्थित हैं । स्वरों के बिना अन्य वर्णों की अभिव्यक्ति नहीं होती । इसलिये मनीषियों ने वर्णों को शिवशक्तिमय कहा है ॥ ७-८ ॥

**मातृकाहृदयेऽपि—**

**वर्णाः शिवाः समाख्याताः स्वराः षोडशशक्तयः ।**
**शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ॥ ९ ॥ इति ।**

मातृकाहृदय में भी कहा गया है—सभी वर्ण शिव कहे जाते हैं। षोडश स्वर शक्तियाँ कही जाती हैं। स्वरूप शक्ति के बिना वर्ण-रूप सूक्ष्म-शिव में न तो नाम होता है और न ही धाम होता है ॥ ९ ॥

**वर्णानां भूतात्मकत्वम्**

**कारणात् पञ्चभूतानामुद्भूता मातृका यतः ।**
**ततो भूतात्मका वर्णाः पञ्च पञ्च विभागतः ॥ १० ॥**

यतः पञ्चभूतों के कारणभूत शिवशक्तिमय बिन्दु से मातृकायें उत्पन्न हुई हैं। इसलिये पाँच-पाँच के विभाग से सभी वर्ण पञ्चभूतात्मक हैं ॥ १० ॥

**वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ।**
**पञ्च ह्रस्वाः पञ्च दीर्घाः विन्द्वन्ताः सन्धिसम्भवाः ॥ ११ ॥**

**मातृकावर्णानां सोमसूर्याग्निभेदः**

**पञ्चशः कादयः ष-क्ष-ळ-स-हान्ताः समीरिताः ।**
**सोमसूर्याग्निभेदेन मातृकावर्णसम्भवाः ॥ १२ ॥**
**अष्टत्रिंशत् कलास्तत्तन्मण्डलेषु व्यवस्थिताः ।**

पचास लिपियाँ क्रमशः वायु, अग्नि, भू, जल और आकाश कही जाती हैं। इनमें पाँच ह्रस्व, पाँच दीर्घ, पाँच सन्धि युक्त स्वर हैं तथा बिन्दु के अन्त तक (ए ऐ ओ औ अं), पाँच कादि, फिर ष क्ष ळ स एवं अन्त में ह कहे गये हैं। सोम, सूर्य, अग्नि के भेद से मातृकावर्णों से उत्पन्न होने वाली अड़तीस (१६+१२+१०) कलायें तत्तन्मण्डलों में व्यवस्थित हैं ॥ ११-१३ ॥

**अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ॥ १३ ॥**
**शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।**
**पूर्णा पूर्णामृताः कामदायिन्यः स्वरजाः कलाः ॥ १४ ॥**

अमृता, मानदा, पूषा, तुष्टि, पुष्टि, रति, धृति, शशिनी, चन्द्रिका, कान्ति, ज्योत्स्ना, श्री, प्रीति, अङ्गदा, पूर्णा और पूर्णामृता—काम प्रदान करने वाली ये सोलह कलायें स्वरों से उत्पन्न हुई हैं जो सौम्य हैं ॥ १३-१४ ॥

**तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।**
**सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा॥ १५ ॥**
**कभाद्या वसुदाः सौराष्टडान्ता द्वादशेरिताः ।**

तपिनी, तापिनी, धूम्रा, मरीचि, ज्वालिनी, रुचि, सुषुम्णा, भोगदा, विश्वा, बोधिनी, धारिणी और क्षमा—ये वसु (धन धान्य) प्रदान करने वाली १२ कलाएँ

बतलायी गयी हैं, जो अनुलोम क्रम से क से लेकर ठ तक और विलोम क्रम से भ से लेकर ड तक द्वादश द्वादश सौर वर्णों से उत्पन्न हैं जो सौर हैं ॥ १५-१६॥

**धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ॥ १६ ॥**
**सुश्रीः सुरूपा कपिला हव्यकव्यवहे अपि ।**
**यादीनां दशवर्णानां कला धर्मप्रदा इमाः ॥ १७ ॥**
**अभयेष्टकरा ध्येयाः श्वेतपीतारुणाः क्रमात् ।**

धूमा, अर्चि, ऊष्मा, ज्वलिनी, ज्वालिनी, विस्फुलिङ्गिनी, सुश्रीः, सुरूपा, कपिला और हव्यकव्यवहा—ये यकारादि दश वर्णों से उत्पन्न कलायें हैं, जो कि धर्म प्रदान करने वाली हैं और आग्नेय हैं । ये सभी श्वेत, पीत एवं अरुण वर्ण वाली हैं तथा अभीष्ट प्रदान करने वाली हैं । साधक को इनका ध्यान करना चाहिये ॥ १६-१८ ॥

**पञ्चाशत् प्रणवकलाः, तासामुत्पत्तिर्नामानि च**

**तारस्य पञ्चभेदेभ्यः पञ्चाशद्वर्णगाः कलाः ॥ १८ ॥**
**सृष्टिर्बुद्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मी धृतिः स्थिरा ।**
**स्थितिः सिद्धिरिति प्रोक्ताः कचवर्गकलाः क्रमात् ॥ १९ ॥**
**अकाराद् ब्रह्मणोत्पन्नाः तप्तचामीकरप्रभाः ।**
**एताः करधृताक्षस्त्रक्पङ्कजद्वयकुण्डिकाः ॥ २० ॥**

ॐकार के पाँच भेदों (अकार, उकार, मकार, बिन्दु एवं नाद) से पचास कलायें उत्पन्न हुई हैं । सृष्टि, बुद्धि, स्मृति, मेधा, कान्ति, लक्ष्मी, धृति, स्थिरा, स्थिति और सिद्धि क वर्ग एवं च वर्ग की दस कलायें हैं जो अकार रूप ब्रह्म से उत्पन्न हुई हैं । ये देदीप्यमान सुवर्ण के समान कान्तिमती हैं और अपने हाथों में अक्षमाला कमल और दो कुण्डिका धारण की हुई हैं ॥ १८-२० ॥

**जरा च पालिनी शान्तिरीश्वरी रतिकामिके ।**
**वरदा ह्लादिनी प्रीतिर्दीर्घाः स्युष्टतवर्गजाः ॥ २१ ॥**
**उकाराद् विष्णुनोत्पन्नास्तमालदलसन्निभाः ।**
**अभीतिदरचक्रेष्टबाहवः परिकीर्तिताः ॥ २२ ॥**

जरा, पालिनी, शान्ति, ईश्वरी, रति, कामिका, वरदा, ह्लादिनी, प्रीति और दीर्घा टवर्ग एवं तवर्ग की दस कलायें हैं जो उकार रूप विष्णु से उत्पन्न हुई हैं । इनका वर्ण तमालपत्र के समान काला है । इनके हाथों में अभय, शङ्ख, चक्र और इष्ट शोभित हो रहा है ॥ २१-२२ ॥

**तीक्ष्ण रौद्री भया निद्रा तन्द्रा क्षुत् क्रोधिनी क्रिया ।**

**उत्कारी मृत्युरेताः स्युः कथिताः पयवर्गजाः ॥ २३ ॥**
**रुद्रेण मार्णादुत्पन्नाः शरच्चन्द्रसमप्रभाः ।**
**उद्वहन्त्योऽभयं शूलं कपालं बाहुभिर्वरम् ॥ २४ ॥**

तीक्ष्णा, रौद्री, भया, निद्रा, तन्द्रा, क्षुधा, क्रोधिनी, क्रिया, उत्कारी तथा मृत्यु पवर्ग एवं यवर्ग की दस कलायें हैं जो रुद्र के द्वारा मकार वर्ण से उत्पन्न हुई हैं । इनके शरीर की कान्ति शरत्कालीन चन्द्रमा के समान मनोहर हैं । ये अपने बाहुओं में अभय, शूल, कपाल और वर मुद्रा धारण की हुई हैं ॥ २३-२४ ॥

**ईश्वरेणोदिता विन्दोः पीता श्वेतारुणा सिता ।**
**अनन्ता च शवर्गस्था जपाकुसुमसन्निभाः ॥ २५ ॥**
**अभयं हरिणं टङ्कं दधाना बाहुभिर्वरम् ।**

ईश्वर से उत्पन्न हुई बिन्दु की ये कलायें पीत, श्वेत, अरुण तथा श्वेत वर्णों वाली हैं । शवर्ण से अनन्ता नामक कला उत्पन्न हुई है जो जपा पुष्प के समान लाल वर्ण की हैं । यह अपने हाथों में अभय, हरिण, टङ्क तथा वर मुद्रा धारण की हुई हैं ॥ २५-२६ ॥

**निवृत्तिः सप्रतिष्ठा स्याद् विद्यांशान्तिरनन्तरम् ॥ २६ ॥**
**इन्धिका दीपिका चैव रेचिका मोचिका परा ।**
**सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायनी ततः ॥ २७ ॥**
**व्यापिनी व्योमरूपा स्युरनन्ताः स्वरसंयुताः ।**
**सदाशिवेन सञ्जाता नादादेताः सितत्विषः ॥ २८ ॥**
**अक्षस्त्रक्पुस्तकगुणकपालाढ्यकराम्बुजाः ।**
**न्यासे तु योजयेदादौ षोडश स्वरगाः कलाः ॥ २९ ॥**
**इति पञ्चाशदाख्याताः कलाः सर्वसमृद्धिदाः ।**
**मातृकावर्णभेदेभ्यः सर्वे मन्त्राः प्रजज्ञिरे ॥ ३० ॥**

इसके बाद 'प्रतिष्ठा' सहित 'निवृत्ति' कला है । फिर विद्या, शान्ति, इन्धिका, दीपिका, रेचिका, मोचिका, परा, सूक्ष्मा, सूक्ष्मामृता, ज्ञानामृता, आप्यायनी, व्यापिनी, व्योमरूपा, अनन्ता तथा स्वरसंयुता—ये सदाशिव के द्वारा 'नाद' से उत्पन्न सोलह स्वरों की सोलह कलायें हैं जिनका वर्ण श्वेत है । इनके हाथों में अक्षमाला, पुस्तक, गुण (रस्सी), कपाल और कमल है । जब न्यास करना हो तो सर्वप्रथम षोडश स्वरों से उत्पन्न कलाओं से न्यास करे । यहाँ तक हमने प्रणव की पचास कलाओं का नाम निर्देश किया । ये सभी कलाएँ सब प्रकार की समृद्धियों को देने वाली हैं । इस प्रकार मातृकाओं के वर्णभेद से समस्त मन्त्रों की उत्पत्ति हुई हैं ॥ २६-३० ॥

**मन्त्रविद्याविभागेन द्विविधा मन्त्रजातयः ।**
**मन्त्राः पुंदेवताः ज्ञेयाः विद्याः स्त्रीदेवताः पुनः ॥ ३१ ॥**

मन्त्र की जातियाँ मन्त्र और विद्या के भेद से दो प्रकार की कही गई हैं । मन्त्र पुरुषदेवताक होते हैं और विद्यामन्त्र स्त्रीदेवताक होते हैं ॥ ३१ ॥

**स्त्री-पुंनपुंसकात्मानः सर्वे मन्त्राः प्रकीर्तिताः ।**
**पुम्मन्त्रा हुंफडन्ताः स्युर्द्विठान्तास्तु स्त्रियो मताः ॥ ३२ ॥**
**नपुंसका नमोऽन्ताः स्युरित्युक्ता मनवस्त्रिधा ।**
**शस्तास्ते त्रिविधा मन्त्रा वश्यशान्त्यभिचारके॥ ३३ ॥**

सभी मन्त्र स्त्री, पुरुष और नपुंसक भेद से तीन प्रकार के होते हैं । हुं फट् अन्त वाले मन्त्र पुरुषदेवताक होते हैं । स्वाहान्त मन्त्र स्त्रीदेवताक होते हैं और नमोऽन्त वाले मन्त्र नपुंसक कहे गये हैं । इस प्रकार मन्त्रों के तीनों भेदों को बतलाया गया । ये तीनों प्रकार के मन्त्र वशीकरण, शान्ति और अभिचार में प्रशस्त बतलाये गये हैं ॥ ३२-३३ ॥

### मन्त्राणाम् अग्नीषोमात्मकत्वम्

**अग्नीषोमात्मका मन्त्रा विज्ञेयाः क्रूरसौम्ययोः ।**
**कर्मणोर्वह्नितारान्त्यवियत्प्रायाः समीरिताः ॥ ३४ ॥**
**आग्नेया मनवः सौम्या भूयिष्ठेन्द्वमृताक्षराः ।**

क्रूर एवं सौम्य कार्य में अग्निषोमात्मक मन्त्र का प्रयोग करना चाहिये । ये मन्त्र वह्नि (र), तार (ॐ), अन्त्य (क्ष) तथा वियत् (हकार) बाहुल्य वाले आग्नेय मन्त्र कहे जाते हैं । इन्दु (स) और अमृताक्षर (वं) बाहुल्य वाले मन्त्र सौम्य कहे जाते हैं ॥ ३४-३५ ॥

### तेषां प्रबोधकालः

**आग्नेयाः सम्प्रबुद्ध्यन्ते प्राणे चरति दक्षिणे ॥ ३५ ॥**
**भागेऽन्यस्मिन् स्थिते प्राणे सौम्या बोधं प्रयान्ति च।**
**नाडीद्वयगते प्राणे सर्वे बोधं प्रयान्ति च ।**
**प्रयच्छन्ति फलं सर्वे प्रबुद्धा मन्त्रिणां सदा ॥ ३६ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे वर्णव्यक्तिकथनं नाम द्वितीयः पटलः ॥ २ ॥**

...✿...

जब प्राण दक्षिण मार्ग में चलता है तब आग्नेय मन्त्र प्रबुद्ध होते हैं । जब वामभाग में प्राण का सञ्चरण होता है तब सौम्य मन्त्र प्रबुद्ध होते हैं । इसी प्रकार

जब दोनों नाडियों से प्राण का सञ्चरण होता है तब सभी मन्त्र प्रबुद्ध होते हैं। जब ये सभी प्रकार के मन्त्र प्रबुद्ध रहते हैं तभी ये मन्त्रवेत्ताओं को फल प्रदान करते हैं ॥ ३५-३६ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में वर्णव्यक्तिकथन नामक द्वितीय पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ २ ॥**

## तृतीयः पटलः

### देहनिरूपणम्

एवं पूर्वं वर्णव्यक्तिमुक्त्वा, इदानीं बीजसृष्ट्या जगतः तदात्मकत्वमुच्यते—

**पञ्चभूतात्मकं सर्वं चराचरमिदं जगत् ।**
**अचरा बहुधा भिन्ना गिरिवृक्षादिभेदतः ॥ १ ॥**

इस प्रकार वर्णाभिव्यक्ति का प्रकार कहकर बीज सृष्टि से जगत् की तदात्मकता कहते हैं—यह सारा, जगत् पञ्चभूतात्मक हैं और अचरात्मक जगत् गिरि, वृक्षादि के भेद से प्रायः अनेक प्रकार का है ॥ १ ॥

अन्यत्रापि—

**देहश्चतुर्विधो ज्ञेयो जन्तोरुत्पत्तिभेदतः ।**
**उद्भिदः स्वेदजोऽण्डोऽन्यश्चतुर्थस्तु जरायुजः ।**
**उद्भिद्य भूमिं निर्गच्छेदुद्भिदः स्थावरस्तु सः ॥ २ ॥**

अन्यत्र भी बतलाया गया है—जन्तुओं की उत्पत्ति के भेद से चार प्रकार का देह समझना चाहिये । उद्भिद्, स्वेदज, अण्डज और जरायुज में चार भेद हैं । जो भूमि को भेद कर उत्पन्न होता है, वह उद्भिद् कहा जाता है; उसे स्थावर भी कहते हैं ॥ २ ॥

तन्त्रान्तरे—

**उद्भिदः स्थावरा ज्ञेयाः तृणगुल्मादिरूपिणः ।**
**तत्र सिक्ता जलैर्भूमिरन्तरूष्मविपाचिता ॥ ३ ॥**

तृण गुल्मादि रूप वाले उद्भिज ही 'स्थावर' कहे जाते हैं । इनकी उत्पत्ति के स्थान को जल से सींचा जाता है और भूमि की ऊष्मा से उसका विपाचन किया जाता है ॥ ३ ॥

**वायुना व्यूहमाना तु बीजत्वं प्रतिपद्यते ।**
**तथा चोप्तानि बीजानि संसिक्तान्यम्भसा पुनः ॥ ४ ॥**
**उच्छूनतां मृदुत्वं च मूलभावं प्रयाति च ।**

**तन्मूलादङ्कुरोत्पत्तिरङ्कुरात् पर्णसम्भवः ।**
**पर्णात्मकं ततः काण्डं काण्डाच्च प्रसवं पुनः ॥ ५ ॥**

जब वायु इनका व्यूहन (पिण्डीकरण) करता है तब ये ही बीज बन जाते हैं; और जब वे ही बोये गये बीज पुनः जल से संसिक्त किये जाते हैं, तब वे उच्छूनता (शोथ), मृदुत्व और मूलभाव को प्राप्त होते हैं । फिर उस मूल से अङ्कुर उत्पन्न होते हैं तथा अङ्कुर से पत्ते और पत्तों से काण्ड उत्पन्न होता है । फिर उन काण्ड से प्रसव होता है ॥ ४-५ ॥

**तथा च शारदायाम्—**

**चरास्तु त्रिविधा प्रोक्ताः स्वेदाण्डजजरायुजाः ।**
**स्वेदजाः कृमिकीटाद्या अण्डजाःपन्नगादयः ।**
**जरायुजा मनुष्याद्यास्तेषु नृणां निगद्यते ॥ ६ ॥**

**जन्म इति शेषः ।**

जैसा कि शारदातिलक में भी कहा गया है—चर प्राणी स्वेदज, अण्डज, जरायुज भेद से तीन प्रकार के कहे गये हैं । कृमि एवं कीट आदि स्वेदज हैं । सर्पादि अण्डज हैं तथा मनुष्यादि जरायुज है । अब उन मनुष्यों के विषय में कहता हूँ ॥ ६ ॥

**अन्यत्रापि प्रयोगसारे—**

**किं त्वत्र स्वेदजा ये तु ज्ञेयास्ते चाप्ययोनिजाः ।**
**स्थिरा विवायवो भिन्नाश्चत्त्वारिंशत्सहस्त्रधा ॥ ७ ॥**

अन्यत्र प्रयोगसार में भी कहा गया है—यहाँ वही स्वेदज हैं जो बिना योनि के जन्म लेते हैं । वे स्थिर रहते हैं और वायु के बिना भी जीते हैं । उनके भेद चालीस हजार होते हैं ॥ ७ ॥

**अण्डजाः पक्षिणः सर्पाः नक्रा मत्स्याश्च कच्छपाः ।**
**अण्डजो वर्तुलीभूतः शुक्रशोणितसंयुतात् ॥ ८ ॥**
**कालेन भिन्नात् पूर्णात्मा निर्गच्छन् प्रक्रमिष्यति ।**
**योनिजाः प्राणिनो भिन्नाः चतुःषष्टिसहस्त्रधा ।**
**निगद्यन्ते तेषु नृणामुद्भवः शास्त्रसम्मतः ॥ ९ ॥ इति ।**

पक्षी, सर्प, घड़ियाल, मछली और कच्छप—ये सभी अण्डज हैं । आकार में अण्डज़ गोले हैं और शुक्र शोणित के संयोग से उत्पन्न होते हैं, वह पूर्ण होने पर काल पाकर उड़ने लगते हैं । योनि से जायमान प्राणी इनसे भिन्न होते हैं । इनके चौसठ हजार भेद हैं । उन सभी प्राणियों में शास्त्र सम्मत मनुष्यों की उत्पत्ति के

विषय में कहता हूँ ॥ ८-९ ॥

**रुद्रयामले तु श्रीदेव्युवाच—**

**शरीरं कीदृशं नाथ! मुक्तिर्वा केन कर्मणा ।**
**इदानीं श्रोतुमिच्छामि ब्रूहि मे शशिशेखर! ॥ १० ॥**

रुद्रयामल में देवी ने बतलाया है कि—हे नाथ! शरीर किस प्रकार से बनता है? किन कर्मों से उसकी मुक्ति होती है? हे शशिशेखर! अभी मैं इसे सुनना चाहती हूँ, कृपया मुझको बताइये ॥ १० ॥

**ईश्वर उवाच—**

**शृणु देवि! प्रवक्ष्यामि शरीरं कर्मरूपिणम् ।**
**रजस्वला च या नारी विशुद्धा पञ्चमे दिने ॥ ११ ॥**
**पतिता कामबाणेन ततः पुरुषमीहते ।**
**भगलिङ्गसमायोगात् मैथुनं स्यात् तदा तयोः ॥ १२ ॥**

ईश्वर ने कहा—हे देवि! कर्म रूपी शरीर के विषय में कह रहा हूँ उसे सुनिए। नारी रजःस्वला होने पर पञ्चम दिन जब शुद्ध हो जाती है । तब वह कामबाण से विद्ध होकर पुरुष की कामना करती है । फिर भग-लिङ्ग जब एकत्र हो जाते हैं तब उन दोनों में मैथुन होता है ॥ ११-१२ ॥

**अन्योन्यदर्शनादेव जायते च महत् सुखम् ।**
**क्षरते च तदा रेतः प्राणापानविसंश्रितम् ॥ १३ ॥**
**विन्दुरेको विशेद् गर्भमुभयात्मा क्रमादसौ ।**
**क्षितिरापस्तथा तेजो वायुराकाशमेव च ॥ १४ ॥**
**सर्वेषां तत्र तत्त्वं स्याद् देहस्थे रक्तबीजयोः ।**
**नाभिरन्ध्रे तदा देवि भ्राम्यते च समीरणैः ॥ १५ ॥**

उस समय एक दूसरे के दर्शन मात्र से उन्हें महान् सुख होता है और तब प्राण अपान से अलग होकर वीर्य योनि में गिर जाता है । उसमें एक बिन्दु गिरकर गर्भ में प्रवेश करता है, फिर वह क्रमशः रज से मिलकर उभयात्मा बन जाता है । देह में रक्त एवं बीज के स्थित होने पर पृथ्वी, जल, तेज, वायु और आकाश—इन सभी का तत्त्व एक हो जाता है । उस समय उस रक्त एवं बीज को नाभिरन्ध्र में घुमाता रहता है ॥ १३-१५ ॥

**कुम्भकारो यथा चक्रे घटते च घटादिकम् ।**
**तथा समीरणो गर्भे घटते प्राणिनां तनुम् ॥ १६ ॥**

जिस प्रकार कुम्भकार कुणाल चक्र को घुमाकर घट का निर्माण करता है,

उसी प्रकार वायु भी गर्भ में उस रज एवं बीज से प्राणियों के शरीर का निर्माण करता है ॥ १६ ॥

**कललं चैकरात्रेण पञ्चरात्रेण बुद्‌बुदम् ।**
**शोणितं दशरात्रेण मांसपिण्डं चतुर्दशे ॥ १७ ॥**

एक रात्रि में कलल, पाँच रात्रि में बुद्‌बुद, दश रात्रि में शोणित, चौदहवें दिन उससे मांस का निर्माण होता है ॥ १७ ॥

**घनमांसं च विंशाहे पिण्डीभावोपलक्षितम् ।**
**पञ्चविंशे च पूर्णाहे मांसपिण्डोऽङ्कुरायते ॥ १८ ॥**

बीस दिन में मांस घना (कठोर) हो जाता है तब वह पिण्डी भाव के रूप में उपलक्षित होने लगता है । पूरे पच्चीस दिन पूर्ण होने पर उसी मांस पिण्ड से अङ्कुर उत्पन्न होने लगता है ॥ १८ ॥

**एकमासे तु सम्पूर्णे पञ्चभूतानि धारयेत् ।**
**आदौ सञ्जायते बीजो ब्रह्माण्डमहतोऽङ्कुरः ॥ १९ ॥**
**तस्य मध्ये सुमेरुश्च कङ्कालदण्डरूपकः ।**
**चराचराणां सर्वेषां देवादीनां विशेषतः ॥ २० ॥**
**आलयः सर्वभूतानां मेरोरभ्यन्तरेऽपि च ।**
**पूर्वकर्मानुरूपेण मोहपाशेन यन्त्रितः ।**
**कश्चिदात्मा तदा तस्मिन् जीवभावं प्रपद्यते ॥ २१ ॥ इति ।**

एक मास पूरे होने पर वह अपने में पञ्चभूतों को धारण करने लगता है । इस प्रकार सर्वप्रथम वह बीज बनता है फिर उस ब्रह्माण्ड में महत् तत्त्व से अङ्कुर उत्पन्न होता है । उस अङ्कुर के मध्य में कङ्काल दण्ड के समान रूपधारी सुमेरु उत्पन्न होता है । वह सभी चराचर का विशेष कर देवताओं का आलय कहा जाता है । उसके भीतर भी सभी प्राणियों का निवास हो जाता है । फिर पूर्व कर्म के अनुसार मोहपाश से बँधा हुआ कोई आत्मा उस देह में प्रविष्ट होकर जीवभाव को प्राप्त हो जाता है ॥ १९-२१ ॥

**अत्रायमाशयः—पूर्वजन्मशतसञ्चितकर्मणां मध्ये फलप्रदानोन्मुखं प्रबलमेकं पुण्यपापात्मकं दुःखसुखोभयात्मफलक-मनुष्यशरीरोपभोग्यं यत् कर्म तदनुरूपेण मोहपाशेन अविद्यारूपेण यन्त्रितः उत्पद्यते । एतेन नित्यस्यात्मनोऽनुत्पत्तिरुक्ता गृहमिव देहमात्मा प्रविष्ट इत्यर्थः ।**

इसका आशय इस प्रकार है—पूर्व के सैकड़ों जन्म के सञ्चित कर्मों के मध्य में फल दान के लिये उन्मुख महा प्रबल पापपुण्यात्मक दुःखसुखोभयात्मक फलदायक मनुष्य के शरीर से भोगे जाने के योग्य कर्म से वह जीव अपने

अनुरूप मोहपाश से अविद्या रूप से बँधा हुआ उत्पन्न होता है । इससे आत्मा उत्पन्न होता है यह बात खण्डित हो गई । इतना अवश्य है कि जैसे कोई अपने घर में प्रवेश करता है उसी प्रकार जीवात्मा अपने कर्मवशात् प्राप्त शरीर में प्रवेश करता है—इस प्रकार यह अर्थ है ।

**प्रदीप्तकलिकाकारो जीवो हृदि सदा स्थितः ।**
**रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः ॥ २२ ॥**
**गुणबद्धस्तथा जीवः प्राणापानेन कृष्यते ।**
**जीव एवं महेशानि! परिवर्णानिपि शृणु ॥ २३ ॥**

प्रदीप्तकलिका के आकार के समान जीव सदा हृदय स्थान में निवास करता है । जिस प्रकार रस्सी में बँधा हुआ बाजपक्षी उड़कर भी वही खींच लिया जाता है, उसी प्रकार (कर्मपाश रूप) रस्सी में बँधा हुआ जीव भी प्राण अपान वायु के द्वारा शरीर में खींच लिया जाता है । हे महेशानि! जिस प्रकार शरीर में जीव प्रवेश करता है वह कहा गया । अब आगे का वर्णन सुनिए ॥ २२-२३ ॥

**अक्षिणी नासिका कर्णौ जिह्वा च कमलानने ।**
**हस्तौ पादौ महेशानि गुह्योपस्थौ क्रमात् प्रिये ॥ २४ ॥**
**नाभिश्च परमेशानि मनश्च परमेश्वरि ।**
**जाग्रत् स्वप्नसुषुप्त्याख्यामवस्थां सेवते हृदि ॥ २५ ॥**
**इन्द्रियाणां च सर्वेषां मनः परमसारथिः ।**
**पापपुण्यैर्महेशानि बन्धनं मनसः प्रिये ॥ २६ ॥**
**सङ्गत्या सदसत्कर्म जीवः सर्वं करोति हि ।**
**शुद्धसत्त्वात्मको जीवः सदसत्कर्मवर्जितः ॥ २७ ॥**

दो आँख, दो कान, नासिका जिह्वा, दो हाथ, दो पैर, गुह्य, उपस्थ, नाभि, मन, जाग्रत्, स्वप्न एवं सुषुप्त्यादि अवस्थाओं का वह जीव हृदय में बैठकर सेवन करता है । सभी इन्द्रियों का मन ही श्रेष्ठ सारथी है । हे प्रिये! हे महेशानि! पाप-पुण्य ये दोनों मन के बन्धन हैं । यह जीव सङ्गति प्राप्त कर अच्छा बुरा कर्म करता है । किन्तु शुद्ध सत्त्वात्मक जीव अच्छे बुरे दोनों प्रकार के कर्मों से बचता रहता है ॥ २४-२७ ॥

**मनसा जीवसंयोगात् तत्कार्यं कुरुते सदा ।**
**मासद्वये तु सम्पूर्णे भेदस्तत्र प्रजायते ॥ २८ ॥**
**मज्जास्थीनि त्रिभिर्मासैः केशास्त्वक् च चतुष्टये ।**
**कर्णाक्षिनासिकावक्त्रं कण्ठोदरं च पञ्चमे ॥ २९ ॥**

जीव मन से संयुक्त होने पर ही सदा कार्य करता है । दो मासपूर्ण होने पर

शरीर में भिन्नता आने लगती है । मज्जा, अस्थि एवं मांस तीसरे महीने में, केश एवं त्वक् चौथे मास में, कर्ण, अक्षि, नासिका, मुख, कण्ठ तथा उदर पाँचवे मास में उत्पन्न होते हैं ॥ २८-२९ ॥

**शुक्रादुत्पद्यते रक्तं रक्ताद् विन्दुसमुद्भवः ।**
**प्राणतो वायुरुत्पन्नः कालाग्निः स्यादपानतः ॥ ३० ॥**

शुक्र से रक्त उत्पन्न हुआ । रक्त से बिन्दु उत्पन्न हुआ है । प्राण से वायु उत्पन्न हुआ और अपान से कालाग्नि उत्पन्न हुआ ॥ ३० ॥

**शुक्रतो नाभिकोत्पत्तिः शुक्रादग्निसमुद्भवः ।**
**मासतश्च मनोत्पत्तिर्मज्जा चापि ततो भवेत् ॥ ३१ ॥**
**वायुना प्राणनिष्पत्तिः प्राणादग्निसमुद्भवः ।**
**शुक्रेणोत्पादिता जिह्वा नासिका सर्वदेहिनाम् ॥ ३२ ॥**

शुक्र से नाभि की उत्पत्ति, शुक्र से ही अग्नि की उत्पत्ति और (षष्ठ) मास में मनोत्पत्ति होती है । इसके बाद उसी से मज्जा होती है । वायु से प्राण की उत्पत्ति और प्राण से अग्नि की उत्पत्ति हुई है । सभी शरीरधारियों की जिह्वा और नासिका शुक्र से उत्पन्न कही गई है ॥ ३१-३२ ॥

**रक्तादुत्पद्यते नेत्रं वामं चैव तु दक्षिणम् ।**
**प्राणादुत्पद्यते शून्यं घ्राणरन्ध्रद्वयं तदा ॥ ३३ ॥**

रक्त से बाँया एवं दाहिना नेत्र उत्पन्न हुआ है । प्राण से आकाश उत्पन्न हुआ तथा नासिका एवं दोनों छिद्र उत्पन्न हुये ॥ ३३ ॥

**षष्ठे मुखं तथा पादौ सर्वाङ्गानि च सप्तमे ।**
**सन्धिः सम्पूर्णतां याति अष्टमे मासि वै ततः ॥ ३४ ॥ इति ।**

छठे महीने में मुख और पैर उत्पन्न हुये । सप्तम मास में सर्वाङ्गों की उत्पत्ति हुई । फिर अष्टम मास में सभी सन्धियाँ पूर्ण होती हैं ॥ ३४ ॥

**अध्यात्मविवेके तु विशेषः—**

**द्वितीये तु घनः पिण्डः पेशी षट्घनमर्बुदम् ।**
**स्त्रीपुन्नपुंसकानां तु प्रागवस्थाः क्रमादिमाः ॥ ३५ ॥**

यहाँ अध्यात्मविवेक में कुछ विशेष कहा है—स्त्री, पुरुष तथा नपुंसक के पहले की (गर्भ) की अवस्था क्रमशः इस प्रकार होती है, यथा—द्वितीय मास में पिण्ड घना हो जाता है और छह पेशियाँ तथा घना अर्बुद उत्पन्न होता है ॥ ३५॥

**तृतीये त्वंकुराः पञ्च करांघ्रिशिरसो मताः ।**

**अङ्गप्रत्यङ्गभागाश्च सूक्ष्माः स्युर्युगपत्तथा ॥ ३६ ॥**

तृतीय मास में हाथ पैर और शिर के पाँच अङ्कुर उत्पन्न होते हैं। इसी प्रकार अङ्ग-प्रत्यङ्ग के सूक्ष्म विभाग भी एक ही साथ उत्पन्न होते हैं ॥ ३६ ॥

**विहाय श्मश्रुदन्तादीन् जन्मानन्तरसम्भवान्।**
**एषा प्रकृतिरन्या तु विकृतिः सम्मता सताम्।**
**चतुर्थे व्यक्तता तेषां भावानामपि जायते ॥ ३७ ॥**

जन्म के बाद उत्पन्न होने वाले श्मश्रु दन्तादिकों को छोड़ कर यह प्रकृति कही गई। अन्य विकृतियाँ हैं ऐसा सज्जनों का मत है। चतुर्थ महीने में उन भावों की भी अभिव्यक्ति होने लगती है ॥ ३७ ॥

**मातृजं चास्य हृदयं विषयानभिकाङ्क्षति।**
**अतो मातृमनोऽभीष्टं कुर्याद् गर्भसमृद्धये ॥ ३८ ॥**

यतः माता से हृदय उत्पन्न होता है। अतः वह उन विषयों की आकाङ्क्षा करता है। इसलिये गर्भ की समृद्धि के लिये माता के मन के अनुकूल कार्य करना चाहिये ॥ ३८ ॥

**तां च द्विहृदयां नारीमाहुर्दोहदिनीं बुधाः।**
**अदानाद् दोहदानां स्युर्गर्भस्य व्यङ्गतादयः ॥ ३९ ॥**

उस समय बुद्धिमान् लोग उस गर्भिणी नारी को दो हृदय वाली होने के कारण 'दोहदिनी' कहते हैं। यदि उसके हृदयानुकूल पदार्थ नहीं दिया गया, तो गर्भ के विकृतादि दोष होने लगते हैं ॥ ३९ ॥

**मातुर्यद्विषयाऽलाभस्तदार्त्तो जायते सुतः।**
**गर्भः स्यादर्थवान् भोगी दोहदात् राजदर्शने ॥ ४० ॥**

माता को यदि उसके मन के अनुकूल विषय प्राप्त नहीं होता, तो गर्भस्थ बालक रोगी होता है। दोहद में राजदर्शन होने से गर्भ अर्थवान् तथा भोग सम्पन्न होता है ॥ ४० ॥

**अलङ्कारे सुललितो धर्मिष्ठस्तापसाश्रमे।**
**देवतादर्शने भक्तो हिंस्रो भुजगदर्शने ॥ ४१ ॥**

अलङ्कार के दर्शन से गर्भ मनोहर और धर्मिष्ठ होता है, तापसाश्रम एवं देवतादर्शन से गर्भ भक्त होता है, साँप के दर्शन से हिंसक होता है ॥ ४१ ॥

**गोधा शशे तु निद्रालुर्बली गोमांसदर्शने।**
**माहिषेण तु रक्ताक्षं लोमशं सूयते शिशुम् ॥ ४२ ॥**

गोधा और खरगोश के दर्शन से निद्रालु, गोमांस दर्शन से बलवान्, महिष दर्शन से लाल नेत्र वाला तथा लोमवान् बालक उत्पन्न होता है ॥ ४२ ॥

**प्रबुद्धं पञ्चमे पित्तं मांसशोणितपुष्टता ।**
**षष्ठेऽस्थिस्नायुनखरकेशरोमविविक्तता ॥ ४३ ॥**

पाँचवें महीने में पित्त परिपुष्ट होता है तब मांस और शोणित पुष्ट होने लगते हैं । इस प्रकार छठे महीने में अस्थि, स्नायु, नख, केश और रोम अलग-अलग उत्पन्न होते हैं ॥ ४३ ॥

**बलवर्णौ चोपचितौ सप्तमे त्वङ्गपूर्णता ।**
**अष्टमे त्वक्श्रुती स्यातां ओजश्चेतश्च हृद्भवम् ॥ ४४ ॥**

बल और वर्ण भी बढ़ता है । सातवें मांस में समस्त अङ्ग पूरे हो जाते हैं । आठवें महीने में त्वक् और कान उत्पन्न होते हैं तथा हृदय से ओज और तेज उत्पन्न होता है ॥ ४४ ॥

**शुद्धमापीतरक्तं च निमित्तं जीवितं मतम् ।**
**पुनरम्बां पुनर्गर्भं चञ्चलं तत् प्रधावति ।**
**अतो जातोऽष्टमे मासे न जीवत्योजसोज्झितः ॥ ४५ ॥ इति ।**

जीवन का निमित्त शुद्ध और आपीत रक्त हितकारी कहा गया है । किन्तु जब गर्भ चञ्चल होकर कभी माता की ओर और कभी गर्भ की ओर दौड़ता रहता है इस कारण ओज और तेज से रहित होकर वह अष्टम मास में उत्पन्न होने पर जीवित नहीं रहता ॥ ४५ ॥

**यामले तु—**

**अण्डाधारं तु कङ्कालमारभ्य गुदमूलतः ।**
**द्वात्रिंशज्जालविद्धो यो ग्रथितो वर्धते सदा ॥ ४६ ॥**

यामल में भी बतलाया गया है—अण्ड का आधार कङ्काल (रीढ़ की हड्डी) गुदा के मूल से आरम्भ करके बत्तीस जालों में ग्रथित होकर सदा ऊपर की ओर बढ़ता रहता है ॥ ४६ ॥

**तस्य मध्ये सदा सर्वनाड्यस्तत्र व्यवस्थिताः ।**
**इडा च पिङ्गला चैव सुषुम्णा च तृतीयका ॥ ४७ ॥**
**गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ।**
**अलम्बुषा कुहूश्चैव शङ्खिनी दशमी तथा ॥ ४८ ॥**
**अन्याश्च नाडिकाः क्षुद्राः सहस्राणि द्विसप्ततिः ।**
**नाड्योऽनन्ताः समुत्पन्नाः सुषुम्णा पञ्चपर्वसु ॥ ४९ ॥**

**मूलाधारोद्गतः प्राणस्ताभिर्व्याप्नोति तां तनुम् ।**

**पञ्च पर्वाणि च—स्वाधिष्ठानमणिपूरकानाहतविशुद्ध्याज्ञान्तानि । तत्राऽधोऽधो ग्रन्थिमारभ्योर्ध्वोर्ध्वग्रन्थिपर्यन्तं पर्वसमाप्तिरिति ।**

उस कङ्काल (रीढ़ की हड्डी) में सभी नाडियाँ अनुस्यूत रहती हैं । इडा पिङ्गला एवं सुषुम्णा—ये तीन और गान्धारी, हस्तिजिह्वा, पूषा, यशस्विनी, अलम्बुषा, कुहू तथा दसवीं शङ्खिनी—ये दश नाडियाँ हैं । इनके अतिरिक्त अन्य बहत्तर हजार क्षुद्र नाडियाँ भी हैं । किं बहुना; अन्य अनन्त नाडियाँ सुषुम्णा के पाँच पर्वों से उत्पन्न होती हैं । मूलाधार से उठी हुई प्राणवायु उन सब देहस्थ नाडियों को व्याप्त कर रहती है ॥ ४७-५० ॥

पाँच पर्व स्वाधिष्ठान, मणिपूर, अनाहत, विशुद्ध और आज्ञा चक्र हैं । वहाँ नीचे-नीचे की ग्रन्थि से आरम्भ कर ऊपर-ऊपर की ग्रन्थि पर्यन्त पर्व की समाप्ति हो जाती है ।

**आसां स्थानं यामले—**

**इडा च वामभागे तु पिङ्गला दक्षिणे तथा ।**<br>
**वक्त्ररन्ध्रे सुषुम्णा च गान्धारी वामचक्षुषि ॥ ५० ॥**<br>
**दक्षिणे हस्तिजिह्वा च पूषा कर्णे च दक्षिणे ।**<br>
**वामे यशस्विनी चैव मुखे चालम्बुषा मता ॥ ५१ ॥**

यामल में इनका स्थान इस प्रकार है—वाम भाग में इडा, दाहिने भाग में पिङ्गला, उसके मुख के छिद्र में सुषुम्णा, बाई ओर के चक्षु में गान्धारी, दाहिने चक्षु में हस्ति जिह्वा, दाहिने कान में पूषा एवं वाम कर्ण में यशस्विनी और मुख में अलम्बुषा नाडी रहती है ॥ ५०-५१ ॥

**कुहूश्च लिङ्गमूले तु शङ्खिनी शिरसोपरि ।**<br>
**एवं द्वारं समाश्रित्य तिष्ठन्ति दशनाडिकाः ॥ ५२ ॥**

लिङ्गमूल में कुहू तथा शिर के ऊपर शङ्खिनी नाडी रहती है । इस प्रकार शरीर के द्वारों का आश्रय लेकर दशो नाडियाँ स्थित रहती हैं ॥ ५२ ॥

**आसां स्वरूपं योगार्णवे—**

**इडा च शङ्खकुन्दाभा सव्यस्था चन्द्ररूपिणी ।**<br>
**पिङ्गला सितरक्ताभा दक्षस्था सूर्यरूपिणी ॥ ५३ ॥**

इनका स्वरूप योगार्णवतन्त्र में इस प्रकार है—इडा नाडी शङ्ख और कुन्द पुष्प के समान स्वच्छ है तथा चन्द्ररूपिणी है जो बाई ओर रहती है । पिङ्गला श्वेत और रक्त वर्ण की है तथा दाहिनी ओर निवास करती है जो सूर्यस्वरूपा है ॥५३॥

**तयोर्मध्ये सुषुम्णाख्या अग्नीषोमस्वरूपिणी ।**
**इडापृष्ठे तु गान्धारी मयूरगलसन्निभा ॥ ५४ ॥**

उन दोनों के मध्य में सुषुम्णा नाम की नाडी है जो अग्नीषोमस्वरूपा है । इडा के पृष्ठभाग में गान्धारीं नाडी का निवास है जिसका स्वरूप मोर के गले के समान है ॥ ५४ ॥

**सव्यपादादिनेत्रान्ता गान्धारी परिकीर्तिता ।**
**हस्तिजिह्वोत्पलप्रख्या नाडी तस्याः पुरःस्थिता ॥ ५५ ॥**

बायें पैर से लेकर नेत्र पर्यन्त रहने वाली नाडी 'गान्धारी' कही जाती है । उसके आगे कमल के समान हस्तिजिह्वा नाम की नाडी स्थित है ॥ ५५ ॥

**सव्यभागस्य मूर्द्धादिपादाङ्गुष्ठान्तमाश्रिता ।**
**पूषा तु पिङ्गला पृष्ठे नीलजीमूतसन्निभा ॥ ५६ ॥**

बायें भाग के मूर्धा से आरम्भ कर पैर के अङ्गुष्ठान्त तक वह स्थित है । 'पूषा' नाडी पिङ्गला के पीछे रहती है जो नीले बादल के समान है ॥ ५६ ॥

**याम्यभागस्य नेत्रान्ताद् यावत्पादतलं गता ।**
**अलम्बुषा पीतवर्णा कण्ठमध्ये व्यवस्थिता ॥ ५७ ॥**

दाहिने भाग के नेत्र के अन्त से पादतल पर्यन्त जाने वाली नाडी का नाम 'अलम्बुषा' है जिसका वर्ण पीत है । उसका निवास कण्ठ के मध्य में है ॥ ५७॥

**यशस्विनी शङ्खवर्णा पिङ्गला पूर्वदेशगा ।**
**गान्धार्याश्च सरस्वत्या मध्यस्था शङ्खिनी मता ॥ ५८ ॥**
**सुवर्णवर्णा पादादिकर्णान्ता सव्यभागके ।**
**पादाङ्गुष्ठादिमूर्धान्तं याम्यभागे कुहूर्मता ॥ ५९ ॥**

'यशस्विनी' का वर्ण शङ्ख के समान उज्ज्वल है और वह पिङ्गला के पूर्व भाग में रहती है । गान्धारी और सरस्वती के मध्य में 'शङ्खिनी' नाडी का निवास है । उसका वर्ण सुवर्ण के समान है । वह बाँयें भाग के पैर से लेकर कर्णान्त तक गई है । दक्षिण भाग में पाद के अङ्गुष्ठ से प्रारम्भ कर शिर पर्यन्त जाने वाली नाडी 'कुहू' है ॥ ५८-५९ ॥

**अत्र विशेषस्तन्त्रयोगे—**

**पूर्वोक्तायाः सुषुम्णाया मध्यस्थायाः सुलोचने ।**
**नाभिहृत्कण्ठतालुभ्रूमध्यपर्वसमुद्भवाः ॥ ६० ॥**
**अधोमुख्यः शिराः काश्चिदूर्ध्वमुख्यस्तथाऽपराः ।**

**परा तिर्यग् गतास्या च तत्र लक्षत्रयाधिकाः ॥ ६१ ॥**
**नाड्योऽर्धलक्षसंख्याताः प्रधानाः समुदीरिताः ।**
**तासु सर्वासु बलवान् प्राणो वायुः समन्ततः ।**
**संस्थितः सर्वदा व्याप्तः.................. ॥ ६२ ॥ इति ।**

यहाँ तन्त्रयोग में कुछ विशेष कहा गया है—हे सुलोचने! हमने पूर्व में जिस सुषुम्णा को मध्यभाग में स्थित कहा है, उससे नाभि, हृदय, कण्ठ, तालु एवं भ्रू के मध्य पर्व से अनेक नाडियाँ अधोमुखी हैं और कुछ ऊर्ध्वमुखी है तथा अन्य तिरछे की ओर निकली हुई है । इनकी संख्या तीन लाख है इनमें आधी लाख की संख्या में प्रधान नाडियाँ कही गई हैं । इन सभी नाडियों में बलवान् प्राणवायु चारों ओर से संस्थित होकर व्याप्त रहती है ॥ ६०-६२ ॥

**अध्यात्मविवेके तु—**

**अस्थ्नां शरीरे संख्या स्यात्षष्टियुक्तं शतत्रयम् ।**
**त्रीण्येवास्थिशतान्यत्र धन्वन्तरिरभाषत ॥ ६३ ॥**

अध्यात्मविवेक में कहा गया है—इस शरीर में अस्थियों की संख्या ३६० है किन्तु धन्वन्तरि इनकी संख्या ३०० ही मानते हैं ॥ ६३ ॥

**द्विशते त्वस्थिसन्धीनां स्यातामत्र दशोत्तरे ।**
**पेशी-स्नायु-शिरा-सन्धि-सहस्रद्वितयं मतम् ॥ ६४ ॥**

इनमें अस्थियों की सन्धि की संख्या २१० है और पेशी, स्नायु, शिरा तथा सन्धियों की संख्या दो सहस्र मानी गई है ॥ ६४ ॥

**नवस्नायुशतानि स्युः पञ्चपेशीशतान्यपि ।**
**अधिका विंशतिः स्त्रीणां स्तनयोर्दिग् भगे दश ॥ ६५ ॥**

स्नायु की संख्या ९०० है और पेशियों की संख्या ५०० है । स्त्रियों में पेशी की संख्या २० अधिक है क्योंकि स्तन में दश पेशी तथा भग में दश पेशी अधिक है ॥ ६५ ॥

**शिरा धमनिकानां तु लक्षाणि नवविंशतिः ।**
**सार्धानि स्युर्नवशती षड्पञ्चाशदयुता तथा ॥ ६६ ॥**

शिरा और धमनियों की संख्या उन्तीस लाख पचास हजार नौ सौ छप्पन कही गयी है ॥ ६६ ॥

**श्रीयामले—**

**क्षितिश्च वारि तेजश्च पवनाकाशमेव च ।**

**स्थैर्यं गता इमे पञ्च बाह्याभ्यन्तर एव च ॥ ६७ ॥**

श्रीयामल में भी कहा गया है—क्षिति, जल, तेज, वायु और आकाश ये पाँच शरीर में भीतर और बाहर स्थिर हैं ॥ ६७ ॥

**अस्थिचर्म तथा नाभिलोममांसं तथैव च ।**
**एते पञ्चगुणाः प्रोक्ताः पृथिव्यां च व्यवस्थिताः ॥ ६८ ॥**

अस्थि, चर्म, नाभि, लोम तथा मांस ये पाँच गुण पृथिवी में व्यवस्थित कहे गए हैं ॥ ६८ ॥

**मलं मूत्रं तथा श्लेष्मा शुक्रं शोणितमेव च ।**
**एते पञ्चगुणाः प्रोक्ता आपस्तत्र व्यवस्थिताः ॥ ६९ ॥**

मल, मूत्र, श्लेष्मा, शुक्र और शोणित—ये पाँच गुण जल में व्यवस्थित कहे गए हैं ॥ ६९ ॥

**क्षुधा तृषा तथा निद्रा प्रमोहः कान्तिरेव च ।**
**एते पञ्चगुणाः प्रोक्तास्तेजस्तत्र व्यवस्थितम् ॥ ७० ॥**

क्षुधा, तृषा, निद्रा, प्रमोह और कान्ति—ये पाँच गुण तेज में व्यवस्थित कहे गए हैं ॥ ७० ॥

**धावनं चलनोत्क्रमणे सङ्कोचनप्रसारणे ।**
**एते पञ्चगुणाः प्रोक्ताः मारुतस्तत्र संस्थितः ॥ ७१ ॥**

धावन, चलन, उत्क्रमण, सङ्कोचन और प्रसारण—ये पाँच गुण वायु में व्यवस्थित कहे गए हैं ॥ ७१ ॥

**रागो द्वेषश्च मोहश्च भयं लज्जा तथैव च ।**
**एते पञ्चगुणाः प्रोक्ता आकाशे च व्यवस्थिताः ॥ ७२ ॥**

राग, द्वेष, मोह, भय और लज्जा ये पाँच गुण आकाश में व्यवस्थित कहे गए हैं ॥ ७२ ॥

**अध्यात्मविवेके किञ्चिद् विशेषः—**

**अस्थि-मांस-त्वचं-स्नायु-रोम एव तु पञ्चमम् ।**
**इति पञ्चविधाः प्रोक्ताः पृथिवी कठिनात्मिका ॥ ७३ ॥**

अध्यात्मविवेक में कुछ विशेष कहा गया है—अस्थि, मांस, त्वक्, स्नायु और पाँचवाँ रोम—ये सभी कठिनात्मिका पृथ्वी है ॥ ७३ ॥

**लाला मूत्रं तथा शुक्रं शोणितं मज्ज-पञ्चमम् ।**

**अपां पञ्चगुणा एते द्रवरूपाः प्रकीर्तिताः ॥ ७४ ॥**

लार, मूत्र, शुक्र, शोणित और पाँचवाँ मज्जा—ये द्रव रूप से कहे जाने वाले पाँच गुण जल से उत्पन्न होते हैं ॥ ७४ ॥

**क्षुधा तृष्णा भयं निद्रा आलस्यं क्षान्तिरेव च ।**
**तृष्णात्मका गुणा एते तेजसः परिकीर्तिताः ॥ ७५ ॥**

क्षुधा, तृष्णा, भय, निद्रा, आलस्य, क्षमा तथा तृष्णा—ये सात गुण तेज से उत्पन्न कहे जाते हैं ॥ ७५ ॥

**धावनं चलनं भुक्तिराकुञ्चनप्रसारणम् ।**
**एते पञ्चगुणा वायोः क्रियारूपा व्यवस्थिताः ॥ ७६ ॥**

धावन, चलन, भोजन, आकुञ्चन और प्रसारण—ये पाँच गुण क्रियारूपा हैं जो वायु में व्यवस्थित रहते हैं ॥ ७६ ॥

**रागद्वेषौ तथा लज्जा भयं मोहस्तथैव च ।**
**व्योम्नः पञ्चगुणा एते शून्याख्ये सुखितात्मनि ॥ ७७ ॥ इति ।**

राग, द्वेष, लज्जा, भय और मोह—ये पाँच गुण आकाश के हैं यह आकाश शून्य है और सुखी आत्मा वाला है ॥ ७७ ॥

**यामले—**

**राजसः प्राणसञ्ज्ञः स्यात् मुख्यो देहस्य धारकः ।**
**तद्भेदा दश विख्याता यैर्व्याप्तं स्याच्छरीरकम् ॥ ७८ ॥**

यामल में भी कहा गया है—यह प्राणसञ्ज्ञक राजस गुण है जो देह धारण करने वाले सभी तत्त्वों में प्रधान है । उसके दश भेद विख्यात हैं, जिनसे समस्त शरीर व्याप्त है ॥ ७८ ॥

**प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।**
**नागः कूर्मोऽथ कृकलो देवदत्तो धनञ्जयः ॥ ७९ ॥**
**एते दशगुणाः प्रोक्ताः सर्वप्राणेषु संस्थिताः ।**
**हृदि प्राणो वसेन्नित्यमपानो गुदमण्डले ॥ ८० ॥**

प्राण, अपान, समान, उदान और व्यान—ये वायु हैं । इसी प्रकार नाग, कूर्म, कृकल, देवदत्त और धनञ्जय—ये दश गुण हैं । ये सभी प्राण में व्यवस्थित हैं । प्राण नित्य हृदय में निवास करता है और अपान गुदामण्डल में निवास करता है ॥ ७९-८० ॥

**समानो नाभिदेशे तु उदानः कण्ठदेशगः ।**

**व्यानः सर्वशरीरे तु प्रधानाः पञ्चवायवः ॥ ८१ ॥**

समान नाभि देश में तथा उदान कण्ठदेश में रहता है और व्यान समस्त शरीर में रहता है । इस प्रकार ये पाँच प्रधान वायु कहे गये हैं ॥ ८१ ॥

**योगार्णवे विशेषः—**

**इन्द्रनीलप्रतीकाशं प्राणरूपं प्रकीर्तितम् ।**
**आस्यनासिकयोर्मध्ये हृन्मध्ये नाभिमध्यगे ॥ ८२ ॥**
**प्राणालयमिति प्राहुः पादाङ्गुष्ठेऽपि केचन ।**

योगार्णवतन्त्र में विशेषरूप से कहा गया है—१. प्राण रूप वायु इन्द्र नील के समान कहा गया है । मुख नासिका के मध्य में, हृदय के मध्य में तथा नाभि के मध्य में इसे प्राणालय कहा जाता है । कुछ लोग पैर के अङ्गूठे को भी प्राणालय कहते हैं ॥ ८२-८३ ॥

**अपानयत्यपानोऽयमाहारं च मलायितम् ॥ ८३ ॥**
**शुक्रं मूत्रं तथोत्सर्गमपानस्तेन मारुतः ।**
**इन्द्रगोपप्रतीकाशः सन्ध्याजलदसन्निभः ॥ ८४ ॥**

२. अपान आहार को मल बनाकर उसे बाहर करता है । वायु इसी अपान से शुक्र और मूत्र को शरीर से बाहर करता है । यह इन्द्रगोप (वीरबहूटी) के सदृश तथा सन्ध्याकालीन बादल के समान अरुण वर्ण का होता है ॥ ८३-८४ ॥

**स च मेढ्रे च पायौ च ऊरूवक्षणजानुषु ।**
**जङ्घोदरे कृकट्यां च नाभिमूले च तिष्ठति ॥ ८५ ॥**

यह अपानवायु लिङ्ग में, पायु, ऊरू, वक्षण, जानु, जङ्घा, उदर, कृकटी तथा नाभि मूल में स्थित रहता है ॥ ८५ ॥

**व्यानो व्यानशयत्यन्नं सर्वव्याधि प्रकोपनः ।**
**महारजतसुप्रख्यो हानोपादानकारकः ॥ ८६ ॥**

३. व्यान वायु सभी अन्न को पचाता है और सभी व्याधियों का प्रकोप कराता है यह महारजत (चाँदी) के समान होता है, जो कुछ का त्याग करता है और कुछ का ग्रहण करता है ॥ ८६ ॥

**स चाक्षिकर्णयोर्मध्ये कट्यां वै गुल्फयोरपि ।**
**घ्राणे गले स्फिगुद्देशे तिष्ठत्यत्र निरन्तरम् ॥ ८७ ॥**

वह 'व्यान' वायु आँख, कान के मध्य में, कटि में, दोनों गुल्फों में, घ्राण में, गले में तथा स्फिग् (चूतड़) में निरन्तर निवास करता है ॥ ८७ ॥

**स्पन्दयत्यधरं वक्त्रं गात्रनेत्रप्रकोपनः ।**
**उद्वेजयति मर्माणि उदानो नाम मारुतः ॥ ८८ ॥**

४. 'उदान' नाम का वायु मुख और अधर में कम्पन करता है तथा शरीर और नेत्र को प्रकुपित्त करता है एवं सभी मर्म स्थानों को उद्विग्न करता है ॥ ८८॥

**विद्युत्पावकवर्णः स्यादुत्थानासनकारकः ।**
**पादयोर्हस्तयोश्चापि स तु सन्धिषु वर्तते ॥ ८९ ॥**

उसका वर्ण बिजली तथा अग्नि के समान चमकीला होता है । वह उठाता भी है और बैठाता भी है । वह दोनों पैरों तथा दोनों हाथों में तथा सभी सन्धियों में रहता है ॥ ८९ ॥

**पीतं भक्षितमाघ्रातं रक्तपित्तकफानिलान् ।**
**समं नयति गात्राणि समानो नाम मारुतः ॥ ९० ॥**

५. 'समान' नाम का मारुत पीत, भक्षित, आघ्रात, रक्त, पित्त, कफ तथा वायु और शरीर को समान बनाता है ॥ ९० ॥

**गोक्षीरसदृशाकारः सर्वदेहे व्यवस्थितः ।**
**उद्गारे नाग इत्युक्तो नीलजीमूतसन्निभः ॥ ९१ ॥**

'समान' वायु गाय के दूध के सदृश होता है और समस्त शरीर में सर्वत्र व्याप्त रहता है । ६. उद्गिरण की अवस्था में वायु 'नाग' कहा जाता है । यह नील बादल के समान होता है ॥ ९१ ॥

**उन्मीलने स्थितः कूर्मो भिन्नाञ्जनसमप्रभः ।**
**कृकलस्तु क्षुते चैव जपाकुसुमसन्निभः ॥ ९२ ॥**

७. नेत्रादि के उन्मीलन (ऊपर खोलने) में वायु का नाम 'कूर्म' होता है । वह काले अञ्जन के समान होता है । ८. भूख लगने की अवस्था में वायु का नाम कृकल होता है । यह जपा कुसुम के समान लाल होता है ॥ ९२ ॥

**विजृम्भणे देवदत्तः शुद्धस्फटिकसन्निभः ।**
**धनञ्जयस्तथा घोषे महारजतवर्णकः ॥ ९३ ॥**

९. जँभाई की अवस्था में वायु का नाम देवदत्त है । यह शुद्ध स्फटिक के समान होता है । १०. घोष (शब्द गर्जना) में वायु का नाम धनञ्जय है यह महा-रजत के समान होता है ॥ ९३ ॥

**ललाटे चोरसि स्कन्धे हृदि नाभौ त्वगस्थिषु ।**
**नागाद्या वायवः पञ्च सहैव परिनिष्ठिताः ॥ ९४ ॥ इति ।**

ललाट, वक्षस्थल, स्कन्ध, हृदय, नाभि, त्वक् और अस्थियों में ये पाँचों वायु एक साथ निवास करते हैं ॥ ९४ ॥

**शारदायामपि—**

**अग्नयो दोषदूष्येषु संलीना दश देहिनः ॥ ९५ ॥ इति ।**

शारदातिलकतन्त्र में भी कहा गया है—दश अग्नियाँ होती हैं, जो प्राणियों के दोष एवं दूष्य स्थान में छिपी रहती हैं ॥ ९५ ॥

**एतेषां नामानि योगनिबन्धे—**

**ते जातवेदसः सर्वे कल्माषः कुसुमस्तथा ।**
**दहनः शोषणश्चैव तपनश्च महाबलः ।**
**पिठरः पत्तगः स्वर्णस्त्वगधो भ्राज एव च ॥ ९६ ॥ इति ।**

इनका नाम योगनिबन्ध में इस प्रकार है—ये सभी अग्नियाँ हैं जिनके नाम कल्माष, कुसुम, दहन, शोषण, तपन, महाबल, पिठर, पत्तग, स्वर्ण, अगध और भ्राज है ॥ ९६ ॥

**अथ षडूर्मयः शारदायाम्—**

**बुभुक्षा च पिपासा च प्राणस्य मनसः स्मृतौ ।**
**शोकमोहौ शरीरस्य जरामृत्यू षडूर्मयः ॥ ९७ ॥**

शारदातिलकतन्त्र में षडूर्मि के विषय में इस प्रकार कहा गया है—बुभुक्षा और पिपासा प्राण की ऊर्मियाँ हैं तथा शोक एवं मोह मन की ऊर्मियाँ हैं । जरा और मृत्यु शरीर की ऊर्मिया कही गयी हैं । इस प्रकार कुल छह ऊर्मियाँ बतलायी गयी हैं ॥ ९७ ॥

**षट्कौशिकं च तत्रैव—**

**स्नाय्वस्थिशुक्रमज्जानः त्वङ्मांसास्त्राणि शोणितात् ।**
**षट्कौशिकमिदं प्रोक्तं सर्वदेहेषु देहिनाम् ॥ ९८ ॥**

वहीं पर छः कोश भी कहे गए हैं—शोणित से उत्पन्न होने वाले स्नायु, अस्थि, शुक्र, मज्जा, त्वक् और मांस—ये छह कोश है जो प्राणियों के शरीर में रहते हैं ॥ ९८ ॥

**अन्यत्रापि—**

**मृदपः शोणितं मेदो मांसं प्लीहा यकृद् गुदः ।**
**हृन्नाभीत्येवमाद्यास्तु भावा मातृभवा मताः ॥ ९९ ॥**

अन्यत्र भी बतलाया गया है—मिट्टी, जल, शोणित, मेद, मांस, प्लीहा,

यकृद्, गुदा, हृदय और नाभि इत्यादि भाव माता से उत्पन्न होते हैं ॥ ९९ ॥

**श्मश्रुलोमकचा स्नायुशिराधमनयो नखाः ।**
**दशनाः शुक्रमित्यादि स्थिराः पितृसमुद्भवाः ॥ १०० ॥ इति**

श्मश्रु, लोम, कच, स्नायु, शिरा, धमनियाँ, नख, दाँत तथा शुक्र—ये सभी स्थिर भाव पिता से उत्पन्न होते हैं ॥ १०० ॥

**अन्यदपि यामले—**

**ब्रह्माण्डे ये गुणाः सन्ति ते तिष्ठन्ति शरीरके ।**
**पातालो भूधरा लोका आदित्यादिनवग्रहाः ॥ १०१ ॥**
**नागाश्च सर्वदेहिनां पिण्डमध्ये व्यवस्थिताः ।**
**पादाधस्त्वतलं विद्यात् तदूर्ध्वं वितलं तथा ॥ १०२ ॥**
**जानुनोः सुतलं चैव महातलं सन्धिरन्ध्रके ।**
**तलातलं गुल्फमध्ये लिङ्गमूले रसातलम् ॥ १०३ ॥**
**पातालं कटिसन्धौ च पादादौ लक्षयेद् बुधः ।**
**भूर्लोको नाभिदेशे तु भुवो लोकस्तथा हृदि ॥ १०४ ॥**
**स्वर्लोकः कण्ठदेशे तु महर्लोकश्च चक्षुषि ।**
**जनलोकस्तदूर्ध्वं च तपोलोको ललाटके ॥ १०५ ॥**
**सत्यलोको महायोनौ भुवनानि चतुर्दश ।**
**त्रिकोणे च स्थितो मेरुरूर्ध्वलोके च मन्दरः ॥ १०६ ॥**

अन्य यामल में भी कहा गया है—ब्रह्माण्ड में जितने भी गुण हैं, वे सभी इस शरीर में भी हैं। पाताल, पर्वत, लोक एवं आदित्यादि नवग्रह और नाग—ये सभी इस शरीर रूप पिण्ड में व्यवस्थित हैं । पैर के नीचे अतल लोक, उसके बाद वितल लोक, दोनों जानु सुतल लोक, सन्धि के छिद्र में महातल, दोनों गुल्फ के मध्य में तलातल, लिङ्ग के मूल में रसातल, कटिसन्धि में पाताल है । इस प्रकार पैर के आदि भाग से कटिपर्यन्त भाग को बुद्धिमान् साधक सप्त पाताल लोक समझे । नाभिदेश में भूलोक, हृदय में भुवः लोक, कण्ठदेश में स्वर्लोक, चक्षु में महर्लोक, इसके ऊपर जन लोक, ललाट में तपोलोक और सत्यलोक महायोनि में है । इस प्रकार शरीर में चौदह भुवनों की स्थिति कही गई। त्रिकोण में मेरु स्थित है और ऊर्ध्वलोक में मन्दर पर्वत स्थित है ॥ १०१-१०६॥

**कैलासो दक्षिणे कोणे वामकोणे हिमालयः ।**
**गन्धमादो वीथिमध्ये क्रमेण परमेश्वरि ॥ १०७ ॥**

दक्षिणकोण में कैलास तथा वामकोण में हिमालय, वीथी मध्य में गन्धमादन पर्वत—इस प्रकार हे परमेश्वरि! ये क्रमशः स्थित है ॥ १०७ ॥

**विन्दौ विष्णुस्तदूर्ध्वे च सप्तैते कुलपर्वताः ।**
**अस्मिन् स्थाने च द्रष्टव्यो जम्बूद्वीपो व्यवस्थितः ॥ १०८ ॥**

बिन्दु में विष्णु, उसके ऊपर ये सप्त कुल पर्वत और इसी शरीर में जम्बूद्वीप को भी व्यवस्थित समझना चाहिए ॥ १०८ ॥

**प्लक्षद्वीपश्च मांसेषु क्रौंचद्वीपः शिखासु च ।**
**शाकद्वीपः पयोरक्ते प्राणिनां सर्वसन्धिषु ॥ १०९ ॥**
**तदूर्ध्वे शाल्मलिद्वीपः कुशश्च लोमसञ्चये ।**
**नाभौ च पुष्करद्वीपः सागरास्तदनन्तरम् ॥ ११० ॥**
**लवणोदस्तथा मूत्रे शुक्रे क्षीरोदसागरः ।**
**मज्जा दधिसमुद्रश्च तदूर्ध्वं घृतसागरः ॥ १११ ॥**
**वसायामुदकः प्रोक्त इक्षुः स्यात् कटिशोणिते ।**
**शोणितेषु सुरा प्रोक्ता ख्यातास्ते सागराः प्रिये ॥ ११२ ॥**

मांस में प्लक्षद्वीप, शिखा में क्रौञ्चद्वीप, प्राणियों की सभी सन्धियों में जहाँ पय और रक्त हैं वहाँ शाकद्वीप और उसके ऊपर शाल्मलिद्वीप, लोम समुद्राय में कुशद्वीप, नाभि में पुष्करद्वीप, इसके अनन्तर सप्त सागर इस प्रकार जानिये । मूत्र में लवण सागर, शुक्र में क्षीरसागर, मज्जा में दधिसागर, उसके ऊपर घृत-सागर, वसा में उदक, कटि के शोणित में इक्षुसागर, सामान्यतः शोणित में सुरासागर है । इस प्रकार हे प्रिये! हमने सभी सागरों का वर्णन किया ॥ १०९-११२ ॥

**ग्रहाणां मण्डलं चैव शृणु वक्ष्यामि पार्वति ॥ ११३ ॥**
**नादचक्रे स्थितः सूर्यो विन्दुचक्रे च चन्द्रमाः ।**
**लोचने मङ्गलः प्रोक्तो हृदि सोमसुतस्तथा ॥ ११४ ॥**

हे पार्वति! अब इस शरीर में ग्रह मण्डलों को कहता हूँ उसे सुनिए । नादचक्र में सूर्य स्थित है, बिन्दुचक्र में चन्द्रमा स्थित है, नेत्र में मङ्गल, हृदय में बुध की स्थिति है ॥ ११३-११४ ॥

**उदरे गुरुरित्युक्तः शुक्रे शुक्रस्तथैव च ।**
**नाभिचक्रे शनिः प्रोक्तो मुखे राहुः सदास्थितः ॥ ११५ ॥**

उदर में गुरु की स्थिति कही गई है । शुक्र में शुक्र स्थित हैं । नाभिचक्र में शनि और मुख में राहु व्यवस्थित है ॥ ११५ ॥

**पादे बाहौ च केतुश्च शरीरे ग्रहमण्डलम् ।**
**नवमे मासि गर्भस्थः सर्वान् संस्मरते मनः ॥ ११६ ॥**

पाद और बाहु में केतु स्थित हैं । इस प्रकार इस शरीर मण्डल में ग्रहों की स्थिति बतलायी गई है । गर्भ में नव मास में स्थित जीव इन सब ग्रहों का स्मरण करता है ॥ ११६ ॥

**नवद्वारे पुरे देही समयांश्च विकारिकान् ।**
**सुखदुःखसमं कृत्वा भुङ्क्ते च हृदये नृणाम् ॥ ११७ ॥**

यह आत्मा नवद्वार वाले इस पुर में स्थित रहकर हृदय में होने वाले वैकारिक समयों को तथा सुख-दुःखों को समान रूप से भोगता है ॥ ११७ ॥

**सुकृतं दुष्कृतं चैव यत्कृतं पूर्वजन्मनि ।**
**तत् सर्वं सकलं ज्ञात्वा ऊर्ध्वपादो ह्यधोमुखः ॥ ११८ ॥**

यह आत्मा अपने पूर्वजन्म में किये जाने वाले समस्त पुण्य और पापों को देखता हुआ ऊर्ध्वपाद और अधोमुख होकर देखता रहता है ॥ ११८ ॥

**तन्त्रान्तरे—**

**पाल्यन्तरितहस्ताभ्यां श्रोत्ररन्ध्रे पिधाय सः ।**
**उद्विग्नो गर्भसंवासादास्ते गर्भे लयान्वितः ॥ ११९ ॥**

अन्य तन्त्रों में भी विशेष कहा गया है—गर्भस्थ शिशु अपने घुटनों के नीचे किये हुये दोनों हाथों से कान के दोनों छिद्रों को बन्द कर गर्भ से उद्विग्न होकर गर्भ में लीन रहता है ॥ ११९ ॥

**स्मरन् पूर्वानुभूतांश्च नानायोनीश्च यातनाः ।**
**मोक्षोपायमभिध्यायन् वर्ततेऽभ्यासतत्परः ॥ १२० ॥**

अपने पूर्व जन्म के अनुभूत अनेक योनियों का तथा उन जन्म में दी जाने वाली यातनाओं का स्मरण करता है । मोक्ष के उपायों का ध्यान करता है और मोक्ष के उपाय के लिये प्रयत्न करता है ॥ १२० ॥

**अन्यत्रापि—**

**कृताञ्जलिर्ललाटेऽसौ मातृपृष्ठमभिश्रितः ।**
**अध्यास्ते संकुचद्गात्रो गर्भे दक्षिणपार्श्वतः ॥ १२१ ॥**
**वामपार्श्वस्थिता नारी क्लीवं मध्याश्रितं मतम् । इति ।**

अन्य ग्रन्थ में भी कहा गया है—वह मस्तक में दोनों हाथों से अञ्जलि बाँधे हुये, माता की पीठ की ओर मुख किये, गात्र को सिकोड़े हुये, गर्भ के दक्षिण भाग में स्थित रहता है । यदि लड़की है तब गर्भ के बायें भाग में स्थित रहती है, यदि नपुंसक है तो मध्य में स्थित रहता है ॥ १२१-१२२ ॥

**यामले—**

**इत्थम्भूतस्तदा गर्भे पूर्वजन्मशुभाशुभम् ।**
**स्मरँस्तिष्ठति दुःखात्मा छन्नदेहो जरायुणा ॥ १२२ ॥**
**कालक्रमेण स शिशुर्मातरं क्लेशयत्यपि ।**
**गर्भे च सुप्रविष्टेऽपि तिमिरे घोरदर्शने ॥ १२३ ॥**
**यदि माता सुखं भुङ्क्ते ह्यन्नपानादिकं ततः ।**
**जनन्या नाभिदेशे तु मुखं दत्त्वा पिबत्यसौ ।**
**ततो जीवति गर्भोऽसावन्यथा मरणं भवेत् ॥ १२४ ॥**

यामल में भी कहा गया है—इस प्रकार यह जीव अपने पूर्व जन्म में किये गये शुभाशुभ कर्म का स्मरण करता हुआ, जरायु से बँधा हुआ, कालक्रम के वश शिशु रूप से अपने तो दुःख भोगता ही है; माता को भी क्लेश पहुँचाता है । अत्यन्त भयानक घोर अन्धकार पूर्ण गर्भ में रहते हुये माता के द्वारा सुखपूर्वक किये गए अन्न-पानादिक रसों को नाभिदेश में मुख लगाकर पीता रहता है । जिसके कारण वह जीवित रहता है अन्यथा वह मर जाता है ॥ १२२-१२४ ॥

**किञ्चिद्विशेषो योगार्णवे—**

**आविश्य भुक्तमाहारं स वायुः कुरुते द्विधा ।**
**स प्रविश्यान्त्रमध्यस्थं पृथक् किट्टं पृथक् जलम् ॥ १२५ ॥**

अब योगार्णव में कुछ विशेष कहते हैं—वह गर्भ वायु रूप से प्रविष्ट होकर माता के द्वारा भोजन किये गये आहार को आँत के मध्य में मल तथा जल रूप में दो भागों में प्रविभक्त कर देता है ॥ १२५ ॥

**अग्नेरूर्ध्वं जलं स्थाप्य तदन्नं च जलोपरि ।**
**जलस्याधः स्वयं प्राणः स्थित्वाग्निं धमते शनैः ॥ १२६ ॥**

वह गर्भ अग्नि के ऊपर जल स्थापित करता है । फिर उस जल पर अन्न स्थापित करता है । फिर जल के नीचे स्वयं प्राण बन कर धीरे-धीरे अग्नि को जलाता है ॥ १२६ ॥

**वायुना व्यूह्यमानोऽग्निरत्युष्णं कुरुते जलम् ।**
**अन्नं तदुष्णतोयेन समन्तात् पच्यते पुनः ॥ १२७ ॥**

वायु के द्वारा धीरे-धीरे व्यूहमान अग्नि जल को उष्ण करता है । फिर उस गर्भ जल से वह अन्न चारों ओर से पक जाता है ॥ १२७ ॥

**द्विधा भवति तत्पक्वं पृथक् किट्टं पृथग् रसम् ।**
**रसेन तेन ता नाडीः प्राणान् पूरयते पुनः ॥ १२८ ॥**

**प्रतर्पयन्ति सम्पूर्णास्तच्च देहं समन्ततः ।**
**मातू रसवहानाडीमनुबद्धा पराभिधा ।**
**नाभिस्थनाडीगर्भस्य मात्राहृतरसावहा ॥१२९॥ इति ।**

वह पका हुआ अन्न पृथक् किट्ट (मल) और पृथक् रस रूप से दो रूपों में प्रविभक्त हो जाता है । वह रस सारे शरीर में व्याप्त रह कर शरीर को तृप्त करता है । इस प्रकार माता की रसवाहिनी नाडी में अनुस्यूत एक 'परा' नाम की नाडी है जो माता की रसवहा नाडी से रस खींचकर नाभिस्थ नाडी के गर्भ तक पहुँचाती रहती है ॥ १२८-१२९ ॥

**अन्यत्रापि—**

**त्रसरेणुद्वयं जन्तुः क्षणमात्रेण वर्धते ।**
**नाडिकामात्रतो यूकायुगलं च मुहूर्ततः ।**
**यूकानां वेदसंख्यं च दिनमात्राद् यवद्वयम् ॥ १३० ॥**

अन्यत्र भी कहा गया है—दो त्रसरेणु की मात्रा वाला वह जन्तु क्षण-क्षण मात्र में बढ़ता रहता है । वह घटिका मात्र में दो यूका प्रमाण का, फिर मुहूर्त्त में चार यूका प्रमाण का, तदनन्तर एक दिन में बढ़कर वह दो यव के परिमाण में हो जाता है ॥ १३० ॥

**यामले—**

**अभ्यस्यामि शिवं ज्ञानं संसारार्णवतारकम् ।**
**चिरयोगी तथा भूत्वा मुक्तो यास्यामि तत्क्षणम् ॥ १३१ ॥**

यामल में भी कहा गया है—जीव गर्भ में सन्तप्त होकर पश्चात्ताप करता हुआ कहता है—अब मैं यहाँ से निकलने के बाद ज्ञान-स्वरूप सदाशिव का जो संसार समुद्र से पार करने वाले हैं उनका ध्यान करूँगा । ऐसा करने से जब चिरयोगी बन जाऊँगा; तो तत्क्षण मुक्त हो जाऊँगा ॥ १३१ ॥

**एवं विचिन्त्यमानोऽसौ गर्भसम्प्राप्तसङ्कटः ।**
**निःसार्यते तदा बालः प्रबलैः सूतिमारुतैः ॥ १३२ ॥**

वह इसी तरह के विचार में निमग्न रहता है कि उसी समय उसे गर्भ में सङ्कट प्राप्त हो जाता है । प्रसूति का बलवान् वायु उस बालक को बलात् निकालने लगता है ॥ १३२ ॥

**पतितोऽपि न जानाति मूर्च्छितोऽपि ततश्च सः ।**
**सूतिवातगभीरेण योनिरन्ध्रस्य पीडनात् ॥ १३३ ॥**

वह उस समय इतना मूर्च्छित हो जाता है कि उसे गर्भ से बाहर गिरने की

याद नहीं रहती । क्योंकि गम्भीर महाक्लिष्ट सूतिका वायु योनि के छिद्र को घोर पीड़ित करता है ॥ १३३ ॥

**विस्मृतं सकलं ज्ञानं गर्भे यच्चिन्तितं हृदि ।**
**यथा भवति उल्वेषु सूतिभूतेषु पीडनात् ॥ १३४ ॥**

प्रसूतिकाल में वायु के कारण गर्भ में हृदय से चिन्तित उसका सारा ज्ञान विस्मृत हो जाता है । उल्व में इतनी भयानक पीड़ा होती है ॥ १३४ ॥

**मातरं स्मरते नित्यं बुभुक्षादौ च रोदिति ।**
**रक्ताधिकाद्भवेन्नारी भवेत्शुक्राधिकात् पुमान् ।**
**नपुंसकं च जायेत समे च रक्तबीजयोः ॥ १३५॥ इति।**

वह निरन्तर माता का स्मरण करता है; भूख लगने पर रोता है । रक्ताधिक्य में नारी तथा शुक्राधिक्य में पुरुष रूप में उत्पन्न होता है । किन्तु रक्त बीज के सम होने पर वही जीव नपुंसक बन कर उत्पन्न होता है ॥ १३५ ॥

**अन्यच्च प्रयोगसारे विशेषः—**

**द्वाविंशतिरजोभागाः शुक्रमात्राश्चतुर्दश ।**
**गर्भसञ्जनने काले पुंस्त्रियोः सम्भवन्ति हि ॥ १३६ ॥**

और भी प्रयोगसारतन्त्र में विशेषरूप से कहा गया है—गर्भ में उत्पत्ति काल में स्त्री में बत्तीस अंश रजोभाग तथा पुरुष में चौदह अंश शुक्र की मात्रा बतलायी गयी है ॥ १३६ ॥

**नारी रजोऽधिकेंऽशे स्यान्नरः शुक्राधिकेंऽशके।**
**उभयोरुक्तसंख्यायां स्यान्नपुंसकसम्भवः ॥ १३७॥ इति।**

रज की अधिकता की स्थिति में नारी तथा शुक्राधिक्य अंश में नर उत्पन्न होता है । किन्तु दोनों के बराबर होने पर नपुंसक उत्पन्न होता है ॥ १३७ ॥

**अन्यदपि वाग्भटे—**

**स्त्रीपुंसोः सामरस्ये तु प्राप्ते शुक्रार्तवे पुनः ।**
**वायुना बहुधा भिन्ने यथास्वं बह्वपत्यता ॥ १३८ ॥**

अन्यत्र वाग्भट्ट में भी कहा गया है—पुनः स्त्री-पुरुष में शुक्र और रज के सामरस्य होने पर वायु के द्वारा उसके भिन्न हो जाने से अनेक सन्तानें उत्पन्न हो जाती हैं ॥ १३८ ॥

**वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ।**
**पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ॥ १३९ ॥**

**शुक्रगर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ।**
**वीर्यवन्तं सुतं सूते ततो न्यूनाऽब्दयोः पुनः ।**
**रोगाल्पायुरधन्यो वा गर्भो भवति नैव च ॥ १४० ॥**

मल के द्वारा विकृत होने पर और वियोनि की विकृति से विकारयुक्त सन्तान होती है । जब पूरे सोलह वर्ष की षोडशी बीस वर्ष वाले पुरुष से सङ्गत होती है, तब शुक्र के गर्भाशय में प्रवेश कर वायु के द्वारा रक्त से मिलने पर स्त्री वीर्यवान् पुत्र उत्पन्न करती है । किन्तु जब दोनों कम अवस्था में सङ्गत होते हैं, तब रोगी, अल्पायु और अभागी सन्तति होती हैं अथवा गर्भ ठहरने की सम्भावना सन्दिग्ध हो जाती है ॥ १३९-१४० ॥

**पञ्चैतानि च सृज्यन्ते गर्भस्थस्यैव देहिनः ।**
**आयुः कर्म च वित्तं च विद्या निधनमेव च ॥ १४१ ॥**

जब जीव गर्भ में ही रहता है तभी आयु, कर्म, वित्त, विद्या और मृत्यु—ये पाँच उसी समय निश्चित हो जाते हैं ॥ १४१ ॥

**बालकश्च शिशुश्चैव गण्डः कैशोरकस्तथा ।**
**ततः परं तु युवकः प्रौढश्चैव ततः परम् ।**
**अतिप्रौढस्तथा वृद्धस्त्वतिवृद्धस्ततः परम् ॥ १४२ ॥**
**प्रमितं मरणञ्चैव अवस्थाः परिकीर्तिताः ।**
**तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम् ॥ १४३ ॥**

बालक, शिशु, पौगण्ड, कैशोर, युवक, प्रौढ, उसके अनन्तर अतिप्रौढ, वृद्धत्व तथा अतिवृद्धत्व, फिर देह की अन्तिम अवस्था मरण—ये अवस्थाओं के नाम बतलाए गये हैं । मरणोपरान्त तत्क्षण ही जीव अतिवाहिक शरीर धारण करता है ॥ १४२-१४३ ॥

**केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित् ।**
**प्रेतदेहमिति प्रोक्तं क्रमादेतन्न संशयः ॥ १४४ ॥**

यह अतिवाहिक शरीर केवल मनुष्यों का होता है; अन्य प्राणियों का नहीं । इसे प्रेतदेह कहते हैं; इसमें संशय नहीं ॥ १४४ ॥

**ततः सपिण्डीकरणे बान्धवैः सुकृतेन वै ।**
**पूर्णे सम्वत्सरे देहस्ततोऽन्यो हि प्रपद्यते ॥ १४५ ॥**

फिर पुण्यवशात् बन्धुओं द्वारा सपिण्डीकरण के पश्चात् संवत्सर पूर्ण होने पर वह अन्य देह धारण करता है ॥ १४५ ॥

**ततः स नरकं याति स्वर्गं वा स्वेन कर्मणा।**
**देवत्वमथ मानुष्यं पशुत्वं पक्षिता तथा ॥ १४६ ॥**
**कृमित्वं स्थावरत्वं च जायते जन्मकर्मभिः।**
**स्थावरा जङ्गमाद्याश्च पक्षिणः पशवो नराः ॥ १४७ ॥**

फिर वह अपने कर्म के द्वारा स्वर्ग जाता है अथवा नरक जाता है अथवा देवत्व, मानुष्य, पशुत्व, पक्षिता, कृमित्व एवं स्थावरत्व आदि शरीर अपने जन्म के कर्म के अनुसार धारण करता है ॥ १४६-१४७ ॥

**जायन्ते च म्रियन्ते च संसारे दुःखसागरे।**
**कर्मणा जायते जन्तुः कर्मणैव प्रलीयते ॥ १४८ ॥**

इस प्रकार स्थावर, जङ्गमादि पक्षियों एवं पशु चाहे जो भी हों; अपने कर्म के अनुसार इस दुःख-सागर रूप संसार में उत्पन्न होते हैं और अपने कर्म के अनुसार मरते हैं ॥ १४८ ॥

**देहे विनष्टे तत्कर्म पुनर्देहं प्रलभ्यते।**
**यथा धेनुसहस्त्रेषु वत्सो विन्दति मातरम् ॥ १४९ ॥**
**तथा शुभाशुभं कर्म कर्त्तारमनुगच्छति।**
**प्राक्तनं बलवत् कर्म कोऽन्यथा कर्त्तुमर्हति ॥ १५० ॥**

एक शरीर के विनष्ट होने पर फिर वही कर्म दूसरा शरीर धारण करता है। जिस प्रकार हजारों गौओं के मध्य में बछड़ा अपनी माता को खोज लेता है उसी प्रकार शुभाशुभ कर्म अपने कर्त्ता को खोज लेते हैं। पूर्व जन्म का किया हुआ कर्म अत्यन्त बलवान् होता है; उसे कौन अन्यथा कर सकता है ॥ १४९-१५०॥

**देहः कर्मात्मकः प्रोक्तस्तत्र देवि! प्रतिष्ठितम्।**
**कर्मयोगानुरूपेण निर्माणं विधिना दिशेत् ॥ १५१ ॥**

हे देवि! यह शरीर कर्मात्मक है। विधि ने कर्म के अनुसार शरीर निर्माण कर उसमें जीव को प्रतिष्ठापित किया है ॥ १५१ ॥

**चराचरमिदं सर्वं विद्धिकर्मात्मकं प्रिये।**
**माता कर्म पिता कर्म कर्मैव परमं गुरुः ॥ १५२ ॥**
**स्वर्गं वा नरकं वापि कर्मणैव लभेन्नरः।**
**सुखदुःखमयैः स्वीयैः पुण्यपापैर्नियन्त्रितः ॥ १५३ ॥**

हे प्रिये! इस समस्त चराचरात्मक जगत् को कर्मात्मक समझो। माता कर्म है, पिता कर्म है और कर्म ही परमगुरु है। इतना ही नहीं; मनुष्य कर्म के अनुसार स्वर्ग या नरक प्राप्त करता है। यह समस्त जगत् सुख-दुःखमय अपने

द्वारा किये गये पुण्य-पापों से नियन्त्रित है ॥ १५२-१५३ ॥

**तत्तज्जातियुतं देहं सम्भोगं च स्वकर्मजम् ।**
**तत्र जन्मसहस्राणां सहस्रैरपि पार्वति ॥ १५४ ॥**
**कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ।**
**निद्राभीमैथुनाहाराः सर्वेषां प्राणिनां समाः ॥ १५५ ॥**

तत्तज्जन्मसहस्रों के पश्चात्, किं बहुना; उन सहस्रों के भी सहस्र जन्म के पश्चात् पुण्यवशात् पुण्य का सञ्चय होने पर यह जीव किसी प्रकार मनुष्य जन्म प्राप्त करता है । ऐसे तो निद्रा, भय, मैथुन एवं आहार सभी प्राणियों में समान ही होते हैं ॥ १५४-१५५ ॥

**ज्ञानवान् मानवः प्रोक्तो ज्ञानहीनः पशुः प्रिये ।**
**सम्पदं स्वप्नसङ्काशं यौवनं कुसुमोपमम् ॥ १५६ ॥**

हे प्रिये! मनुष्य ही ज्ञानवान् है, ज्ञानहीन पशु है, सम्पत्ति स्वप्न के समान है, और यौवन पुष्प के समान है ॥ १५६ ॥

**तडिच्चञ्चलमायुश्च यस्य ज्ञानं स मानवः ।**
**चतुराशीतिलक्षेषु शरीरेषु शरीरिणाम् ॥ १५७ ॥**

आयु बिजली के समान चञ्चल है । जीव के चौरासी लाख योनियों में जिसमें ज्ञान है; वही मनुष्य है ॥ १५७ ॥

**न मानुष्यं विनान्यत्र तत्त्वज्ञानं तु लभ्यते ।**
**ब्रह्मविष्णुमहेशादिदेवता भूतजातयः ॥ १५८ ॥**
**नाशमेवानुधावन्ति तस्माच्छ्रेयः समाचरेत् ।**
**स्वदेहधनदारादिनिरताः सर्वजन्तवः ॥ १५९ ॥**

मनुष्य योनि के बिना अन्य किसी भी योनि में तत्त्वज्ञान सुलभ नहीं है । ब्रह्मा, विष्णु एवं महेशादि देवता भूत जातियाँ ही हैं; ये भी नाशवान् हैं । अपने-अपने देह, धन एवं दारादि में आसक्त हैं इसलिये मानव जीवन प्राप्त कर कल्याणकारी रास्ता पकड़ना चाहिये ॥ १५८-१५९ ॥

**जायन्ते च म्रियन्ते च हा हन्ताऽज्ञानमोहिताः ।**
**प्रभवं सर्वदुःखानामाश्रमं सकलापदाम् ॥ १६० ॥**
**आलयं सर्वपापानां संसारं वर्जयेत् प्रिये! ।**
**प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ॥ १६१ ॥**

ओह! कितने खेद की बात है कि सभी जन्तु अज्ञान से मोहित होकर जीते

और मरते रहते हैं । अरे; यह संसार सभी दुःखों का जन्म स्थान है । सभी आपत्तियों का आश्रम है । सभी प्रकार के पापों का घर है । इसलिये हे प्रिये! संसार का त्याग करना चाहिये । यह शरीर प्रतिक्षण क्षीयमाण है, जिसको प्राणी नहीं देख पाता ॥ १६०-१६१ ॥

**आमकुम्भ इवाम्भस्थो विशीर्णश्च विभाव्यते ।**
**अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे ॥ १६२ ॥**
**लपन्तमिति मर्त्यं च हन्ति कालो वृकोदरः ।**
**पृथिवी दह्यते येन मेरुश्चापि विशीर्यते ॥ १६३ ॥**
**शुष्यते सागरजलं शरीरे देवि! का कथा ।**
**मोहपाशमयैः पाशैर्नरो बद्धो हि तिष्ठति ॥ १६४ ॥**
**स्त्रीधनादिषु संसक्तो मुच्यते न कदाचन ।**
**अशक्ता देहकर्माणि सुखदुःखानि भुञ्जते ॥ १६५ ॥**

यह जलयुक्त कच्चे घड़े के समान प्रतिक्षण क्षीण हो रहा है; पर मालूम नहीं पड़ता । मनुष्य 'अपत्यं मे कलत्रं मे बान्धवा मे'—इस प्रकार 'मे मे' का प्रलाप करता रहता है किन्तु कालरूपी भेड़िया इसे क्षण में नष्ट कर देता है । हे देवि! जब यह पृथ्वी जल सकती है, मेरु पर्वत खण्ड-खण्ड हो सकता है, सागर का जल सूख सकता है; तब इस शरीर की बात ही क्या? यह मनुष्य मोहरूपी पाशों में जकड़ा हुआ है, स्त्री धनादि में संसक्त है । अतः उसका इससे छुटकारा कदापि नहीं होता । मुक्ति में अशक्त होने के कारण देह से कर्म करता है और उसको सुख-दुःख का भोग कराता रहता है ॥ १६२-१६५ ॥

**परतन्त्राज्ञानिनो देवि! यान्त्यायान्ति पुनः पुनः ।**
**अबन्धबन्धनं सङ्गमसत्सङ्गं महाविषम् ॥ १६६ ॥**

हे देवि! इस प्रकार बिना बन्धन के बँधे हुये से संसारी जीव मरते जीते रहते हैं । महाविष स्वरूप असत् का सङ्गम करते हैं । परतन्त्र तथा अज्ञानी होने के कारण संसार के आवागमन में चक्कर काटते रहते हैं ॥ १६६ ॥

**सत्सङ्गश्च विवेकश्च निर्मलं लोचनद्वयम् ।**
**यस्य नास्ति नरः सोऽन्धः कथं न स्यादमार्गगः॥ १६७ ॥**

सत्सङ्ग और विवेक—ये दो ही मानव जीवन के निर्मल दो नेत्र हैं । जिसके पास ये दोनों नहीं है, वे अन्धे हैं । यदि ऐसे लोग कुमार्गगामी हो जायें तो क्या आश्चर्य है? ॥ १६७ ॥

**द्वे पदे बन्धमोक्षाय न ममेति ममेति च ।**
**ममेति बध्यते जन्तुर्न ममेति प्रमुच्यते ॥ १६८ ॥**

'न मम-मम' ये दो ही पद बन्ध और मोक्ष के निमित्त कारण है । 'मम' इस पद से आदमी बँधता है तथा 'न मम' इसके ज्ञान से मुक्त होता है ॥ १६८ ॥

**ममेत्यध्यसनाद् बद्धो विमुक्तिर्न ममेति च ।**
**मांसलुब्धो यथा मत्स्यो लौहं शंकुं न पश्यति ॥ १६९ ॥**
**सुखलुब्धस्तथा देही यमबाधां न पश्यति ।**
**ज्ञात्वा पापविनिर्भिन्नं सिक्तं विषयसर्पिषा ॥ १७० ॥**
**रागद्वेषानलैः पक्वं मृत्युरश्नाति मानवम् ।**
**स्वदेहमपि जीवोऽयं त्यक्त्वा याति कुलेश्वरि॥ १७१ ॥**

'मम' इस अध्यास से जीव बँधता है और 'न मम' इसके अध्यास से विमुक्त हो जाता है । जिस प्रकार से मांस लोभी मछलियाँ लोहे का काँटा नहीं देख पाती। ठीक उसी प्रकार सुख का लोभी मनुष्य मृत्यु को नहीं देख पाता । मृत्यु स्वयं पाप के द्वारा जीव को जीर्ण देखता है और उसे विषयरूपी घृत से संसिक्त देखता है, इतना ही नहीं; रागद्वेषरूपी अग्नि से उसे पका हुआ देखता है, तब मृत्यु मानव को खा जाता है । हे कुलेश्वरि! इस प्रकार यह जीव अपना भी देह छोड़कर इस लोक से चला जाता है ॥ १६९-१७१ ॥

**स्त्रीमातृधनपुत्रादिसम्बन्धः केन हेतुना ।**
**शतं जीवति सत्पुण्यो निद्रा तस्यार्धहारिणी ॥ १७२ ॥**

जब सब कुछ छोड़कर जाना अवश्यम्भावी है । तब यह जीव स्त्री, माता, धन एवं पुत्रादि में आसक्ति किस कारण से करता है । यदि पुण्यवान् है; तब अधिक से अधिक यह मनुष्य सौ वर्ष तक जीता है, जबकि उसमें उसका आधा भाग निद्रा में ही बीत जाता है ॥ १७२ ॥

**बालभोगजरादुःखैरर्धं तदपि निष्फलम् ।**
**दुःखमूलो हि संसारः स यस्यास्ति स दुःखितः ॥ १७३ ॥**

आधी आयु बाल, युवा और जरादि दुःखों में बीत जाती है जो सर्वथा निष्फल है । इस प्रकार यह संसार दुःख का मूल है । ऐसा संसार जिसका है, वह महा दुःखी है ॥ १७३ ॥

**तस्य त्यागः कृतो येन सः सुखी नापरः प्रिये ।**
**प्रभाते मलमूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे रवौ ॥ १७४ ॥**
**रात्रौ मदननिद्राभ्यां बाध्यन्ते मानवाः सदा ।**
**दिव्यौषधं न सेवन्ते महाव्याधिविनाशनम् ॥ १७५ ॥**

हे प्रिये! जिसने इस संसार का त्याग किया; वही सुखी है और कोई नहीं ।

प्रभातकाल मल-मूत्र के त्याग में, मध्यकाल भूख-प्यास में, रात्रिकाल मैथुन और निद्रा में मनुष्य बिता देते हैं। किन्तु इन सभी महाव्याधियों की विनाश करने वाली दिव्य औषधि का वे सेवन नहीं करते ॥ १७४-१७५ ॥

**तद्व्याधिवर्धनाऽपथ्यं कुर्वन्ति हि कुभेषजम्।**
**सुकर्म फलदं हित्वा दुष्कर्माणि करोति यः ॥ १७६ ॥**
**कामधेनुं समाक्रम्य ह्यर्कक्षीरं स मृग्यति।**
**अनित्यानि शरीराणि विभवो नैव शाश्वतः ॥ १७७ ॥**

बल्कि उन व्याधियों के बढ़ाने के लिये अपथ्य और और कुभेषज का सेवन करते हैं। जो फलद सुकर्म का त्याग कर दुष्कर्म करते हैं। वे कामधेनु का त्याग कर मदार के दूध का सेवन करते हैं। यह शरीर अनित्य है, धन भी सदा रहने वाला नहीं है ॥ १७६-१७७ ॥

**नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसञ्चयः।**
**अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ॥ १७८ ॥**
**ध्रुवं यो नार्जते धर्मं स ज्ञेयो मूढचेतनः।**
**न पुत्रोऽपि सहायार्थं पिता माता न गच्छति ॥ १७९ ॥**

मृत्यु समीप में ही बैठा हुआ है। अतः मनुष्य को धर्म सञ्चय करना चाहिये। यह शरीर अनित्य है, प्रतिक्षण इसका विनाश हो रहा है। अतः जो इस अनित्य शरीर से धर्म सञ्चय नहीं करता, उसे मूर्ख समझना चाहिये। परलोक में सहायता के लिये न पुत्र जाता है और न माता-पिता ही जाते हैं ॥ १७८-१७९ ॥

**न च पुत्री न च ज्ञातिर्धर्मस्तिष्ठति केवलम्।**
**पुत्रदारमयैः पाशैः पुमान् बद्धो न मुच्यते ॥ १८० ॥**

न पुत्री और न ज्ञातिजन ही जाते हैं। मात्र केवल धर्म ही साथ में जाता है। प्राणी पुत्र द्वारा भयपाश से इतना जकड़ कर बँधा रहता है। जिससे बँधे रहने पर कदापि उसका छुटकारा नहीं होता ॥ १८० ॥

**पण्डिते चैव मूर्खे च बलिन्यप्यथ दुर्बले।**
**ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ १८१ ॥**
**राजतः सलिलादग्नेश्चौरतश्च जनादपि।**
**भयं देहवतां नित्यं मृत्योः प्राणभृतामिव ॥ १८२ ॥**

पण्डित, मूर्ख, बलवान्, दुर्बल, धनी और दरिद्र सर्वत्र मृत्यु समान रूप से देखता है। राजा से, जल से, अग्नि से, चोर से, किं बहुना; मनुष्यों से भी देहधारियों को नित्य भय इस प्रकार रहता है जिस प्रकार प्राणियों को मृत्यु से भय

लगा रहता है ॥ १८१-१८२ ॥

**सद्यः स्वकार्यं कुर्वीत पूर्वाह्णे चापराह्णिकम् ।**
**न हि प्रतीक्षते मृत्युः कृतमप्यथवाऽकृतम् ॥ १८३ ॥**

जो कार्य करना है, उसे सद्यः कर लेना चाहिये । पुरुषार्थी व्यक्ति अपराह्ण धन का कार्य पूर्वाह्ण में ही कर लेवे, क्योंकि मृत्यु उसके कृताकृत कार्य की प्रतीक्षा नहीं करता ॥ १८३ ॥

**कर्मणा मनसा वाचा यो धर्मनिरतः सदा ।**
**अफलाकाङ्क्षिचित्तो यः स मोक्षमधिगच्छति ॥ १८४ ॥**

जो कर्मणा, मनसा, वाचा, धर्म मार्ग में लगा रहता है और जो कर्म में फल की आकाङ्क्षा नहीं करता वही मोक्ष प्राप्त करता है ॥ १८४ ॥

**अहो मोहस्य माहात्म्यं तन्मायाजनितस्य च ।**
**किमन्यमपि देवेशि! मोहयेदमरानपि ॥ १८५ ॥**

अहो मोह का माहात्म्य और अहो मोहजन्य माया का माहात्म्य कितना आश्चर्यकारी है कि वह देवताओं को भी मोहित कर लेता है ॥ १८५ ॥

**तथा च मार्कण्डेये—**

**महामाया हरेश्चैषा तया सम्मोह्यते जगत् ।**
**ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।**
**बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ १८६ ॥**

**अस्यार्थः—तया = महामायया, जगत् सम्मोह्यते । न केवलं जगत् देवानपि । ज्ञानिनामिति प्रशंसायामिनिः । नित्यज्ञानिनामपीत्यर्थः । महती चासौ माया चेति महामाया । ब्रह्मविष्णुशिवादीनां मोहजनकत्वात् महामाया ।**

मार्कण्डेयपुराण (सप्तशती) में भी बतलाया गया है—यह विष्णु की महामाया है, जो सारे जगत् को मोहित तो करती ही है; देवताओं को भी सम्मोहित कर लेती है । वह भगवती अत्यन्त ज्ञानियों के चित्त को भी मोहित कर लेती है और उन्हें मोह के लिये बलपूर्वक आकृष्ट कर महान् माया प्रदान करती है ॥ १८६ ॥

**विमर्श**—तया अर्थात् उस महामाया के द्वारा यह सम्पूर्ण जगत् मोहित कर लिया गया है । मात्र जगत् ही मोह में नहीं फँसा है किन्तु देवता भी मोहपाश में आबद्ध हैं । ज्ञानिनामिति प्रशंसा अर्थ में इनि प्रत्यय है । नित्यज्ञानियों को भी मोह में डाल देती है, जैसे जडभरत । महती चासौ माया महामाया (कर्मधारय समास है) ब्रह्मा, विष्णु एवं शिवादिकों को मोहित करने के कारण ही वह भगवती महामाया कहलाती हैं ॥ १८६ ॥

**तथा चोक्तं यामले—**

**सा एव माया प्रकृतिर्या मोहयति शङ्करम् ।**
**हरिं तथा विरञ्चिं च तथैवान्याँश्च निर्जरान् ॥ १८७ ॥**

ऐसा ही यामलतन्त्र में भी कहा गया है—वही माया प्रकृति है, जो स्वयं शङ्कर को मोहित तो करती ही है; विष्णु, ब्रह्मा तथा अन्य देवताओं को भी मोहित करती है ॥ १८७ ॥

**कालिकापुराणे—**

**गर्भान्तर्ज्ञानसम्पन्नं प्रेरितं सूतिमारुतैः ।**
**उत्पन्नं ज्ञानरहितं कुरुते या अहर्निशम् ॥ १८८ ॥**

कालिकापुराण में भी कहा गया है—वह भगवती गर्भ के भीतर ज्ञानसम्पन्न जीव को प्रसूतिगत मारुत से प्रेरित कर उत्पन्न होने के बाद उसे दिन-रात ज्ञानरहित बना देती है ॥ १८८ ॥

**पूर्वातिपूर्वजन्मोत्थसंसारेण नियोज्य च ।**
**आहारादौ ततो मोहं ममत्वं ज्ञानसंशयम् ॥ १८९ ॥**

पूर्व से पूर्व जन्मों के संस्कारों में नियुक्त कर आहारादि में मोह उत्पन्न तो करती ही है, ज्ञान में भी संशय उत्पन्न करती है ॥ १८९ ॥

**क्रोधोपरोधलोभेषु क्षिप्त्वा क्षिप्त्वा पुनः पुनः ।**
**पश्चात् कामे नियोज्याशु चिन्तायुक्तमहर्निशम् ॥१९०॥ इति ।**

वही भगवती क्रोध एवं उपरोध तथा लोभ में जीव को बारम्बार उठा कर फेंकती रहती हैं । फिर उसे काम में नियुक्त कर दिन-रात चिन्तायुक्त बनाती रहती हैं ॥ १९० ॥

**मोहपरत्वे नारदं प्रति विष्णुवाक्यम्—**

**महद्विष्णोरहङ्कारो बभूव सहसेति च ।**
**सर्वं मल्लोमकूपेषु विश्वमेवाहमीश्वरः ॥ १९१ ॥**
**संहारभैरवो भूत्वा तं जग्राह स लीलया ।**
**कलहे गङ्गया सार्धं वाण्या नारायणाग्रतः ॥ १९२ ॥**
**सरस्वतीं च तत्याज तस्या दर्पं बभञ्ज सः ।**
**दर्पयुक्ता महालक्ष्मीर्बभूव सहसा मुने ॥ १९३ ॥**
**पराभूता महादेव ! जयेन विजयेन च ।**
**दर्पयुक्तां सतीं वीक्ष्य शम्भुस्तत्याज सत्त्वरम् ॥ १९४ ॥**

मोह के विषय में नारदजी से विष्णु के द्वारा कहे गये वचन—हे नारद! सहसा विष्णु को अहङ्कार हुआ कि यह सारा विश्व हमारे रोमकूपों में स्थित है, मैं स्वयं ही ईश्वर हूँ । तब भगवान् शिव ने संहार-भैरव बनकर भगवान् विष्णु को अपने वश में कर लिया । फिर नारायण के आगे वाणी का गङ्गा के साथ कलह हुआ । तब नारायण ने सरस्वती का त्याग कर उनका गर्व चूर-चूर कर दिया । हे महामुने ! सहसा महालक्ष्मी को दर्प उत्पन्न हुआ । तब हे महादेव ! वह जय और विजय से पराभूत हो गईं । इसी प्रकार सती को दर्पयुक्त देखकर स्वयं सदाशिव ने उनका त्याग कर दिया ॥ १९१-१९४ ॥

**लज्जामवाप सा देवी तस्या दर्पं बभञ्ज सः ।**
**बभूव दर्पः सावित्र्याः वेदमाताऽहमेव च ॥ १९५ ॥**
**काले चकार तस्याश्च सुपुत्रायात्मदर्शनम् ।**
**बभूव दर्पो गङ्गाया अहं निर्वाणदेति च ॥ १९६ ॥**
**जह्नुद्वारा च तद् दर्पं जहार जगताम्पतिः ।**
**जहार माहिषं दर्पं दुर्गाद्वारा पुरा मुने ॥ १९७ ॥**
**श्रीदाम्नः शापयोगेन राधा दर्पं बभञ्ज सः ।**
**ब्रह्मणः सहसा ब्रह्मन्निति दर्पो बभूव ह ॥ १९८ ॥**
**अहं त्रिजगतां धाता कर्त्ता हर्त्ताऽहमीश्वरः ।**
**तं ब्रह्मणां समूहं च दर्शयामास तत्क्षणात् ॥ १९९ ॥**

इससे सती देवी बहुत लज्जित हो गई । क्योंकि सदाशिव के द्वारा उनका घमण्ड चूर कर दिया गया था । सावित्री को गर्व हुआ कि मैं ही वेदमाता हूँ; समय आने पर उनके सुपुत्र ने ही आत्मज्ञान का उपदेश किया । किसी समय गङ्गा को अभिमान हुआ कि मैं ही मोक्ष देने वाली हूँ । तब नारायण ने जह्नु ऋषि के द्वारा उनका अहङ्कार नष्ट किया । हे मुने! जब महिषासुर को दर्प हुआ, तब भगवान् ने भगवती दुर्गा के द्वारा उसका घमण्ड नष्ट किया । भगवान् श्रीकृष्ण ने श्रीदाम से राधा को शाप दिला कर उनका घमण्ड नष्ट किया । हे ब्रह्मन् ! सहसा ब्रह्मा को घमण्ड हुआ कि मैं ही जगत् का कर्त्ता ब्रह्मा हूँ । मैं ही तीनों जगत् का धाता हूँ, कर्त्ता हूँ, हर्त्ता हूँ और ईश्वर हूँ । तब भगवान् ने अनेक ब्रह्म-समूहों का तत्क्षण अपने (विराट् रूप) में दर्शन कराया ॥ १९५-१९९ ॥

**कालेन मोहिनीद्वारा तमपूज्यं चकार सः ।**
**पुनस्तद्दर्पभङ्गश्च शिवद्वारा बभूव ह ॥ २०० ॥**

फिर मोहिनी द्वारा अपूज्यता का शाप दिलाकर उन ब्रह्माजी का गर्व नष्ट कराया । इसके बाद शिव द्वारा उनका दर्प भङ्ग कराया ॥ २०० ॥

**विष्णोर्बभूव गर्वश्च जगत्पाताहमीश्वरः ।**
**तदात्मविस्मृतिस्तत्र बभूव रामजन्मनि ॥ २०१ ॥**
**अहं विश्वं बिभर्मीति शेषे दर्पो बभूव ह ।**
**तद्दर्पं गरुडद्वारा चूर्णीभूतं चकार सः ॥ २०२ ॥**

विष्णु को गर्व हुआ कि मैं जगत् का पालक हूँ; मैं जगदीश्वर हूँ । फिर राम जन्म में उनको सब कुछ विस्मृत हो गया । शेषनाग को गर्व हुआ कि मैं ही विश्व को धारण करता हूँ । तब भगवान् ने उनका सारा गर्व गरुड के द्वारा चूर्णीभूत करा दिया ॥ २०१-२०२ ॥

**स्वयं शिवः स्वदर्पं च विवाहं न चकार सः ।**
**तं ज्ञात्वा मायया मोहं कृत्वा स्त्रीसंयुतं हरम् ॥ २०३ ॥**

भगवान् शिव ने भी अपने घमण्ड में आकर प्रतिज्ञा कर लिया कि मैं अब विवाह नहीं करूँगा । यह जानकर भगवान् ने अपनी माया से मोह उत्पन्न कर उन्हें स्त्री संयुक्त बनाया ॥ २०३ ॥

**पुनर्जहार तत्पत्नीं दक्षकन्यां महासतीम् ।**
**वर्षं शुशोच तद्देहं क्रोडे कृत्त्वा तु शङ्करः ॥ २०४ ॥**
**जन्मान्तरे च सम्प्राप्तस्तां सतीं पार्वतीं मुदा ।**
**पुनर्वृकासुराद् भीतो जगाम शरणं हरेः ॥ २०५ ॥**
**भगवानपि तस्यार्थे दैत्यं भस्मीचकार सः ।**
**केदारकन्यकाद्वारा धर्मदर्पं बभञ्ज सः ॥ २०६ ॥**

फिर जब महासती दक्ष कन्या का देहान्त हुआ । तब शिव कितने वर्ष पर्यन्त उनके शरीर को गोद में लेकर शोक करते हुये संसार में भटकते रहे । फिर दूसरे जन्म में सती को हिमालय कन्या देवी पार्वती के रूप में पाकर प्रसन्न हुये । फिर भगवान् शङ्कर वृकासुर से भयभीत होकर भगवान् विष्णु के शरण में गये । तब भगवान् ने उनके लिये दैत्य वृकासुर को भस्म कर दिया (इस प्रकार शिवजी का गर्व भी चूर-चूर किया)। इसी प्रकार केदार कन्या के द्वारा धर्मदेव का अहङ्कार भी नष्ट कराया ॥ २०४-२०६ ॥

**यमो माण्डव्यशापेन शूद्रयोनिमवाप ह ।**
**तदा पुनः शताब्दान्ते ततः शूद्रो बभूव सः ॥ २०७ ॥**

यमराज को माण्डव द्वारा शूद्र योनि में उत्पन्न होने का शाप दिलाकर उनका दर्प भी नष्ट करा दिया, जिसके कारण वे सौ वर्ष तक शूद्र योनि में जन्म लेकर जीवित रहे ॥ २०७ ॥

**साम्बोऽपि मातृशापेन गलत्कुष्ठी बभूव ह ।**
**तदा सूर्यव्रतं कृत्वा पुनः शुद्धो बभूव ह ॥ २०८ ॥**

साम्ब को अपने सौन्दर्य का घमण्ड था । तब वे अपनी माता के शाप से गलत्कुष्ठ के रोगी हो गये । तब वे सूर्य का व्रत कर शुद्ध हुये ॥ २०८ ॥

**चन्द्रो दर्पमदेनैव जहार च गुरोः प्रियाम् ।**
**बभूव दर्पभङ्गश्च यक्ष्मग्रस्तोऽभवत्तदा ॥ २०९ ॥**

चन्द्रमा ने द्विजराजत्व के घमण्ड में आकर गुरुपत्नी का अपहरण कर लिया । फिर जब उन्हें यक्ष्मा होने का शाप हुआ तब उनका गर्व नष्ट हुआ ॥ २०९ ॥

**सूर्यदर्पस्तेजसा च हन्तुं शङ्करकिङ्करम् ।**
**सुमालीत्यभिधं दैत्यं ज्वलन्तं च स्वतेजसा ॥ २१० ॥**
**सूर्यं दृष्ट्वा शङ्करश्च शूलेनैव जघान ह ।**
**पुनश्च तं महादेवो जीवयामास सत्वरम् ॥ २११ ॥**

सूर्य ने घमण्ड में आकर अपने तेज से शङ्कर के गणों को जलाना चाहा । सुमाली नामक दैत्य अपने तेज से सूर्य को भस्म करने जब चला तो शङ्कर ने सूर्य को देखकर उन पर शूल से प्रहार कर मार डाला फिर स्वयं महादेव ने उनको जीवित किया । इस प्रकार सूर्य का घमण्ड चूर-चूर किया ॥ २१०-२११॥

**वह्निर्दृप्तो भृगोः शापात् सर्वभक्षी बभूव सः ।**
**जयस्य विजयस्यापि दर्पभङ्गो बभूव ह ॥ २१२ ॥**
**वैकुण्ठात् पतितः सोऽभूत् ब्रह्मशापच्छलेन च ।**
**त्वमेवासीन्नारदश्च पुरा पुत्रः प्रजापतेः ॥ २१३ ॥**
**गन्धर्वश्च पितुः शापात् शूद्रपुत्रस्ततः क्रमात् ।**
**शक्राभिमानभङ्गं च गौतमेन चकार सः ॥ २१४ ॥**

वह्नि को अपने तेज का बड़ा अभिमान था, तब भृगु के शाप से वे सर्वभक्षी हो गये । जय और विजय का घमण्ड भी भगवान् ने सनत्कुमारादि ऋषियों के शाप के बहाने नष्ट कराया, जिससे वे वैकुण्ठ से गिरकर राक्षस हो गये । हे नारद ! पहले आप भी प्रजापति ब्रह्मदेव के पुत्र थे । किन्तु पिता के शाप से गन्धर्व-पुत्र हुये, फिर क्रमशः शूद्र-पुत्र के रूप में उत्पन्न हुये । इसी प्रकार भगवान् ने इन्द्र के अभिमान का भङ्ग भी गौतमशाप के बहाने कराया ॥ २१२-२१४ ॥

**कामदर्पं हरक्रोधज्वाला भस्मीचकार सः ।**
**कार्त्तवीर्यं दर्पभङ्गं रामद्वारा बभूव ह ॥ २१५ ॥**

कामदेव का गर्व भगवान् सदाशिव की क्रोध ज्वाला में उसे भस्म कराकर उन

मकरध्वज का भी गर्व दूर कराया । कार्त्तवीर्य का दर्प भगवान् परशुराम के द्वारा नष्ट कराया गया ॥ २१५ ॥

**शरभेन नृसिंहस्य रामस्य रघुवंशतः ।**
**दुर्वाससोऽम्बरीषेण लक्ष्मणस्य च रावणात् ॥ २१६ ॥**

नृसिंह का दर्प शिव का शरभावतार करा कर भङ्ग कराया । राम अर्थात् परशुराम का दर्प रघुवंशी राम के द्वारा नाश कराया गया । दुर्वासा का दर्प महाराज अम्बरीष द्वारा कराया गया । वीर लक्ष्मण का दर्प रावण द्वारा विनष्ट कराया गया ॥ २१६ ॥

**सुमेरोर्वायुना भग्नोऽगस्त्येन च समुद्रजः ।**
**पृथुना च पृथिव्याश्च दर्पभङ्गो बभूव ह ॥ २१७ ॥**

सुमेरु का दर्प वायु के द्वारा तथा समुद्र का गर्व अगस्त्य के द्वारा भङ्ग कराया । किं बहुना; पृथ्वी का गर्व पृथु के द्वारा नष्ट कराया ॥ २१७ ॥

**विप्रपुत्रस्य मरणे हरणे कृष्णयोषिताम् ।**
**कर्णेन सार्धं समरे पार्थदर्पं बभञ्ज ह ॥ २१८ ॥**

विप्र पुत्र के मृत्यु हो जाने पर तथा कृष्ण की स्त्रियों के अपहृत हो जाने पर और कर्ण के साथ युद्ध होने पर भगवान् ने अर्जुन का गर्व नष्ट कराया ॥ २१८॥

**एवं मायासमाविष्टाः हन्ताऽज्ञानविमोहिताः ।**
**अविद्याभ्यसितात्मानः सर्वे सर्वं प्रचक्रिरे ॥ २१९॥ इति।**

**सा महामाया द्विविधा—विद्या, अविद्या च । या महामाया मुक्तेर्हेतुभूता सा विद्या । या महामाया संसारबन्धनहेतुभूता सा अविद्या ।**

इस प्रकार सभी माया जगत् में समाविष्ट है । खेद है कि सभी अज्ञान से विमोहित हैं और सभी अविद्या में निमग्न हैं । इसी प्रकार सभी का सब कुछ चल रहा है ॥ २१९ ॥

वह महामाया दो प्रकार की है—१. विद्या तथा २. अविद्या जो महामाया मुक्ति में हेतुभूत है वह 'विद्या' है और जो महामाया संसार के बन्धन में हेतुभूत है वह 'अविद्या' है ।

**तदुक्तं मार्कण्डेये—**

**सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ।**
**संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥ २२० ॥ इति**

जैसा कि मार्कण्डेयपुराण में कहा भी गया है—विद्या वह है जो सनातनी है

और संसार बन्धन में निमित्तभूत है जो संसार बन्धन में हेतुभूता है वह सर्वेश्वरी माया है ॥ २२० ॥

**अन्यच्च—**

**विद्या वाप्यथवाविद्या द्वावेव माययाऽऽवृते ।**
**तत् कर्म यच्च बन्धाय साविद्या परिकीर्तिता ॥ २२१ ॥**

और भी बतलाया गया है—विद्या और अविद्या दोनों ही माया से आवृत हैं जो कर्म बन्धन के लिये है वह 'अविद्या' है ॥ २२१ ॥

**यन्न बन्धाय तत्कर्म सा विद्या परिकीर्तिता ।**
**विद्या तु सर्वदा सेव्या नाविद्यापि कथञ्चन ॥ २२२ ॥**

जो कर्म बन्धन का कारण नहीं है वह 'विद्या' है । अतः सर्वदा विद्या का ही सेवन करे । अविद्या का सेवन कदापि न करे ॥ २२२ ॥

**अविद्या कर्मबन्धः स्यात् तस्मिन् ज्ञानं प्रणश्यति।**
**ज्ञाननाशाद् भवेद् हानिर्हानौ संहरणं पुनः ॥ २२३ ॥**

अविद्या वह है जो कर्म के बन्धन में डाल दे । उसमें ज्ञान (विवेक) नष्ट हो जाता है क्योंकि ज्ञान के नाश होने पर ही हानि होती है और हानि होने पर संहार होता है ॥ २२३ ॥

**संहारात्तु भवेद् घोरो घोरं नरकमेव च ।**
**तस्मादविद्या कुत्रापि नैव सेव्या कथञ्चन ।**
**या विद्या सा महामाया सा तु सेव्या सदा बुधैः ॥ २२४ ॥**

**'योऽविद्यामुपासते सोऽपि तमः प्रविशति ।' इत्यादि श्रुत्या स्मृत्या च संसार-नियतिरूपा अविद्या । तद्विपरीता विद्या ।**

संहार से घोर बन्धन होता है और घोर बन्धन से नरक होता है । इसलिये अविद्या का कभी भी, किसी अवस्था में बुद्धिमान् पुरुष सेवन न करे ॥ २२४ ॥

'जो अविद्या की उपासना करते हैं वे तम में प्रवेश करते हैं ।' इस श्रुति और स्मृति से संसार नियति रूपा अविद्या है और उससे विपरीत विद्या है ।

**तथा च रुद्रयामले—**

**सुखदा मोक्षदा नित्या सर्वभूतेषु संस्थिता ।**
**यदा तुष्टा भवेन्माया तदा सिद्धिमुपालभेत् ॥ २२५ ॥**

जैसा कि रुद्रयामल में भी कहा गया है—सुखदा, मोक्षदा और नित्या सभी प्राणियों में रहने वाली माया जब सन्तुष्ट हो जाती है, तब मनुष्य सिद्धि प्राप्त कर लेता है ॥ २२५ ॥

**वन्दनीया सदा स्तुत्या पूजनीया च सर्वदा ।**
**श्रोतव्या कीर्त्तितव्या च माया नित्या नगात्मजे ॥ २२६ ॥**

हे नगात्मजे ! यह नित्या माया वन्दनीय, स्तुत्य तथा सर्वदा पूजनीया है । यही श्रोतव्य है और कीर्त्तनीय भी है ॥ २२६ ॥

**वृथा न कालं गमयेद् द्यूतक्रीडादिना सुधीः ।**
**गमयेद् देवतापूजाजपयज्ञस्तवादिना ॥ २२७ ॥**

विद्वान् पुरुष अपना समय द्यूत (जूआ) और (काम) क्रीड़ा में नष्ट न करे । उसे अपना समय जप, पूजा और स्तुति में बिताना चाहिये ॥ २२७ ॥

**किमन्यैरसदालापैर्यत्रायुर्व्ययतामियात् ।**
**तस्मान्मन्त्रादिकं सर्वं विज्ञाय श्रीगुरोर्मुखात् ।**
**सगुणोपासनपरो निर्गुणत्वेन चिन्तयन् ॥ २२८ ॥**

अन्य असत्य आलाप में अपना समय नहीं बिताना चाहिये । इसलिये श्रीगुरु के मुख से मन्त्र की दीक्षा लेकर सगुणोपासनपरक होना चाहिये और उसके निर्गुण स्वरूप का ध्यान करना चाहिये ॥ २२८ ॥

**भक्तियुक् तन्मनस्कश्च शरणागतभावनः ।**
**शरण्यं परमेशानं चिन्तयेत् स्थिरमानसः ।**
**सुखेन मुच्यते देवि! घोरसंसारसागरात् ॥२२९॥ इति ।**

पुरुष को भगवान् की भक्ति से युक्त होना चाहिये और भगवान् में तन्मय होना चाहिये तथा उनके शरणागत होने की भावना करनी चाहिये । इस प्रकार भगवान् में अपना चित्त स्थिर करने से जीव इस घोर संसार सागर से बड़े सुख के साथ पार हो जाता है ॥ २२९ ॥

**भक्तिलक्षणं तन्त्रान्तरे—**

**संसारे यत्र यद् वस्तु विद्यते यत्र कुत्रचित् ।**
**व्याप्यत्वेन स्वरूपेण विभुः सर्वत्र व्यापकः ॥ २३० ॥**

भक्ति का लक्षण अन्य तन्त्रों में इस प्रकार बतलाया गया है—इस संसार में जो-जो वस्तु जहाँ कहीं भी हैं, वे सभी व्याप्य स्वरूप से हैं और परमात्मा विभु उनमें सर्वत्र व्यापक हैं ॥ २३० ॥

**इति सञ्चिन्त्य मनसा सेवनीयः प्रभुर्मुदा ।**
**आशाऽपि स्वामिनोऽन्यस्मात् कर्त्तव्या न कदाचन ॥ २३१ ॥**

अपने मन में ऐसा (व्यापक विभु का) विचार कर मनुष्य को सर्वदा प्रसन्नता

के साथ भगवान् की सेवा करनी चाहिये । उसे किसी अन्य स्वामी की आशा कदापि नहीं करनी चाहिये ॥ २३१ ॥

**विलोक्यावसरं तस्य स्वार्थं चैव निवेदयेत् ।**
**एवं सेवां प्रकुर्याद् यः प्रशस्तः सेवकः स्मृतः॥ २३२ ॥**

अवसर देखकर उनसे अपना स्वार्थ निवेदन करे । इस प्रकार जो प्रभु की सेवा करता है, वही प्रशस्त सेवक (= भक्त) है ॥ २३२ ॥

**अथ शरणागतलक्षणं तत्रैव—**

**भरन्यासः स्वभाराणां स्वामिन्येव निवेदनम् ।**
**प्रतिकूलस्य सन्त्यागश्चानुकूल्येन वर्त्तनम् ।**
**विरोधी स्वामिनस्त्याज्यो विश्वसेदपि स्वामिनि ॥२३३॥ इति ।**

**यः शरण्यस्य शरणमागच्छति स शरणागतः । तत्र लक्षणचतुष्टयं सङ्गच्छते ।**

अब वहीं शरणागत का लक्षण कहा गया है—अपने भरण पोषण का न्यास और अपने समस्त भरण पोषण का अपने प्रभु से निवेदन तथा उन भगवान् के प्रतिकूल सभी कर्मों का त्याग, उनके अनुकूल रहन-सहन, स्वामी (= भगवान्) से विरोध तो सर्वथा त्याज्य है ही और अपने स्वामी में सर्वथा विश्वास—ये शरणागत भक्त के लक्षण कहे गये हैं ॥ २३३ ॥

जो शरण देने में समर्थ प्रभु के शरण में जाता है वह 'शरणागत' है । उस शरण्य में चार लक्षण होने चाहिये ।

**अथ शरण्यलक्षणम्—**

**वात्सल्यत्वं सुशीलत्वं भरत्वं स्वामिता यथा ।**
**ज्ञानं स्वतन्त्रता चैव शरण्यलक्षणं त्विदम् ॥ २३४ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे देहनिरूपणं नाम तृतीयः पटलः ॥ ३ ॥**

**शरण्य का लक्षण**—१. वात्सल्यत्व (अपने को उनका बालक समझना), २. सुशीलत्व (सुन्दर शीलवान् स्वभाव), ३. भरत्व (भरण पोषण की योग्यता) और ४. ज्ञान की स्वतन्त्रता—ये चार शरण्य के लक्षण कहे गये हैं ॥ २३४ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में देहनिरूपण नामक तृतीय पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ ३ ॥**



# चतुर्थः पटलः

## मन्त्रग्रहणादिनिरूपणम्

**यामले—**

**एवं लक्षणसम्पन्नः सुशीलः सर्ववित् स्थिरः ।**
**पुरुषार्थसमावाप्त्यै सच्छिष्यो गुरुमाश्रयेत् ॥ १ ॥**

जैसा कि यामल में भी कहा गया है—सुशील, सर्ववित् एवं स्थिर सच्छिष्य इन लक्षणों से सम्पन्न होकर चतुर्थ मोक्षरूप पुरुषार्थ की प्राप्ति के लिये गुरु का आश्रय ग्रहण करे ॥ १ ॥

**तस्मान्मन्त्रादिकं सर्वं विज्ञाय श्रीगुरोर्मुखात् ।**
**सुखेन मुच्यते देवि ! घोरसंसारसागरात् ॥ २ ॥**

हे देवि ! इस कारण गुरु के मुख से सभी मन्त्रादिक जान लेने पर वह साधक सुखपूर्वक संसार सागर से मुक्त हो जाता है ॥ २ ॥

**तदेव यामले—**

**शृणु देवि ! प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।**
**विना दीक्षां न मोक्षः स्यात् प्राणिनां शिवशासनात्॥ ३ ॥**

यही यामल में भी बतलाया गया है—हे देवि ! आप जिस प्रकार जो बात पूछ रही हो उसे सुनिए । शिव की आज्ञानुसार किसी भी प्राणी का मोक्ष दीक्षा के बिना सम्भव नहीं है ॥ ३ ॥

**न योगेन विना मन्त्रो न मन्त्रेण विना हि सः ।**
**द्वयोरभ्यासयोगेन ब्रह्मसंसिद्धिकारकम् ॥ ४ ॥**

योग के बिना मन्त्र का अस्तित्व नहीं होता और मन्त्र के बिना योग का अस्तित्व नहीं होता है । अतः दोनों का निरन्तर अभ्यास ब्रह्मसिद्धि में कारण कहा जाता है ॥ ४ ॥

**तमः परिवृते गेहे घटो दीपेन दृश्यते ।**

**एवं मायावृतो ह्यात्मा मनुना गोचरीकृतः ॥ ५ ॥**

जब घर अन्धकार पूर्ण रहता है, तब दीप से घट दिखाई पड़ता है । इसी प्रकार मायाच्छन्न जीव (= आत्मा) मन्त्र से दिखाई पड़ता है ॥ ५ ॥

**सम्प्राप्ते षोडशे वर्षे दीक्षां कुर्यात् समाहितः ।**
**स्पर्शखण्डे यथा स्पृष्टमयः सौवर्णतां व्रजेत् ।**
**दीक्षाविद्धस्तथा ह्यात्मा शिवत्वं लभते ध्रुवम् ॥ ६ ॥ इति ।**

सोलहवाँ वर्ष प्राप्त होने पर समाहित चित्त होकर साधक दीक्षा ग्रहण करे । जिस प्रकार पारस पत्थर के स्पर्श से लोहा स्वर्ण हो जाता है, उसी प्रकार दीक्षा ग्रहण से आत्मा शिवत्व प्राप्त कर लेता है यह निश्चित है ॥ ६ ॥

**दीक्षाशब्दार्थमाह कुलार्णवे—**

**दिव्यज्ञानं यतो दद्यात् कुर्यात् पापक्षयं यतः ।**
**तस्माद् दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः ॥ ७ ॥**

कुलार्णवतन्त्र में दीक्षा शब्द का अर्थ कहते हैं—जिससे दिव्यज्ञान प्राप्त हो और जिससे पापक्षय हो जाय, उसी को तत्त्वदर्शी महर्षियों ने दीक्षा कहा है ॥ ७॥

**मन्त्रमुक्तावल्याम्—**

**जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।**
**उपचारसहस्रैस्तु योजितो भक्तिसंयुतः ॥ ८ ॥ इति ।**

मन्त्रमुक्तावली में कहा गया है—दीक्षा ग्रहण करने वाले मनुष्यों को देवार्चन तथा जप करना चाहिये । यह सहस्रोपचारों से युक्त तथा भक्ति समन्वित होकर करना चाहिये ॥ ८ ॥

**यामले—**

**अदीक्षितार्चनं देवा न गृह्णन्ति कदाचन ।**
**कर्माऽखिलं वृथा यस्मात् तस्माददीक्षितः पशुः ॥ ९ ॥**

**अतः सर्वाश्रमेषु दीक्षाया आवश्यकत्वम् ।**

यामल में भी यह बतलाया गया है—जिसने दीक्षा ग्रहण नहीं की है, उसकी अर्चना देवता लोग ग्रहण नहीं करते । अदीक्षित का सारा कर्म व्यर्थ हो जाता है । किं बहुना, वह पशु है ॥ ९ ॥

इसलिये सभी आश्रमों में दीक्षा आवश्यक बतलायी गयी है ।

**तथा अन्यत्रापि—**

**दीक्षामूलं जपं सर्वं दीक्षामूलं परं तपः ।**

**देवि! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ॥ १० ॥**

समस्त जप दीक्षामूलक है और समस्त तप दीक्षामूलक है । इसलिये हे देवि! दीक्षारहित को न सिद्धि प्राप्त होती है न उसकी सद्गति होती है ॥ १० ॥

**अदीक्षिता ये कुर्वन्ति जपयज्ञादिकाः क्रियाः ।**
**न भवेत्तु फलं तेषां शिलायामुप्तबीजवत् ॥ ११ ॥**

दीक्षाविहीन पुरुष जो जपयज्ञादि क्रिया करते हैं, उसका कोई फल नहीं होता, जिस प्रकार पत्थर पर बोये गये बीज का कोई फल नहीं होता ॥ ११ ॥

**तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत्।**
**अदीक्षितोऽपि मरणे रौरवं नरकं व्रजेत् ॥ १२ ॥**

इसलिये सब प्रकार का प्रयत्न करके गुरु से दीक्षा अवश्य ग्रहण करे । क्योंकि बिना दीक्षा लिये मर जाने पर रौरवं नरक प्राप्त होता है ॥ १२ ॥

**नादीक्षितस्य कार्यं स्यात् तपोभिर्नियमैर्व्रतैः।**
**न तीर्थगमनेनापि न च शारीरयन्त्रणैः ॥ १३ ॥**
**कोटिजन्मार्जितं पापं ज्ञाताज्ञातकृतं च यत् ।**
**दीक्षाग्रहणमात्रेण पलायति न संशयः ॥ १४ ॥**

दीक्षारहित पुरुष के तप, नियम एवं व्रत का, तीर्थ गमन का तथा शरीर सम्बन्धी यन्त्रणा (व्रतादि) का कोई फल प्राप्त नहीं होता । करोड़ों जन्म का ज्ञाताज्ञात अर्जित पाप गुरु प्रदत्त दीक्षाग्रहण मात्र से ही भाग जाता है, इसमें कोई संशय नहीं ॥ १३-१४ ॥

**ब्रह्महत्या सुरापानं स्वर्णस्तेयादिपातकम् ।**
**उपपातकलक्षाणि हन्ति दीक्षाग्रहान्नरः ॥ १५ ॥ इति ।**

ब्रह्महत्या, मद्यपान, स्वर्ण स्तेयादि, महापातक तथा लाखों उपपातक दीक्षा ग्रहण मात्र से मनुष्य नष्ट कर देता है ॥ १५ ॥

**क्रियासारे—**

**कल्पे दृष्ट्वा तु यो मन्त्रं जपते तु विमूढधीः ।**
**मूलनाशो भवेत्तस्य फलमस्य सुदूरतः ॥ १६ ॥**

क्रियासारतन्त्र में भी कहा गया है—जो मूर्ख कल्प (= पुस्तक) में देखकर मन्त्र का जप करते हैं, उनके मूल (= वंश) का भी विनाश हो जाता है; फल की बात तो बहुत दूर की है ॥ १६ ॥

**तथा च यामले—**

**गुरोर्मुखान्महाविद्यां गृह्णीयात् पापनाशिनीम् ।**
**तस्माद् यत्नाद् गुरुं कृत्वा मन्त्रसाधनमाचरेत्॥ १७ ॥**

यामल में भी कहा गया है—मनुष्य को यह पापनाशिनी विद्या गुरु से ही ग्रहण करनी चाहिये । इसलिये प्रयत्नपूर्वक गुरु बना कर ही मन्त्र की साधना करनी चाहिए ॥ १७ ॥

**गुरुशब्दार्थो यामले—**

**गकारः सिद्धिदः प्रोक्तो रेफः पापस्य दाहकः।**
**उकारः शम्भुरित्युक्तस्त्रिधात्मा गुरुरव्ययः ॥ १८ ॥**

गुरु शब्द का अर्थ यामलतन्त्र में इस प्रकार बतलाया गया है—गुरु शब्द में गकार का अर्थ सिद्धि प्रदान करने वाला है । रेफ का अर्थ पाप को जलाने वाला कहा गया है और उकार का अर्थ शिव है; इस प्रकार अव्यय गुरु तीन अर्थों वाला कहा गया है ॥ १८ ॥

**गुरुलक्षणं सारसंग्रहे—**

**विशुद्धमातापितृको जितेन्द्रियः**
**सर्वागमज्ञः परदुःखकातरः ।**
**यथार्थवाग् वेदविदङ्गपारगः**
**शान्तः कुलीनो गुरुरीरितो द्विजः ॥ १९ ॥ इति ।**

**'द्विज' इत्युपादानात् नान्यः ।**

गुरु का लक्षण सारसंग्रहतन्त्र में इस प्रकार बतलाया गया है—जिसके माता पिता विशुद्ध हों, जो अपने इन्द्रियों को वश में रखता है, जो समस्त आगम शास्त्रों का ज्ञाता है, दूसरों के दुःख को देख कर दुःखी होता है—ऐसा यथार्थ वक्ता वेदवेदाङ्ग में पारङ्गत, शान्त एवं कुलीन ब्राह्मण गुरु कहा जाता है ॥ १९ ॥

यहाँ द्विज कहा गया है इसलिये साधक अन्य का ग्रहण न करे ।

**अन्यत्रापि—**

**शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेषवान्।**
**शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥ २० ॥**
**आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः ।**
**निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ॥ २१ ॥**

अन्यत्र भी बतलाया गया है—शान्त, दान्त, कुलीन, विनीत, शुद्ध वेष,

शुद्धाचार, सुप्रतिष्ठ, शुचि, दक्ष, सुबुद्धिमान्, आश्रमी, ध्याननिष्ठ, मन्त्र एवं तन्त्रशास्त्र में विशारद और निग्रहानुग्रह में समर्थ इतने गुणों में सम्पन्न को गुरु कहा जाता है ॥ २०-२१ ॥

**संसारसागरे मग्नान् यस्तारयति देहिनः ।**
**तत्त्वप्लवप्रदानेन स एव हि गुरुः स्मृतः ॥ २२ ॥ इति ।**

जो संसार सागर में डूबते हुये मनुष्यों को तत्त्व रूपी नौका देकर पार करता है वही गुरु है ॥ २२ ॥

**तथा च तन्त्रे—**

**अनाचारोऽपि च द्विजो वर्णानां गुरुरेव सः ।**

जैसा कि तन्त्रों में कहा भी है—आचाररहित द्विज भी सभी वर्णों का गुरु ही होता है ॥ २३ ॥

**अन्यत्रापि—**

**स्वधर्मनिरतो भूत्वा श्रुत्वा द्विजगुरोर्मुखात् ।**
**सर्वसिद्धिमवाप्नोति शीघ्रं देवत्वमाप्नुयात् ॥ २३ ॥**

अन्य तन्त्रों में भी बतलाया गया है—शिष्य स्वधर्म में निरत रहकर गुरु से मन्त्र-दीक्षा लेकर सारी सिद्धियाँ प्राप्त कर लेता है । बहुत क्या; वह शीघ्र ही देवत्व प्राप्त कर लेता है ॥ २३ ॥

**शूद्रः शूद्रमुखाच्छ्रुत्वा विद्यां वा मन्त्रमुत्तमम् ।**
**गृहीत्वा नरकं याति दुःखं प्राप्नोति नित्यशः ॥ २४ ॥**

शूद्र स्वयं शूद्र के मुख से विद्या या उत्तम मन्त्र प्राप्त कर नरकगामी होता है और निरन्तर इस लोक में दुःख प्राप्त करता है ॥ २४ ॥

**अथ निन्द्यशिष्यलक्षणम्—**

**पापिने क्रूरचेष्टाय शठाय कृपणाय च ।**
**निन्दकाय च मूर्खाय तीर्थद्वेषपराय च ॥ २५ ॥**
**भक्तिहीनाय देवेशि! न देया मलिनाय च ।**
**गुरुता शिष्यता वापि तयोर्वत्सरवासतः ॥ २६ ॥ इति ।**

अब निन्दा के योग्य शिष्य का लक्षण कहते हैं—पापी, नीचकर्म करने वाले, शठ और कृपण, निन्दक, मूर्ख, तीर्थ से द्वेष करने वाले, भक्तिहीन को तथा मलिन शिष्य को, हे देवेशि! दीक्षा प्रदान नहीं करनी चाहिये, क्योंकि दोनों में गुरुता होने वाली शिष्यता एक वर्ष मात्र रहती है ॥ २५-२६ ॥

**सारसंग्रहेऽपि—**

**सद्गुरुः स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ॥ २७ ॥**

सारसंग्रह में भी बतलाया गया है—अच्छा गुरु अपने यहाँ आश्रय लेने वाले शिष्य की एक वर्ष पर्यन्त उसकी परीक्षा करे ॥ २७ ॥

**अपरीक्षणे दोषस्तत्रैव—**

**राज्ञि चामात्यजो दोषः पत्नी-पापं स्वभर्तरि ।**
**तथा शिष्यार्जितं पापं गुरुं प्राप्नोति निश्चितम् ॥ २८ ॥ इति ।**

अपरीक्षण का यहाँ दोष भी बतलाया गया है—अमात्य का दोष राजा को, पत्नी का पाप भर्त्ता को तथा शिष्य द्वारा किया गया पाप गुरु को अवश्य ही लगता है ॥ २८ ॥

**यामले विशेषः—**

**वर्षैकेन भवेद् योग्यो विप्रो गुणसमन्वितः ।**
**वर्षद्वयात्तु राजन्यो वैश्यस्तु वत्सरैस्त्रिभिः ।**
**चतुर्भिर्वत्सरैः शूद्रः कथिता शिष्ययोग्यता ॥ २९ ॥**

यामलतन्त्र में विशेषरूप से यह बतलाया गया है—एक वर्ष में ब्राह्मणकुमार गुणसमन्वित हो सकता है । दो वर्ष में क्षत्रियकुमार, वैश्य तीन वर्ष में तथा शूद्र चार वर्ष में गुण समन्वित होता है । यहाँ तक हमने शिष्य-योग्यता कही ॥ २९ ॥

**तथा योगिनीतन्त्रे—**

**पितुर्मन्त्रं न गृह्णीयात् तथा मातामहस्य च ।**
**सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥ ३० ॥**

योगिनीतन्त्र में भी बतलाया गया है—पिता से मन्त्र ग्रहण न करे । इसी प्रकार मातामह से, सहोदर छोटे भाई से तथा शत्रुता रखने वाले से कभी भी मन्त्र ग्रहण न करे ॥ ३० ॥

**गणेशविमर्शिण्याम्—**

**यतेर्दीक्षा पितुर्दीक्षा दीक्षा च वनवासिनः ।**
**विविक्ताश्रमिणो दीक्षा न सा कल्याणदायिका ॥ ३१ ॥**

गणेशविमर्शिनी में भी बतलाया गया है—पति द्वारा दी गई दीक्षा, पिता के द्वारा दी गई दीक्षा, वानप्रस्थी द्वारा दी गई दीक्षा तथा आश्रम का त्याग कर निराश्रमी द्वारा दी गई दीक्षा कल्याणकारिणी नहीं होती ॥ ३१ ॥

यामले च—

**न पत्नीं दीक्षयेद् भर्त्ता न पिता दीक्षयेत् सुताम् ।**
**न पुत्रं च तथा भ्राता भ्रातरं नैव दीक्षयेत् ॥ ३२ ॥**

यामल में भी बतलाया गया है—पति अपने पत्नी को दीक्षा न देवे, पुत्र अपने पिता को, पिता अपने पुत्र को और भाई-भाई को दीक्षा न देवे ॥ ३२ ॥

**प्रमादाच्च तथाऽज्ञानात् पितुर्दीक्षां समाचरन् ।**
**प्रायश्चित्तं ततः कृत्त्वा पुनर्दीक्षां समाचरेत् ॥ ३३ ॥**

**पितुरित्युपलक्षणं मातामहादीनामपि । प्रायश्चित्तं तु अयुतसावित्रीजपः । सर्वत्र तथा दर्शनात् । 'दशसाहस्त्रजापेन सर्वकल्मषनाशिनी' इति वाक्यात् ।**

प्रमाद अथवा अज्ञानवश यदि पिता से दीक्षा ग्रहण कर ली हो तो प्रायश्चित् कर, पुनः दीक्षा ग्रहण करे ॥ ३३ ॥

यहाँ पिता तो उपलक्षण मात्र है, मातामहादि से भी दीक्षा लेकर प्रायश्चित्त करे। इसका प्रायश्चित्त दस सहस्त्र गायत्री जप कहा गया है । ऐसा सर्वत्र कहा भी गया है यथा—'दश सहस्त्र गायत्री का जप सभी पापों का विनाश करती है' ।

**सिद्धमन्त्रो यदि पतिस्तदा पत्नीं च दीक्षयेत्।**
**शक्तित्वेन वरारोहे न च सा पुत्रिका भवेत् ॥ ३४ ॥**

यदि पति सिद्धमन्त्र वाला है, तब वह अपनी पत्नी को दीक्षा दे सकता है । यतः वह उसकी शक्ति ही है । फिर भी दीक्षा ग्रहण मात्र से वह पुत्रिका नहीं हो सकती ॥ ३४ ॥

तथा च सिद्धयामले—

**यदि भाग्यवशाद् देवि! सिद्धविद्यां लभेत् प्रिये।**
**तदैव तां तु दीक्षेताकृत्त्वा गुरुविचारणाम् ॥ ३५ ॥**

सिद्धयामलतन्त्र में भी बतलाया गया है—हे प्रिये! हे देवि! यदि भाग्यवशात् सिद्ध. विद्या प्राप्त हो जाय तो उसी समय स्त्री को दीक्षित कर देवे । गुरु विषयक विचार न करे ॥ ३५ ॥

तथा मत्स्यसूक्तेऽपि—

**निर्बीजं च पितुर्मन्त्रं शैवे शाक्ते न दुष्यति ।**

**इति कौलिकमन्त्र-दीक्षापरम् । अथवा शाक्ते तारादिविद्यायाम् । मत्स्यसूक्ते 'निजकुलतिलकाय ज्येष्ठपुत्राय दद्यादि'ति वचनात् ।**

मत्स्यसूक्त में भी बतलाया गया है—पिता द्वारा दिया गया मन्त्र यद्यपि निर्बीज

है, किन्तु यदि वह 'शैव' या 'शाक्त' मन्त्र है तो वह दूषित नहीं होता ॥ ३६ ॥

यह श्लोक कौलिकमन्त्रदीक्षा परक है अथवा शाक्त-मन्त्रों में तारादि विद्या परक है। क्योंकि मत्स्यसूक्त में कहा गया है कि—अपने कुल के तिलकभूत ज्येष्ठ पुत्र को मन्त्र देवे।

**श्रीक्रमेऽपि—**

**मनुर्विमृश्य दातव्यो ज्येष्ठपुत्राय धीमते ॥ ३६ ॥**

श्रीक्रमसंहिता में भी बतलाया गया है—मन्त्र पर विचार कर तदनन्तर धीमान् पिता ज्येष्ठपुत्र को मन्त्र देवे ॥ ३६ ॥

**तथा विष्णुमन्त्रमधिकृत्य—**

**साधु पृष्टं त्वया ब्रह्मन्! वक्ष्यामि सकलं तव।**
**ब्रह्मणा कथितं पूर्वं वसिष्ठाय महात्मने ॥ ३७ ॥**
**वसिष्ठोऽपि स्वपुत्राय मत्पित्रे दत्तवान् स्वयम्।**
**प्रसन्नहृदयः स्वच्छः पिता मे करुणानिधिः।**
**कुरुक्षेत्रे महातीर्थे सूर्यपर्वणि दत्तवान् ॥ ३८ ॥ इति।**

विष्णुमन्त्र के विषय में भी बतलाया गया है—हे ब्रह्मन्! आपने ठीक पूछा। मैं आपसे सारी बात कह रहा हूँ। यही बात ब्रह्मदेव ने महात्मा वशिष्ठ से भी कही थी। वशिष्ठ ने अपने पुत्र जो मेरे पिता थे (पराशर), उन्हें यह मन्त्र दिया था। फिर प्रसन्न हृदय शुद्ध अन्तःकरण वाले करुणानिधि मेरे पिता पराशर ने कुरुक्षेत्र में जब सूर्यग्रहण लगा था; तब मुझे दिया था ॥ ३७-३८ ॥

**अन्यच्च—**

**स्त्रियो दीक्षा शुभा प्रोक्ता मातुरष्टगुणा स्मृता।**
**स्वप्नलब्धा च या दीक्षा तत्र नास्ति विचारणा ॥ ३९ ॥**

**स्त्रीपदं सर्वस्त्रीपरम्।**

अन्य तन्त्रों में भी कहा गया है—स्त्री से ली गई दीक्षा शुभकारक होती है। माता से ली गई दीक्षा आठ गुनी कल्याणकारिणी होती है। यदि स्वप्न में दीक्षा प्राप्त हो गई तो उसमें विचार की कोई आवश्यकता नहीं ॥ ३९ ॥

यहाँ स्त्री पद समस्त स्त्रियों के लिये आया है।

**तल्लक्षणं योगसारे च—**

**साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया।**
**सर्वतन्त्रार्थसारज्ञा सधवा पूजने रता।**

**गुरुयोग्या भवेदेषा विधवां परिवर्जयेत् ॥ ४० ॥**

**यत्तु—'विधवायाः सुतादेशात् कन्यायाः पितुराज्ञया ।' इति विधवाया गुरुत्वे यदुक्तं, तदमूलम् । समूलत्वेऽपि सिद्धमन्त्रपरम् तथा च 'सिद्धमन्त्रे नरः सर्वमयोग्यं योग्यतां नयेत् ।' इति वचनबलात् साधितमन्त्रपरम् ।**

इसका लक्षण योगसार में भी बतलाया गया है—साध्वी, सदाचार निरत, गुरु भक्ता, जितेन्द्रिया, समस्त तन्त्रों एवं शास्त्रों की विदुषी, सधवा, पूजा में निरत—ऐसी श्रीगुरु के योग्य होती है । किन्तु विधवा को गुरु न बनावे वह परिवर्जित कहा गया है ॥ ४० ॥

जो यहाँ कहा गया है कि विधवा अपने पुत्र की आज्ञा लेकर मन्त्र दे सकती है और कन्या अपने पिता की आज्ञा से मन्त्र दे सकती है यह वचन मूलरहित है । इसमें कोई प्रमाण नहीं है । यदि किसी प्रकार इसे समूल मान भी लिया जाय तो यह सिद्ध-मन्त्रपरक समझना चाहिये । जैसा कि कहा भी है—सिद्ध मन्त्र अयोग्य को भी सर्वयोग्य बना सकता है ।

**योगिनीहृदये—**

**स्वप्नलब्धे तु कलशे गुरोः प्राणान् निवेशयेत् ।**
**वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं शुभम् ॥**
**ततः शुद्धिमवाप्नोति अन्यथा विफलं भवेत् ॥ ४१ ॥**

**इदं तु सद्गुरोरभावे । तत्सम्भवे तस्मादेव गृह्णीयात् ।**

योगिनीहृदय में भी बतलाया गया है—यदि मन्त्र स्वप्न में प्राप्त हो जाय, तब गुरु में अपना प्राण सन्निविष्ट कर देवे । फिर उसे वटपत्र पर कुङ्कुम से लिखकर ग्रहण करे तो वह कल्याणकारी होता है । ऐसा करने से मन्त्र शुद्ध हो जाता है; अन्यथा उसे विफल जानना चाहिये ॥ ४१ ॥

यह तब करे, जब उत्तम गुरु प्राप्त न हों । सद्गुरु के प्राप्त होने पर उन्हीं से मन्त्र ग्रहण करना चाहिये ।

**यामले—**

**गुरोरभावे मन्त्राणां ग्रहणक्रममुच्यते ।**
**कृष्णपक्षे त्रयोदश्यां दक्षिणामूर्त्तिसन्निधौ ॥ ४२ ॥**
**लिखित्वा राजते पत्रे तालपत्रेऽथवा पुनः ।**
**मन्त्रं तत् स्थण्डिले स्थाप्य पूजयित्वा महेश्वरम् ॥ ४३ ॥**
**पायसादि निवेद्यं च कृत्वा तं प्रणिपत्य च ।**
**शतकृत्त्वः पठेन्मन्त्रं दक्षिणामूर्त्तिसन्निधौ ।**
**सर्वेषां चैव मन्त्राणामेवं ग्रहणमिष्यते ॥ ४४ ॥**

यामल में भी बतलाया गया है—कृष्णपक्ष में त्रयोदशी के दिन, दक्षिणामूर्त्ति के सन्निकट, चाँदी के पत्र पर, अथवा ताम्र पत्र पर, मन्त्र लिख कर, वेदी पर स्थापित करे। फिर महेश्वर की पूजा कर पायस आदि का नैवेद्य समर्पित कर, तदनन्तर उन्हें प्रणाम कर सौ बार मन्त्र का पाठ दक्षिणामूर्त्ति के सन्निधान में करे। इस प्रकार सभी मन्त्रों के ग्रहण का विधान कहा गया है ॥ ४२-४४ ॥

**अन्यच्च—**

**नद्याः समुद्रगामिन्यास्तीरे स्थित्वा तथोत्तरे।**
**स्थण्डिलं रचयेत् तत्र शुचौ देशे शुभे दिने ॥ ४५ ॥**
**तालपत्रे लिखित्वा तु मन्त्रं तत्र निधाय च।**
**आवाह्य भास्करं तत्र यथाविधि समर्चयेत् ॥ ४६ ॥**
**तत्सन्निधावष्टशतं पठेत् साधकसत्तमः।**
**एवं गृह्णीत मतिमानपूर्वोऽयं विधिः स्मृतः ॥ ४७ ॥**
**वैष्णवे वैष्णवो ग्राह्यः शैवे शैवश्च शाक्तिके।**
**शैवः शाक्तश्च सर्वत्र दीक्षास्वामी न संशयः ॥ ४८ ॥**

अन्य तन्त्रों में और भी बतलाया गया है—समुद्र में जाने वाली किसी नदी के उत्तर तट पर स्थित रहकर, किसी पवित्र स्थान में शुभ दिन में वेदी निर्माण करे। फिर मन्त्र को तालपत्र पर लिखकर, उस मन्त्र को वेदी पर स्थापित करे। वहाँ भगवान् भास्कर का आवाहन करे और यथाविधि उनकी पूजा करे। तदनन्तर उत्तम साधक एक-सौ आठ बार उस मन्त्र का पाठ करे। मतिमान् पुरुष इस प्रकार मन्त्र ग्रहण करे। यह अपूर्व विधि कही गई है। वैष्णव मन्त्र के लिये वैष्णव, शैव मन्त्र ग्रहण के लिये शैव, शक्ति मन्त्र के लिये शैव और शाक्त दीक्षा के स्वामी कहे गये हैं; इसमें कोई संशय नहीं ॥ ४५-४८ ॥

**अथ देशविशेषेण गुरुप्राधान्यम्। तथा च वीरागमे—**

**कुमारी हिमवन्मध्ये स्वतः कृष्णमृगान्विते।**
**देशे जातस्तु यो विद्वानाचार्यत्वमथार्हति ॥ ४९ ॥**

**एतदेव शिवयोगपद्धतिकारः।**

अब देश विशेष के अनुसार गुरु का प्राधान्य कहते हैं—कन्याकुमारी से लेकर हिमालय के मध्य में जहाँ-जहाँ कृष्णमृग का निवास है, उस देश में उत्पन्न विद्वान् आचार्य की योग्यता रखता है ॥ ४९ ॥

यही बात शिवयोग के पद्धतिकार भी कहते हैं।

**पृथ्वीधराचार्यस्तु—**

**मध्यदेशकुरुक्षेत्रनाभोज्जयिनिसम्भवाः।**

**अन्तर्वेदिप्रतिष्ठाना आवन्त्याश्च गुरूत्तमाः ॥ ५० ॥**
**गौडाः शालोद्भवाश्चौलाः मागधाः केरलास्तथा।**
**कौसलाश्च दशार्णाश्च गुरवः सप्त मध्यमाः ॥ ५१ ॥**
**कार्णाटाः कौङ्कणाश्चैव कच्छा भीरोद्भवास्तथा ।**
**कालिङ्गाः कामरूपाश्च काम्बोजाश्चाधमाः स्मृताः॥५२॥ इति ।**

पृथ्वीधराचार्य भी बतलाते हैं—मध्यदेश, कुरुक्षेत्र नामक देश (ब्रह्मावर्त्त), उज्जयिनी में उत्पन्न, अन्तर्वेदी में रहने वाले तथा अवन्ती में रहने वाले उत्तम गुरु हैं । गौड़, शालदेश में उत्पन्न, चौल, मागध, केरल, कौसल और दशार्ण—इन सात देशों में उत्पन्न आचार्य मध्यम गुरु कहे जाते हैं । कर्णाट, कौङ्कण, कच्छ, भीर देश में उत्पन्न, कलिङ्ग, कामरूप तथा काम्बोज देश में उत्पन्न आचार्य अधम कहे गये हैं ॥ ५०-५२ ॥

**वाराहीतन्त्रे—**

**स्वनाम्ना न गुरुः कार्यो भार्याश्च मातृनामिकाम्॥ ५३ ॥**

वराहीतन्त्र में कहा गया है—जिसका नाम अपने नाम के समान है और जिसकी भार्या का नाम अपनी माता के नाम वाली हो; उसे कदापि गुरु न बनावे ॥ ५३ ॥

**देवीमते च—**

**आचार्यः शैवशास्त्रज्ञः सितदेशसमुद्भवः ।**
**ब्रह्मचारी गृहस्थो वा शिवभक्तिपरायणः ।**
**यजमानानुकूलर्क्षजन्मा देशिक उच्यते ॥ ५४ ॥**

देवीमततन्त्र में भी बतलाया गया है—आचार्य उसी को कहा जा सकता है, जो शिवशास्त्र का ज्ञाता हो, जो उत्तम देश में उत्पन्न हो, वह चाहे ब्रह्मचारी हो अथवा गृहस्थ हो, यदि यजमान के नक्षत्र से उसकी गणना ठीक-ठीक बैठती हो, तो वही आचार्य है ॥ ५४ ॥

**हयशीर्षपञ्चरात्रेऽपि—**

**गृहस्थं ब्रह्मचर्यस्थं ककाराष्टकवर्जितम् ।**
**गुरुं कुर्वीत सततमुपवासव्रते रतम् ॥ ५५ ॥ इति ।**

हयशीर्षपञ्चरात्र में भी बतलाया गया है—अष्ट ककार से वर्जित, चाहे गृहस्थ हो चाहे ब्रह्मचारी हो, यदि वह उपवास व्रत में आस्था रखने वाला है, तब उसे निश्चित रूप से गुरु बनावे ॥ ५५ ॥

**तथा—**

**सर्वत्र व्यतिरिक्तं तु आत्मानं वेत्ति यो द्विजः ।**

**सर्वलक्षणहीनोऽपि स गुरुर्नात्र संशयः ॥ ५६ ॥ इति ।**

जो ब्राह्मण होकर अपने को सबसे अलग मानता है, चाहे वह सर्वलक्षण विहीन ही क्यों न हो, वह गुरु है; इसमें संशय नहीं ॥ ५६ ॥

**यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।**
**स एव देशिको ज्ञेयः सत्यमेतद् ब्रवीमि ते ॥ ५७ ॥**

**इत्यादीनि बहूनि वाक्यानि विस्तारभिया न लिखितानि ।**

जिसकी देव में पराभक्ति हो, जिस प्रकार देव में भक्ति हो, उसी प्रकार गुरु में भी भक्ति हो, वही आचार्य है । मैं यह बात सत्य-सत्य कहता हूँ ॥ ५७ ॥

इत्यादि बहुत से वाक्य ऐसे हैं जिन्हें विस्तारभय से यहाँ नहीं लिख रहा हूँ ।

**अथ दीक्षाफलं यामले—**

**दीक्षिता ब्राह्मणा यान्ति ब्रह्मलोकमनामयम् ।**
**ऐन्द्रं लोकं क्षत्रियास्तु प्राजापत्यं तथा विशः ।**
**शूद्रा गन्धर्वनगरं यान्ति दीक्षाप्रभावतः ॥ ५८ ॥**

**अत्र शूद्रस्यापि दीक्षाधिकारश्रुतेः 'न शूद्राय मनु दद्याद्' इति वचनं वेदमन्त्रपरं, देवताविशेषपरं मन्त्रविशेषपरं वा द्रष्टव्यम् ।**

दीक्षा का फल यामल में भी बतलाया गया है—दीक्षित ब्राह्मण शुद्ध ब्रह्मलोक में जाते हैं । दीक्षित क्षत्रिय इन्द्र लोक में तथा दीक्षित वैश्य प्राजापत्य लोक में एवं शूद्र गान्धर्व लोक में जाते हैं—यह दीक्षा का प्रभाव है ॥ ५८ ॥

यहाँ इस श्रुति में दीक्षा का अधिकार शूद्र के लिये प्रतिपादित किया गया है । जो 'न शूद्राय मति दद्यात्' यह वचन कहा गया है । वह वेद मन्त्र के लिये कहा गया है । देवताविशेष पर अथवा मन्त्रविशेष पर उसे समझना चाहिये ।

### दीक्षाधिकारिकथनम्

**तन्त्रान्तरे—**

**प्रणवाद्यं न दातव्यं मन्त्रं शूद्राय सर्वथा ।**
**आत्ममन्त्रं गुरोर्मन्त्रं मन्त्रं चाजपसञ्ज्ञकम् ॥ ५९ ॥**
**स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददन् द्विजः ।**
**शूद्रो निरयमाप्नोति ब्राह्मणो यात्यधोगतिम् ॥ ६० ॥**

तन्त्रान्तर में भी बतलाया गया है—प्रणवादि मन्त्र शूद्र को कदापि न देवे । प्रणवादि अर्थात् आत्म मन्त्र, गुरु का मन्त्र, अजपासञ्ज्ञक मन्त्र तथा स्वाहा, प्रणव संयुक्त मन्त्र यदि ब्राह्मण किसी शूद्र को देवे तो शूद्र को नरक होता है और ब्राह्मण की अधोगति होती है ॥ ५९-६० ॥

**तथा वाराहीतन्त्रे—**

**गोपालस्य मनुर्देयो महेशस्यापि पादजे।**
**तत्पत्न्याश्चापि सूर्यस्य गणेशस्य मनुं तथा।**
**एषां दीक्षाधिकारी स्यादन्यथा पापभाग् भवेत्॥ ६१ ॥**

**इति वचनादन्यदेवता मन्त्रे शूद्रस्याऽनधिकारः।**

वाराहीतन्त्र में भी बतलाया गया है—शूद्र को गोपाल का मन्त्र एवं महेश्वर का मन्त्र देना चाहिये। उसकी पत्नी को सूर्य अथवा गणेश का मन्त्र दिया जा सकता है। शूद्र को मात्र इतने मन्त्र में ही दीक्षा का अधिकार बतलाया गया है। अन्य मन्त्र देने से पापी होता है ॥ ६१ ॥

इस वचन से ऐसा ज्ञात होता है कि अन्य देवता के मन्त्र-ग्रहण में शूद्र का अधिकार नहीं है।

**नृसिंहतापनीयेऽपि—**

**सावित्रीं प्रणवं यत्तु लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्तीति ॥ ६२ ॥**

**लक्ष्मीं श्रीबीजम्। लक्ष्मीमन्त्रमिति केचित्। गोपालस्य दशाक्षरः श्यामायाः द्वाविंशत्यक्षरश्च मन्त्रः स्वाहागर्भोऽपि देयः।**

नृसिंहतापनीय उपनिषद् में भी बतलाया गया है—कुछ लोग सावित्री, प्रणव एवं लक्ष्मी मन्त्र में स्त्री शूद्र का अधिकार नहीं है—ऐसा कहते हैं ॥ ६२ ॥

यहाँ लक्ष्मी का अर्थ श्रीबीज अथवा लक्ष्मीमन्त्र कहते हैं। गोपाल का दशाक्षर मन्त्र, श्यामा का बाइस अक्षर वाला मन्त्र एवं 'स्वाहा' गर्भित मन्त्र भी शूद्र को देना चाहिये; ऐसा कहते हैं।

**अतएव क्रमदीपिकायाम्—**

**नात्र सिद्ध्याद्यपेक्षास्ति न वा सिद्धारिचिन्तनम्।**
**न चाधिकारिचिन्ताऽत्र ग्रहणे कालिकामनोः ॥ ६३ ॥ इति।**

**इति कालीकुलसर्वस्वे। तस्माद् गोपालस्य दशाक्षरे श्यामाया द्वाविंशत्यक्षर-मन्त्रग्रहणे च शूद्रस्याधिकारः।**

इसीलिये क्रमदीपिका में भी बतलाया गया है—इन मन्त्रों में सिद्ध्यादि की अपेक्षा न करे और न सिद्ध अथवा अरि का ही विचार करे। अधिक क्या; कालिका मन्त्र में अधिकारी की चिन्ता भी न करे ॥ ६३ ॥

यह कालीकुलसर्वस्व में भी कहा गया है। इसीलिये गोपाल के दशाक्षर मन्त्र में तथा श्यामा के बाइस अक्षर वाले मन्त्र में शूद्र का अधिकार है; ऐसा समझना चाहिए।

भूतशुद्धौ—

तन्त्रोक्तं प्रणवं देवि! वह्निजायां च सुन्दरि।
प्रजपेत् सततं शूद्रो नात्र कार्या विचारणा॥ ६४ ॥ इति।

भूतशुद्धितन्त्र में भी बतलाया गया है—हे देवि ! तन्त्र में कहा गया 'प्रणव' तथा 'स्वाहा' वाला मन्त्र शूद्र सतत जप करे; इसमें किसी प्रकार के विचार की आवश्यकता नहीं है ॥ ६४ ॥

अन्यत्रापि—

अघोरो दक्षिणामूर्तिरुमा माहेश्वरो मनुः।
हयग्रीवो वराहश्च लक्ष्मीनारायणस्तथा ॥ ६५ ॥
प्रणवाद्याश्चतुर्वर्णा वह्नेर्मन्त्रास्तथा रवेः।
प्रणवाद्यो गणपतिर्हरिद्रागणनायकः ॥ ६६ ॥
सौराष्टाक्षरमन्त्रश्च तथा रामषडक्षरः।
मन्त्रराजो ध्रुवादिश्च प्रणवो वैदिको मनुः॥ ६७ ॥
वर्णत्रयाय दातव्या एते शूद्राय नो बुधैः।

अन्यत्र भी बतलाया गया है—अघोर, दक्षिणामूर्त्ति, उमा-महेश्वर का मन्त्र, हयग्रीव, वराह, लक्ष्मी-नारायण का मन्त्र तथा प्रणवादि चार वर्ण वाला अग्नि मन्त्र, सूर्य का मन्त्र, प्रणवादि गणपति का मन्त्र, हरिद्रागणपति का मन्त्र, सौराष्टाक्षर मन्त्र, राम का षडक्षर मन्त्र, मन्त्रराज ध्रुवादि मन्त्र, प्रणव मन्त्र और वैदिक मन्त्र—इतने मन्त्र केवल तीन ही वर्णों को देवे। बुद्धिमान् को चाहिये कि ये मन्त्र शूद्र को न देवे ॥ ६५-६८ ॥

सुदर्शनः पाशुपत आग्नेयास्त्रं नृकेसरी ॥ ६८ ॥
वर्णद्वयाय दातव्या नान्यवर्णे कदाचन।
छिन्नमस्ता च मातङ्गी त्रिपुरा कालिका शिवः ॥ ६९ ॥
लघुश्यामा कालरात्रिर्गोपालो जानकीपतिः।
उग्रतारा भैरवश्च देया वर्णचतुष्टये ॥ ७० ॥
मृगीदृशां विशेषेण मन्त्रा एते सुसिद्धिदाः।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा नार्यधिकारिणी ॥ ७१ ॥

सुदर्शन मन्त्र, पाशुपत मन्त्र, आग्नेयास्त्र मन्त्र तथा नृसिंह मन्त्र केवल दो वर्ण को ही देवे; अन्य वर्ण को कदापि न देवे। छिन्नमस्ता, मातङ्गी, त्रिपुरा, कालिका, शिव, लघुश्यामा, कालरात्रि, गोपाल, राम, उग्रतारा और भैरव—इतने मन्त्र चारो वर्णों को देना चाहिए। ये मन्त्र विशेष रूप से स्त्रियों को देने से सुसिद्धि प्रदान करते हैं। इन मन्त्रों की ब्राह्मणी, क्षत्रिया, वैश्या तथा शूद्रा स्त्रियाँ अधिकारिणी

कही गयी हैं ॥ ६८-७१ ॥

**अन्यच्च चिदम्बरे—**

**मायां कामं श्रियं वाचं प्रदद्यान्मुखजन्मने।**
**मायामृते बाहुजेभ्य ऊरुजेभ्यः श्रियं गिरम् ॥ ७२ ॥**
**वाणीबीजं तु शूद्रेभ्योऽन्येभ्यो वर्मवषट् नमः ।**
**येषां मनूनां सिद्धादिशोधनं नास्ति तान् ब्रुवे ॥ ७३ ॥**

चिदम्बरसंहिता में भी कहा गया है—माया, काम, श्री एवं वाणी—इनके मन्त्र केवल ब्राह्मणों को देवे । माया के अतिरिक्त क्षत्रिय और वैश्य को श्रीमन्त्र और वाणीमन्त्र देवे । वाणी बीज (ऐं) शूद्र को भी देवे, अन्य को कवच, वषट् और नमः देवे । अब जिन मन्त्रों में सिद्धादि शोधन का विचार नहीं करना चाहिये; उनको कहता हूँ ॥ ७२-७३ ॥

**एकवर्णस्त्रिवर्णो वा पञ्चार्णो रसवर्णकः ।**
**सप्तार्णो नववर्णश्च रुद्रार्णो रदनाक्षरः ॥ ७४ ॥**
**अष्टार्णो हंसमन्त्रश्च कूटो वेदोदितो ध्रुवः ।**
**स्वप्नलब्धः स्त्रिया प्राप्तो मालामन्त्रो नृकेसरी ॥ ७५ ॥**
**प्रासादो रविमन्त्रश्च वाराहो मातृका परा ।**
**त्रिपुरा काममन्त्रश्च सुसिद्धः पक्षिनायकः ॥ ७६ ॥**
**बौद्धमन्त्रा जैनमन्त्रा नैषु सिद्धादिशोधनम् ।**
**एतद् भिन्नेषु मन्त्रेषु शुद्धिरावश्यकी मता ॥ ७७ ॥**

एक वर्ण, तीन वर्ण, पञ्चाक्षर, षडक्षर, सप्ताक्षर, नवाक्षर, एकादशाक्षर, बत्तीस अक्षर वाला मन्त्र, अष्टाक्षर हंसमन्त्र, कूटाक्षर, वेद में कहा गया ध्रुवमन्त्र, स्वप्न में प्राप्त होने वाला मन्त्र, स्त्री से प्राप्त होने वाला मन्त्र, मालामन्त्र, नृसिंह-मन्त्र, प्रासादमन्त्र, रविमन्त्र, वाराहमन्त्र, परामातृकामन्त्र, त्रिपुरामन्त्र एवं काममन्त्र, सुसिद्धमन्त्र, गरुडमन्त्र, बौद्धमन्त्र एवं जैनमन्त्र—इनमें सिद्धादि शोधन का विचार नही करना चाहिए । इनसे अतिरिक्त मन्त्रों में सिद्धादि शोधन का विचार आवश्यक बतलाया गया है ॥ ७४-७७ ॥

**तथा च सिद्धसारस्वते—**

**नृसिंहार्कवराहाणां प्रासाद-प्रणवस्य च ।**
**सपिण्डाक्षरमन्त्राणां सिद्धादीन् नैव शोधयेत् ॥ ७८ ॥**
**स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे च त्र्यक्षरे ।**
**वैदिकेषु च मन्त्रेषु सिद्धादीन् नैव शोधयेत् ॥ ७९ ॥ इति ।**

सिद्धसारस्वततन्त्र में भी इसी प्रकार बतलाया गया है—नृसिंह, सूर्य, वराह, प्रासाद, प्रणव एवं सपिण्ड मन्त्रों का सिद्धादि शोधन न करे। स्वप्न में प्राप्त, स्त्री के द्वारा दिये गये मन्त्र एवं मालामन्त्र और त्र्यक्षरमन्त्र एवं वैदिक मन्त्रों में भी सिद्धादि द्वारा शोधन न करे ॥ ७८-७९ ॥

**अथ सिद्धविद्याः चामुण्डातन्त्रे, मुण्डमालायामपि—**

**काली तारा महाविद्या षोडशी भुवनेश्वरी।**
**भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥ ८० ॥**
**बगला सिद्धविद्या च मातङ्गी कमला तथा।**
**एता दश महाविद्याः सिद्धविद्याः प्रकीर्तिताः ॥ ८१ ॥**

अब सिद्धविद्या कहते हैं। चामुण्डातन्त्र में तथा मुण्डमाला में भी कहा गया है—काली, तारा, महाविद्या षोडशी, भुवनेश्वरी, भैरवी, छिन्नमस्ता, धूमावती, श्रीविद्या, बगला, सिद्धविद्या मातङ्गी और कमला—ये सभी दश महाविद्यायें कही गई हैं ॥ ८०-८१ ॥

**नात्र सिद्धाद्यपेक्षास्ति न नक्षत्रविचारणा।**
**कालादिशोधनं नास्ति न चामित्रादिदूषणम् ॥ ८२ ॥**
**सिद्धविद्या तथा नात्र युगसेवापरिश्रमः।**
**नास्ति किञ्चिन्महादेवि! दुःखसाध्यं कथञ्चन ॥ ८३ ॥**

**इत्यादिवचनादेषु विचाराभावः। तथापि याथार्थ्ये प्रशंसापरमेव। यतः सर्वत्र विचारस्यावश्यकत्वं, दुरदृष्टवशात् कदाचिदरिमन्त्रस्य स्वप्नादौ प्राप्त्या तद्दोषस्य दृष्टत्वादिति साम्प्रदायिकाः। अतएव सिद्धादिशोधनक्रमं कालादिनियममपि बृहद्-दीक्षापटले लिखामः।**

इन दश महाविद्या मन्त्र में सिद्धादिशोधन की अपेक्षा नहीं है और न नक्षत्र का विचार है तथा कालादि शोधन भी नहीं है। शत्रु आदि का दोष भी नहीं है; वस्तुतः ये स्वतः सिद्धविद्यायें हैं। इनमें युग सेवा का परिश्रम भी नहीं है। हे महादेवि! इनमें दुःख-साध्य कुछ भी नहीं है ॥ ८२-८३ ॥

तन्त्रों के उपरोक्त वचनों से 'विचार नहीं करना चाहिये' ऐसा प्रतीत होता है। किन्तु सत्य बात यह है कि ये वचन प्रशंसापरक हैं। क्योंकि सब जगह अदृष्ट के पूर्ण होने पर विचार की आवश्यकता होती है। कभी-कभी साधक को स्वप्न में अरिमन्त्र दिखलाई पड़ जाते हैं किन्तु उनका दोष तो होता ही है। इसलिये सिद्धादि शोधन कर्म तथा कालादि नियम का विचार हम बृहद्दीक्षा पटल में आगे लिखेंगे।

**विशेषस्तु गुप्तदीक्षातन्त्रे—**

**मृतमप्यनुगच्छेत विद्यामन्त्रो विशेषतः।**

**मन एव मनुष्यस्य पूर्वकर्माणि शंसति ॥ ८४ ॥**

अब इससे विशेष गुप्तदीक्षातन्त्र में भी बतलाया गया है—विशेष रूप से यह विद्यामन्त्र मनुष्य के मरने के साथ-साथ भी जाता है । क्योंकि यह मन ही मनुष्यों के पूर्व कर्म को सूचित करता है ॥ ८४ ॥

**यदि न स्यान्महेशानि! मनुष्यस्य कथं भवेत्।**
**दीक्षायां च मनो भद्रे! पूर्वजन्मस्मृतिं विना ॥ ८५ ॥**

हे महेशानि! यदि ऐसा न होता तो पूर्व जन्म की स्मृति के बिना दीक्षा में मन की प्रवृत्ति किस प्रकार सम्भव है? ॥ ८५ ॥

**मन्त्रलेखनपत्राणि कथनम्**

**तस्माच्च यत्नतो देवि! पूर्वविद्यां समुद्धरेत्।**
**वकुलाश्वत्थवटकं पत्ररत्नं शृणु प्रिये ॥ ८६ ॥**

इसलिये हे देवि! प्रयत्नपूर्वक पूर्व विद्या का उद्धार अवश्य करे । वकुल, अश्वत्थ एवं वट; हे महेशानि ! ये पत्ररत्न हैं ॥ ८६ ॥

**वटपत्रे महेशानि शक्तिमन्त्रं लिखेद् गुरुः।**
**अश्वत्थे विष्णुमन्त्रं च वकुले शिवमन्त्रकम् ॥ ८७ ॥**

हे महेशानि! गुरु वटपत्र पर शक्ति मन्त्र लिखे और अश्वत्थ के पत्ते पर विष्णुमन्त्र तथा वकुल पत्र पर शिवमन्त्र लिखे ॥ ८७ ॥

**रक्तेन चन्दनेनाथ काश्मीरेणाथवा प्रिये ।**
**शक्तिमन्त्रं लिखेद् देवि चन्दनैर्विष्णुमन्त्रकम् ।**
**भस्मना शिवमन्त्रं च विलिखेत् परमेश्वरि ॥ ८८ ॥**

**सप्तपत्रेषु तत्तद्देवतामन्त्रं लिखेदित्यर्थः ।**

हे प्रिये! रक्त चन्दन से अथवा केशर से शक्ति मन्त्र लिखे और चन्दन से विष्णुमन्त्र लिखे । हे परमेश्वरि! भस्म से शिवमन्त्र लिखे ॥ ८८ ॥

इस प्रकार सात पत्रों पर देवता मन्त्र लिखे; यह निष्कर्ष है ।

**प्राणप्रतिष्ठां तन्मन्त्रे कारयेद् यत्नतः सुधीः ।**
**यथाशक्त्युपचारेण सम्पूज्य परमेश्वरि ॥ ८९ ॥**

**तत्तद्देवतायाः प्राणप्रतिष्ठां कुर्यादित्यर्थः ।**

फिर सुधी साधक उन मन्त्रों में प्राणप्रतिष्ठा करे । फिर हे परमेश्वरि! अपनी शक्ति के अनुसार उनका पूजन करे ॥ ८९ ॥

उन-उन देवताओं की प्राणप्रतिष्ठा उन पत्रों पर लिखे मन्त्रों में करे; यह आशय है ।

**ततः शिष्योऽर्घपात्रं तु हस्ते कृत्त्वा महेश्वरि ।**
**अनेन मनुना देवि भास्कराय निवेदयेत् ॥ ९० ॥**

हे महेश्वरि! इसके बाद शिष्य अर्घ पात्र हाथ में लेकर इस मन्त्र से भगवान् भास्कर को निवेदन करे ॥ ९० ॥

**आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ।**
**रक्तानि करवीराणि तथा रक्तं च चन्दनम् ।**
**अष्टाङ्ग एषोऽर्घो वै भानवे परिकीर्तितः ॥ ९१ ॥**

जल, दूध, कुशा का अग्र भाग, घृत, दधि, मधु और रक्त वर्ण का कनैल का पुष्प तथा रक्त चन्दन—ये आठ अर्घ के अङ्ग कहे गये हैं ॥ ९१ ॥

**मन्त्रस्तु—**

**ॐ भो देव! पृथिवीपाल! सर्वशक्तिसमन्वित ।**
**ममार्घञ्च गृहाण त्वं पूर्वविद्यां प्रकाशय ॥ ९२ ॥**

सूर्य निवेदन का मन्त्रार्थ—ॐ हे देव! हे पृथ्वीपालक! हे सर्वशक्तिसमन्वित! कृपया यह मेरा अर्घ आप ग्रहण कीजिए और मेरी पूर्व जन्म की विद्या प्रकाशित कीजिए ॥ ९२ ॥

**अर्घं दात्वा नमस्कृत्य कृताञ्जलिः पठेत् ततः ।**
**न दद्यात् भास्करायार्घं शङ्खतोयैर्महेश्वरि ॥ ९३ ॥**

अर्घ देने के बाद सूर्य को नमस्कार करे । हाथ जोड़कर प्रार्थना करे—हे महेश्वरि! शङ्ख के जल से सूर्य को अर्घ प्रदान न करे ॥ ९३ ॥

**ॐसूर्यः सोमो यमः कालो महाभूतानि पञ्च च ।**
**एते शुभाशुभस्येह कर्मणो नव साक्षिणः ॥ ९४ ॥**

ॐ, सूर्य, सोम, यम, काल और पञ्चमहाभूत—ये नव मनुष्य के शुभाशुभ कर्म के साक्षी हैं ॥ ९४ ॥

**ॐसर्वे देवाः शरीरस्थाः मम मन्त्रस्य साक्षिणः ।**
**पूर्वजन्मार्जितां विद्यां मम हस्ते प्रकाशय ॥ ९५ ॥**

सभी देवता हमारे शरीर में निवास करते हैं । वे ही मेरे इस मन्त्र के साक्षी हैं । अतः हे भगवन्! मेरे पूर्वजन्म की महाविद्या को आप मेरे हाथ में प्रकाशित कीजिए ॥ ९५ ॥

**पठित्वेदं महेशानि सत्वरं पत्रमुद्धरेत् ।**
**उद्धृत्य पत्रमेकं तु गुरोर्हस्ते प्रदापयेत् ॥ ९६ ॥**

हे महेशानि! इस मन्त्र को पढ़कर शीघ्र ही पत्र को उद्धृत करे और उसमें से एक पत्र उठाकर गुरु के हाथ में देवे ॥ ९६ ॥

**गुरुस्तामक्षरश्रेणीमुद्धृत्य परमेश्वरि ।**
**सेतुं दत्त्वा महेशानि! तन्मन्त्राष्टशतं जपेत् ॥ ९७ ॥**

हे परमेश्वरि! गुरु उस अक्षर श्रेणी को सामने रखकर उस पर सेतु लगाकर उसका एक सौ आठ बार जप करे ॥ ९७ ॥

**शिष्यस्य मस्तके हस्तं दत्त्वा चाष्टशतं जपेत् ।**
**गुरुस्तु प्राङ्मुखो भूत्वा शिष्यस्तत्सम्मुखस्थितः ॥ ९८ ॥**

फिर गुरु शिष्य के मस्तक पर हाथ रखकर एक सौ आठ बार मन्त्र का जप करे । उस समय गुरु पूर्वाभिमुख रहे तथा शिष्य उनके सामने स्थित रहे ॥ ९८ ॥

**आचम्य संयतो भूत्वा प्राणायामं विधाय च ।**
**अष्टोत्तरशतं जप्त्वा ऋष्यादिकसमन्वितम् ॥ ९९ ॥**
**अष्टकृत्त्वो जपेन्मन्त्रं दक्षकर्णे महेश्वरि ।**
**एषा दीक्षा सर्वतन्त्रे शाक्तेयी परिकीर्तिता ॥ १०० ॥**

फिर गुरु आचमन करे । संयतचित्त होकर प्राणायाम करे । ऋष्यादि न्यास कर पुनः एक सौ आठ बार मन्त्र का जप करे । हे महेश्वरि! शिष्य के दाहिने कान में आठ बार मन्त्र का पाठ करे । हे महेश्वरि! यह 'शाक्तेयी दीक्षा' सभी तन्त्रों में कही गई है ॥ ९९-१०० ॥

**गुरोर्लब्ध्वां महाविद्यामष्टोत्तरशतं जपेत् ।**
**गुरवे दक्षिणां दद्यात् वित्तशाठ्यविवर्जितः ॥ १०१ ॥**

तदनन्तर शिष्य गुरु द्वारा प्राप्त महाविद्या का एक सौ आठ बार जप करे । फिर शिष्य वित्त की शठता न कर गुरु को दक्षिणा देवे ॥ १०१ ॥

**गुरवे गुरुपुत्राय तत्पत्न्यै वा प्रदापयेत् ।**
**गुरोः प्रीतिसमुत्पत्तौ देवता प्रीतिमाप्नुयात् ॥ १०२ ॥**

यदि गुरु न हो तो गुरु पुत्र को अथवा उनकी पत्नी को दक्षिणा देवे । गुरु के प्रसन्न होने पर देवता स्वयं ही प्रसन्न हो जाते हैं ॥ १०२ ॥

**देवे तु प्रीतिमापन्ने मन्त्रसिद्धिर्भवेद् ध्रुवम् ।**
**पात्ररत्नप्रदानेन दीक्षां कुर्यात् कलौ युगे ॥ १०३ ॥**

जब गुरु और देव प्रसन्न हों तो निश्चित रूप से ही मन्त्र सिद्धि हो जाती है। कलियुग में (कमण्डलु आदि) पात्र और रत्नादि देकर ही दीक्षा ग्रहण करनी चाहिये ॥ १०३ ॥

**ततः सिद्धो भवेन्मन्त्री नात्र कार्या विचारणा।**
**एतद् ज्ञानं विना देवि! दीक्षां कुर्याच्च यो नरः ॥ १०४ ॥**
**दीक्षा च विफला तस्य देवता न प्रसीदति।**
**दीक्षां प्राप्य ततः शिष्यो दण्डवत् प्रणमेद् गुरुम् ॥ १०५ ॥**

ऐसा करने से मन्त्र चाहने वाला सिद्ध होता है; इसमें विचार की आवश्यकता नहीं है। इस विषय के ज्ञान के बिना जो मनुष्य दीक्षा देता है उसकी दी गई दीक्षा निष्फल है और उससे देवता प्रसन्न नहीं होते। दीक्षा ग्रहण करने के पश्चात् शिष्य गुरु को दण्डवत् प्रणाम करे ॥ १०४-१०५ ॥

**ततो गुरुर्वदेत्—**

**उत्तिष्ठ वत्स! मुक्तोऽसि सम्यगाचारवान् भव।**
**कीर्तिः श्रीः कान्तिमेधायुर्बलारोग्यं सदाऽस्तु ते ॥१०६॥ इति।**

फिर गुरु शिष्य को इस प्रकार आशीर्वाद देवे—हे वत्स! उठो, तुम मुक्त हो गये, अच्छा आचरण करो। तुम्हें सर्वदा कीर्त्ति, श्री, कान्ति, मेधा, आयु, बल तथा आरोग्य प्राप्त होवे ॥ १०६ ॥

**अत्र मन्त्रतन्त्रप्रकाशे विशेषः—**

**अपि चान्यं प्रवक्ष्यामि मन्त्रसिद्धिकरं परम्।**
**मन्त्रसाधकयोरैक्यं दुर्लभं भुवि मानवैः ॥ १०७ ॥**

इस विषय में मन्त्रतन्त्रप्रकाश में विशेष रूप से बतलाया गया है—अब मैं मन्त्र की सिद्धि करने वाला एक अन्य उपाय कहता हूँ। इस पृथ्वी तल में मन्त्र और साधक की एकता दुर्लभ है ॥ १०७ ॥

**उक्तं साङ्कर्षणे तन्त्रे शिवेनाऽखिलवेदिना।**
**आनन्दाख्ये पञ्चरात्रे शुक्राय कवये पुरा ॥ १०८ ॥**

सर्वज्ञ सदाशिव ने सङ्कर्षणतन्त्र में तथा आनन्द नामक पञ्चरात्र में शुक्र कवि के लिये यह बात कही है ॥ १०८ ॥

**संस्कृतं पूजितं मन्त्रं दत्त्वा शिष्याय देशिकः।**
**कुर्यादथ तयोर्मध्ये शास्त्रदृष्टेन वर्त्मना ॥ १०९ ॥**

आचार्य संस्कृत पूजित मन्त्र शिष्य को विदर्भित करे, फिर उसके आदि और

अन्त में अपना सम्पूर्ण नाम, फिर प्रणव लिखे ॥ १०९ ॥

**मन्त्रं विदर्भयित्वा तु नामवर्णैर्यथाक्रमम् ।**
**आद्यन्ते सकलं नाम ततः प्रणवमालिखेत् ॥ ११० ॥**

क्रमानुसार नाम वर्ण में मन्त्र को विदर्भित करे । फिर उसके आदि और अन्त में अपना सम्पूर्ण नाम, फिर प्रणव लिखे ॥ ११० ॥

**स्वराः पत्रेषु संलेख्या ध्यायेत् तानमृतात्मकान्।**
**भूर्जे रोचनगन्धाद्यैः पद्ममध्ये सुशोभने ॥ १११ ॥**
**मृदा पवित्रयाऽऽवेष्ट्य तत्पुनः सिक्थकेन च।**
**निक्षिपेन्मधुरे तत्तु मृण्मये लघुभाजने ॥ ११२ ॥**

पत्रों पर स्वरों को लिखे । उन अमृतात्मक स्वरों का ध्यान करे । हे सुशोभने! भूर्ज पत्र पर लिखे गये उस कमल के मध्य में रोचना एवं गन्धादि से तथा पवित्र मिट्टी से उसको आवेष्टित कर सिक्थक के साथ अत्यन्त कोमल मिट्टी के छोटे पात्र में उसे स्थापित कर देवे ॥ १११-११२ ॥

**क्षीरपूर्णे तु वै कुम्भे तत् क्षिपेल्लघुभाजनम् ।**
**धारयेद् देशिकः कुम्भमग्निकुण्डसमीपतः ॥ ११३ ॥**

फिर उस छोटे पत्र को दुग्धपूर्ण कुम्भ में डाल देवे और उस कुम्भ को अग्नि कुण्ड के सन्निधान में रख देवे ॥ ११३ ॥

**मन्त्रसाधकयोरैक्यसिद्ध्यर्थं जुहुयात् ततः ।**
**मूलमन्त्रेण मन्त्रज्ञः सहस्रं शतमेव वा ॥ ११४ ॥**

फिर मन्त्र और साधक की एकता को सङ्कल्प की सिद्धि के लिये मूलमन्त्र से मन्त्रज्ञ साधक एक सहस्र अथवा एक शत हवन करे ॥ ११४ ॥

**कुम्भे सम्पातयेच्चैव मधुराणां त्रयं शुभम् ।**
**निधाय निक्षिपेत् कुम्भं शनैस्तं महदम्भसि ॥ ११५ ॥**

फिर उस कुम्भ में तीन मधुर कल्याणकारी (घृत, दूध एवं मधु) पदार्थों को डाल दे । फिर धीरे से उस कुम्भ को उठाकर गहरे पानी में डाल देवे ॥ ११५ ॥

**मन्त्रसाधकयोरैक्यं भवेदेव फलप्रदम् ।**
**एतद् यो न विजानाति नाऽसौ देशिक उच्यते ॥ ११६ ॥**

ऐसा करने से मन्त्र और साधक में एकता फलप्रदा हो जाती है । जो इस रहस्य को नहीं जानता; उसे देशिक नहीं कहना चाहिये ॥ ११६ ॥

**रहस्यं कथितं चैतन्न देयं यस्य कस्यचित् ।**
**उत्तमाय तु शिष्याय प्रियपुत्राय वा वदेत् ॥११७॥ इति ।**

हे सङ्कर्षण! यह मेरा कहा गया रहस्य जिस किसी से प्रगट न करे । उत्तम शिष्य और प्रिय पुत्र को यह बतलाया जा सकता है ॥ ११७ ॥

**अन्यच्च यामले—**

**स्नानसन्ध्ये सदाचारं नित्यं काम्यं तथैव च ।**
**मन्त्रसिद्धिप्रकारांश्च शिष्यायाभिवदेद् गुरुः ॥ ११८ ॥**

अन्य कुछ सदाचार यामलतन्त्र में भी बतलाया गया है—गुरु दीक्षा देने के अनन्तर शिष्य को नित्य काम्य-कर्म का उपदेश करे तथा मन्त्र-सिद्धि का प्रकार बतलावे ॥ ११८ ॥

**मन्त्रं दत्त्वा गुरुर्देवि! उपवासं समाचरेत् ।**
**महान्धकारनरके कृमिर्भवति नान्यथा ॥ ११९ ॥**

हे देवि! जो गुरु मन्त्र देकर उपवास करता है वह महान्धकार रूप घोर नरक में कृमि होता है; यह अन्यथा नहीं है ॥ ११९ ॥

**पुनरपि यामले—**

**दीक्षां कृत्त्वा यदा मन्त्री उपवासं समाचरेत् ।**
**तस्य देवः सदा रुष्टः शापः पतति मूर्धनि ॥ १२० ॥**

यामल में इस प्रकार और भी बतलाया गया है—यदि मन्त्रज्ञ दीक्षा देकर आचार्य उपवास करे, तब उसके ऊपर देवता रुष्ट हो जाते हैं । कि बहुना; उस देवता का शाप उस मन्त्र के शिर पर फूटता है ॥ १२०॥

**तत्त्वसारे च—**

**चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।**
**मन्त्रमात्रप्रकथनमुपदेशः स उच्यते ॥ १२१ ॥**

तत्त्वसार में भी बतलाया गया है—चन्द्रग्रहण और सूर्यग्रहण लगने पर, किसी तीर्थ में, सिद्ध क्षेत्र में और शिवालय में केवल मन्त्र मात्र का कहना उपदेश कहा जाता है ॥ १२१ ॥

**दीक्षायां विचारे दोषमाह गुप्तदीक्षातन्त्रे—**

**यः कुर्याच्चक्रगणनां दीक्षायां पशुपामरः ।**
**स भ्रष्टः स च पापिष्ठो विष्ठायां जायते कृमिः ॥ १२२ ॥**

गुप्तदीक्षातन्त्र में भी बतलाया गया है कि दीक्षा के विषय में विचार करना

दोषावह होता है—जो साधक दीक्षा के विषय में चक्र (सिद्ध, अरि इत्यादि विचार) गणना करता है। वह पामर पशु है, भ्रष्ट है और पापी है। वह अगले जन्म में विष्ठा का कृमि बन कर जन्म लेता है ॥ १२२ ॥

**किं कुलेन धनेनैव राश्यादिकविचारणे ।**
**सिद्धसाद्ध्यसुसिद्धारिविचारे किं प्रयोजनम् ॥ १२३ ॥**

दीक्षा के विषय में कुल का विचार, धनादि का विचार, राश्यादि का विचार, सिद्ध-साध्य-सुसिद्ध तथा अरि का विचार करना निष्प्रयोजन है ॥ १२३ ॥

**नास्ति सत्यं महेशानि! नक्षत्रादिविचारणा ।**
**राश्यादिगणना नास्ति शङ्करेणेति भाषितम् ॥ १२४ ॥**

हे महेशानि! दीक्षा में नक्षत्रादि का विचार ठीक नहीं है। राश्यादि की गणना भी नही करनी चाहिए—ऐसा स्वयं भगवान् शङ्कर ने कहा है ॥ १२४ ॥

**आगमकल्पद्रुमे—**

**रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा ।**
**तत्र लग्नादिकं किञ्चित् न विचार्यं कथञ्चन ॥ १२५ ॥**

आगमकल्पद्रुम में भी बतलाया गया है—सूर्य सङ्क्रान्ति काल में तथा सूर्य ग्रहण में और उसमें किञ्चित् लग्नादि का विचार कदापि न करे ॥ १२५ ॥

**यामले—**

**शरत्काले युगाद्यायां ग्रहणे चन्द्रसूर्ययोः ।**
**बोधने चैव दुर्गायाः कालाकालं न शोधयेत् ॥ १२६ ॥**

यामल में भी बतलाया गया है—शरत्काल में, युगादि में, चन्द्र एवं सूर्य ग्रहण में तथा दुर्गा के बोधन में कालाकाल का विचार न करे ॥ १२६ ॥

**मत्स्यसूक्ते—**

**ग्रहणे च महातीर्थे नास्ति कालस्य निर्णयः ।**
**सोमग्रहे विष्णुमन्त्रं सूर्ये शक्तिं न चाचरेत् ॥ १२७ ॥**

मत्स्यसूक्त में भी बतलाया गया है—ग्रहण में और महातीर्थ में काल निर्णय न करे। चन्द्रग्रहण में विष्णुमन्त्र तथा सूर्यग्रहण में शक्तिमन्त्र न देवे ॥ १२७ ॥

**यामले—**

**सूर्यग्रहे शक्तिमन्त्रं न प्रदद्यात् जिजीविषुः ।**
**न गृह्णीयादपि तथा यदीच्छेदात्मनो हितम् ॥१२८॥ इति ।**

यामल में भी बतलाया गया है—अपने जीने की इच्छा करने वाला आचार्य सूर्यग्रहण में शक्तिमन्त्र न देवे । शिष्य भी यदि अपना हित चाहे तो उस समय शक्तिमन्त्र ग्रहण न करे ॥ १२८ ॥

**शक्तिमन्त्रपदं पञ्चमीपरम् । यत्तु—**

**श्रीकामकालीबीजानि लोपा दौर्गार्कयोर्मनुः ।**
**भवेदुपग्रहे लब्धो नृणां शीघ्रफलप्रदः ॥**

**'पराश्रीकामबीजानि' इति कुलमूलावतारे पाठः । पूर्ववाक्ये न शक्तिमन्त्रं श्रीविद्यापरम् । शिवदीक्षाटीकाकारस्त्वेवमेव मन्यते ।**

यहाँ 'शक्तिमन्त्र' पद पञ्चमीपरक है । शक्तिमन्त्रादन्यन्न दद्यादित्यर्थः—शक्तिमन्त्र के अतिरिक्त अन्य मन्त्र न देवे । जैसा कि श्रीबीज, कामबीज, काली बीज, लोपामुद्रामन्त्र तथा दुर्गामन्त्र यदि मनुष्य को ग्रहण-काल में प्राप्त हो जाय तो शीघ्र फलवान् हो जाता है । कुलमूलावतारतन्त्र में 'पराश्री कामबीजानि' यह पाठ है अथवा पूर्व श्लोक में शक्तिमन्त्र 'श्री विद्या परक है' अर्थात् ग्रहण में श्रीविद्या मन्त्र नहीं देना चाहिए । ऐसा अर्थ शिवदीक्षाकार ने किया है ।

**यामले—**

**लग्ने वाप्यथवाऽलग्ने यत्र तत्र तिथावपि ।**
**गुरोराज्ञानुरूपेण दीक्षा कार्या विधानतः ॥ १२९ ॥**

यामल में भी बतलाया गया है—लग्न में अथवा विना लग्न में अथवा जिस किसी तिथि में गुरु आज्ञा के अनुरूप दीक्षा विधानपूर्वक ग्रहण करे ॥ १२९ ॥

**न तिथिर्न व्रतं पूजा न स्नानं न जपक्रिया ।**
**दीक्षायां कारणं ज्ञानं स्वेच्छाप्राप्ते सदा गुरोः ॥ १३० ॥**

दीक्षा में ज्ञान कारण है । यदि स्वेच्छया गुरु प्राप्त हो जावें तब तिथि का, व्रत का, पूजा तथा स्नान एवं जप क्रिया का विचार न करे ॥ १३० ॥

**सर्वे वाराः ग्रहाः सर्वे नक्षत्राणि च राशयः ।**
**यस्मिन्नहनि सन्तुष्टो गुरुः सर्वं शुभावहम् ।**
**यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः ॥ १३१ ॥ इति ।**

जिस दिन गुरु सन्तुष्ट हो जावें; उस दिन सभी वार, सभी ग्रह, सभी नक्षत्र और सभी राशियाँ स्वयमेव ही शुभावह हो जाती हैं । गुरु की आज्ञानुसार जब उनकी इच्छा हो, उसी समय दीक्षा ग्रहण करे ॥ १३१ ॥

**विश्वसारे—**

**गृहीत्वा च महाविद्यां जपेज्जीवावधिं प्रिये ।**

**महागुरुनिपातादौ न पूजायां विकल्पना ॥ १३२ ॥**

विश्वसारतन्त्र में भी बतलाया गया है—हे प्रिये! महाविद्या की दीक्षा लेकर जीवनपर्यन्त उसका जप करे। यदि महागुरु का भी शरीर छूट जावे तो भी महाविद्या की पूजा में सन्देह न करे ॥ १३२ ॥

**मोहाद् वा यदि वा दैवात् पूजयेन्न च साधकः।**
**तस्य सर्वविनाशः स्यान्मारयेत् तं सदाशिवः ॥ १३३ ॥**

यदि साधक मोह अथवा दुर्भाग्यवश पूजा न करे तो सर्व विनाश हो जाता है। सदाशिव स्वयं क्रुद्ध होकर उसे मार डालते हैं ॥ १३३ ॥

**अशुचौ वा शुचौ वापि सर्वकालेऽपि सर्वदा।**
**पूजयेत् परया भक्त्या नात्र कार्या विचारणा ॥ १३४॥ इति।**

अशुचि में अथवा शुचि में, सभी काल में सर्वदा महाविद्या की पूजा करनी ही चाहिये; उसमें विचार की आवश्यकता नहीं ॥ १३४ ॥

**यामलेऽपि—**

**पूजयेत् सूतके वापि जनने शवजेऽपि वा।**
**सर्वत्रैव विधिः प्रोक्तः सर्वकामफलप्रदः।**
**बाह्यपूजाक्रमेणैव ध्यानयोगेन वा यजेत् ॥ १३५ ॥**

यामल में भी बतलाया गया है—महाविद्या की पूजा जननाशौच, मरणाशौच किं बहुना; सर्वदा करनी चाहिये। यही सर्वकामफलप्रद विधि बतलायी गयी है। यह पूजा बाह्यपूजा क्रम से अथवा ध्यान क्रम से करनी चाहिए। जो सर्वत्र ही शुभावह होती है ॥ १३५ ॥

**देवीविषये—**

**पूजा कार्या विशेषेण विधिना साधकोत्तमैः ॥ १३६॥ इति।**

देवी के विषय में भी बतलाया गया है—उत्तम साधक को विशेष रूप से विधिपूर्वक देवी की पूजा करनी चाहिये ॥ १३६ ॥

**वाराहीतन्त्रे विशेषः—**

**तारायाश्चैव काल्याश्च छिन्नायाश्चैव सुव्रते।**
**सूतके मृतके चैव न त्यजेद् वै जपार्चनम् ॥ १३७॥ इति।**

वाराहीतन्त्र में विशेष रूप से बतलाया गया है—तारा, काली एवं छिन्नमस्तका की पूजा; हे सुव्रते! सूतकाशौच तथा मरणाशौच में भी न त्यागे ॥ १३७ ॥

यामलेऽपि—

**अशुचिर्वा शुचिर्वापि गच्छन् तिष्ठन् स्वपन्नपि ।**
**न दोषो मलिने जापे सर्वदेवेषु सर्वदा ॥ १३८ ॥**

यामलतन्त्र में भी इस प्रकार बतलाया गया है—चाहे शुचि हो अथवा अशुचि हो, चाहे चलता रहे, चाहे खड़ा रहे, चाहे सोता रहे, किं बहुना; चाहे मलिन रहे । सभी देवताओं के जप में कोई दोष नहीं होता; अत: उसे सर्वदा जप करना चाहिए ॥ १३८ ॥

विश्वसारेऽपि—

**जाग्रतेऽपि शयानेऽपि भुञ्जाने गमनेऽपि वा ।**
**सिद्धमन्त्रे न दोषः स्यान्नाशौचनियमस्तथा ।**
**न कल्पना दिवा रात्रौ न च सन्ध्यावसानके ॥ १३९ ॥ इति ।**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे मन्त्रग्रहणादिः नाम चतुर्थः पटलः ॥ ४ ॥**

विश्वसारतन्त्र में भी ऐसा बतलाया गया है—जागते हुये, सोते हुये, भोजन करते हुये और चलते हुये सिद्धमन्त्र के जप में दोष नहीं लगता । उसमें अशौच का नियम नहीं है, दिन-रात का विचार नहीं है, कि बहुनां; सन्ध्या तथा सन्ध्यावसान का भी दोष नहीं लगता ॥ १३९ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में मन्त्रग्रहणादि नामक चतुर्थ पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ ४ ॥**



# पञ्चमः पटलः

## गुर्वाचारनिरूपणम्

एवं दीक्षां प्राप्य श्रीगुर्वाचारं पालयेत् । अथ श्रीगुर्वाचारनिर्णयः तन्त्रे—

**गुरुः सर्वसुराधीशो गुरुः साक्षी कृताकृते ।**
**सम्पूज्य सकलं कर्म कुर्यात् तस्याज्ञया सदा ॥ १ ॥**

इस प्रकार दीक्षा प्राप्त कर श्रीगुरु द्वारा उपदिष्ट गुर्वाचार का पालन करे । अब गुर्वाचारनिर्णय तन्त्रों के अनुसार कहते हैं—

गुरु सर्व सुरेश्वर है, गुरु कृताकृत के साक्षी है । अतः उनकी पूजा कर शिष्य उनकी आज्ञा लेकर समस्त कर्म करे ॥ १ ॥

**गमनं पूजनं जाप्यं मननं भोजनं तथा ।**
**गृहीत्वाज्ञां गुरोः कुर्यात् तस्य सिद्धिर्विना जपात्॥ २ ॥**

यात्रा, पूजन, जप, मनन और भोजन आदि गुरु की आज्ञा लेकर करे । तभी उसकी सिद्धि होती है । किन्तु जप बिना गुरुआज्ञा के भी करे ॥ २ ॥

**त्रिसन्ध्यं श्रीगुरोर्ध्यानं त्रिसन्ध्यं पूजनं गुरोः ।**
**त्रिसन्ध्यं भावयेन्नित्यं गुरुं परमकारणम् ॥ ३ ॥**

तीनों सन्ध्याओं में श्रीगुरु का ध्यान, तीनों सन्ध्या में श्री गुरु का पूजन तथा तीनों सन्ध्या में उनका ध्यान करे । क्योंकि वे ही सिद्धि के परम कारण है ॥ ३॥

**स्वगुरुं हि विना देवि! नान्यञ्च गुरुमर्चयेत्।**
**प्रत्यक्षं वा परोक्षं वा प्रत्यहं प्रणमेद् गुरुम् ॥ ४ ॥**

हे देवि! अपने गुरु के बिना अन्य गुरु की अर्चना न करे । चाहे गुरु प्रत्यक्ष हों अथवा परोक्ष हों; प्रतिदिन उन्हें प्रणाम अवश्य करे ॥ ४ ॥

**एकग्रामस्थितः शिष्यः प्रत्यहं प्रणमेद् गुरुम् ।**
**क्रोशमात्रस्थितो भक्त्या प्रत्यहं प्रणमेद् गुरुम् ॥ ५ ॥**

यदि गुरु और शिष्य एक ही ग्राम में स्थित हों, तो शिष्य उन्हें नित्य ही प्रणाम करे । यदि एक कोश की दूरी पर गुरु स्थित हों, तब भक्तिपूर्वक नित्य प्रणाम करे ॥ ५ ॥

**अर्धयोजनगः शिष्यः प्रणमेत् पञ्चपर्वसु ।**
**एकयोजनमारभ्य योजनद्वादशावधि ॥ ६ ॥**
**तत्तत्संख्यागतैर्मासैः श्रीगुरुं प्रणमेत् प्रिये ।**
**यदि दूरेषु चार्वङ्गि! स्वगुरुर्नगनन्दिनि ।**
**संवत्सरस्य मध्ये तु पूजयेद् विधिनाऽमुना ॥ ७ ॥**

यदि शिष्य आधे योजन की दूरी पर निवास करते हों, तो पाँच पर्वों में प्रणाम करे । एक योजन से लेकर द्वादश पर्यन्त यदि गुरु और शिष्य के निवास में अन्तर हो तो जितने महीने हो उतनी संख्या में; हे प्रिये! प्रणाम करे । हे नगनन्दिनि! यदि गुरु बहुत दूर हों; तब शिष्य संवत्सर के मध्य में इसी विधि से उनकी पूजा किया करे ॥ ६-७ ॥

**पूजाक्रमस्तु परातन्त्रे, तथा च देवीं प्रति भैरववाक्यम्—**

**गुरुपूजां प्रवक्ष्यामि सर्वतन्त्रेषु गोपिताम् ।**
**दीक्षां गृहीत्वा विधिवद् गुरोः कुलविचक्षणात्॥ ८ ॥**
**तदाज्ञां शिरसाऽऽदाय साधयेत् स्वमनुं ततः ।**
**सम्प्राप्ते पर्वकाले तु तथाभ्युदयपर्वणि ॥ ९ ॥**
**गुरुमानीय देवेशि! शून्यगेहे चतुष्पथे ।**
**श्मशाने वा वने वापि स्वगृहे वापि पार्वति ।**
**तत्र भूमौ लिखेद् यन्त्रं यथावद् वर्ण्यते मया ॥ १० ॥**

पूजाक्रम परातन्त्र में कहा गया है तथा देवी के प्रति भैरव का वाक्य इस प्रकार बतलाया गया है—भैरव ने कहा—हे देवि! अब सभी तन्त्रों में गुप्त रूप से रहने वाली गुरु पूजा को कहता हूँ । शिष्य उत्तम, कुलीन एवं विचक्षण गुरु से दीक्षा ग्रहण कर, उनकी आज्ञा शिर पर धारण कर, अपना मन्त्र सिद्ध करे । जब पर्वकाल अथवा अभ्युदयकारी पर्व प्राप्त हो, तब गुरु को बुलावे । फिर हे पार्वति! शून्य गृह में, चतुष्पथ पर, श्मशान में, अथवा वन में, अथवा अपने घर में तथा भूमि में यन्त्र लिखे । उसका वर्णन मैं इस प्रकार कर रहा हूँ ॥ ८-१० ॥

**विन्दुं त्रिकोणं वसुकोणबिम्बं**
**वृत्ताष्टपत्रं शिखिवृत्तयुक्तम् ।**
**धरागृहं वह्नितटीभिरीड्यं**
**यन्त्रं गुरोर्देवि! मया प्रदिष्टम्**

पहले बिन्दु, फिर उसके ऊपर त्रिकोण, फिर अष्टकोण बिम्ब, फिर तीन वृत्त युक्त अष्टपत्र कमल तदनन्तर तीन भूवृत्त लिखे । इस प्रकार हे देवि! मैंने गुरु के यन्त्र को उद्देश्य कर यह बतलाया ॥ ११ ॥

**सिन्दूरेण विलिख्याथ पूजयेच्चक्रमीश्वरि ।**
**गणेशधर्मवरुणकुवेरसहिताः शिवे ॥ १२ ॥**
**द्वाःस्थाः पूज्याः सुपुष्पैश्च गन्धाक्षतपुरस्सरैः ।**
**असिताङ्गो रुरुश्चण्डः क्रोधेशोन्मत्तभैरवौ ॥ १३ ॥**
**कपाली भीषणो देवि! संहारोऽर्च्योऽष्टपत्रके ।**
**परमानन्दनाथश्च प्रकाशानन्दनाथकः ॥ १४ ॥**
**श्रीभोगानन्दनाथश्च समयानन्दनाथकः ।**
**गगनानन्दनाथश्च विश्वानन्दस्तथेश्वरि ॥ १५ ॥**
**भुवनानन्दनाथश्च श्रीस्वात्मानन्दनाथकः ।**
**अष्टौ कुलगुरून् देवि! पूजयेद् वसुपत्रके ॥ १६ ॥**

हे ईश्वरि! इस यन्त्र को सिन्दूर से लिखे, फिर उस चक्र की पूजा करे । हे शिवे! फिर द्वार पर स्थित भगवान् गणेश की धर्म, वरुण एवं कुबेर सहित पूजा करे । फिर सुन्दर पुष्पों से, गन्धाक्षत द्वारा असिताङ्ग भैरव, रुरु भैरव, चण्ड भैरव, क्रोध भैरव, ईश भैरव, उन्मत्त भैरव, कपाली भैरव एवं भीषण भैरव—इन आठ संहार भैरवों की अष्टपत्र पर पूजा करे । तदनन्तर हे देवि! श्रीपरमानन्द-नाथ, श्रीप्रकाशानन्दनाथ, श्रीभोगानन्दनाथ, श्रीसमयानन्दनाथ, श्रीगगनानन्दनाथ श्रीविश्वानन्दनाथ, श्रीभुवनानन्दनाथ तथा श्रीस्वात्मानन्दनाथ—इन आठ कुल गुरुओं की अष्टपत्र पर पूजा करे ॥ १२-१६ ॥

**मदनानन्दनाथञ्च श्रीलीलानन्दनाथकम् ।**
**महेश्वरानन्दनाथं पूजयेद् वै त्रिकोणके ॥ १७ ॥**

फिर श्रीमदनानन्दनाथ, श्रीलीलानन्दनाथ तथा श्रीमहेश्वरानन्दनाथ इनकी पूजा त्रिकोण में करे ॥ १७ ॥

**विन्दौ गुरुञ्च सम्पूज्य गन्धाक्षतपुरःसरैः ।**
**तत्र विन्दौ गुरुं देवि! स्थापयेद् भक्तिपूर्वकम् ॥ १८ ॥**

बिन्दु में गुरु की गन्धाक्षत द्वारा पूजा कर उस बिन्दु पर भक्तिपूर्वक गुरु की स्थापना करे ॥ १८ ॥

**सम्पूजयेत् स्वमूलेन दक्षिणां कालिकां यजेत् ।**
**महाकालं यजेत् तत्र कामं कामेश्वरीं ततः ॥ १९ ॥**

**गुरुं च परमं देवि! परमेष्ठिगुरुं ततः ।**
**परात्परगुरुं चैव स्वगुरोर्मूर्ध्नि तान् यजेत् ॥ २० ॥**

फिर उसी पर अपने मूल मन्त्र से दक्षिण कालिका, महाकाल, काम, तदनन्तर कामेश्वरी, फिर परम गुरु, तदनन्तर परमेष्ठी गुरु, फिर परात्पर गुरु— इस प्रकार अपने गुरु के शिर:स्थान पर (सबसे ऊपर) पूजन करे ॥ १९-२० ॥

**सम्पूज्य विविधैः पुष्पैर्माल्यैराभरणोत्तमैः ।**
**दक्षिणाभिर्महेशानि भक्ष्यैर्भोज्यैः सलेह्यकैः ॥ २१ ॥**
**चोष्यैः पेयैश्च खाद्यैश्च बलिं दत्त्वा च तर्पयेत् ।**
**आनन्दरससम्पूर्णं गुरुं बुद्ध्वा महेश्वरि ।**
**तत्र देवि! गुरुं नत्वा प्रार्थयेत् स्वमनोरथम् ॥ २२ ॥**

दक्षिणा सहित विविध पुष्पों, विविध मालाओं, विविध उत्तमोत्तम आभरणों से, भक्ष्य, भोज्य, लेह्य, चोष्य एवं पेय खाद्यान्नों से तथा नाना प्रकार के बलियों से पूजा कर गुरु को तृप्त करे । हे महेश्वरि! उन्हें आनन्द रस से सम्पूर्ण जानकर प्रणाम कर अपना मनोरथ निवेदन करे ॥ २१-२२ ॥

**एवं सम्पूजयेद् देवि! स्वगुरुं पुण्यवासरे ।**
**स एव भैरवः साक्षात् भुक्तिमुक्त्योश्च भाजनम् ॥ २३ ॥**

हे देवि! इस प्रकार पुण्य वार में श्रीगुरु की शिष्य पूजा करे । क्योंकि वही साक्षात् भैरव हैं और स्वयं ही भुक्ति और मुक्ति को देने वाले हैं ॥ २३ ॥

**यस्य तुष्टो गुरुर्देवि! तस्य तुष्टा महेश्वरी ।**
**गुरुरेव परो धर्मो गुरुरेव परा गतिः ॥ २४ ॥**

हे देवि! जिसके ऊपर गुरु सन्तुष्ट हैं, उस पर स्वयं महेश्वरी भी सन्तुष्ट हैं । गुरु ही साक्षात् परम धर्म हैं और गुरु ही परा गति हैं ॥ २४ ॥

**गुरुमभ्यर्चयेन्नित्यं येन तुष्यति सुन्दरी ।**
**एवं यो नार्चयेद् देवि! स भवेद् ब्रह्मराक्षसः ॥ २५ ॥ इति ।**

अतः गुरु की नित्य पूजा करे, जिससे माता त्रिपुरसुन्दरी प्रसन्न हों । इस प्रकार जो गुरु का अर्चन नहीं करता, वह ब्रह्मराक्षस होता है ॥ २५ ॥

**अन्यच्च यामले—**

**एकत्र गुरुणा सार्धं स्वपेदुपविशेत्तु यः ।**
**स याति नरकं घोरं यावदिन्द्राश्चतुर्दश ॥ २६ ॥**

यामलतन्त्र में भी ऐसा ही बतलाया गया है—जो गुरु के साथ-साथ स्वयं

सोता है और बैठता है, वह तब तक घोर नरक में निवास करता है । जब तक चौदह इन्द्र विद्यमान हैं ॥ २६ ॥

**गुरुणाऽऽलोकितः शिष्य उत्तिष्ठेदासनं त्यजेत्।**
**जातिविद्याधनाऽहन्तां दूरीकृत्य गुरुं मुदा ॥ २७ ॥**

गुरु के द्वारा देख लिये जाने पर शिष्य आसन त्याग देवे और खड़ा हो जावे। अपनी जाति, विद्या तथा धन की अहन्ता त्याग कर प्रसन्नता से गुरु को प्रणाम करे ॥ २७ ॥

**प्रणमेद् दण्डवद् भूमौ प्रदक्षिणमथाचरेत्।**
**आयान्तमग्रतो गच्छेद् गच्छन्तं तमनुव्रजेत् ॥ २८ ॥**

भूमि पर गिरकर दण्डवत् प्रणाम करके उनकी प्रदक्षिणा करे। आने के समय आगे जाकर उनका स्वागत करे और जाते समय उनका अनुव्रजन करे ॥ २८ ॥

**प्रणम्य प्रवसेत् पार्श्वे तदा गच्छेत् तदाज्ञया ।**
**मुखावलोकं सेवेत कुर्यादाज्ञां तदादृतः ॥ २९ ॥**

प्रणाम कर पार्श्व में खड़ा रहे। जब जाना हो तो उनकी आज्ञा लेकर ही जावे। मुख की ओर देखते हुये उनकी सेवा करे। आदरपूर्वक उनकी आज्ञा का पालन करे ॥ २९ ॥

**असत्यं न वदेदग्रे न बहु प्रलपेदपि ।**
**ऋणदानं तथाऽऽदानं वस्तूनां क्रयविक्रयौ ॥ ३० ॥**

उनके आगे झूठ न बोले, बहुत प्रलाप (बकवाद) न करे, उनसे ऋण का लेन-देन न करे और न ही वस्तुओं का क्रय-विक्रय करे ॥ ३० ॥

**न कुर्याद् गुरुणा सार्धं शिष्यो देवि! कथञ्चन ।**
**गुरुर्माता पिता स्वामी बान्धवश्च सुहृद् गुरुः ॥ ३१ ॥**

हे देवि! किसी भी अवस्था में शिष्य गुरु के साथ यह सेवन करे। गुरु को माता-पिता, स्वामी, बान्धव, सुहृद् तथा गुरु समझे ॥ ३१ ॥

**इत्याधाय मनो नित्यं यजेत् सर्वात्मना गुरुम् ।**
**गुरोरग्रे पृथक् पूजामौद्धत्यं परिवर्जयेत् ॥ ३२ ॥**

अपने मन में ऐसा विचार करते हुये, सब प्रकार से गुरु की पूजा करे। गुरु के आगे अपनी पृथक् पूजा तथा उच्छृङ्खलता वर्जित करे ॥ ३२ ॥

**दीक्षां व्याख्यां विभुत्वं च गुरोरग्रे परित्यजेत् ।**

**आसनं शयनं वस्त्रं भूषणं पादुकां तथा ॥ ३३ ॥**
**छत्रं चामरमन्यच्च यद् यदिष्टं सुपूरयेत् ।**
**यथा देवे तथा मन्त्रे यथा मन्त्रे तथा गुरौ ॥ ३४ ॥**
**ऐक्यं विभाव्य देवेशि! एवं भक्तिक्रमे स्थितः ।**
**गुरुशय्याऽऽसनं यानं पादुकोपानहौ तथा ।**
**स्नानोदकं तथा छायां लङ्घयेन्न कदाचन ॥ ३५ ॥**

गुरु के आगे दीक्षा का बखान, व्याख्या तथा अपनी सर्वज्ञता वर्जित करे। आसन, शयन, वस्त्र, भूषण, खड़ाऊँ, छत्र, चामर तथा उनकी अभीष्ट वस्तुओं की पूर्ति करता रहे। जैसे देवता में, वैसे ही मन्त्र में और जैसे मन्त्र में, वैसे ही गुरु में एकता की भावना करे। सदा उनकी भक्तिक्रम में स्थित रहे। गुरु की शय्या, आसन-वाहन, पादुका, उपानह, स्नानोदक तथा छाया का उल्लङ्घन शिष्य कदापि न करे ॥ ३३-३५ ॥

**अन्यत्रापि—**

**देवच्छायां गुरुच्छायां शक्तिच्छायां न लङ्घयेत्।**
**यदि प्रमादतो देवि गुरोरग्रे प्रपूजयेत् ॥ ३६ ॥**
**स याति नरकं घोरं सा पूजा विफला भवेत् ।**
**रिक्तहस्तेन नो पश्येद् राजानं देवतां गुरुम् ॥ ३७ ॥**

अन्यत्र भी बतलाया गया है—देवच्छाया, गुरुच्छाया तथा शक्तिच्छाया का उल्लङ्घन कदापि न करे। यदि प्रमादवश गुरु के आगे पूजा करे, तो वह घोर नरक में जाता है और उसकी सारी पूजा विफल हो जाती है। रिक्त हाथ से राजा, देवता तथा गुरु का दर्शन कदापि न करे ॥ ३६-३७ ॥

**फलपुष्पादि चादाय यथाशक्त्या समर्पयेत् ।**
**भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत् कृतम् ॥ ३८ ॥**
**स्वल्पमेव महत्तुल्यं न च शाठ्यकृतं यदि ।**
**गुर्वर्थे कृपणो देवि! रौरवं नरकं व्रजेत् ॥ ३९ ॥**

जहाँ तक अपनी शक्ति चले, उसके अनुसार फल-पुष्पादि लेकर उन्हें समर्पण करे। अपनी भक्ति के अनुसार और अपने वित्त के अनुसार गुरु के उद्देश्य से जो कुछ भी किया जाता है, वह भले ही थोड़ा हो; वह बहुत हो जाता है। यदि वित्त शाठ्य न हो तब वह बहुत हो जाता है। हे देवि! जो गुरु के कार्य में कृपणता करता है, वह रौरव नरक में गिरता है ॥ ३८-३९ ॥

**गुरुवाक्यानृतं कृत्य आत्मवाक्यं तु रोपयेत् ।**

**गुरुं जेतुं मनो यस्य पच्यते नरकार्णवे ॥ ४० ॥**

जो गुरु के वाक्य को झूठा बनाकर अपनी बात को ऊपर करता है । इस प्रकार जिस शिष्य का मन गुरु को जीत लेने में संसक्त हो, वह नरक समुद्र में पकाया जाता है ॥ ४० ॥

**गुरोर्नाम न भाषेत जपकालादृते क्वचित् ।**
**देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् ।**
**सिद्धं सिद्धादिवासांश्च श्रीपूर्वं समुदीरयेत् ॥ ४१ ॥**

जप-काल के अतिरिक्त गुरु का नाम न लेवे । देवता, गुरु, गुरु का स्थान, क्षेत्र, क्षेत्राधि देवता, सिद्ध तथा सिद्धाधिवास का नाम श्रीपूर्वक ग्रहण करे ॥ ४१॥

**ब्राह्मणक्षत्रियविशः शूद्राश्च नगनन्दिनि ।**
**भुञ्जते परया भक्त्या गुरोरुच्छिष्टभोजनम् ॥ ४२ ॥**

हे पर्वतात्मजे! ब्राह्मण, क्षत्रिय एवं वैश्य अत्यन्त भक्ति के साथ श्रीगुरु के उच्छिष्ट का भोजन करते हैं ॥ ४२ ॥

**आगच्छेद् यदि चार्वङ्गि! गुरुः शिष्यस्य मन्दिरे।**
**शिष्यस्य तद्दिनं देवि! कोटिसूर्यग्रहैः समम् ॥ ४३ ॥**

हे चार्वङ्गि! यदि गुरु शिष्य के घर पधारें तो वह दिन शिष्य के लिये करोड़ों सूर्यग्रहण के समान पुण्यावह होता है ॥ ४३ ॥

**चन्द्रग्रहणकालं हि तद्दिनं वरवर्णिनि ।**
**गुरोर्दर्शनमात्रेण सर्वपापैः प्रमुच्यते ॥ ४४ ॥**

हे वरवर्णिनि! शिष्य के लिये वह दिन चन्द्रग्रहण काल के समान होता है । शिष्य गुरु के दर्शन मात्र से ही सारे पापों से मुक्त हो जाता है ॥ ४४ ॥

**गुरुं वा गुरुपुत्रं वा पत्नीं वा वरवर्णिनि ।**
**विलंघ्य यदि चार्वङ्गि! गच्छेत् साधकसत्तमः ।**
**तत्क्षणात् चञ्चलापाङ्गि! नरकं चोत्तरोत्तरम् ॥ ४५ ॥**

हे वरवर्णिनि! यदि शिष्य गुरु, गुरुपुत्र अथवा गुरुपत्नी को लाँघ कर जावे तो हे चञ्चलापाङ्गि! उसे तत्क्षण उत्तरोत्तर नरक की प्राप्ति होती है ॥ ४५ ॥

**साक्षाद् वापि परोक्षे वा गुरोराज्ञां समाचरेत् ।**
**परोक्षे तदनुज्ञाया विधानं शृणु पार्वति ॥ ४६ ॥**

गुरु की आज्ञा साक्षात् हो या परोक्ष हो, शिष्य उस आज्ञा का पालन अवश्य

करे । हे पार्वति! अब गुरु की परोक्ष आज्ञा के विषय में विधान सुनिए ॥ ४६ ॥

**पूजाकाले तु चार्वङ्गि! आगच्छेत् शिष्यमन्दिरे ।**
**गुरुर्वा गुरुपुत्रो वा तत्पत्नी वा महेश्वरि ॥ ४७ ॥**
**तदा पूजां परित्यज्य पूजयेत् स्वगुरुं प्रिये ।**
**यद्यप्यल्पं गुरुद्रव्यमदत्तं स्वीकरोति यः ।**
**तिरश्चां योनिमाप्नोति क्रव्यादैर्भक्ष्यते सदा ॥ ४८ ॥**

हे महेश्वरि! यदि गुरु, गुरुपुत्र अथवा गुरुपत्नी पूजाकाल में शिष्य के घर पर पधारें, तो उस समय, हे प्रिये! शिष्य को अपनी पूजा छोड़कर सर्वप्रथम अपने गुरु की पूजा करनी चाहिए । जो अपने स्वल्प द्रव्य को गुरु को बिना दिये हुए ही स्वीकार करता है (अर्थात् चोरी से उपभोग करता है) तो वह तिर्यग्योनि तथा मांसभक्षी पक्षियों द्वारा भक्षण किया जाता है ॥ ४७-४८ ॥

**सहस्रारे गुरोः पादपद्मं ध्यात्वा प्रपूज्य च ।**
**स्तुत्वा च प्रीणयेदेवं मनसा ध्यानतत्परः ॥ ४९ ॥**

सहस्रार में गुरु के पादपद्मों का ध्यान कर, पूजा कर एवं स्तुति कर उन्हें प्रसन्न करे । इस प्रकार शिष्य उनके ध्यान में तत्पर रहे ॥ ४९ ॥

**अथ प्रार्थनामन्त्रः—**

**ॐविहितं विदधे नाथ! विधेयं यत् कृपाकर ।**
**अविरुद्धं भवत्वत्र तत् त्वदीयप्रसादतः ।**
**इति मन्त्रेण सम्प्रार्थ्य ततः कर्म समाचरेत् ॥ ५० ॥**

अब प्रार्थना मन्त्र कहते हैं—हे नाथ! हे कृपा करने वाले! आपकी जो भी आज्ञा हो, मैं उसका पालन करूँ । हे नाथ! वह मेरा आज्ञापालन आपके अनुकूल हो । इस मन्त्र से प्रार्थना करे । फिर कर्म (आज्ञा) पालन करे ॥ ५० ॥

**महिषमर्दिनीतन्त्रे देवीं प्रति शिववाक्यम्—**

**दिव्यं वीरं च चार्वङ्गि! पूर्वोक्तं बहुशः प्रिये ।**
**मानवस्य क्रमं देवि! सङ्क्षेपात् कथयामि ते ॥ ५१ ॥**

महिषमर्दिनीतन्त्र में देवी के प्रति शिव का वाक्य—हे प्रिये! मैंने दिव्य और वीर सम्प्रदाय के विषय में अब बहुत कुछ कहा । अब हे देवि! मानवता का क्रम सङ्क्षेप में बतलाता हूँ ॥ ५१ ॥

**गुरुश्च परमश्चैव परमेष्ठी परात्परः ।**
**स्वगुरुः परमेशानि साक्षाद् ब्रह्म न संशयः ॥ ५२ ॥**

परमगुरु, परमेष्ठीगुरु, परात्परगुरु तथा अपने गुरु; हे परमेशानि! ये साक्षात् ब्रह्म हैं, इसमें शिष्य कदापि सन्देह न करे ॥ ५२ ॥

**तत्पिता परमगुरुः स्वयं विष्णुः क्षितौ सदा ।**
**तत्पिता परमेष्ठिस्तु स महेश्वर ईरितः ।**
**परब्रह्म महेशानि! तत्पिता तु परात्परः ॥ ५३ ॥**

**तत्पितेत्यनेन तद्गुरुर्बोध्यः ।**

गुरु के पिता परमगुरु कहे जाते हैं, जो इस पृथ्वी पर साक्षात् विष्णु के समान ही हैं । परमगुरु के पिता परमेष्ठीगुरु है, जो स्वयं साक्षात् महेश्वर हैं । उनके पिता परात्परगुरु हैं, हे महेशानि! जो साक्षात् परब्रह्म है ॥ ५३ ॥

यहाँ तत्पिता का अर्थ तद्गुरु है ऐसा समझना चाहिये ।

**अत एव श्रीगुरुनमस्कारमन्त्रे—**

**गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।**
**गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः ॥ ५४ ॥**

इसलिये श्रीगुरु के नमस्कार मन्त्र में—गुरु ही ब्रह्मा है, गुरु के पिता विष्णु हैं, उनके भी पिता साक्षात् परब्रह्म हैं; उन श्रीगुरु को नमस्कार है ॥ ५४ ॥

**अखण्डमण्डलाकारं सर्वव्यापि सदाशिवम् ।**
**सर्वेषां सर्वदं देवं प्रणमामि पुनः पुनः ॥ ५५ ॥**

जो सदाशिव स्वरूप हैं, अखण्ड मण्डलाकार हैं और सर्वव्यापी हैं । सबको सर्वदा कुछ देने वाले हैं । ऐसे उन गुरु को मैं पुनः-पुनः प्रणाम करता हूँ ॥ ५५॥

**त्रिसन्ध्यं श्रीगुरोर्ध्यानं त्रिसन्ध्यं पूजनं गुरोः ।**
**त्रिसन्ध्यं भावयेन् नित्यं गुरुं परमकारणम् ॥ ५६ ॥**

शिष्य को तीनों सन्ध्याओं में श्रीगुरु का ध्यान करना चाहिए । तीनों सन्ध्याओं में पूजन करे और तीनों सन्ध्याओं में उनकी भावना करे । क्योंकि वही मुक्ति में कारण हैं ॥ ५६ ॥

**गुरुं विना वरारोहे! न हि सिद्धिः कदाचन ।**
**गुरुं स्मृत्वा महेशानि! दिवसे दिवसे नरः ॥ ५७ ॥**
**पूजयेन्मानसैर्गन्धैर्धूपैर्दीपैस्तथोत्तमैः ।**
**भक्ष्यैर्भोज्यैस्तथा पेयैर्दधिदुग्धैरनेकधा ॥ ५८ ॥**

हे वरारोहे! गुरु के बिना कभी सिद्धि नहीं होती है । मनुष्य को चाहिये कि प्रतिदिन उनका स्मरण कर गन्ध, धूप, दीप तथा उत्तमोत्तम भक्ष्य, भोज्य, पेय,

दधि एवं दुग्धादि अनेक पदार्थों से उनकी मानसिक पूजा करे ॥ ५७-५८ ॥

**पनसैर्नारिकेलैश्च तथा रम्भाफलैः प्रिये ।**
**अन्नैर्नानाविधैर्देवि! पूजयेत् स्वगुरुं प्रिये ॥ ५९ ॥**

हे प्रिये! पनस (कटहल), नारियल, कदलीफल तथा अनेक प्रकार के अन्नादि से उनकी पूजा करे ॥ ५९ ॥

**गन्धैर्माल्यैश्च गिरिजे पूजयेद् भक्तितः सदा ।**
**स्वर्णैश्च पट्टवस्त्रैश्च तथा कार्पाससम्भवैः ॥ ६० ॥**

हे गिरिजे! गन्ध-माल्यादि से, सुवर्ण से, क्षौम वस्त्र से, कार्पास वस्त्र से एवं भक्तिपूर्वक गुरु की पूजा करनी चाहिये ॥ ६० ॥

**अतिचित्रैर्विचित्रैश्च विविधैश्च मनोहरैः ।**
**आसनैर्विविधैर्देवि रक्तकम्बलकैस्तथा ॥ ६१ ॥**
**तथा नानाविधैर्द्रव्यैः पूजयेत् स्वगुरुं प्रिये ।**
**तथैव गुरुपत्नीं च पूजयेत् कुलनायिके ॥ ६२ ॥**

अत्यन्त चित्र-विचित्र विविध मनोहर आसनों से, विविध रक्त कम्बलों से, अनेक प्रकार के द्रव्यों से, हे प्रिये! अपने गुरु की पूजा करनी चाहिये । हे कुलनायिके! उसी प्रकार गुरुपत्नी की भी पूजा करे ॥ ६१-६२ ॥

**गुरुवद् गुरुपुत्रेषु गुरुवत् तत्सुतादिषु ।**
**तदभावे च तत्पत्नीं पुत्रं वा पौत्रमर्चयेत् ॥ ६३ ॥**

गुरुपुत्रों की गुरुवत् तथा उनकी कन्यादि की भी गुरुवद् पूजा करे । गुरु के अभाव में गुरुपत्नी की, अथवा उनके पुत्र की, अथवा उनके पौत्र की ही अर्चना करनी चाहिए ॥ ६३ ॥

**तदभावे गुरोः कन्यां स्नुषां चापि प्रपूजयेत् ।**
**एषामभावे देवेशि! गुरुगोत्रं प्रपूजयेत् ॥ ६४ ॥**

उनके अभाव में गुरु की कन्या की, अथवा उनके पतोहू की अर्चना करे । यदि ये लोग न हों तो, हे देवेशि! गुरु के गोत्र की ही पूजा करे ॥ ६४ ॥

**गोत्राभावे वरारोहे तथा मातामहस्य च ।**
**मातुलं मातुलानीं वा पूजयेद् विधिपूर्वकम् ॥ ६५ ॥**

यदि गोत्र में कोई न हो तो, हे वरारोहे! गुरु के मातामह की, अथवा मामा की अथवा मामी की विधिपूर्वक पूजा करे ॥ ६५ ॥

**यदि नो पूजयेद् देवि! अनेन विधिना गुरुम् ।**
**प्रायश्चित्तीभवेद् देवि! तत्क्षणादेव साधकः ॥ ६६ ॥**

हे देवि! इस प्रकार विधि से पूजा न करने पर साधक तत्क्षण प्रायश्चित्ती हो जाता है ॥ ६६ ॥

**काशीसमं महेशानि! यः पश्येद् गुरुमन्दिरम् ।**
**शिवतुल्यो भवेदेव तत्क्षणात् साधकाग्रणीः ॥ ६७ ॥**

हे महेशानि! जो श्रीगुरु के घर को काशी के समान तीर्थ और गुरुमन्दिर समझता है । वह साधकाग्रणी तत्क्षण शिव के समान हो जाता है ॥ ६७ ॥

**यद् यदिष्टतमं लोके साधकस्य शुचिस्मिते ।**
**तत्सर्वं गुरवे दद्यात् भक्त्या परमया युतः ॥ ६८ ॥**

हे शुचिस्मिते! साधक को अपने लिये जो-जो अत्यन्त अभीष्ट वस्तु है । वह कई वस्तु जो भक्ति से युक्त हो, अपने गुरु को प्रदान करना चाहिये ॥ ६८ ॥

**तदेव सहसा सिद्धिः साधकस्य भवेद् ध्रुवम् ।**
**पूजाकाले यदा गच्छेद् गुरुः शिष्यस्य मन्दिरम् ॥ ६९ ॥**
**तदा पूजां परित्यज्य पूजयेत् स्वगुरुं शिवे ।**
**देवतापूजनार्थं च यद्यत् पुष्पादिकं भवेत् ॥ ७० ॥**
**तेन सम्पूज्य श्रीनाथं सिद्धो देवत्वमाप्नुयात् ।**
**गुरोरभावे तत्पूजामाज्ञायां सर्वथा चरेत् ॥ ७१ ॥**
**मानसैरुपचारैश्च इति शास्त्रस्य निर्णयः ।**
**गुरुपत्नीं महेशानि! साक्षाद् देवीं विभावयेत् ॥ ७२ ॥**

साधक को उसी समय निश्चित रूप से सिद्धि प्राप्त हो जाती है । पूजा के समय यदि गुरु शिष्य के घर पर जावे । तब हे शिवे! शिष्य को चाहिये कि वह पूजा का त्याग कर प्रथम अपने गुरु की पूजा करे। देवता पूजन के लिये एकत्र किये गये जो-जो पुष्पादि द्रव्य हों, उन सभी द्रव्यों से श्रीनाथ गुरु की पूजा करने से साधक सिद्ध होकर देवत्व प्राप्त कर लेता है । यदि गुरु न हों तो उनकी पूजा मानसिक उपचारों से करे । ऐसा शास्त्र का निर्णय है तथा उनकी आज्ञा का सर्वथा पालन करे । हे महेशानि! यदि गुरु न हों तो उनकी पत्नी को साक्षात् देवी समझना चाहिए ॥ ६९-७२ ॥

**गणेशसदृशं देवि! गुरुपुत्रं विभावयेत् ।**
**गुरुमुद्दिश्य यद् दानमक्षयं तद् भवेत् शिवे ॥ ७३ ॥**

गुरुपुत्र में गणेश सादृश्य की भावना करे । हे शिवे! गुरु को उद्देश्य कर जो

दान दिया जाता है वह दान अक्षय होता है ॥ ७३ ॥

**गुरौ प्रीतिं समुद्दिश्य दानं कुर्यात् स्वशक्तितः ।**
**गुरोः प्रीतिसमुत्पत्तौ देवता प्रीतिमाप्नुयात् ॥ ७४ ॥**

गुरु की प्रसन्नता के उद्देश्य से अपनी शक्ति के अनुसार दान देवे । गुरु के प्रसन्न हो जाने पर देवता स्वयं ही प्रसन्न हो जाते हैं ॥ ७४ ॥

**देवे तु प्रीतिमापन्ने मन्त्रसिद्धिर्भवेद् ध्रुवम् ।**
**गुरोः समीपे नो ब्रूयान् मिथ्यां साधकसत्तमः ।**
**गुरोर्देवमयी मूर्तिर्वर्तते भुवि स्वेच्छया ॥ ७५ ॥ इति ।**

उत्तम साधक गुरु के सन्निधान में मिथ्या वचन न बोले । इस पृथ्वी पर अपनी इच्छा से गुरु साक्षात् देवमयी मूर्त्ति के रूप में प्रगट हैं ॥ ७५ ॥

**श्रीक्रमेऽपि—**

**उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ।**
**तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् ॥ ७६ ॥**

श्रीक्रमसंहिता में भी बतलाया गया है—उत्पन्न करने वाले पिता तथा ब्रह्म (ज्ञान) प्रदान करने वाले गुरु, इन दोनों में ब्रह्म प्रदान करने वाले गुरु पिता की अपेक्षा अत्यन्त श्रेष्ठ है; इसलिये उनका अधिकाधिक सम्मान करे ॥ ७६ ॥

**ज्ञानार्णवे—**

**गुरौ मनुष्यबुद्धिं च मन्त्रे चाक्षरभावनाम् ।**
**प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजेत् ॥ ७७ ॥**

ज्ञानार्णवतन्त्र में भी बतलाया गया है—जो गुरु में मनुष्य बुद्धि, मन्त्र में अक्षर भावना और प्रतिमा में शिलाबुद्धि करता है वह नरकगामी होता है ॥ ७७ ॥

**जन्महेतू हि पितरौ पूजनीयौ प्रयत्नतः ।**
**गुरुर्विशेषतः पूज्यो धर्माधर्मप्रदर्शकः ॥ ७८ ॥**

ऐसे तो माता-पिता जन्म के कारण है । अतः प्रयत्नपूर्वक उनकी पूजा तो करे ही । किन्तु धर्माधर्म का उपदेश करने वाले गुरु विशेष रूप से पूजनीय बतलाये गये हैं ॥ ७८ ॥

**गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्मनुः ।**
**शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ७९ ॥**
**गुरोर्हितं हि कर्त्तव्यं वाङ्मनःकायकर्मभिः ।**
**अहिताचरणाद् देवि! विष्ठायां जायते कृमिः ॥ ८० ॥**

गुरु पिता, गुरु माता, गुरु देवता, गुरु मन्त्रस्वरूप हैं। शिव के रुष्ट होने पर गुरु ही रक्षा कर सकते हैं। किन्तु गुरु के रुष्ट होने पर कोई रक्षा नहीं कर सकता। शिष्य सदैव वाणी, मन, काम और कर्म से गुरु का हित करे। हे देवि! गुरु का अहित करने से वह विष्ठा का कृमि होता है ॥ ७९-८० ॥

**मन्त्रत्यागाद् भवेन्मृत्युर्गुरुत्यागाद् दरिद्रता।**
**गुरुमन्त्रपरित्यागाद् रौरवं नरकं व्रजेत्।**
**गुरुसेवापरो मन्त्री देवोपासनमाचरेत् ॥ ८१ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे गुर्वाचारो नाम पञ्चमः पटलः ॥ ५ ॥**



मन्त्र त्याग से मृत्यु होती है और गुरु त्याग से दरिद्रता होती है। गुरु और मन्त्र दोनों के त्याग से रौरव नरक प्राप्त होता है। अतः गुरु की सेवा करने वाला साधक देवता की उपासना करे ॥ ८१ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में गुर्वाचारो नामक पञ्चम पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ ५ ॥**

# षष्ठः पटलः

## गुर्वाचारादि पुम्प्रकृत्योरभेदभावनान्तकथनम्

**अथ क्रमप्राप्तोपास्तिर्लिख्यते । यच्च यामले कुलार्णवे च—**

**आभिरूप्याच्च बिम्बस्य पूजायाश्च विशेषतः ।**
**साधकस्य च विश्वासात् सान्निध्यं देवता भजेत् ॥ १ ॥**

अब क्रम प्राप्त होने से 'उपासना' के विषय में लिखते हैं । जैसा कि यामल में और कुलार्णवतन्त्र में कहा गया है—बिम्ब के अभिरूप्य से, पूजा की विशेषता से और साधक के विश्वास से देवता सन्निहित हो जाते हैं ॥ १ ॥

**गवां सर्पिः शरीरस्थं न करोत्यात्मपोषणम् ।**
**सुकर्मरचितं दत्तं पुनस्ता एव पोषयेत् ॥ २ ॥**

गाय के शरीर में रहने वाला घृत गाय को अपना पोषण नहीं करता । किन्तु वही सुकर्म से रचित कर यदि दिया जाय तो वह गाय को पोषित करता है ॥ २॥

**एवं सर्वशरीरस्थो घृतवत् परमेश्वरः ।**
**विना चोपासनाद् देवि! न ददाति फलं नृणाम् ॥ ३ ॥**

इसी प्रकार परमेश्वर घृत के समान सबके शरीर में विद्यमान हैं । किन्तु बिना उपासना किये, हे देवि! वह मनुष्यों को फल प्रदान नहीं करते ॥ ३ ॥

**ध्यातः स्मृतः पूजितो वा नमितो वापि यत्नतः ।**
**ज्ञानतोऽज्ञानतो वापि पूजितो यो विमुक्तिदः ॥ ४ ॥ इति ।**

यह यत्नपूर्वक ध्यान करने से, स्मरण करने से, पूजा करने से, नमस्कार करने से अथवा ज्ञान-अज्ञानपूर्वक पूजा करने से मुक्ति प्रदान करते हैं ॥ ४ ॥

**नन्वित्यादिवाक्यैः पूजादिकस्य चतुर्वर्गप्रदत्वं सम्भवति । पुनश्च ब्रह्मणो निर्गुणस्य केन कथं पूजादिकं कार्यं शरीररहितत्त्वात् । तदेवं केन प्रकारेण चतुर्वर्गफलं दातुं शक्यते इत्याशंक्याह । सगुणनिर्गुणभेदेन ब्रह्मणो द्वैविध्यम् ।**

यहाँ यह सन्देह करते हैं कि उपर्युक्त वाक्य में पूजादि कार्य चतुर्वर्ग फल (धर्म, अर्थ, काम और मोक्ष) प्रदान कर सकते हैं । यह तो ठीक है किन्तु ब्रह्म

तो निर्गुण है । उनका पूजादि कार्य सम्भव नहीं है क्योंकि वह शरीर से रहित है । फिर वह किस प्रकार चतुर्वर्ग फल प्रदान करने में समर्थ हो सकता है । इस पर कहते हैं—ब्रह्म केवल निर्गुण ही नहीं है उसके सगुण और निर्गुण दो रूप हैं—

**तदाह श्रीरामतापनीये कुलार्णवे च—**

**चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।**
**उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥ ५ ॥**

**चिन्मयस्य = ज्ञानमयस्य । अद्वितीयस्यैकस्य । यदाह मार्कण्डेये**

**चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत्—**

यही बात श्रीरामतापनीय उपनिषद् और कुलार्णवतन्त्र में कही गई है—चिन्मय, अद्वितीय, निष्कल तथा शरीररहित ब्रह्म की शरीर-कल्पना उपासकों के कार्य के लिये की गई है ॥ ५ ॥

चिन्मय = ज्ञानमय । अद्वितीय = एक । जैसा कि मार्कण्डेयपुराण में भी कहा गया है—'चितिरूपेण या कृत्स्नमेतद् व्याप्य स्थिता जगत्' अर्थात् 'चिति रूप से देवी इस समस्त विश्व को व्याप्त कर स्थित हैं ।'

**तच्च योगिनीहृदये स्वच्छन्दसंग्रहे च—**

**तत्त्वातीतं वरारोहे! वाङ्मनोऽतीतगोचरम् ।**
**निर्द्वन्द्वं परमं तत्त्वं शिवाख्यं परमं पदम् ॥ ६ ॥ इति ।**

यही बात योगिनीहृदय तथा स्वच्छन्दसंग्रह में भी कही गई है—हे वरारोहे! यह शिव नाम वाला परम पद तत्त्वों से परे है । वाणी मन से अतीत अगोचर है; द्वन्द्वरहित तथा परम तत्त्व है ॥ ६ ॥

**गोपालतापनीये श्रुतिरपि—'एकमेव परं ब्रह्म माययाभूच्चतुष्टयम्' इति । तथा च श्रुतिः—बहुरूप इवाभाति मायया बहुरूपया । तथा च अग्निपुराणे—सकलो निष्कलो ज्ञेयः सर्वज्ञः परमो हरिः । इति । स्वच्छन्दसंग्रहेऽपि—सकलं निष्कलं चापि नीरूपं निर्विकल्पकम् । इति ।**

गोपालतापनीय श्रुति में भी बतलाया गया है—'वह परमब्रह्म एक ही है । माया के कारण उसके चार भेद हो गये हैं । ऐसी श्रुति भी है—वह परमेश्वर बहुत रूप वाली माया के कारण बहुत रूपों में दिखाई पड़ता है । ऐसा ही अग्निपुराण में भी कहा गया है—वह सर्वज्ञ, परम हरि सकल और निष्कल (मायारहित) दोनों है । स्वच्छन्द संग्रह में भी ऐसा ही कहा है—'वह ब्रह्म सकल है, निष्कल भी है, नीरूप है और निर्विकल्पक है ।'

**एतदेव यामलेऽप्युक्तम्—**

**सगुणा निर्गुणा चेति महामाया द्विधा मता ।**

**सगुणा मायया युक्ता तया हीना तु निर्गुणा ॥ ७ ॥**

**निष्कलस्य कलया मायया रहितस्य । उपासकानां ज्ञानयोगरहितभक्तानाम् ।**

यही बात यामल में भी कही गई है—सगुणा निर्गुणा भेद से महामाया के दो भेद कहे गये हैं । वह माया से युक्त होने पर सगुणा तथा उससे हीन होने पर निर्गुणा होती है ॥ ७ ॥

निष्कलस्य = माया से रहित का । उपासकानाम् = ज्ञान और योग से रहित भक्तों का—यह अर्थ है ।

**भूतशुद्धौ—**

**निश्चलं परमं ब्रह्म कुतः प्रकृतितः सुखम् ।**
**निराकारं निरीहं च रहितमिन्द्रियेण च ॥ ८ ॥**
**जन्मकर्मादिकं तस्य ब्रह्मणो नास्ति भामिनि ।**
**जन्मकर्माणि सर्वाणि प्रकृतेः सन्ति भामिनि! ॥ ९ ॥**

भूतशुद्धि में भी बतलाया गया है—प्रकृति से सुख की सम्भावना न करे । निश्चल परम ब्रह्म निराकार है, निरीह है और इन्द्रियरहित है । हे भामिनि! उनका जन्म कर्म नहीं है । हे भामिनि! जन्म कर्म तो प्रकृति का होता है ॥ ८-९ ॥

**तथा च लैङ्गे—**

**सर्वेषामेव मर्त्यानां विभोर्दिव्यं वपुः शुभम् ।**
**सकलं भावनायोग्यं योगिनामेव निष्कलम् ॥ १० ॥**

**योगिनां कर्मयोग-ज्ञानयोग-भक्तियोगयुक्तानामित्यर्थः, कायार्थमुपकारार्थम् ।**

लिङ्गपुराण में भी ऐसा ही बतलाया गया है—सर्वव्यापक भगवान् का कल्याणकारी दिव्य शरीर सभी मनुष्यों के लिये ध्यान के योग्य है और योगियों के लिये उनका निष्कल शरीर ध्यान के योग्य होता है ॥ १० ॥

योगिनाम्—कर्म योग, ज्ञान योग एवं भक्ति योग से युक्त लोगों के लिये ।

**तथा च आग्नेये—**

**साधूनामाश्रमस्थानां भक्तानां भक्तवत्सलः ।**
**उपकर्ता निराकारस्तदाकारेण जायते ॥ ११ ॥**

**एतादृशो ब्रह्मणः रूपकल्पनावतारधारणेति ।**

अग्निपुराण में भी बतलाया गया है—आश्रमों में रहने वाले अपने भक्त साधुओं के उपकार के लिये भक्तवत्सल, निराकार भगवान् साकार रूप में प्रगट होते हैं ॥ ११ ॥

इस प्रकार के परब्रह्म की रूपकल्पना (= अवतार धारण) की गई है ।

**तच्च बृहन्नारदीये—**

**भक्तानां मोक्षदानाय भवतो रूपकल्पना ॥ १२ ॥**

बृहन्नारदीय पुराण में भी बतलाया गया है—भक्तों को मोक्ष देने के लिये; हे नाथ! आपकी रूप-कल्पना (अवतार-धारण) की आवश्यकता होती है ॥ १२ ॥

**अन्यदपि मार्कण्डेये श्रीसुमेधसो वाक्यम्—**

**नित्यैव सा जगन्मूर्तिस्तया सर्वमिदं ततम् ।**
**तथापि तत्समुत्पत्तिर्बहुधा श्रूयतां मम ॥ १३ ॥**

अन्यत्र मार्कण्डेयपुराण में सुमेधा ऋषि के वचन इस प्रकार हैं—हे राजन्! यद्यपि वह भगवती नित्य है, उसी से सारी सृष्टि का विस्तार है । फिर भी उसकी उत्पत्ति की कथा आप मुझसे सुनिए ॥ १३ ॥

**देवानां कार्यसिद्ध्यर्थमाविर्भवति सा यदा ।**
**उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥ १४ ॥ इति ।**

**अत एव पुम्प्रकृत्योरभेदः ।**

जब वह देवताओं की कार्य-सिद्धि के लिये आविर्भूत होती हैं, तब उस नित्या को भी उत्पन्न हुआ कहा जाता है ॥ १४ ॥

इसलिये पुरुष और प्रकृति का अभेद सम्बन्ध है—यह समझना चाहिए ।

**तच्चअद्भुतरामायणे—**

**शक्तिशक्तिमतोर्भेदं वदन्ति फलहेतवे ।**
**अभेदञ्चानुपश्यन्ति योगिनस्तत्त्वदर्शिनः ॥ १५ ॥ इति ।**

अद्भुतपुराण में भी यही बात कही गई है—शक्ति और शक्तिमान् में भेद की कल्पना फल की दृष्टि से की जाती है । किन्तु तत्त्वदर्शी योगीजन उनमें अभेद का ही दर्शन करते हैं ॥ १५ ॥

**तथा च शक्तिसङ्गमे—**

**तेजःपुञ्जमयं देवि! ब्रह्मरूपं सनातनम् ।**
**तेजःपुञ्जादेव भूतं जगदेतच्चराचरम् ॥ १६ ॥**

शक्तिसङ्गमतन्त्र में भी बतलाया गया है—हे देवि! ब्रह्म का स्वरूप सनातन और तेजःपुञ्जमय है; उसी तेजपुञ्ज से यह चराचर जगत् उत्पन्न हुआ है ॥ १६ ॥

**रामो जातः शिवो देवि! राजराजेश्वरः शिवः ।**
**श्री सैव सुन्दरी जाता विष्णुर्जातो महेश्वरः ॥ १७ ॥**

**लक्ष्मीपतिर्यो देवेशि! स च वै पार्वतीपतिः ।**
**गौरीपतिर्यो देवेशि! स च लक्ष्मीपतिः प्रिये ॥ १८ ॥**

हे देवि! उसी से राम उत्पन्न हुये हैं । शिव उत्पन्न हुये हैं । राजराजेश्वर शिव उत्पन्न हुये हैं । उसी से श्रीसुन्दरी विष्णु एवं महेश्वर उत्पन्न हुये हैं । हे देवेशि! जो लक्ष्मीपति हैं, वही पार्वती पति हैं । हे देवेशि! जो गौरीपति हैं; हे प्रिये! वही लक्ष्मीपति हैं ॥ १७-१८ ॥

**उभयोर्व्यत्ययो देवि! जात एवं महेश्वरि ।**
**गौरीलक्ष्म्योर्व्यत्ययं हि एवमेव शृणु प्रिये ॥ १९ ॥**

हे महेश्वरि! उन दोनों में व्यत्यय भेद का कारण कहा गया है । इसी प्रकार गौरी और लक्ष्मी में भी व्यत्यय है; उसे जानो ॥ १९ ॥

**सीता चैव स्वयं गौरी लक्ष्मी श्रीकुलसुन्दरी ।**
**एवं जातं महेशानि शिवरामात्मकं जगत् ॥ २० ॥**

सीता स्वयं ही गौरी है, लक्ष्मी स्वयं श्रीकुलसुन्दरी हैं । हे महेशानि! इसी प्रकार शिवरामात्मक जगत् को समझो ॥ २० ॥

**क्वचिच्च विष्णुबुद्ध्येदं क्वचिच्छैवात्मकं प्रिये ।**
**अत्रार्थे प्रत्ययो देवि! शिवरामाद्वयं यतः ॥ २१ ॥**

कभी इस जगत् में कोई विष्णु बुद्धि रखता है । हे प्रिये! कभी कोई इस जगत् में शैवात्मक बुद्धि रखता है । इस विषय में कारण यही है कि शिव और राम दो नहीं है; उनमें अभेद है ॥ २१ ॥

**विष्णुध्यानं शिवध्यानं गौरीलक्ष्म्योर्महेश्वरि ।**
**शिवरामात्मकं ज्ञानं ब्रह्मरूपं सनातनम् ॥ २२ ॥**

विष्णु का ध्यान शिव का ध्यान है और गौरी का ध्यान लक्ष्मी का ध्यान है । इसी प्रकार शिवरामात्मक ज्ञान भी ब्रह्मरूप सनातन ज्ञान है ॥ २२ ॥

**उभयोरन्तरं देवि यः पश्यति स मूढधीः ।**
**तस्य नाशो भवत्येव नात्र कार्या विचारणा ॥ २३ ॥**

**तस्मात् साधकानां हितार्थाय ब्रह्मणः पुंस्त्रीरूपकल्पनेति ।**

हे देवि! जो साधक इन दोनों में अन्तर मानता है वह मूर्ख है । ऐसे भेद मानने वाले भक्त का नाश होता है । उसमें विचार की आवश्यकता नहीं है ॥२३॥

इस कारण साधकों के हित के लिये ही ब्रह्म में 'पुरुष और स्त्री' की कल्पना की गयी है ।

**विष्णुयामले विष्णुवाक्यं देवीं प्रति—**

**मातस्त्वत्परमं रूपं तन्न जानाति कश्चन ।**
**कालाद्याः स्थूलरूपं हि यदर्चन्ति दिवौकसः ॥ २४ ॥**
**स्त्रीरूपं वा स्मरेद् देवि पुंरूपं वा स्मरेच्छिवे ।**
**स्मरेद् वा निष्कलं ब्रह्म सच्चिदानन्दलक्षणम् ॥ २५ ॥ इति ।**

**स्तनयोन्याद्यवयवावच्छिन्नशरीरः स्त्रीरूपावतारः ।**

विष्णुयामल में विष्णु का वाक्य देवी के प्रति—हे माते! आपके उस परम रूप (ब्रह्मस्वरूप) को कोई नहीं जानता । देवता लोग उसके स्थूल कालादि रूपों की ही अर्चना करते हैं । इसलिये हे देवि! चाहे कोई उस ब्रह्म को स्त्री रूप में स्मरण करे, चाहे पुरुष रूप में स्मरण करे, अथवा सच्चिदानन्द लक्षण निष्कल ब्रह्म का स्मरण करे; कोई अन्तर नहीं ॥ २४-२५ ॥

'स्तनयोन्याद्यवयवावच्छिन्नशरीर स्त्रीरूपावतारः'—पुरुष में नौ छिद्र हैं किन्तु स्त्री में तेरह छिद्र हैं अर्थात् दो छिद्र स्तन में और दो योनि में हैं । अतः स्त्री स्तन एवं योनि रूप से स्त्री होती है ।

**यथा—**

**काली नीला महादुर्गा त्वरिता छिन्नमस्तका ।**
**वाग्वादिनी चान्नपूर्णा तथा प्रत्यङ्गिरा पुनः ॥ २६ ॥**
**कामाख्यावशिनी बाला मातङ्गी शैलवासिनी ।**
**इत्याद्याः सकला विद्याः सदा पूर्णफलप्रदाः ॥ २७ ॥**

जैसा कि—काली, नीला, महादुर्गा, त्वरिता, छिन्नमस्तका, सरस्वती, अन्नपूर्णा, प्रत्यङ्गिरा, कामाख्या, वशिनी, बाला, मातङ्गी एवं शैलवासिनी इत्यादि सभी विद्यायें कला युक्त (साकार) हैं और सर्वदा पूर्ण फल प्रदान करने वाली कही गयी हैं ॥ २६-२७ ॥

**अन्यत्रापि—**

**तामाद्यां केचिदाहुश्च लक्ष्मीं तामपरे जगुः ।**
**भवानीं चापरे तद्वद् गिरिजेत्यम्बिकेति च ॥ २८ ॥**
**दुर्गेति भद्रकालीति चण्डी माहेश्वरी तथा ।**
**कौमारी वैष्णवी चेति वाराह्यैन्द्रीति चाऽपरे ॥ २९ ॥**
**ब्राह्मीति विद्याऽविद्येति मायेति च तथा परे ।**
**प्रकृतिश्च परा चेति वदन्ति परमर्षयः ॥ ३० ॥ इति ।**

**'शिश्नाद्यवयवावच्छिन्नः पुंरूपावतारः । यथा ब्रह्मविष्णुशिवादयः ।**

अन्यत्र भी बतलाया गया है—कोई ब्रह्मर्षि उन्हें क्रमशः आद्या, लक्ष्मी, भवानी, गिरिजा, अम्बिका, दुर्गा, भद्रकाली, चण्डी, महेश्वरी, कौमारी, वैष्णवी, वाराही, ऐन्द्री, ब्राह्मी, विद्या, अविद्या, माया, प्रकृति और परा इत्यादि नामों से पुकारते हैं ॥ २८-३० ॥

'लिङ्गादि अवयवों से युक्त पुंरूपावतार है ।' जैसे—ब्रह्मा, विष्णु एवं शिवा ।

**एवम्—**

**मत्स्यः कूर्मो वराहश्च नृसिंहो वामनस्तथा ।**
**रामो रामश्च रामश्च बुद्धः कल्की च ते दश ॥ ३१ ॥**

**नपुंसकस्तु गृहस्थैरनुपास्यः फलाजनकत्वात् । यत्तु—'गृहस्थानां च सर्वेषां ब्रह्म वै ब्रह्मचारिणामिति । सर्वेषामित्युपादानात् शिवविष्णुदुर्गादीनामुपासना कार्या ।**

इस प्रकार—१. मत्स्य, २. कूर्म, ३. वराह, ४. नृसिंह, ५. वामन, ६. परशुराम, ७. धनुर्धर राम, ८. बलराम, ९. बुद्ध और १०. कल्की—ये दश शिश्नाद्यवेयवावच्छिन्न पुरुषावतार हैं ॥ ३१ ॥

नपुंसक अवतार (= ब्रह्म) की गृहस्थ लोग उपासना नहीं करते । क्योंकि वे कुछ फल देने वाले नहीं है । 'गृहस्थानां च सर्वेषां ब्रह्म वै ब्रह्मचारिणाम्'—यहाँ सर्वेषां इस पद का अर्थ शिव; विष्णु और दुर्गा है । उन्हीं की उपासना के लिये कहा गया है ।

**तथा च कौर्मे—**

**मानुषाणामुमादेवी तथा विष्णुस्तथा शिवः ।**
**यो यस्याभिमतः पुंसः सा हि तस्यैव देवता ।**
**किन्तु कार्या विशेषेण पूजिता स्वेष्टदा नृणाम् ॥ ३२ ॥**

कूर्मपुराण में भी बतलाया गया है—मनुष्यों के लिये उमा देवी, विष्णु और शिव देवता कहे गये हैं । इसमें जिस पुरुष के लिये जो अभिमत हो, वही उसके देवता हैं । इसलिये मनुष्य विशेष रूप से अपने अभिमत देवता की पूजा करे । ऐसा करने से वे शीघ्र अभीष्ट प्रदान करते हैं ॥ ३२ ॥

**यामले शिववाक्यम्—**

**एकं प्रशंसमानेन सर्वे देवाः प्रशंसिताः ।**
**एकं विनिन्दमानो यः सर्वानेव विनिन्दति ॥ ३३ ॥ इति ।**

**ईश्वरस्य प्रशंसायां न सुखं निन्दायां न दुःखम् । षडूर्मिरहितत्वात् । किन्तु निन्दकस्य नरकमेव ।**

यामल में शिवजी का वचन इस प्रकार है—इनमें एक की प्रशंसा करने से

सभी दोनों की प्रशंसा हो जाती है । किं बहुना; जो एक की निन्दा करता है, वह सबकी निन्दा करता है ॥ ३३ ॥

ईश्वर की प्रशंसा करने से उसे न सुख होता है, न निन्दा करने से दुःख होता है क्योंकि वह षडूर्मि से रहित है । किन्तु निन्दक को तो नरक होता है ।

**तथा चोक्तं यामले—**

**देवीविष्णुशिवादीनामेकत्वं परिचिन्तयेत् ।**
**भेदकृन्नरकं याति यावदाभूतसंप्लवम् ॥ ३४ ॥ इति ।**

जैसा कि यामल में भी कहा गया है—मनुष्य साधक देवी, विष्णु तथा शिव में सर्वदा एकत्व की भावना करे । भेद मानने वाला भक्त सृष्टि के संहार पर्यन्त नरक में निवास करता है ॥ ३४ ॥

**वाराहेऽपि—**

**यथा दुर्गा तथा विष्णुर्यथा विष्णुस्तथा शिवः ।**
**एतत् त्रयं त्वेकमेव न पृथग्भावयेत् सुधीः ॥ ३५ ॥**

वाराहपुराण में भी बतलाया गया है—जैसे दुर्गा वैसे विष्णु, जैसे विष्णु वैसे शिव हैं, सुधी साधक इन तीनों में एकत्व की भावना करे; अलगाव की भावना कदापि न करे ॥ ३५ ॥

**योऽन्यथा भावयेद् देवान् पक्षपातेन मूढधीः ।**
**स याति नरकं घोरं रौरवं पापपूरुषः ॥ ३६ ॥**

जो मूर्ख पक्षपात बुद्धि से इनमें भेद की भावना करता है, वह पापपुरुष है और घोर रौरव नरक में निवास करता है ॥ ३६ ॥

**यामले—**

**ध्यानगम्यं प्रपश्यन्ति रुचिभेदात् पृथग्धियः ।**

यामल में भी बतलाया गया है—पार्थक्य बुद्धि रखने वाले अपनी रुचि के अनुसार अपने अभीष्ट देवता को ध्यानगम्य देखते हैं ॥ ३७ ॥

**तन्त्रान्तरे—**

**एकैव हि महामाया नामभेदसमाश्रिता ।**
**विमोहनाय लोकानां तस्मात् सर्वमयो भवेत् ।**
**सदसद्व्यापिनी शक्तिः पराप्रकृतिरीश्वरी ॥ ३७ ॥ इति ।**

मात्र एक महामाया की ही सत्ता है । केवल नाम से ही उसमें भेद हैं । ऐसा लोक को विमोहित करने के लिये होता है । इसलिये मन्त्रज्ञ साधक इनमें भेद न

मानकर एक ही में सर्वबुद्धि रखे । वही सदसद्व्यापिनी शक्ति है, परा है, प्रकृति है तथा ईश्वरी है ॥ ३७ ॥

प्रकृतिशब्दार्थस्तु प्रकृतिखण्डे—

**प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।**
**सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता ॥ ३८ ॥**

प्रकृति शब्द का अर्थ प्रकृतिखण्ड में भी बतलाया गया है—प्रशब्द प्रकृष्ट वाचक है, कृति शब्द सृष्टिवाचक है । अतः इस सृष्टि में जो सर्वापेक्षया प्रकृष्ट है, वही प्रकृति कही जाती है ॥ ३८ ॥

**गुणे सत्त्वे प्रकृष्टे च प्रशब्दो वर्तते श्रुतौ ।**
**मध्यमः कृश्च रजसि तिश्चान्ते तमसि स्मृतः ॥ ३९ ॥**

श्रुति में प्रशब्द गुण, सत्त्व और प्रकृष्ट अर्थ में कहा गया है । मध्य में रहने वाला कृ शब्द रजोगुण वाचक है और तिशब्द तमोगुण वाचक है ॥ ३९ ॥

**त्रिगुणात्मस्वरूपत्वात् प्रकृतिः कथ्यते श्रुतौ ।**
**प्रधाना सृष्टिकरणे सर्वशक्तिसमन्विता ॥ ४० ॥**

इसलिये श्रुति में प्रकृति को त्रिगुणात्मिका कहा गया है । सृष्टिकर्म में सर्व शक्ति समन्वित होने से प्रकृति ही प्रधान है ॥ ४० ॥

**योगेनात्मा सृष्टिविधौ द्विधा रूपा बभूव सा ।**
**पुमांश्च दक्षिणार्धाङ्गो वामार्धा प्रकृतिः स्मृता ॥ ४१ ॥**

वह प्रकृति सृष्टि करते समय दो भागों में प्रविभक्त हो गई । जिसमें उसका दक्षिण का आधा अङ्ग पुरुष कहा गया और बाईं ओर का आधा अङ्ग प्रकृति कहा गया ॥ ४१ ॥

**सा च ब्रह्मस्वरूपा स्यान्नित्या सा च सनातनी ।**
**यथात्मा च तथा शक्तिर्यथाग्नौ दाहिका स्थिता ॥ ४२ ॥**

वही ब्रह्मस्वरूपा है, नित्या है, सनातनी है, जिस प्रकार अग्नि में दाहिका शक्ति अभिन्न रूप से स्थित है, उसी प्रकार आत्मा में शक्ति का निवास है ॥४२॥

**अत एव हि योगीन्द्रा स्त्रीपुम्भेदं न मन्वते ।**
**सर्वं ब्रह्ममयं विश्वं ब्रह्म सा तच्च नारद ॥ ४३ ॥**

इसलिये योगीश्वर लोग सृष्टि में स्त्री और पुरुष का विचार नहीं करते । हे नारद! सब कुछ ब्रह्ममय है और वही ब्रह्म है ॥ ४३ ॥

**स्वेच्छामयस्य देवस्य परमात्मसिसृक्षया ।**
**आविर्बभूव सहसा मूलप्रकृतिरीश्वरी ॥ ४४ ॥**

स्वेच्छामय देवाधिदेव की जब सृष्टि करने की इच्छा हुई तो वही मूल प्रकृति ईश्वरी सर्वप्रथम आविर्भूत हुई ॥ ४४ ॥

**साऽपि पञ्चविधा भूता सृष्टिकर्मविभेदिका ।**
**गणेशजननी दुर्गा शिवरूपा शिवप्रिया ॥ ४५ ॥**

वह जब पाँच प्रकार की हो गई तब सृष्टि कर्म में भेद उत्पन्न हुआ । प्रथम शिव रूपा शिव प्रिया गणेश जननी दुर्गा हैं ॥ ४५ ॥

**नारायणी विष्णुमाया पूर्णब्रह्मस्वरूपिणी ।**
**सुखमोक्षहर्षदात्री दुःखशोकार्त्तिनाशिनी ॥ ४६ ॥**

दूसरी प्रकृति सुखमोक्षदात्री, दुःखशोक आर्त्तिनाशिनी एवं पूर्ण ब्रह्मस्वरूपिणी विष्णु माया नारायणी हैं ॥ ४६ ॥

**वाग्बुद्धिविद्याज्ञानाधिदेवता परमात्मनः ।**
**सर्वविद्यास्वरूपा च तृतीया च सरस्वती ॥ ४७ ॥**

परमात्मा की वाग्, बुद्धि, विद्या एवं ज्ञान की अधिदेवता सर्वविद्या स्वरूपा सरस्वती तीसरी प्रकृति हैं ॥ ४७ ॥

**माता चतुर्णां वेदानां वेदाङ्गानां च छन्दसाम् ।**
**पवित्ररूपा गायत्री सावित्री ब्रह्मणः प्रिया ॥ ४८ ॥**

चारो वेदों की एवं वेदाङ्ग और छन्दों की माता पवित्र स्वरूपा गायत्री, जो ब्रह्मदेव की प्रिया हैं वे सावित्री चतुर्थी प्रकृति हैं ॥ ४८ ॥

**देवी चतुर्थी कथिता पञ्चमीं वर्णयामि ते ।**
**गोलोकवासिनी देवी गोपीवेषविधायिका ॥ ४९ ॥**

यहाँ तक चार प्रकृतियाँ कही गईं । अब पञ्चमी प्रकृति कहता हूँ । गोलोक-वासिनी गोपवेषधारिणी श्री राधा पञ्चमी प्रकृति हैं ॥ ४९ ॥

**अथ विद्याक्रमः शक्तिसङ्गमे—**

**काली तारा छिन्नमस्ता सुन्दरी वगला रमा ।**
**मातङ्गी भुवना सिद्धविद्या च भैरवी तथा ॥ ५० ॥**
**धूमावती च दशमी महाविद्या दश स्मृताः ।**
**चण्डेश्वरी लघुश्यामा तथा त्रिपुरनायिका ॥ ५१ ॥**

त्रयोदश महाविद्या शृणुष्व षोडशीं प्रिये ।
दशपूर्वाश्च संगृह्य जयदुर्गा च शूलिनी ॥ ५२ ॥
अश्वारूढा महाविद्या त्रैलोक्यविजयाभिधा ।
वाराही अन्नपूर्णा च कलासंख्या प्रकीर्तिता ॥ ५३ ॥

अब विद्या का क्रम शक्ति सङ्गम में भी बतलाया गया है—काली, तारा, छिन्नमस्ता, सुन्दरी, बगला, रमा, मातङ्गी, भुवनेश्वरी, भैरवी एवं धूमावती—ये दश महाविद्यायें हैं । इनके अतिरिक्त चण्डेश्वरी, लघुश्यामा एवं त्रिपुरा—इन तीन विद्याओं को लेकर तेरह महाविद्यायें हैं । अब हे प्रिये! आप षोडशी के विषय में सुनिए । जयदुर्गा, शूलिनी, अश्वारूढा, त्रैलोक्यविजया, वाराही और अन्नपूर्णा—इस प्रकार पूर्व की दश महाविद्यायें तथा छह ये महाविद्यायें कुल सोलह महाविद्यायें हो जाती हैं ॥ ५०-५३ ॥

**अथ विद्यानां भैरवाः—**

कालिकाया महाकालः सुन्दर्या ललितेश्वरः ।
तारायाश्च तथाऽक्षोभ्यः छिन्नायाः क्रोधभैरवः ॥ ५४ ॥
भुवनाया महादेवो धूमाया कालभैरवः ।
नारायणो महालक्ष्म्या भैरव्या वटुकः स्मृतः ॥ ५५ ॥

अब इन विद्याओं के भैरवों के विषय में बतलाते हैं—कालिका के भैरव महाकाल हैं, सुन्दरी के ललितेश्वर, तारा के अक्षोभ्य, छिन्नमस्ता के क्रोधभैरव, भुवनेश्वरी के महादेव, धूमावती के कालभैरव एवं नारायण की महालक्ष्मी के बटुक भैरव कहे गये हैं ॥ ५४-५५ ॥

मातंग्याश्च मतङ्गः स्यादथवा स्यात् सदाशिवः ।
मृत्युञ्जयस्तु वगलाविद्यायाः परिकीर्त्तितः ॥ ५६ ॥

मातङ्गी के मातङ्ग अथवा सदाशिव भैरव हैं । बगला महाविद्या के मृत्युञ्जय भैरव कहे गये हैं ॥ ५६ ॥

**अथ विद्यानां प्रादुर्भावः, तत्रादौ कालीप्रादुर्भावः शक्तिसङ्गमे—**

युगादिसमये देवि! यथायोगेन साम्प्रतम् ।
आदिनाथं गुणातीतं काल्या संयुतमीश्वरम् ॥ ५७ ॥
विपरीतरतं देवं सामरस्यपरायणम् ।
पूजार्थमागता देवा गन्धर्वाप्सरसां गणाः ॥ ५८ ॥
वन्दितः प्राह देवेशः सुन्दरीं प्राणवल्लभे! ।
त्रैलोक्यसुन्दरि! प्राणस्वामिनि! प्राणरञ्जिनि ।

**किमागतं भवत्याद्य मम भाग्योदयो महान् ॥ ५९ ॥**

अब इन महाविद्याओं का प्रादुर्भाव कहते हैं । उसमें प्रथम काली का आविर्भाव इस प्रकार है—हे देवि! युगादि काल में गुणातीत आदिनाथ जब काली के साथ विपरीत रति में सामरस्य परायण थे, तब उनकी पूजा के लिये देवताओं का समूह तथा गन्धर्व एवं अप्सराओं का समूह वहाँ पहुँचा । उनकी वन्दना करने के पश्चात् देवाधिदेव शिव ने सुन्दरी से कहा—हे प्राणवल्लभे! हे त्रैलोक्यसुन्दरि! हे प्राणस्वामिनि! हे प्राणरञ्जिनि! आप किस कारण से यहाँ आईं । यह मेरा महान् भाग्योदय है ॥ ५७-५९ ॥

**आदिशक्तय ऊचुः—**

**संहारात् तारितं देव! त्वया विश्वं जनप्रिय ।**
**सृष्टेरारम्भकार्यार्थमुद्युक्तोऽसि महेश्वर ॥ ६० ॥**

आदिशक्तियों ने कहा—हे जनप्रिय! हे देव! आपने इस सारे जगत् को संहार कर तारित कर दिया है । हे महेश्वर! अब उसी सृष्टि के आरम्भ कार्य में आप उद्यत हों ॥ ६० ॥

**तव सामरसानन्ददर्शनार्थं समागताः ।**
**वर्तते तव देवेश! चास्माकं सौख्यसागरः ॥ ६१ ॥**

हम लोग आपके सामरस का आनन्द देखने के लिये आई हैं । हे देवेश! यही हमारा तथा आपका सौख्यसागर है ॥ ६१ ॥

**एवं श्रुत्वा महादेवो ध्यानावस्थितमानसः ।**
**ध्यानं हित्वा महादेवः प्रोवाच कालिकां प्रति॥ ६२ ॥**

इस प्रकार सुनकर महादेव मन लगाकर ध्यान में स्थित हो गये । फिर ध्यान छोड़कर कालिका से कहने लगे ॥ ६२ ॥

**कालि! कालि! मुण्डमालाप्रिये भैरवनादिनि ।**
**शिवारूपधरे घोरे घोरद्रंष्ट्रे भयानके॥ ६३ ॥**
**त्रैलोक्यभक्षणकरि सुन्दर्यः सन्ति तेऽग्रतः ।**
**सुन्दरीवीक्षणं कर्म कुरु कालप्रिये शिवे॥ ६४ ॥**
**ध्यानं मुञ्च महादेवि ता गच्छन्ति गृहं प्रति ।**
**इति श्रुत्वा कालिका तु तत्रैवान्तरधीयत॥ ६५ ॥**

हे कालि! हे कालि! हे मुण्डमाला प्रिये! भैरव के समान भीषण नाद करने वाली! शिवारूप धारिणि! घोरे! घोरदंष्ट्रे! भयानके! त्रैलोक्यभक्षणकरि! ये सुन्दरियाँ आपके समक्ष स्थित हैं । अतः हे कालप्रिये शिवे! आप सुन्दरियों को देखने का

काम करो । हे महादेवि! अब आप अपना ध्यान त्याग दें क्योंकि ये सुन्दरियाँ अपने घर की ओर जा रही हैं । इस बात को सुनकर वह कालिका वहीं अन्तर्धान हो गईं ॥ ६३-६५ ॥

**त्रिंशन्त्रिखर्वषड्वृन्दनवत्यर्बुदकोटयः ।**
**दर्शनार्थं तपस्तेपे सा वै कुत्र गता प्रिया ॥ ६६ ॥**

तीस खर्व ९६ करोड़ वर्षों तक वे शिव अपनी उन प्रिया के दर्शन के लिये तप करते रहे कि मेरी प्रिया कहाँ गई? ॥ ६६ ॥

**देव्याः कृपा तदा जाता मम ध्यानपरः शिवः ।**
**यन्त्रप्रस्तारबुद्धिस्तु शिवे जाता हि सत्वरम् ॥ ६७ ॥**

इसके बाद जब देवी की कृपा हुई कि शिव तो हमारे ध्यान में निमग्न हैं । फिर उनकी बुद्धि शीघ्र ही शिव में यन्त्रप्रस्तार पर हुई ॥ ६७ ॥

**श्रीचक्रराजप्रस्ताररचनाभ्यासतत्परः ।**
**इतस्ततो भ्राम्यमाणस्त्रैलोक्यं चक्रमध्यगम् ॥ ६८ ॥**

तदनन्तर श्रीचक्रराज प्रस्तार की रचना के अभ्यास में लगे हुये भगवान् सदाशिव ने इधर-उधर चक्र को घुमाते हुये, समस्त जगत् को उस चक्र के मध्य में देखा ॥ ६८ ॥

**वीक्ष्य विभ्रमचित्तोऽभूच्चिन्ताविष्टः सदाशिवः ।**
**चक्रपारदर्शनार्थं कोट्यर्बुदयुगं गतम् ॥ ६९ ॥**
**भक्तप्राणप्रिया देवी महाश्रीचक्रनायिका ।**
**तत्र विन्दौ परं रूपं सुन्दरं सुमनोहरम् ॥ ७० ॥**
**रूपं जातं महेशानि जाग्रत्त्रिपुरसुन्दरी ।**
**रूपं दृष्ट्वा महादेवो राजराजेश्वरोऽभवत् ॥ ७१ ॥**

इस प्रकार देखकर सदाशिव आश्चर्य में पड़ गये और चिन्तित हो गये । फिर चक्र का पार देखते-देखते उन्हें जब करोड़ों अर्बुद वर्ष बीत गये, तब उन्होंने भक्त प्राणप्रिया महाश्रीचक्र नायिका का सुमनोहर सुन्दर पर रूप बिन्दु में देखा । हे महेशानि! इस प्रकार जगत् त्रिपुरसुन्दरी का रूप देखकर श्री सदाशिव स्वयं राजराजेश्वर बन गये ॥ ६९-७१ ॥

**तस्याः कटाक्षमात्रेण तस्या रूपधरः शिवः ।**
**महानिशासु सञ्जाता भक्तिगम्या कुलेश्वरी ॥ ७२ ॥ इति ।**

फिर उस सुन्दरी के कटाक्षमात्र से भगवान् शिव ने भी उसी रूप को धारण

कर लिया। तब वह कुलेश्वरी महानिशा (अर्धरात्रि) के समय शिव द्वारा भक्तिगम्या हुई ॥ ७२ ॥

**अथ सुन्दरीप्रादुर्भावः—**

**एकस्मिन् समये पूर्वं ब्रह्मरूपः सदाशिवः।**
**राजराजेश्वरी काली कोटिब्रह्माण्डनायिका ॥ ७३ ॥**
**देवानुग्रहणार्थाय नानारूपं वितन्वती।**
**सद्ब्रह्मभावनां कृत्त्वा पूर्वं परशिवः स्थितः ॥ ७४ ॥**
**सर्वं संहारकं कर्म कृत्त्वा कुण्डं विधाय च।**
**चिदग्निकुण्डसम्भूतं सुन्दरं सद्गुणोत्तरम् ॥ ७५ ॥**
**रूपं जातं महेशानि महारात्रिदिने शिवे।**
**अवन्त्यां जातमेतद्धि कालीरूपं गुणोत्तरम् ॥ ७६ ॥**
**प्रथमा कादिविद्या च हादिविद्या द्वितीयका।**
**सर्वा अपि महाविद्या एकरूपा निरन्तरा ॥ ७७ ॥ इति।**

अब सुन्दरी का प्रादुर्भाव कहते हैं—एक समय पूर्व काल में जब सदाशिव ब्रह्मरूप में थे, तब कोटि ब्रह्माण्डनायिका राजराजेश्वरी काली देवताओं के ऊपर अनुग्रह करने के लिये अनेक रूप धारण कर रही थी। उससे पूर्व परशिव सद् ब्रह्म भावना कर स्थित थे। उस समय सर्वसंहारक कर्म कर कुण्ड का निर्माण कर हवन कर रहे थे। तभी उस चिदग्निकुण्ड से सद्गुणसम्पन्न महासुन्दर रूप, हे महेशानि! उत्पन्न हुआ। हे शिवे! उस दिन महारात्रि का दिन था। इस प्रकार अवन्ती देश में सर्वगुणसम्पन्न महाकाली का रूप प्रगट हुआ। जिनकी प्रथमा विद्या कादि रूपा है तथा द्वितीया विद्या हादिविद्या है। किं बहुना; सभी महाविद्या बिना अन्तर के एकरूपा है ॥ ७३-७७ ॥

**अथ ताराप्रादुर्भावः—**

**नष्टे ब्रह्माण्डगोले तु नष्टे स्थावरजङ्गमे।**
**तत्र जज्ञे स्वयं विष्णुश्चतुर्भुजसमन्वितः ॥ ७८ ॥**
**तस्य नाभौ तदा ब्रह्मा जज्ञे देवश्चतुर्मुखः।**
**ललाटदेशात् तस्यैव रुद्रो जज्ञे स्वयं हरेः ॥ ७९ ॥**

सारा ब्रह्माण्डगोलक जब नष्ट हो गया था, जब स्थावर जङ्गम सभी नष्ट हो गये थे, उस समय चार भुजाओं से संयुक्त स्वयं विष्णु उत्पन्न हुये। उनकी नाभि से चतुर्मुख ब्रह्मदेव उत्पन्न हुये। फिर उन्हीं भगवान् विष्णु के ललाट से रुद्रदेव की उत्पत्ति हुई ॥ ७८-७९ ॥

**ब्रह्मा पप्रच्छ देवेशं विष्णुं त्रिभुवनेश्वरम्।**

**कां विद्यां च समाराध्य चतुर्वेदो निगद्यते ॥ ८० ॥**
**एवं वै ब्रह्मणा पृष्टो विष्णुः पप्रच्छ शङ्करम् ।**
**कथयामास देवेशो महानीलसरस्वतीम् ॥ ८१ ॥**

तब ब्रह्मा ने देवेश त्रिभुवनेश्वर विष्णु से पूछा—हे देव! किस विद्या की आराधना कर चारों वेदों का वक्ता बना जा सकता है? इस प्रकार ब्रह्मा द्वारा पूछे जाने पर विष्णु ने शङ्कर से पूछा । तब महादेव ने कहा—महानीलसरस्वती की उपासना से चारो वेद का ज्ञाता हो सकता है ॥ ८०-८१ ॥

**मेरोः पश्चिमकूले च चोलनाममहाह्रदः ।**
**तत्र जज्ञे स्वयं देवी माता नीलसरस्वती ॥ ८२ ॥**

मेरु के पश्चिम किनारे पर चोल नाम का महान् ह्रद है । वहीं माता महानील-सरस्वती स्वयं उत्पन्न हुई हैं ॥ ८२ ॥

**एतस्मिन्नेव काले तु मेरुशृङ्गपरायणः ।**
**जपयज्ञं समासाद्य त्रियुगं तपसि स्थितः ॥ ८३ ॥**
**ममोर्ध्ववक्त्रान्निःसृत्य तेजोराशिस्तदा हरेः ।**
**ह्रदे चोले निपत्यैव नीलवर्णोऽभवत् पुरा ॥ ८४ ॥**
**ह्रदस्य चोत्तरे भागे ऋषिरेको महत्तरः ।**
**अक्षोभ्यनाम चाश्रित्य मुनिवेषधरः शिवः ॥ ८५ ॥**

किसी समय मैं मेरु शृङ्ग पर जप करता हुआ तपस्या कर रहा था । उसी समय मेरे मुख से एक महान् तेजोराशि निकल कर उस चोल नामक ह्रद में गिर कर नील वर्ण की हो गई । उस ह्रद के उत्तरी भाग में एक महान् ऋषि थे । जो अक्षोभ्य नाम से विख्यात थे । वे और कोई नहीं थे मुनिवेषधारी स्वयं भगवान् शिव ही थे ॥ ८३-८५ ॥

**येनादौ जप्यते या तु स तस्या ऋषिरीरितः ।**
**विश्वव्यापकतोये तु चीनदेशे स्वयं शिवा ॥ ८६ ॥**

जो साधक जिस देवी का प्रथम जप करता है वह उस देवी का ऋषि कहा जाता है । वही अक्षोभ्य उस तारा विद्या के ऋषि हुये, वह जल विश्व व्यापक हैं, अतः उस जल से व्याप्त चीन देश में शिवा का निवास है ॥ ८६ ॥

**अकारोपरि टङ्कारस्तत्रोपरि च हूंकृतिः ।**
**कूर्चबीजस्वरूपा सा प्रत्यालीढपदाऽभवत् ।**
**महोग्रतारा सञ्जाता चित्रप्रभा श्रीमहाकला ॥ ८७ ॥ इति ।**

वह अकार, उसके ऊपर टङ्कार, उसके ऊपर 'हुं' । इस प्रकार के कूर्च बीज

स्वरूपा वाली वह प्रत्यालीढपदा देवी प्रकट हुई । वही चित्रप्रभा श्री की महाकला 'महोग्रतारा' है ॥ ८७ ॥

**अथास्या अङ्गभेदाः—**

**आदौ तु स्पर्शतारा स्यात् ततश्चिन्तामणिः स्मृतः ।**
**ततः सिद्धिजटा प्रोक्ता उग्रतारा ततः परम् ॥ ८८ ॥**
**हंसतारा ततो देवि! निर्वाणरूपिणी कला ।**
**महानीला महेशानि नीलशाम्भवरूपिणी ॥ ८९ ॥**
**महानीलोत्तरं देवि पूर्वसम्राट्लयं शिवे ।**

अब उनके अङ्गभेद कहते हैं—पहला अङ्गभेद स्पर्शतारा, फिर चिन्तामणि, फिर सिद्धजटा, उसके बाद उग्रतारा, फिर हंसतारा, फिर निर्वाणरूपिणी कला, हे महेशानि! उसके बाद महानीला, फिर नीलशाम्भवरूपिणी महानील हुईं । इस महानीला के बाद हे शिवे! हे देवि! उनका पूर्व सम्राट्लय हुआ ॥ ८८-९० ॥

**एवमन्येऽपि कथ्यन्ते रहस्यान्यपि पार्वति ॥ ९० ॥**
**वटुकः क्षेत्रपश्चैव गणपो योगिनी तथा ।**
**अक्षोभ्यो विजया वह्निस्तथैव चण्डघण्टिका ॥ ९१ ॥**
**श्रीषोढापञ्चकं देवि! कामसोमादयस्तथा ।**
**कुल्लुका पञ्चकं देवि तथार्द्रपटिका मता ॥ ९२ ॥**

इस प्रकार, हे पार्वति! अन्य रहस्य भी बतलाते हैं—बटुक, क्षेत्रपाल, गणप, योगिनियाँ, अक्षोभ्य, विजया, वह्नि, चण्डघण्टिका उत्पन्न हुईं । फिर हे देवि! श्रीषोढापञ्चक, फिर काम सोमादि, फिर कुल्लुकापञ्चक, फिर आर्द्रपटिका बतलायी गई हैं ॥ ९०-९२ ॥

**शिवं घोरं पाशुपतं चक्रं तु जयदुर्गकम् ।**
**अमोघफलदा यक्षी तथा पद्मावती शिवे ॥ ९३ ॥**
**उद्भटाम्बा बौद्धनाथः पार्श्वनाथस्तथैव च ।**
**तारिणी यक्षिणी प्रोक्ता मञ्जुघोषो महेश्वरः ॥ ९४ ॥**
**प्रत्यङ्गिरा नारसिंही भैरवाष्टकमेव च ।**
**पञ्चकल्पलतामन्त्राः सर्वकामफलप्रदाः ॥ ९५ ॥**
**रक्तचामुण्डिका नित्यक्लिन्नाविद्या तथैव च ।**
**राजवश्यकरा मन्त्रास्तथाऽन्ये खड्गजादयः ॥ ९६ ॥**
**लुलायखरशार्दूलकपिवश्यकरास्तथा ।**
**धनुर्विद्या शस्त्रविद्या जलाग्निस्तम्भिनी तथा ।**
**भयद्वादशहारिण्यस्तेषामङ्गमनुस्तथा ॥ ९७ ॥ इति ।**

फिर शिव घोर, पाशुपत चक्र, फिर जय दुर्गा, फिर अमोघ फलदा यक्षी एवं पद्मावती हुईं । तदनन्तर हे शिवे! उद्भटाम्बा, बौद्धनाथ, पार्श्वनाथ, तारिणी, यक्षिणी, मञ्जुघोष, महेश्वर प्रत्यङ्गिरा, नारसिंही, अष्टभैरव, सर्वकामफलप्रदा पञ्च-कल्पलतामन्त्र, रक्तचामुण्डिका, नित्यक्लिन्ना विद्या, राज्यवश्यकरा मन्त्र तथा अन्य खड्गजादिक मन्त्र, लुलायखरशार्दूलकपिवश्यकर मन्त्र, धनुर्विद्या, शस्त्रविद्या, जलाग्निस्तम्भिनी और भयद्वादशहारिणी—ये तारा के अङ्ग हैं तथा तारा के अङ्गों के मन्त्र भी तारा के अङ्ग बतलाये गये हैं ॥ ९३-९७ ॥

**अथ छिन्नाप्रादुर्भावः—**

**शृणु देवि! महाभागे! छिन्नायाः सम्भवं शुभम् ।**
**पुरा देवि युगादौ तु कैलासे पर्वतोत्तमे ॥ ९८ ॥**
**मया सह महामाया शृङ्गारे तत्परा ह्यभूत् ।**
**ममोपरि समासाद्य वीतरागरता ह्यभूत् ॥ ९९ ॥**
**शुक्रोत्सरणकाले तु चण्डमूर्त्तिरभूत्तदा ।**
**उत्सृज्य शुक्रमात्मीयं बहिर्देशं गता तदा ॥ १०० ॥**

अब छिन्ना का प्रादुर्भाव कहते हैं—हे महाभागे! हे देवि! अब छिन्नमस्तका की उत्पत्ति सुनिए । हे देवि! पूर्वकाल में जब युग का आदि था । तब पर्वतोत्तम कैलास पर मेरे साथ महामाया शृङ्गार में तत्पर हुई । मेरे ऊपर सवार होकर वीतरागरता हो गई । जब शुक्र के गिरने का समय आया तब चण्डमूर्त्ति बन गई और अपना शुक्र त्याग कर किसी बाहरी स्थान में चली गईं ॥ ९८-१०० ॥

**एतस्मिन्नेव काले तु सख्यौ तस्या बभूवतुः ।**
**तस्याः शरीरसम्भूते द्वे शक्ती शुभदायिके ॥ १०१ ॥**
**डाकिनी वर्णिनी देवि! सर्वशक्तिसमन्विते ।**
**सख्यौ सा समुपालभ्य चण्डदेवी महोदया ॥ १०२ ॥**
**साधूनां च हितार्थाय दुष्टानां च वधाय च ।**
**पुष्पभद्रानदीतीरे जगाम चण्डनायिका ॥ १०३ ॥**
**उषःकाले तदा तत्र मज्जनं सा समाकरोत् ।**
**वर्णिनी डाकिनी तस्यां मज्जनं ते प्रचक्रतुः ॥ १०४ ॥**

इसी काल में उनके शरीर से उत्पन्न कल्याणकारिणी दो शक्तियाँ उत्पन्न हुईं जो उनकी सखी बन गईं । उनका नाम डाकिनी और वर्णिनी था, जो सर्वशक्ति समन्विता थीं । वह महोदया चण्डदेवी साधुओं के हित के लिये तथा दुष्टों के वध के लिये उन अपनी-अपनी दोनों सखियों को प्राप्त कर पुष्पभद्रा नदी के तट पर गईं । वहाँ जाकर प्रातःकाल के समय उन महादेवी ने स्नान किया तथा वर्णिनी

और डाकिनी ने भी उसी नदी में स्नान किया ॥ १०१-१०४ ॥

**मध्याह्नसमये तत्र क्षुधायुक्ते बभूवतुः ।**
**चण्डिकां पृच्छतस्ते तु भक्षणं परिकल्पय ॥ १०५ ॥**

जब मध्याह्न काल हुआ, तब उन देवियों को भूख लगी । तदनन्तर उन्होंने चण्डिका से कहा—हमारे भक्षण का प्रबन्ध करो ॥ १०५ ॥

**तयोस्तद्वचनं श्रुत्वा रहस्यं चण्डिका शुभा।**
**चिच्छेद निजमूर्धानं निरीक्ष्य सकलं जगत् ॥ १०६ ॥**
**वामनाड्या गलद्रक्तैर्डाकिनीं पर्यतोषयत् ।**
**दक्षिणाद् वर्णिनीं देवीं पाययद् रक्तमात्मनः ॥ १०७ ॥**
**ग्रीवामूलगलद्रक्तैर्मस्तकं पर्यतोषयत् ।**
**एवं क्रीडां तदा कृत्वा सन्ध्यायां गृहमागता ॥ १०८ ॥**
**आदाय निजमूर्धानं कबन्धोपरि पार्वती ।**
**निजमूर्त्तिं समासाद्य या पुरा परिकीर्तिता ।**
**वीररात्रिदिने जाता दिनान्ते परमा कला ॥१०९॥ इति ।**

उन सखियों के इस रहस्य को सुनकर कल्याणकारिणी चण्डिका ने स्वयं अपना शिर सारे जगत् की ओर देखते हुये काट दिया । फिर बाईं ओर की नाडियों से गिरते हुये अपने रक्त से डाकिनी को सन्तुष्ट किया । दाहिनी ओर की नाडियों के गिरते हुये अपने रक्त से वर्णिनी को सन्तुष्ट किया । ग्रीवा के मूल से गिरते हुये अपने रक्त से मस्तक की रक्षा की । इस प्रकार की क्रीडा कर सायङ्काल के समय घर आईं । तब उन पार्वती ने अपना शिर लाकर कबन्ध के ऊपर स्थित अपनी मूर्त्ति को प्राप्त किया । उससे वीररात्रि के दिन दिनान्त में परमा कला (छिन्नमस्ता) की उत्पत्ति हुई ॥ १०६-१०९ ॥

**अथ अङ्गभेदाः—**

**गुरुमन्त्रो मालिनी च कुल्लुकापञ्चकं तथा ।**
**काली तारा च नकुली मातङ्गी सिद्धिसुन्दरी ॥ ११० ॥**
**त्रिजटैकजटा श्यामा सभेदा चैव पार्वती ।**
**विकटा लम्पटा देवी यक्षिणी परिकीर्तिता ॥ १११ ॥**

अब छिन्नमस्ता के अङ्गभेद को कहते हैं—गुरुमन्त्र, मालिनी, कुल्लुकापञ्चक, काली, तारा, नकुली, मातङ्गी और सिद्धिसुन्दरी, त्रिजटा, एकजटा, श्यामा भेद के सहित पार्वती, विकटा, लम्पटा देवी और यक्षिणी—उनके अङ्गभेद बतलाये गये हैं ॥ ११०-१११ ॥

**यक्षस्तु भ्रामको देवि! दीपिनी परिकीर्तिता ।**
**दीपिनीकालिकायास्तु गणेशादिचतुष्ककम् ॥ ११२ ॥**
**वटुकश्च महाकालो क्रोधराजोऽपरोऽपि च ।**
**पार्श्वमण्डलकं देवि! महामहिषमर्दिनी ।**
**भवानी कमलाऽघोरचतुष्कं परमेश्वरी ॥११३॥ इति ।**

हे देवि! भ्रामक नाम वाला यक्ष और दीपिनी उनकी अङ्ग बतलायी गयी हैं । दीपिनी, कालिका, चार गणेशादि, वटुक, महाकाली, क्रोधराज और अन्य पार्श्वमण्डलक, इसी प्रकार हे देवि! महामहिषमर्दिनी, भवानी, कमला तथा अघोर-चतुष्क एवं परमेश्वरी—ये छिन्नमस्तका के अङ्ग कहे गये हैं ॥ ११२-११३ ॥

**अथ षोडशीप्रादुर्भावः—**

**एकस्मिन् समये देवि! द्वे शक्ती समुपस्थिते ।**
**प्रपञ्चमूलो हि शिवः काल्यत्र मम संवद ॥ ११४ ॥**
**द्वितीयवाक्येऽपि तथा घोरद्रंष्ट्रेति संवद ।**
**तृतीयवाक्ये देवेशि! द्वितीयां सुन्दरीं प्रति ॥ ११५ ॥**

अब षोडशी का प्रादुर्भाव कहते हैं—हे देवि! एक समय दो शक्तियाँ एक ही स्थान में उपस्थित हुईं । उन्होंने काली से कहा—हे कालि! शिव सारे प्रपञ्च के मूल हैं; इसे मुझे बताओ । फिर द्वितीय वाक्य में भी, हे घोरद्रंष्टे! सम्बोधन कर वही बात पूछी । फिर तृतीय वाक्य में भी, हे देवेशि! सम्बोधन कर वही बात अपनी दूसरी सखी सुन्दरी से पूछी ॥ ११४-११५ ॥

**त्रैलोक्यसुन्दरि प्राणप्रिये ममस्वरूपिणि ।**
**इत्युक्ते दक्षिणा देवी ब्रह्मरूपाऽथ चण्डिका ॥ ११६ ॥**
**आदिशक्तिः पूर्वरूपा क्रोधाक्रान्ता बभूव ह ।**
**तदैव सुन्दरीरूपं सौभाग्यार्णवकं परम् ॥ ११७ ॥**
**राजराजेश्वरीरूपं बिभ्रत्तीं परमेश्वरी ।**
**तदा परशिवः शम्भुर्विस्मयाञ्चितलोचनः ॥ ११८ ॥**
**महाप्रपञ्चरूपा च कोटिब्रह्माण्डनायिका ।**
**प्रकर्षेण तु पञ्चानां संयोगो युगपद् भवेत् ॥ ११९ ॥**
**प्रपञ्चेशीति सा प्रोक्ता सुन्दर्यां च प्रपञ्चता ।**
**श्रीषोडशी तदा जाता महासाम्राज्यदायिनी ॥ १२० ॥**

इसी प्रकार पुनः, हे त्रैलोक्यसुन्दरि! हे प्राणप्रिये! हे ममस्वरूपिणि! इत्यादि सम्बोधन किया । इस प्रकार कहे जाने पर दक्षिणा देवी, ब्रह्मरूपा, चण्डिका, पूर्वरूपा, आदिशक्ति क्रोध से आक्रान्त हो गईं । उसी समय परम सौभाग्यार्णव से

युक्त परम सुन्दरी राजराजेश्वरी रूप धारण किये हुये परमेश्वरी प्रगट हो गईं । यह देखकर पर सदाशिव आश्चर्य से चकित रह गये । उसी समय महाप्रपञ्चरूपा, कोटिब्रह्माण्डनायिका का, परशिव, सदाशिव, राजराजेश्वरी तथा आदिशक्ति—इन पाँचों का संयोग प्रकर्ष रूप से एक ही साथ हो गया । तब वह देवी 'प्रपञ्चेशी' कही जाने लगीं और सारी प्रपञ्चता भद्रासुन्दरी में आ गई । उसी समय उससे महासाम्राज्यदायिनी 'श्रीषोडशी' की उत्पत्ति हो गई ॥ ११६-१२० ॥

**इति सत्यं परं प्रोक्तं मोहरात्रिसमुद्भवा ।**
**महानिशामुखे जाता श्रीविद्या परमा कला ।**
**शिवकाञ्च्यां च श्रीशैले जाता श्रीत्रिपुराम्बिका॥ १२१ ॥**

यह सबसे उत्तम एवं सत्य बात हमने आपसे कही । वह षोडशी मोहरात्रि से उत्पन्न है । किं बहुना; वह परमा कला 'श्रीविद्या षोडशी' महानिशा के प्रारम्भ काल में उत्पन्न हुई । वही श्रीत्रिपुरात्मिका, जो शिवकाञ्ची में श्रीशैल पर उत्पन्न हुई हैं; वही 'षोडशी' कही जाती हैं ॥ १२१ ॥

**ब्रह्माण्डपुराणे तु—**

**पुरा भण्डासुरो नाम सर्वदैत्यशिखामणिः ।**
**विशुक्रश्च विषङ्गश्च भ्रातरौ द्वौ बभूवतुः ॥ १२२ ॥**
**शौर्यवीर्यश्रियोन्नद्धौ ब्रह्माण्डक्षयकारकौ ।**
**ब्रह्मा विष्णुश्च रुद्रश्च दृष्ट्वा तं दीप्ततेजसम् ॥ १२३ ॥**
**पलायनपराः सन्तः स्वे स्वे धाम्नि सदा वसन्।**
**भ्रष्टाधिकारास्त्रिदशाः यक्षाः सिद्धादयस्तथा ॥ १२४ ॥**
**केचित् पातालगर्भस्थाः केचिदम्बुधिवारिषु ।**
**एतस्मिन्नन्तरे ज्ञात्वा चराचरनिवासिनी ॥ १२५ ॥**
**या देवी परमा शक्तिः परब्रह्मस्वरूपिणी ।**
**चिदग्निकुण्डात् सम्भूता इन्द्रप्रस्थे महामखे ।**
**जघान भण्डं दैत्येन्द्रं युद्धे युद्धविशारदा ॥१२६॥ इति ।**

ब्रह्माण्डपुराण में 'श्रीषोडशी' की उत्पत्ति का विवेचन प्राप्त है—पूर्वकाल में सर्वदैत्य शिखामणि भण्ड नामक एक असुर उत्पन्न हुआ । उसके विशुक्र और विषङ्ग नामक दो भाई भी थे । वे दोनों ही शौर्य, वीर्य और श्री से उच्छृङ्खल होकर ब्रह्माण्ड का क्षय करने लगे । ऐसे तेजस्वी असुरों को देखकर ब्रह्मा, विष्णु और रुद्र भी भाग कर अपने-अपने लोकों में निवास करने लगे । देवता, यक्ष एवं सिद्धादि भागकर कुछ पाताल के गर्भ में चले गये और कुछ समुद्र के जल में चले गये । उनकी यह दुर्दशा देखकर चर-अचर में रहने वाली परब्रह्मस्वरूपिणी

परमा शक्तिस्वरूपा बुद्धि विशारदा वह देवी इन्द्रप्रस्थ में किये जाने वाले महामख (=यज्ञ) में चिदग्निकुण्ड से उत्पन्न होकर युद्ध में उस दैत्येन्द्र भण्ड का वध किया ॥ १२२-१२६ ॥

**अथास्या अङ्गभेदाः—**

**अश्वारूढा महादेवी सम्पत्कर्षा तथैव च ।**
**श्रीतिरस्करिणी चैव दण्डिनी मन्त्रनायिका ॥ १२७ ॥**
**बाला च परमेशानी नकुली कुरुकुल्लका ।**
**तारम्बिका कामकला नित्याषोडशकं तथा ॥ १२८ ॥**

अब षोडशी के अङ्ग भेद कहते हैं—अश्वारूढा एवं महादेवी, उसी प्रकार सम्पत्कर्षा, श्रीतिरस्करिणी, दण्डिनी, मन्त्रनायिका, बाला, परमेशानी, नकुली, कुरुकुल्लिका, तारा, अम्बिका, कामकला और नित्याषोडशी के ये सभी चौदह अङ्ग भेद हैं ॥ १२७-१२८ ॥

**विद्या तुरीया देवेशि! रश्मिविद्या तथैव च ।**
**नवचक्रेश्वरी देवी परिवारगणैः सह ॥ १२९ ॥**

हे देवेशि! इसी प्रकार तुरीया विद्या एवं रश्मिविद्या और नवचक्रेश्वरी देवी अपने परिवारगणों के साथ षोडशी के अङ्ग हैं ॥ १२९ ॥

**चतुश्चरणविद्या च तथैव पञ्चपञ्चिका ।**
**षडासनमहाविद्या पञ्चैव समयाम्बिका ॥ १३० ॥**
**ऊर्ध्वाम्नायपराविद्याऽनुत्तराम्नायदेवताः ।**
**परार्द्धाधिकसंख्याताः परिवारा महेश्वरि ॥ १३१ ॥**

चतुश्चरणविद्या, पञ्चपञ्चिका, ऊर्ध्वाम्नायपराविद्या, अनुत्तराम्नाय देवता आदि, हे महेश्वरि! उनका परिवार परार्द्ध से अधिक संख्या में है ॥ १३०-१३१ ॥

**अथ वगलामुखीप्रादुर्भावस्तत्रैव—**

**पुरा कृतयुगे देवि! वातक्षोभ उपस्थिते ।**
**चराचरविनाशश्च सजलं ब्रह्मगोलकम् ॥ १३२ ॥**
**दृष्ट्वा तु देवदेवेशि! विष्णुश्चिन्तापरायणः ।**
**हरिद्राख्ये सिद्धिकुण्डे तपोऽर्थं च मनो दधे ॥ १३३ ॥**

अब वहीं पर कहे गये बगलामुखी के प्रादुर्भाव को कहते हैं—हे देवि! पूर्वकाल में जब सतयुग था । उस समय वायु के द्वारा बहुत बड़ी आँधी आई । जिससे चराचर का विनाश तथा जल युक्त ब्रह्माण्डगोलक का विनाश होने लगा । यह देखकर विष्णु चिन्ता में निमग्न हो गये । तब उन्होंने अपने मन में हरिद्रा

नामक सिद्धकुण्ड में तप करने का विचार किया ॥ १३२-१३३ ॥

**स्वयं पीतेश्वरो भूत्वा जपध्यानपरायणः ।**
**सप्तार्बुदयुगं देवि! श्रीविद्यापूजने रतः ॥ १३४ ॥**

वे स्वयं पीतेश्वर बनकर जप एवं ध्यान में परायण होकर उसी ह्रद में सात अर्बुद युग तक, हे देवि! श्रीविद्या के पूजन में लगे रहे ॥ १३४ ॥

**तपसा तेन सन्तुष्टा श्रीविद्या त्रिपुराम्बिका ।**
**हरिद्राख्यं सरो दृष्ट्वा जलक्रीडनतत्परा ॥ १३५ ॥**

तदनन्तर उनके द्वारा की गई इस प्रकार की तपस्या से श्रीविद्या त्रिपुराम्बिका सन्तुष्ट हो गईं । उन्होंने उस हरिद्रा नामक सर को देखा और उसमें जल-क्रीडा करने लगीं ॥ १३५ ॥

**महापीतह्रदाख्यो हि जागर्त्ति वसुधातले ।**
**सौराष्ट्रदेशे जागर्त्ति तत्रस्था वगलाम्बिका ॥ १३६ ॥**
**श्रीविद्यासम्भवं तेजो व्यजृम्भत इतस्ततः ।**
**चतुर्दशी भौमयुता मकरार्कसमन्विता ॥ १३७ ॥**
**कुलर्क्षयोगे सञ्जाता वीररात्रीति सा मता ।**
**तस्यामेवार्धरात्रौ तु पीतह्रदनिवासिनी ॥ १३८ ॥**
**ब्रह्मास्त्रविद्या सञ्जाता त्रैलोक्यस्तम्भिनी परा ।**
**तत्तेजो विष्णुजं तेजः प्रतिबिम्बप्रयोगतः ॥ १३९ ॥**
**स्तम्भनाख्यो महाबाणस्तदोत्पन्नो महेश्वरि! ।**
**चतुर्दशी भृगुयुता कुम्भसंक्रान्तिसंयुता ॥ १४० ॥**
**शिवऋक्षसमायुक्ता महानिशीथिनी कला ।**
**शिवरात्रिः समाख्याता धर्मकर्मसु पुण्यदा ॥ १४१ ॥**

वह महापीतह्रद अब भी इस पृथ्वीतल में विद्यमान हैं जो सौराष्ट्रदेश में विद्यमान है । बगलाम्बिका वहीं निवास करती हैं । हे देवि! उसी श्रीविद्या का महातेज इधर-उधर संसार में फैला । उस समय भौम युता चतुर्दशी थी जो मकर के सूर्य से युक्त थी । वही कुलर्क्षयोग जिस रात्रि में वे उत्पन्न हुई उसे वीररात्रि कहा जाता है । उसी दिन अर्धरात्रि में पीतह्रद में निवास करने वाली ब्रह्मास्त्रविद्या का तथा परात्रैलोक्यस्तम्भिनी का भी जन्म हुआ । उनमें विशेष विष्णु ने तेज विष्णु के प्रतिबिम्ब जन्य प्रयोग से हुआ । हे महेश्वरि! उसी समय स्तम्भन नाम का महाबाण भी उत्पन्न हुआ । शुक्रवार से युक्त चतुर्दशी, जो कुम्भ की संक्रान्ति से युक्त हो, शिव का नक्षत्र (आर्द्रा) हो और महानिशीथिनी कला हो, उसी को

'शिवरात्रि' कहा जाता है। जो धर्म और कर्म में पुण्य प्रदान करने वाली बतलायी गयी है ॥ १३६-१४१ ॥

**अथास्या अङ्गभेदाः—**

**मृत्युञ्जयश्च वटुकस्तथोत्कीलनदेवताः।**
**पञ्चास्त्रविद्या देवेशि कुल्लुकापञ्चकं तथा ॥ १४२ ॥**
**तथाऽपराजिता श्यामा चाण्डाली च हरिद्रकः।**
**विडालयक्षिणीदेवी स्तम्भनस्त्वरिता तथा ॥ १४३ ॥**
**स्वप्नेश्वरी चैकजिह्वा मन्त्राऽन्ये भैरवादयः।**
**गणपाद्याश्च मनवो भिन्नरूपेण सन्ति ये ॥१४४॥ इति।**

अब बगला के अङ्गभेद को कहता हूँ—हे देवेशि! मृत्युञ्जय, बटुक, उत्कीलन देवता, पञ्चास्त्रदेवता, कुल्लुका पञ्चक, अपराजिता, श्यामा, चाण्डाली, हरिद्रक, विडाल, यक्षिणी देवी, स्तम्भनत्वरिता, स्वप्नेश्वरी, एक जिह्वा, अन्य भैरवादि मन्त्र, गणप तथा मन्त्र—जो भिन्न स्वरूप वाले हैं वे सभी बगला के अङ्ग कहे गये हैं ॥ १४२-१४४ ॥

**अथ महालक्ष्मीप्रादुर्भावः—**

**सम्प्राप्ते फाल्गुने मासि कृष्णैकादशिका तथा।**
**भृगुवारयुता देव्यचलारात्रिरीरिता।**
**महालक्ष्मी तदा जाता सर्वसौभाग्यदायिनी ॥ १४५ ॥**

अब महालक्ष्मी का प्रादुर्भाव कहते हैं—फाल्गुन मास प्राप्त था, कृष्णपक्ष की एकादशी तिथि थी, जो शुक्रवार दिन से युक्त थी तथा 'देव्यचला' नाम की रात्रि थी। ऐसे समय सर्वसौभाग्यदायिनी महालक्ष्मी का जन्म हुआ ॥ १४५ ॥

**लक्ष्मीप्रादुर्भावः—**

**क्षीरोदमथनाज्जाता जगत्सौभाग्यरूपिणी।**
**त्रैलोक्यरक्षणार्थं सा विष्णुवक्षःस्थलस्थिता ॥ १४६ ॥**

अब लक्ष्मी का प्रादुर्भाव कहते हैं—क्षीरसमुद्र के मन्थन से जगत् को सौभाग्य प्रदान करने वाली त्रिलोकी की रक्षा के लिये लक्ष्मी उत्पन्न हुईं, जो विष्णु के वक्षःस्थल पर निवास करती हैं ॥ १४६ ॥

**कृष्णाष्टम्यां भाद्रपदे कोलासुरनिकृन्तनी।**
**एतत्तिथौ समुत्पन्ना महामातङ्गिनी कला ॥ १४७ ॥**

भाद्रपद के महीने में कृष्णपक्ष की अष्टमी के दिन कोलासुर का विध्वंस करने वाली महामातङ्गिनी कला महालक्ष्मी इसी तिथि में उत्पन्न हुई ॥ १४७ ॥

अथाङ्गभेदाः—

महालक्ष्म्यङ्गमन्त्राश्च श्रीविष्णुर्गणपोऽण्डजः ।
धनदा च कुबेरश्च निधिमन्त्रा अपि प्रिये ॥ १४८ ॥
विद्याभेदाश्च देवेशि! भुवना वज्ररूपिणी ।
विद्याभोगवती देवि! लक्ष्मीनारायणः परः ।
कामाक्षी धनराज्ञीति लक्ष्म्यङ्गदेवताः स्मृताः ॥१४९॥ इति ।

अब इनके अङ्गभेद कहते हैं—महालक्ष्मी के अङ्गमन्त्र, श्रीविष्णु, गणेश, गरुड, धनदा देवी, कुबेर निधियों के मन्त्र, हे प्रिये! इसी प्रकार विद्याओं के भेद, भुवना, वज्ररूपिणी, विद्या, भोगवती, पर, लक्ष्मीनारायण और कामाक्षी धनराज्ञी—ये सभी लक्ष्मी के अङ्गदेवता कहे हैं ॥ १४८-१४९ ॥

अथ मातङ्गीप्रादुर्भावः—

पुरा कदम्बविपिने नानापक्षिसमाकुले ।
अतिक्रूरविभूतीनां वश्यार्थं परमेश्वरि ॥ १५० ॥
मतङ्गाख्यो मुनिर्देवि! कदम्बारण्यमध्यगः ।
दशवर्षसहस्राणि तपस्तेपे निरन्तरम् ॥ १५१ ॥

अब मातङ्गी का प्रादुर्भाव कहते हैं—पूर्वकाल में अनेक पक्षियों से संयुक्त किसी कदम्ब के वन में, हे परमेश्वरि! अत्यन्त क्रूर विभूतियों को वश में करने के लिये मतङ्ग नाम के मुनि उस कदम्बारण्य के मध्य में निवास करते थे । वहाँ वे दश हजार वर्ष तक निरन्तर तप करते रहे ॥ १५०-१५१ ॥

तत्र तेजःसमुत्पन्नं सुन्दरीनेत्रतः शिवे ।
तेजोराशिरभूत्तत्र तत्र श्रीकालिकाम्बिका ।
श्यामलं रूपमास्थाय राजमातङ्गिनी ह्यभूत् ॥ १५२ ॥

हे शिवे! उस स्थान पर सुन्दरी देवी के नेत्र से एक अद्भुत महातेज उत्पन्न हुआ । उस तेज की राशि में वहाँ श्रीकालिका अम्बा श्यामलरूप धारण कर राजमातङ्गिनी बन गई ॥ १५२ ॥

अथोच्छिष्टमातङ्गी—

सुधासिन्धुशयानं वै हरिं परमदैवतम् ।
श्यामादेवीसमायुक्तं शेषपर्यङ्कशायिनम् ॥ १५३ ॥
तत्र जातौ महात्मानावुभौ नारदतुम्बुरू ।
प्रणम्याञ्जलिबन्धेन रमानाथमपृच्छताम् ।
नारायण महादेव गीतज्ञानं वद प्रभो! ॥ १५४ ॥

अब उच्छिष्टमातङ्गी की उत्पत्ति कहते हैं—जब परम दैवत श्रीविष्णु सुधा समुद्र ने शेष के पर्यङ्क पर श्यामा देवी के साथ शयन कर रहे थे । तब वही नारद और तुम्बुरू महात्मा रूप होकर प्रगट हुये । उन दोनों ने अञ्जलि बाँधकर, रमानाथ विष्णु से पूछा—हे प्रभो! आप गीत-ज्ञान कहिये ॥ १५३-१५४ ॥

**श्रीनारायण उवाच—**

**एकस्मिन् समये पूर्वं गतोऽहं शङ्करं प्रति।**
**तत्र व्याघ्रासनासीनः पार्वत्या सह शङ्करः ॥ १५५ ॥**
**जय देव! महादेव! उमासहितशङ्कर ।**
**इत्थमाकर्ण्य च शिवः समुत्थाय च सादरम् ॥ १५६ ॥**
**समालिलिङ्ग मां शम्भुः पार्वत्यालिङ्गिमत्प्रियः।**
**विचित्रमासनं दत्तं निविष्टोऽहं श्रिया सह ॥ १५७ ॥**

श्रीनारायण बोले—पूर्वकाल में एक समय मैं शङ्कर जी के यहाँ गया था । उस समय बाघम्बर पर सदाशिव पार्वती के साथ विराजमान थे । जयदेव महादेव उमासहित शङ्कर इस प्रकार मेरे द्वारा प्रणाम किये जाने पर सदाशिव ने सादर आसन से उठकर मेरा आलिङ्गन किया । जब कि वे पार्वती के आलिङ्गन से संयुक्त थे । उन्होंने मुझे विचित्र आसन प्रदान किया, जिस पर हम महालक्ष्मी के साथ बैठे ॥ १५५-१५७ ॥

**तत्र दृष्टं महाचक्रं मारीचगणसंकुलम् ।**
**अनेकरससंयुक्तं विविधास्वादनैर्युतम् ॥ १५८ ॥**
**सामरस्यं तदा जातमुच्छिष्टं गलितं तदा।**
**अनेकगुणसम्पन्ना तत्रोत्पन्ना कुमारिका ॥ १५९ ॥**
**उच्छिष्टं देहि देहीति पार्वत्या शङ्करेण च ।**
**भाषमाणां ददौ प्रीतः पार्वत्या सह शङ्करः ॥ १६० ॥**
**दत्तोच्छिष्टमूचतुस्तौ शृणु त्वमावयोर्गिरम् ।**
**अनेकगुणसम्पन्ने सुशीलेऽतः कुमारिके! ॥ १६१ ॥**
**त्वां यजन्ति च ये कन्ये जपहोमार्चनादिभिः।**
**तेषां कर्माणि सेत्स्यन्ति वश्यादिकमभीप्सितम्॥ १६२ ॥**
**तदा प्रभृति चोच्छिष्टा त्रिषु लोकेषु विश्रुता ।**
**अनेकगुणसम्पन्ना साधकानां वरप्रदा ॥ १६३ ॥**
**श्रुत्वा तद्वचनं सा च मारीचगणसंवृता ।**
**सस्मिता शिवयोरग्रे साञ्जलिर्हृष्टमानसा ॥ १६४ ॥**
**तदा प्रभृति विप्रेन्द्रकन्यां शर्वो न्यवेदयत् ।**

**गीतं नृत्यं च वाद्यं च कलाकौशलमप्यथ ॥ १६५ ॥**
**नानारूपाणि चाङ्गानि दर्शितानीह पार्वति ।**
**तदा प्रभृति नाम्ना सा जातोच्छिष्टमतङ्गिनी ।**
**सैव श्रीसुमुखी जाता सिद्धिविद्या महेश्वरी ॥१६६॥ इति ।**

वहाँ मैंने अनेक किरणों से संयुक्त महाचक्र को देखा । जो अनेक रसों से तथा विविध आस्वादनों से संयुक्त था । उसी समय उच्छिष्ट तथा गलित रसों का एक सामरस्य हुआ । उससे अनेक गुण सम्पन्न कुमारिका उत्पन्न हुई । उस कुमारिका ने पार्वती और शङ्कर से 'उच्छिष्टं देहि, उच्छिष्टं देहि' ऐसा कहा । इस प्रकार याचना करने वाली उस कुमारी को पार्वती और शङ्कर ने बहुत प्रसन्नता के साथ उसे अपना उच्छिष्ट दिया और कहा आप मेरी बात सुनिए । अनेक गुण सम्पन्ने! सुशीले! अतः हे कुमारिके! हे कन्ये! जो जप होमादि द्वारा आपका यजन करेंगे, उनका अभीष्ट वश्यादि सारा कर्म अवश्य सिद्ध होगा । उसी दिन से वह कन्या तीनों लोकों में उच्छिष्टा नाम से कही जाने लगी जो अनेक गुण सम्पन्ना तथा अपने साधकों को वरप्रदा हुई । इसके बाद उनके वचनों को सुनकर मारीचगण संवृता (किरणों से युक्त) दृष्टमानसा वह कन्या शिव-शिवा के आगे हाथ जोड़कर प्रहसित हो गई । उसी समय भगवान् सदाशिव ने उस विप्रेन्द्र कन्या के प्रति निवेदन किया । हे पार्वति! यतः इसने हम लोगों को गीत, नृत्य, वाद्य, नाना प्रकार के कौशलों को तथा नाना प्रकार से अपने अङ्गों को प्रदर्शित किया है । अतः इसका नाम 'उच्छिष्ट मातङ्गिनी' होना चाहिये । वही मतङ्गिनी श्रीसुमुखी महेश्वरी सिद्धिविद्या हुई ॥ १५८-१६६ ॥

**अथाङ्गभेदाः—**

**मातंग्या अङ्गमन्त्राश्च नकुली च सरस्वती ।**
**मातङ्गी पादुका देवि! लघुश्यामा च कामिनी ॥ १६७ ॥**
**वीरभद्रो मतङ्गश्च प्रमदा मोहिनी परा ।**
**भोगेशयक्षः सम्प्रोक्तो देवि! गुप्ततमो मनुः ॥ १६८ ॥**

अब उनके अङ्गभेद कहते हैं—मातङ्गी के अङ्ग मन्त्र, नकुली, सरस्वती, मातङ्गी, पादुका, लघुश्यामा, कामिनी, वीरभद्र, मतङ्ग, प्रमदा, मोहिनी, परा भोगेशयक्ष, हे देवि! वे सभी उसके गुप्ततम मन्त्र हैं ॥ १६७-१६८ ॥

**अथ सिद्धमातङ्ग्या अङ्गभेदाः—**

**पुलिन्दिनी भैरवश्च उच्छिष्टगणपस्तथा ।**
**पिशाचगणपो देवि! उच्छिष्टभैरवोऽपरः ॥ १६९ ॥**
**मातङ्गी नकुली रत्नविद्या वाग्वादिनी तथा ।**

**महामधुमती देवि! तथा कर्णपिशाचिनी ॥ १७० ॥**
**एकवीरा च त्वरिता घण्टाकर्णो निशाचरः ।**
**अघोरः कुल्लुकानां च पञ्चकं परिकीर्तितम् ॥१७१॥ इति ।**

अब सिद्धमातङ्गी के अङ्गभेद कहते हैं—पुलन्दिनी भैरव, उच्छिष्टगणपति, पिशाचगणपति, उच्छिष्ट भैरव, मातङ्गी, नकुली, रत्नविद्या, वाग्वादिनी, महामधु-मती, कर्णपिशाचिनी, एकवीरात्वारिता, घण्टाकर्ण, निशाचर अघोर, पाँचों कुल्लुक —ये सब सिद्धमातङ्गी के अङ्ग भेद हैं ॥ १६९-१७१ ॥

**अथ भुवनेश्वरीप्रादुर्भावः—**

**अथ श्रीभुवनां वक्ष्ये त्रैलोक्योत्पत्तिमातृकाम् ।**
**पुरा कृतयुगस्यादौ ब्रह्मा क्रूरतपोवृतः ॥ १७२ ॥**
**तपसा तस्य सन्तुष्टा सृष्टिशक्तिर्महेश्वरी ।**
**विश्वं जागर्त्ति यद् योनौ यत्रैव लयमेष्यति ॥ १७३ ॥**
**चैत्रमासे शुक्लपक्षे नवम्यां तारिणी कला ।**
**समुत्पन्ना महेशानि! क्रोधरात्रिरिति स्मृता ।**
**सृष्ट्युत्पादनकार्यार्थमुत्पन्ना परमेश्वरी ॥ १७४ ॥**

अब भुवनेश्वरी का प्रादुर्भाव कहते हैं—अब त्रैलोक्य की उत्पत्ति में मातृभूता भुवनेश्वरी की उत्पत्ति कहता हूँ । पूर्वकाल में कृतयुग के आदि में ब्रह्मदेव किसी क्रूर तपस्या में निरत थे । उनके तप से वह सृष्टि शक्ति महेश्वरी सन्तुष्ट हुई । जिसमें यह सारा जगत् जागता है और लय होता है । 'हे महेशानि! चैत्रमास के शुक्लपक्ष में नवमी तिथि को तारिणी कला का जन्म हुआ, जिसे क्रोधरात्रि कहा जाता है। वह परमेश्वरी सृष्टि के उत्पादन कार्य के लिये उत्पन्न हुई ॥१७२-१७४॥

**अथाङ्गभेदाः—**

**अङ्गमन्त्रान् प्रवक्ष्यामि भुवनायाः शृणु प्रिये ।**
**शिवः शिवा विधाता च त्रिपुटा वटुकस्तथा ॥ १७५ ॥**
**कुल्लुकापञ्चकं देवि पञ्चायतनमेव च ।**
**गौरी श्रीरञ्जिनीमन्त्रो विद्याभेदाः सशक्तयः ॥ १७६ ॥**
**लोकपालादिमनवो वाणीमन्त्रास्तथा प्रिये! ।**
**हयग्रीवः पिङ्गली च खड्गरावण एव च ॥ १७७ ॥**

अब हे प्रिये! भुवनेश्वरी के अङ्गमन्त्रों को कहता हूँ । आप सुनिए—शिव शिवा विधाता, त्रिपुटा, बटुक, कुल्लुका-पञ्चक, पञ्चायतन, गौरी, श्रीरञ्जिनीमन्त्र शक्ति सहित विद्याओं के भेद, लोकपाल आदि, मनु, वाणी, मन्त्र, हयग्रीव, पिङ्गली, खड्गरावण—ये भुवनेश्वरी के अङ्गमन्त्र हैं ॥ १७५-१७७ ॥

अथ धूमावतीप्रादुर्भावः—

एकस्मिन्नेव काले तु महासंहारचञ्चला ।
दक्षप्रजापतेर्यज्ञे सती देहसमुद्भवात् ॥ १७८ ॥
धूमाद् धूमावती जाता मुखात् कालमुखी मता।
तद्धूमसम्भवा विद्या सर्वशत्रुविनाशिनी ॥ १७९ ॥
धूमावती तथा जाता भक्तानुग्रहकाङ्क्षया ।
प्राप्तेऽक्षयतृतीयायां भौमवारे निशामुखे ॥१८०॥ इति ।

अब धूमावती का प्रादुर्भाव कहते हैं—एक समय दक्ष प्रजापति के यज्ञ में सती के शरीर से उत्पन्न होने वाले धूम से महासंहारचञ्चला धूमावती का जन्म हुआ जो मुख से भी उत्पन्न कालमुखी रूपा कही जाती हैं । उस धूम से उत्पन्न विद्या सभी शत्रुओं का विनाश करने वाली हैं । इस प्रकार अपने भक्तों पर अनुग्रह करने के लिये धूमावती उत्पन्न हुईं । उस समय अक्षयतृतीया का दिन था । भौमवार को सायङ्काल के समय उनकी उत्पत्ति कही गई है ॥ १७८-१८० ॥

अथाङ्गभेदाः—

धूमावत्यङ्गमन्त्राश्च वीरेशो वटुकः शिवे ।
प्रत्यङ्गिरा च शरभस्तथा पाशुपतो मनुः ॥ १८१ ॥
संहारास्त्रं च ककुदी तथा कर्कटिका शिवे ।
मारिणी त्वरिता विद्या कुल्लुकापञ्चकं शिवे॥ १८२ ॥

अब उनके अङ्गभेद कहते हैं—धूमावती के अङ्ग मन्त्र वीरेश, बटुक, प्रत्यङ्गिरा, शरभ, पाशुपतमन्त्र, संहारास्त्र, ककुदी, कर्कटिका, मारिणी, त्वरिता-विद्या तथा कुल्लुकापञ्चक—हे प्रिये! इतने धूमावती के अङ्गभेद हैं ॥१८१-१८२॥

अथ गणेशप्रादुर्भावः—

भाद्रे मासि चतुर्थ्यां तु गणेशोत्पत्तिरीरिता ॥ १८३ ॥

श्रीमद्विष्णोः शिवस्याप्याविर्भावस्तत्तत्पुराणे प्रसिद्धत्वात् नात्र लिखितः ।

अब गणेश का प्रादुर्भाव कहते हैं—भादों मास की चतुर्थी तिथि को गणेश की उत्पत्ति कही गई है ॥ १८३ ॥

श्रीविष्णु तथा श्रीशिव का आविर्भाव तत्तत्पुराणों में कहा गया है । इसलिये यहाँ नहीं लिखा गया है ।

अथ पुम्प्रकृत्योरभेदकरमागमे शिववाक्यम्—

कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा ।
वेणुनादसमारम्भादकरोद् विवशं जगत् ॥ १८४ ॥

**कदाचिदाद्या श्रीतारा पुंरूपा रामविग्रहा।**
**समुद्रनिग्रहादीनि कुर्वाणा ख्यातिमागता ॥ १८५ ॥**
**छिन्नमस्ता नृसिंहः स्याद् वामनो भुवनेश्वरी।**
**जामदग्न्यः सुन्दरी स्यात् मीनो धूमावती भवेत् ॥ १८६ ॥**
**वगला कूर्ममूर्त्तिः स्याद् बलभद्रस्तु भैरवी ।**
**महालक्ष्मी भवेद् बौद्धो दुर्गा स्यात् कल्किरूपिणी॥१८७॥**
**एवं विज्ञाय मतिमान् भेदभावविवर्जितः ।**
**प्रवृत्त्या वा निवृत्त्या वा भावयेदिष्टमात्मनः ॥ १८८ ॥**

अब पुरुष और प्रकृति में अभेद सम्बन्ध प्रतिपादक वचन लिखता हूँ। आगम में शिव का वाक्य इस प्रकार है—१. किसी समय आद्या ललिता ने पुरुष रूप में कृष्ण का शरीर धारण कर अपने वेणुवादन से समस्त जगत् को अपने वश में कर लिया । २. किसी समय आद्या श्रीतारा ने पुरुष रूप से श्रीराम शरीर धारण कर समुद्र निग्रहादि कार्य सम्पादन कर अपना यश फैलाया। ३. छिन्नमस्ता ने नृसिंह रूप धारण किया, ५. भुवनेश्वरी ने वामनरूप धारण किया, ६. सुन्दरी परशुराम हो गई, ६. धूमावती मीन बनी, ७. बगलामुखी ने कूर्मरूप धारण किया, ८. भैरवी ने बलभद्र के रूप में अवतार लिया, ९. महालक्ष्मी बौद्ध के रूप में अवतरित हुई, किं बहुना; आगे १०. दुर्गा कल्कीरूप में अवतरित होंगी । ऐसा समझ कर बुद्धिमान् पुरुष और प्रकृति में भेदभाव न करे । प्रवृत्ति मार्ग और निवृत्ति मार्ग दोनों से अपना अभीष्ट साधन करे ॥ १८४-१८८ ॥

**प्रवृत्तिं मार्गमाणस्तु दीक्षादेशेन पूजयेत् ।**
**निवृत्तिं मार्गमाणस्तु भेदवादं विवर्जयेत् ॥१८९॥ इति।**
**सर्वशक्तिमयत्वाच्च शक्तिः सेव्या विचक्षणैः।**
**सर्वेषां फलदाने च शक्तेरेव प्रधानता ॥१९०॥ इति।**

इतना अवश्य है कि जो प्रवृत्तिमार्ग से इष्ट साधन करना चाहता है, वह दीक्षा लेकर ही पूजा करे। निवृत्ति मार्ग का अनुसरण करने वाला पुं एवं प्रकृति में भेद न रखे । बुद्धिमान् को चाहिये कि सर्वशक्तिमय होने से शक्ति का ही सेवन करे । क्योंकि सभी कर्मों के फल देने में शक्ति का ही प्राधान्य है ॥ १८९-१९० ॥

**यदुक्तं श्रीस्वामिचरणैः—**

**त्रयाणां देवानां त्रिगुणजनितानां परशिवे!।**
**भवेत् पूजा, पूजा तव चरणयोर्या विरचिता ॥ १९१ ॥**

जैसा कि श्रीभगवत्पाद शङ्कराचार्य सौन्दर्यलहरी में कहते हैं—हे शिवे! आपके चरणों की, की जाने वाली पूजा ही पूजा है। क्योंकि त्रिगुण से उत्पन्न ब्रह्मा,

विष्णु और महेश की पूजा केवल एकमात्र तुम्हारे चरणों की पूजा से गतार्थ हो जाती है ॥ १९१ ॥

**तथोक्तं देवीपुराणे—**

**विष्णुपूजासहस्राणि शिवपूजाशतानि च ।**
**अम्बिकाचरणार्चाया: कलां नार्हन्ति षोडशीम्॥ १९२ ॥**

**अतोऽशेषमूलत्वात् कोमलान्त:करणत्वात् भुक्तिमुक्तिदातृत्वाच्च शक्तिरेव सर्वार्थसाधिकोपास्या चेति । अन्यदुपासनायां बहुतर-कायक्लेशेनापि मुक्तिमात्रम् ।**

देवीपुराण में भी बतलाया गया है—सहस्रों बार की गई विष्णुपूजा तथा सैकड़ों बार की गई शिवपूजा श्री अम्बिका के चरणों की एक मात्र की गई पूजा की १६वीं कला की भी तुलना नहीं कर सकती ॥ १९२ ॥

इसलिये सबका मूल होने से कोमल अन्त:करण होने से भुक्ति-मुक्ति दोनों प्रदान करने से शक्ति ही सर्वार्थसाधिका हैं अत: वही उपास्य हैं । अन्य की उपासना से बहुत कायक्लेश करने पर भी मात्र मुक्ति ही हाथ लगती है ।

**तदुक्तं समयातन्त्रे—**

**कदाचित् कस्यचिद् भुक्ति: कदाचिन्मुक्तिरेव च ।**
**एतस्या: साधकस्याऽथ भुक्तिर्मुक्ति: करे स्थिता ॥१९३॥**

जैसा कि समयातन्त्र में कहा भी है—किसी की पूजा से कदाचित् भुक्ति तथा किसी की पूजा से कदाचित् मुक्ति ही प्राप्त होती है । किन्तु भगवती के साधक को तो भुक्ति-मुक्ति दोनों ही उसके हाथ में स्थित हो जाती है ॥ १९३ ॥

**रुद्रयामलेऽपि—**

**यत्रास्ति भोगो न हि तत्र मोक्षो,**
**यत्रास्ति मोक्षो न हि तत्र भोग: ।**
**शिवापदाम्भोजयुगार्चकस्य**
**भोगश्च मोक्षश्च करस्थ एव ॥ १९४ ॥**

रुद्रयामल में भी बतलाया गया है—जहाँ भोग है, वहाँ मोक्ष नहीं है, जहाँ मोक्ष है, वहाँ भोग नहीं हैं । किन्तु शिवा के चरण कमलों की अर्चना करने वाले उपासक को भोग और मोक्ष हाथ में ही आ जाते हैं ॥ १९४ ॥

**योऽन्येभ्यो दर्शनेभ्यश्च भुक्तिं मुक्तिं च काङ्क्षति।**
**स्वप्नलब्धधनेनैव धनवान् किं भवेद् हि स: ॥ १९५ ॥**

जो पुरुष अन्य दर्शनों से भोग एवं मोक्ष चाहता है, वह झूठा है, क्या कोई स्वप्नलब्ध धन से कभी धनवान् बना है ॥ १९५ ॥

**शुक्तौ रजतविभ्रान्तिर्यथा जायेत पार्वति ।**
**तथान्यसमयेभ्यश्च भुक्तिं मुक्तिं च काङ्क्षति॥ १९६ ॥ इति ।**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे गुर्वाचारादि पुम्प्रकृत्योरभेदभावनान्त-कथनं नाम षष्ठः पटलः ॥ ६ ॥**



हे पार्वति! जिस प्रकार शुक्ति में रजत की भ्रान्ति होती है उसी प्रकार अन्य समयों से भुक्ति-मुक्ति चाहने वाला भ्रम में है ॥ १९६ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में पुम्प्रकृत्योर-भेदभावनान्तकथन नामक षष्ठ पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ ६ ॥**

# सप्तमः पटलः

## प्रातःकृत्यादि शौचान्तकर्मनिरूपणम्

**एवं सद्भावमापन्नो मन्त्राराधनमाचरेत् ।**

तत्प्रथमतः प्रातःकृत्यमेव निरूप्यते । यदकरणे दोषमाह यामले—

**प्रातःकृत्यमकृत्या तु यो देवं भक्तितोऽर्चयेत् ।**
**तस्य पूजा तु विफला शौचहीना यथा क्रिया ॥ १ ॥**

इस प्रकार शक्ति को ही सर्वप्राधान्य मानकर साधक मन्त्राराधन में प्रवृत्त हो जावे—इसलिये सर्वप्रथम प्रातःकृत्य का निरूपण किया जा रहा है जिसके न करने से दोष होता है ऐसा यामल का वचन है—

जो साधक प्रातःकृत्य किये बिना देवता की भक्तिपूर्वक अर्चना करता है उसकी सारी पूजा व्यर्थ है और उसी प्रकार फलहीन है जिस प्रकार अशौचावस्था में किया गया सारा कर्म व्यर्थ रहता है ॥ १ ॥

अतः—

**ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेद् गुरुदैवतम् ।**
**स्वमूर्धनि सहस्रारे शिवाख्यपुरविन्दुके ॥ २ ॥ इति।**

इसलिये—साधक ब्राह्ममुहूर्त्त में उठकर गुरु और देवता का ध्यान करे । वह ध्यान अपने शिर स्थान में स्थित सहस्रार चक्र में स्थित बिन्दु में करे जहाँ शिव का निवास है ॥ २ ॥

ब्राह्ममुहूर्त्तमाह यामले—

**द्वौ दण्डौ रात्रिशेषे तु मुहूर्त्तं ब्राह्मकं विदुः ॥ ३ ॥ इति ।**

अब ब्राह्ममुहूर्त्त का लक्षण, जैसा यामल में कहा है, उसे कहते हैं—जब रात्रि दो दण्ड अर्थात् एक मुहूर्त्त शेष रहे, तो उसे 'ब्रह्ममुहूर्त्त' कहते हैं ॥ ३ ॥

गुरुध्यानञ्च तत्रैव—

**ब्राह्मे मुहूर्त्ते चोत्थाय कृत्वा शौचादिकं सुधीः ।**

**परिधायाम्बरं शुद्धं मन्त्रस्नानं समाचरेत् ॥ ४ ॥**

सुधी साधक ब्राह्ममुहूर्त्त में उठकर, शौचादि क्रिया सम्पन्न कर, शुद्ध वस्त्र धारण कर प्रथम मन्त्र स्नान करे ॥ ४ ॥

**मन्त्रस्नानं यथा यामले—**

**प्राणायामप्रयोगेन चिन्तयेन्मूलमात्मनः ।**
**मन्त्रदैवतयोरैक्यं मन्त्रस्नानं विदुर्बुधाः ॥ ५ ॥**

मन्त्रस्नान का प्रकार जैसा यामल में कहा है उसे कहते हैं—प्राणायाम का प्रयोग करते हुये अपने मूल (कुतोऽहं समागतः) का चिन्तन करे । बुद्धिमान् लोग मन्त्र और मन्त्रदेवता की एकता को मन्त्र स्नान कहते हैं ॥ ५ ॥

**तद्यथा—**

**इडा भगवती गङ्गा पिङ्गला यमुना नदी ।**
**तयोरन्तर्गता नाडी सुषुम्णाख्या सरस्वती ॥ ६ ॥**

वह इस प्रकार—इडा भगवती गङ्गा है, पिङ्गला यमुना नदी है और उन दोनों के बीच में रहने वाली नाडी सुषुम्ना है जो सरस्वती है ॥ ६ ॥

**ज्ञानह्रदे ध्यानजले रागद्वेषसमाकुले ।**
**यः स्नाति मानसे तीर्थे तस्य जन्म न विद्यते ।**
**इदं मानसिकं स्नानं प्रोक्तं हरिहरादिभिः ॥ ७ ॥ इति।**

ज्ञान ह्रद है, उसमें ध्यान जल है, जिसमें रागद्वेष का निवास है, ऐसे मानस तीर्थ में जो स्नान करता है, उसका पुनर्जन्म नहीं होता । हरिहर आदि आचार्यों ने इसी को मानसिक स्नान कहा है ॥ ७ ॥

**मन्त्रतन्त्रप्रकाशे—**

**स्मृत्युक्तेन विधानेन सम्यक् शौचं विधाय च।**
**प्रक्षाल्य पादावाचम्य कृत्वा न्यासं यतात्मवान्॥ ८ ॥**

मन्त्रतन्त्रप्रकाश में भी बतलाया गया है—स्मृति में कहे गये नियम के अनुसार जितेन्द्रिय पुरुष शौच क्रिया कर पाद प्रक्षालन करे । फिर आचमन कर न्यास करे ॥ ८ ॥

**प्रविश्य देवतास्थानं निर्माल्यमपकृष्य च ।**
**दद्यात् पुष्पाञ्जलिं विद्वानर्घ्यपाद्ये तथैव च ॥ ९ ॥**

फिर देवतास्थान (मन्दिर) में प्रवेश कर निर्माल्य का अपसारण करे । फिर विद्वान् अर्घपात्र में पुष्पाञ्जलि देवे ॥ ९ ॥

**मुखप्रक्षालनं दद्यात् दद्याद् वै दन्तधावनम् ।**
**दद्यादाचमनीयं च दद्याद् वासोऽमलं शुभम् ॥ १० ॥**

तदनन्तर मुख प्रक्षालन देवे, फिर दन्तधावन देवे, फिर आचमन करावे, तदनन्तर शुद्ध श्वेत वस्त्र देवे ॥ १० ॥

**नमस्कृत्यासने शुद्धे उपविश्य गुरुं स्मरेत् ।**
**शिरस्थशुक्लपद्मस्थं प्रसन्नं द्विभुजाक्षिकम् ॥ ११ ॥**
**शशाङ्कामृतसङ्काशं वराभयलसत्करम् ।**
**शुक्लाम्बरधरं श्रीमच्छुक्लमाल्यानुलेपनम् ॥ १२ ॥**
**वामोरौ रक्तशक्त्या च युतं पद्मकरस्थया ।**
**एवं ध्यात्वा पुनश्चैनं पञ्चभूतमयैर्यजेत् ॥ १३ ॥**

तदनन्तर साधक देवता को नमस्कार कर, शुद्ध आसन पर बैठ कर, गुरु का इस प्रकार स्मरण करे—जो शिर पर रहने वाले शुक्ल वर्ण के पद्म पर स्थित हैं, जिनकी दो भुजायें तथा दो नेत्र हैं । जो चन्द्रमा में रहने वाले अमृत के समान शुक्ल वर्ण का शुद्ध अम्बर धारण किये हुये हैं और शुक्ल माल्य तथा शुक्ल अनुलेपन धारण किये हुये हैं । जो अपने बायें ऊरु पर रक्त पद्म धारण की हुई शक्ति विराजमान है, इस प्रकार गुरु का ध्यान करने के बाद पञ्चभूतमय पदार्थों से उनकी इस प्रकार पूजा करे ॥ ११-१३ ॥

**गन्धतत्त्वं पार्थिवस्य कनिष्ठाङ्गुष्ठयोगतः ।**
**खमयं च महापुष्पं तर्जन्यङ्गुष्ठयोगतः ॥ १४ ॥**
**वायुरूपं महाधूपं तर्जन्या विनियोजयेत् ।**
**तेजोरूपं महादीपं मध्यमाङ्गुष्ठयोगतः ॥ १५ ॥**
**अमृतं चैव नैवेद्यमनामाङ्गुष्ठयोगतः ।**
**अञ्जल्याऽथ नमस्कारं ताम्बूलं वाग्भवात्स्मृतम् ॥ १६ ॥**

१. 'गुरवे नमः पार्थिवं गन्धतत्त्वं समर्पयामि', ऐसा कहकर कनिष्ठा अङ्गुष्ठ के योग से गन्ध देवे । २. इसी प्रकार खमयं महापुष्पं समर्पयामि, कहकर तर्जनी अङ्गुष्ठ के योग से महापुष्प देवे । ३. फिर 'वायुरूपं महाधूपं समर्पयामि' कहकर तर्जनी अङ्गुष्ठ के योग से धूप देवे । ४. 'तेजोरूपं महादीपं समर्पयामि' कहकर मध्यमा अङ्गुष्ठ मिलाकर दीप प्रदान करे । फिर 'अमृतं चैव नैवेद्यं समर्पयामि' कहकर अनामा अङ्गुष्ठ मिलाकर नैवेद्य समर्पित करे । अञ्जलि से नमस्कार करे और वाग्भव बीज (ऐं) से ताम्बूल प्रदान करे ॥ १४-१६ ॥

**स्वस्वबीजेन सर्वं तु नमस्कारेण योजयेत् ।**
**गुरोर्मन्त्रं प्रयत्नेन प्रजपेत् सुरवन्दिते ॥ १७ ॥**

पञ्चभूतों के बीज—पृथ्वी का 'लं', जल का 'वं', अग्नि का 'रं', वायु का 'यं' और आकाश का 'हं' । इसी प्रकार स्व स्व बीज के साथ नमस्कार करते हुये सभी उपचार निवेदन करे । तदनन्तर हे सुरवन्दिते! गुरु का मन्त्र प्रयत्नपूर्वक जप करना चाहिए ॥ १७ ॥

**बाला च भुवनेशानी रमा चैव सुरेश्वरि ।**
**भावत्रयमिदं प्रोक्तं गुरुमन्त्रे प्रतिष्ठितम् ॥ १८ ॥**

हे सुरेश्वरि! गुरु के मन्त्र में बाला, भुवनेश्वरी और रमा—इन तीनों के मन्त्रों की भावना प्रतिष्ठित कही गई है ॥ १८ ॥

**ततः स्वगुरुनामान्ते आनन्दनाथमालिखेत् ।**
**रक्तशक्तिपदान्ते च अम्बापदमथालिखेत् ॥ १९ ॥**
**श्रीपादुकां समुच्चार्य पूजयामीति सञ्जपेत् ।**
**तेजोरूपं समर्प्याऽथ स्तवेन तोषयेद् गुरुम् ॥ २० ॥**

**अन्यदपि पादुकाम्भेदमुत्तरार्धे बृहद्दीक्षापटले लिखामः ।**

इसके बाद गुरु के नाम के अन्त में 'आनन्दनाथ' लिखे । फिर 'रक्तशक्ति' पद के अन्त में अम्बा पद लिखे । तदनन्तर 'पादुका' पद का उच्चारण कर 'पूजयामि' लिखे । इस प्रकार उनके तेजो रूप का समर्पण कर स्तोत्र द्वारा गुरु को सन्तुष्ट करे ॥ १९-२० ॥

स्वरूप यथा—आनन्दनाथ रक्तशक्ति अम्बा श्रीपादुकां पूजयामि ।

**अथ श्रीगुरुस्तोत्रं यथा भूतशुद्धौ—**

**ॐ नमामि सद्गुरुं शान्तं प्रत्यक्षं शिवरूपिणम् ।**
**शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये ॥ २१ ॥**
**श्रीगुरुं परमानन्दं नमाम्यानन्दविग्रहम् ।**
**यस्य सन्निधिमात्रेण चिदानन्दायते परम् ॥ २२ ॥**

अब श्रीगुरुस्तोत्र, जैसा भूतशुद्धि में है, उसे कहते हैं—मैं मुक्ति की कामना की सिद्धि के लिये योगपीठ पर स्थित, शिर से प्रत्यक्ष शिवस्वरूप, शान्त, सद्गुरु को नमस्कार करता हूँ । जिनके सन्निधान में होने मात्र से साधक को चिदानन्द की प्राप्ति हो जाती है । आनन्दविग्रह परमानन्द श्रीगुरु को नमस्कार करता हूँ ॥ २१-२२ ॥

**अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।**
**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २३ ॥**

जिन गुरु ने अज्ञानान्धकार से अन्धे शिष्य के चक्षु का ज्ञानाञ्जनशलाका द्वारा

उन्मीलन किया है, उन गुरु को मैं नमस्कार करता हूँ ॥ २३ ॥

**अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।**
**तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ २४ ॥**

जो अखण्डमण्डलाकार स्वरूप से समस्त जगत् में व्याप्त हैं और जिन्होंने तत्पद (ब्रह्मस्वरूप) का दर्शन कराया, उन गुरु को नमस्कार है ॥ २४ ॥

**गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वरः ।**
**गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ २५ ॥**

गुरु ब्रह्मा हैं, गुरु विष्णु हैं, गुरु साक्षात् महेश्वर देव हैं और गुरु ही परमब्रह्म है, उन श्रीगुरु को मेरा नमस्कार है ॥ २५ ॥

**एवं च श्रीगुरुं नत्त्वा मूले कुण्डलिनीं ततः ।**
**स्मरेत् षट्पद्मयोगेन तत्तद्वर्णं तदीश्वरम् ॥ २६ ॥**

इस प्रकार श्रीगुरु को नमस्कार कर मूलाधार में स्थित कुण्डलिनी का स्मरण करे । तत्तद् पद्म के योग के साथ तत्तद् वर्ण वाले ईश्वर का भी स्मरण करे ॥२६॥

**तिस्रः कोट्यस्तदर्धेन शरीरे नाडिका मताः ।**
**तासु मुख्या दश प्रोक्तास्तासु तिस्रो व्यवस्थिताः॥ २७ ॥**

मनुष्य के शरीर में साढ़े तीन करोड़ नाडियाँ स्थित हैं । उनमें दश नाडियाँ प्रधान कही गई हैं और उनमें भी तीन व्यवस्थित कही गई हैं ॥ २७ ॥

**प्रधानं मेरुदण्डोऽत्र सोमसूर्याग्निरूपिणी ।**
**इडा नाम्नी तु या नाडी शुक्ला तु चन्द्ररूपिणी॥ २८ ॥**
**शक्तिरूपा च सा नाडी साक्षादमृतविग्रहा ।**
**पिङ्गलाख्या द्वितीया च पुंरूपा सूर्यविग्रहा ॥ २९ ॥**

इन नाडियों में मेरुदण्ड सबसे प्रधान है । जिसमें सोम, सूर्य एवं अग्नि रूपिणी तीन नाडियाँ हैं । इडा नाम वाली नाडी शुक्ल वर्ण की है, जो चन्द्ररूपिणी है । वह नाडी शक्ति स्वरूपा और अमृत विग्रहा है । दूसरी नाडी का नाम पिङ्गला है, जो पुरुष स्वरूपा एवं सूर्य विग्रहा है ॥ २८-२९ ॥

**दाडिमीकुसुमप्रख्या विषाख्या चापरा मता ।**
**मेरुमध्ये स्थिता या तु मूलादाब्रह्मरन्ध्रगा ॥ ३० ॥**

पिङ्गला नाडी का वर्ण अनार के पुष्प के समान है । इसके अतिरिक्त तीसरी नाडी 'विष' नाम से प्रसिद्ध है, जो मेरुदण्ड के मध्य में स्थित है । वह मूल स्थान से ब्रह्मरन्ध्र तक जाती है ॥ ३० ॥

**सर्वतेजोमयी शक्तिः सुषुम्णा वह्निरूपिणी ।**
**सुषुम्णान्तर्गता चित्रा चन्द्रकोटिसमप्रभा ॥ ३१ ॥**

यह अग्निस्वरूपा 'सुषुम्णा' शक्ति सर्वतेजोमयी है । उस सुषुम्णा के भीतर रहने वाली 'चित्रा' नाडी करोड़ों चन्द्रमा के समान प्रकाशमयी है ॥ ३१ ॥

**सर्वदेवमयी सा तु योगिनां हृदयङ्गमा ।**
**तस्य मध्ये ब्रह्मनाडी मृणालतन्तुरूपिणी ।**
**ब्रह्मरन्ध्रं तु तन्मध्ये हरवक्त्रात् सदाशिवम् ॥ ३२ ॥**
**वामावर्तक्रमेणैव वेष्टितं बिसतन्तुवत् ।**
**सुषुम्णामध्यसंस्थानि षट्पद्मानि यथाक्रमात् ॥ ३३ ॥**

वह सर्वदेवमयी है । उसका ध्यान योगी लोग हृदय में करते हैं । उस चित्रा के मध्य में मृणालतन्तु के समान सूक्ष्म ब्रह्मनाडी है, उसी के मध्य में ब्रह्मरन्ध्र है । वहाँ सुषुम्णा नाडी शिवजी के मुख से लेकर सदाशिव पर्यन्त स्वयम्भू लिङ्ग को वामावर्त्त क्रम से विसतन्तु के समान वेष्टित किए हुए है । उस सुषुम्णा के मध्य में यथाक्रम छह पद्म चक्र स्थित हैं ॥ ३२-३३ ॥

**आधाराख्ये मूलचक्रे रक्तवर्णे चतुर्दले ।**
**वादिसान्तार्णसंयुक्ते क्षेत्रे गोदावरीसमे ॥ ३४ ॥**

प्रथम आधार चक्र नामक मूल चक्र में रक्तवर्ण का चार दलों वाला पद्म स्थित है । इस पर 'व श ष स'—ये चार वर्ण स्थित बतलाये गये हैं जो 'गोदावरी' का क्षेत्र कहा जाता है ॥ ३४ ॥

**कर्णिकायां स्थिता योनिस्त्रिकोणं परमेश्वरि! ।**
**तद्योनिः परमेशानि इच्छाज्ञानक्रियात्मिका ॥ ३५ ॥**

हे परमेश्वरि! उसकी कार्णिका में त्रिकोण योनि स्थित है । हे परमेशानि! वही योनि इच्छा, ज्ञान एवं क्रियात्मिका कही जाती है ॥ ३५ ॥

**अपराख्यं हि कन्दर्पमाधारे तत्त्रिकोणके ।**
**स्वयम्भुलिङ्गं तन्मध्ये सरन्ध्रं पश्चिमाननम् ॥ ३६ ॥**
**ध्यायेच्च परमेशानि! शिवं चामलसुन्दरम् ।**
**कुण्डली तेन मार्गेण यातायातं करोति हि ॥ ३७ ॥**

उस त्रिकोण के आधार में अपर नाम का कन्दर्प (=कामदेव) है । उस त्रिकोण के ठीक मध्य में छिद्र सहित पश्चिमाभिमुख 'स्वयम्भू लिङ्ग' है । हे परमेशानि! वहीं स्वच्छ सुन्दर सदाशिव का ध्यान करे । क्योंकि कुण्डलिनी उसी मार्ग से यातायात करती है ॥ ३६-३७ ॥

**भित्त्वा भित्त्वा पुरीं याति आयाति कुण्डली सदा।**
**तत्र विद्युल्लताकारा कुण्डली परदेवता ॥ ३८ ॥**

वह कुण्डलिनी उन षट्चक्रों का भेदन कर ब्रह्मरन्ध्र तक जाती है और पुन: उसी मार्ग से लौटती है । यह विद्युल्लता के आकार वाली परदेवता है ॥ ३८ ॥

**प्रसुप्तभुजगाकारा सार्द्धत्रिवलयान्विता ।**
**शिवं वेष्ट्य महेशानि! सर्वदा परितिष्ठति ॥ ३९ ॥**

सोती हुई सर्पिणी के समान कुण्डलिनी साढ़े तीन वलय (गोला) में स्थित हैं। हे महेशानि! वह शिव को वेष्टित कर सर्वदा निवास करती है ॥ ३९ ॥

**येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम् ।**
**मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ॥ ४० ॥**

जिस मार्ग से निरामय एवं पर देवता ब्रह्मद्वार तक जाना चाहिये, वह प्रसुप्ता परमेश्वरी कुण्डलिनी, उसी द्वार को मुख से बन्द कर सोती रहती है ॥ ४० ॥

**मूलमाधारषट्कानां मूलाधारं ततो विदुः ।**
**लिङ्गमूले पुष्कराख्ये स्वाधिष्ठानं तु षड्दलम् ॥ ४१ ॥**
**बादिलान्तार्णसंयुक्तं विद्रुमाभं मनोहरम् ।**
**नाभौ तु गण्डकीक्षेत्रं मणिपूरेऽथ नीलभम् ॥ ४२ ॥**

यत: वह छह अक्षरों का मूल आधार है, इसलिये उसे 'मूलाधार' कहते हैं । पुष्कर नाम क्षेत्र वाले लिङ्ग के मूल में स्वाधिष्ठान नामक छह पत्तों वाला दूसरा पद्म चक्र है, जहाँ 'व भ म य र ल' वर्ण हैं । वह मूँगे के समान लाल वर्ण का अत्यन्त मनोहर चक्र है । नाभि में गण्डकी क्षेत्र है, जहाँ नीलमणि के समान मणिपूर चक्र स्थित है ॥ ४१-४२ ॥

**डादिफान्तार्णसंयुक्तदलैश्च दशभिर्युतम् ।**
**हृदये द्वादशदले काश्यां पिङ्गलवर्णके ॥ ४३ ॥**
**कादिठान्तार्णसंयुक्तं तप्तहाटकसन्निभम् ।**
**तन्मध्ये बाणलिङ्गं तु सूर्यायुतसमप्रभम् ॥ ४४ ॥**
**शब्दब्रह्ममयः शब्दोऽनाहतस्तत्र दृश्यते ।**
**तेनाऽऽहतं तु तत्पद्मं योगीष्टं परिकीर्तितम् ॥ ४५ ॥**

वह ड से लेकर फ पर्यन्त दश वर्णों से युक्त है । हृदय में काशी क्षेत्र है, जो पिङ्गल वर्ण का है । वह क से लेकर ठ पर्यन्त द्वादश वर्णों से युक्त है । देदीप्यमान सुवर्ण के समान उसका वर्ण है और उसके मध्य में 'बाणलिङ्ग' है, जो दश हजार सूर्य की प्रभा वाला है । वही शब्दब्रह्ममय शब्दस्वरूप 'अनाहत चक्र'

है। वह पद्म उस शब्द से आहत नहीं होता। यह योगियों का अभीष्ट स्थान कहा गया है ॥ ४३-४५ ॥

**कण्ठदेशे विशुद्ध्याख्यं धूम्रवर्णं मनोहरम्।**
**स्वरैः षोडशभिर्युक्तं कुरुक्षेत्रमनुत्तमम् ॥ ४६ ॥**

हे देवि! कण्ठ देश में 'विशुद्ध' नाम का चक्र स्थित है, जिसका वर्ण धूयें के समान है, किन्तु यह मनोहर है। वह चक्र षोडश स्वरों से युक्त है जो सर्वश्रेष्ठ 'कुरुक्षेत्र' है ॥ ४६ ॥

**विशुद्धिस्तन्मयं यस्मादाकाशाख्यं महाद्भुतम्।**
**आज्ञानाम भ्रुवोर्मध्ये द्विदलं तन्मनोहरम्।**
**हंसाक्षरयुतं देवि! त्रिवेणीक्षेत्रमुत्तमम् ॥ ४७ ॥**

यतः 'विशुद्धि' नाम का चक्र आकाश के समान अत्यन्त विशुद्ध तथा अद्भुत है, इसलिये उसे 'विशुद्ध' कहा जाता है। हे देवि! दोनों भ्रू के मध्य में आज्ञा नामक चक्र हैं जो 'ह स' दो दलों से युक्त अत्यन्त मनोहर है। उसे सर्वश्रेष्ठ 'त्रिवेणी क्षेत्र' कहा जाता है ॥ ४७ ॥

**इतराख्यं महालिङ्गं तन्मध्ये काञ्चनप्रभम्।**
**आज्ञासंक्रमणं तत्र गुरोराज्ञेति कीर्तितम् ॥ ४८ ॥**

वहाँ सुवर्ण के समान देदीप्यमान 'इतर' नामक 'महालिङ्ग' स्थित है। क्योंकि वहाँ तक गुरु की आज्ञा का संक्रमण होता है, इसलिये उसे 'आज्ञा' चक्र कहा जाता है ॥ ४८ ॥

**कैलासाख्यं तदूर्ध्वे तु रोधिनीति तदूर्ध्वतः।**
**तत्र पद्मं सहस्रारं नादविन्दुत्रयान्वितम् ॥ ४९ ॥**

उसके ऊपर 'कैलास' है और उसके ऊपर 'रोधिनी' क्षेत्र है, जहाँ नाद, बिन्दु समन्वित 'सहस्रार' नामक पद्म है ॥ ४९ ॥

**अकथादित्रिरेखाभिर्हळक्षत्रयकोणके।**
**तन्मध्ये परविन्दुं च सृष्टिस्थितिलयात्मकम् ॥ ५० ॥**
**वामावर्तस्थितं देवि अकथादित्रयं शुभे।**
**शून्यरूपं शिवं साक्षाद् विन्दुं परमकुण्डलीम् ॥ ५१ ॥**
**सार्धत्रिवलयाकारां कोटिविद्युत्समप्रभाम्।**
**वृत्ता कुण्डलिनीशक्तिर्गुणत्रयसमन्विता ॥ ५२ ॥**

अ आदि (अ से लेकर अः तक सोलह स्वर), ककारदि (क से लेकर त

पर्यन्त) सत्रह वर्ण और थादि से लेकर ह पर्यन्त सत्रह वर्ण, इस प्रकार कुल (पचास वर्ण) तीन रेखाओं के ह ळ क्ष इन त्रिकोण में स्थित है। उस त्रिकोण के मध्य में सृष्टि, स्थिति एवं लयात्मक पर बिन्दु है। हे शुभे! वह अ क थ (आदि, कादि एवं थादि) वामावर्त्त स्थित है। वहाँ शिव शून्य रूप है और बिन्दु परमकुण्डली है जो साढ़े तीन वलय वाली है। करोड़ों सूर्य के समान देदीप्यमान इसकी प्रभा है। वह कुण्डलिनी गुणत्रय समन्विता तथा गोलाकार है ॥ ५०-५२॥

**शून्यभागं महादेवि! शिवशक्त्यात्मकं प्रिये।**
**सर्पाकारा शिवं वेष्ट्य सर्वदा तत्र संस्थिता॥ ५३ ॥**

हे महादेवि ! उस ब्रह्मरन्ध्र में शून्यभाग शिव-शक्त्यात्मक है। हे प्रिये ! वहाँ सर्पाकारा कुण्डली शिव को वेष्टित कर सर्वदा स्थित रहती है ॥ ५३ ॥

**शिवशक्त्यात्मकं विन्दुं भुक्तिमुक्तिफलप्रदम्।**
**नादरूपेण सा देवी योनिरूपा सनातनी ॥ ५४ ॥ इति।**

शिवशक्त्यात्मक बिन्दु, भोग और मोक्ष दोनों फल प्रदान करता है। योनिरूपा सनातनी देवी 'नाद' रूप से वहीं स्थित है ॥ ५४ ॥

**गन्धर्वमालिकायाम्—**

**शिवविष्णुब्रह्ममयं विन्दुं योनिं शुचिस्मिते।**
**सर्पोपरि महेशानि विन्दुब्रह्मस्वरूपिणी ॥ ५५ ॥ इति।**
**भवो विन्दुरितिख्यातं भवं च तत्त्रिकोणकम्।**
**भवनं भवसम्बन्धात् जायते भुवनत्रयम् ॥ ५६ ॥ इति।**

अब गन्धर्वमालिका तन्त्र में भी बतलाया गया है—हे शुचिस्मिते! सर्प के ऊपर बिन्दु ब्रह्मस्वरूप है और बिन्दु एवं योनि शिव, विष्णु एवं ब्रह्ममय हैं। भव (अर्थात् शिव) 'बिन्दु' नामक हैं। हे महेशानि! इस प्रकार भव (शिव) तथा त्रिकोणक (योनि) के सम्बन्ध से तीनों भुवनों की उत्पत्ति होती है ॥ ५५-५६ ॥

**अन्यच्च यामले—**

**पञ्चभूतानि देवेशि ! षष्ठं मानसमीश्वरि ।**
**षट्चक्रस्थस्थितान्येव चक्रमार्गे विचिन्तयेत् ॥ ५७ ॥**

अन्य स्थान पर यामल में भी कहा है—हे ईश्वरि ! चक्रमार्ग के छहों चक्रों में पञ्चमहाभूत तथा एक मन की स्थिति है। अतः छह चक्रों में क्रमशः साधक उन्हीं का चिन्तन करे ॥ ५७ ॥

**शिवरूपं सहस्रारं सुखदुःखविवर्जितम् ।**
**मन्दारपुष्परचितं नानागन्धानुमोदितम् ।**

**तत्रोपरि महादेवः सदा तिष्ठति सुन्दरि ॥ ५८ ॥**

सहस्त्रार चक्र को सुख-दुःख से रहित शिव रूप समझे । हे सुन्दरि! नाना गन्धों से सुगन्धित मन्दार पुष्प से विरचित आसन पर सहस्त्रार में महादेव सर्वदा स्थित रहते हैं ॥ ५८ ॥

**ध्यायेत् सदाशिवं देवं शुद्धस्फटिकसन्निभम् ।**
**महारत्नलसद्भूषं दीर्घबाहुं मनोहरम् ॥ ५९ ॥**
**सुखप्रसन्ननयनं स्मेरास्यं सततं प्रिये ।**
**सकुण्डलं महारत्नहारेण च विभूषितम् ॥ ६० ॥**
**गोलपद्मसहस्त्राणां मालया शोभितं वपुः ।**
**अष्टबाहुं त्रिनयनं विभुं पद्मदलेक्षणम् ॥ ६१ ॥**
**किङ्किणीकटिसंयुक्तं नूपुरादिविभूषितम् ।**
**एवं स्थूलं वपुस्तस्य भावयेत् कमलेक्षणे ॥ ६२ ॥**

शुद्ध स्फटिक के समान ऐसे सदाशिव का साधक सर्वदा ध्यान करे । जो महारत्नों से विभूषित हैं । जिनकी भुजायें विशाल हैं और जो अत्यन्त सुन्दर हैं । सुख से जिनके नेत्र अत्यन्त प्रसन्न हैं । हे प्रिये! जो मन्द-मन्द हास से युक्त हैं । जिनके कानों में कुण्डल तथा गले में महारत्न का हार सुशोभित हो रहा है । जिनके आठ बाहू एवं कमल के समान तीन नेत्र हैं । उनका शरीर सहस्त्रों कमलों की माला से भूषित हो रहा है एवं कटि में किङ्किणी और पद में नूपुर शोभा दे रहा है । हे कमलेक्षणे! साधक को सहस्त्रार चक्र में उनके इस प्रकार के स्थूल शरीर का ध्यान करना चाहिए ॥ ५९-६२ ॥

**पद्ममध्ये स्थितं देवं निरीहं शब्दरूपकम् ।**
**एवं सर्वेषु चक्रेषु शक्तिरुद्रौ विचिन्तयेत् ॥ ६३ ॥**

सहस्त्रार पद्म में जो सदाशिव स्थित हैं, वे ईहारहित तथा शब्दस्वरूप हैं । साधक इस प्रकार सभी चक्रों में शक्ति और रुद्र का ध्यान करे ॥ ६३ ॥

**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।**
**ततः परशिवश्चैव षट्शिवाः परिकीर्तिताः ॥ ६४ ॥**

ब्रह्मा, विष्णु, रुद्र, ईश्वर, सदाशिव और इसके बाद पर-शिव—ये छह शिव कहे जाते हैं ॥ ६४ ॥

**विशुद्धौ डाकिनी देवी अनाहते च राकिनी ।**
**लाकिनी मणिपूरस्था काकिनी लिङ्गगोचरे ॥ ६५ ॥**
**आधारे शाकिनी देवी आज्ञायां हाकिनी तथा ।**

**याकिनी ब्रह्मरन्ध्रस्था सर्वकामफलप्रदा ॥ ६६ ॥**

विशुद्ध चक्र में डाकिनी देवी, अनाहत में राकिनी, मणिपूर में लाकिनी, लिङ्गचक्र (स्वाधिष्ठान) में काकिनी तथा आधार में शाकिनी देवी एवं छठे आज्ञा चक्र में हाकिनी देवी और ब्रह्मरन्ध्र में याकिनी देवी रहती हैं, जो समस्त कामनाओं को देने वाली है ॥ ६५-६६ ॥

**ध्यायेत् कुण्डलिनीं देवीं स्वयम्भूलिङ्गसंस्थिताम् ।**
**श्यामां सूक्ष्मां सृष्टिरूपां सृष्टिस्थितिलयात्मिकाम् ।**
**विश्वातीतां ज्ञानरूपां चिन्तयेदूर्ध्ववाहिनीम् ॥ ६७ ॥**

**रक्तामिति सुन्दरीविषये ।**

साधक मूलाधार में स्वयंभूलिङ्ग को वेष्टित करने वाली कुण्डलिनी देवी का ध्यान करे । जो श्यामा, सूक्ष्मा, सृष्टिरूपा, सृष्टिस्थितिलयात्मिका, विश्वातीता एवं ज्ञानरूपा हैं ऐसी ऊपर की ओर जाने वाली कुण्डलिनी का ध्यान करे ॥ ६७ ॥

यहाँ श्यामापद कुण्डलिनी के लिये है । जहाँ 'रक्ताम्' यह पाठ है, वहाँ सुन्दरी के विषय में जानना चाहिये ।

**हूङ्कारवर्णसम्भूता कुण्डली परदेवता ।**
**विभक्तं कुण्डलीदेहमात्मानं हंसमन्त्रतः ॥ ६८ ॥**

परदेवता कुण्डली हुङ्कार वर्ण से उत्पन्न है, इन कुण्डली का देह 'हं सः' इस मन्त्र से दो भागों में प्रविभक्त है ॥ ६८ ॥

**प्रवृद्धवह्निसंयोगे मनसा मारुतैः सह ।**
**ऊर्ध्वं नयेत् कुण्डलिनीं जीवात्मसहितां पराम् ।**
**गच्छन्ती ब्रह्मरन्ध्रं सा भित्त्वा च ग्रन्थिपञ्चकम् ॥ ६९ ॥**

**ग्रन्थिपञ्चकं तु स्वाधिष्ठानमणिपूरकानाहतविशुद्ध्याज्ञान्तानि । तत्राधोग्रन्थिमारभ्योर्ध्वोर्ध्वग्रन्थिपर्यन्तं ग्रन्थिसमाप्तिः ।**

वायु के कारण जब मन का प्रबुद्ध अग्नि के साथ संयोग होता है, तब 'जीवात्मसंहिता परा कुण्डलिनी' को ऊपर ले जाना चाहिये । उस समय पाँच ग्रन्थियों का भेदन कर वह ब्रह्मरन्ध्र में जाती है ॥ ६९ ॥

स्वाधिष्ठान, मणिपूरक, अनाहत, विशुद्ध एवं आज्ञा—ये पाँच ग्रन्थिपञ्चक हैं । इस प्रकार अधोग्रन्थि (आधारचक्र) से लेकर ऊर्ध्वग्रन्थि (आज्ञा चक्र) पर्यन्त समस्त ग्रन्थि की समाप्ति हो जाती है ।

**षट्चक्रमध्यमार्गेण सुषुम्णावर्त्मना तथा ।**
**हंसेन मनुना देवीं सहस्त्रारं सामनयेत् ॥ ७० ॥**

**सदाशिवो महेशानि यत्रास्ते परमेश्वरः ।**
**तत्र गत्वा महादेवी कुण्डली परदेवता ॥ ७१ ॥**
**देवी रूपवती कामसमुल्लासविहारिणी ।**
**मुखारविन्दगन्धेन मोदयित्त्वा परं शिवम् ॥ ७२ ॥**
**प्रबोध्य परमेशानं तत्रोपरि वसेत् प्रिये ।**
**शिवस्य मुखपद्मं हि चुम्बते कुण्डली तदा ॥ ७३ ॥**

हे देवि! छह चक्रों के मध्यमार्ग से तथा सुषुम्ना मार्ग से हंस मन्त्र के साथ साधक कुण्डलिनी को सहस्रार में ले जावे । हे महेशानि! यह वही स्थान है, जहाँ परमेश्वर 'सदाशिव' रहते हैं और काम के समुल्लास से विहार करने वाली वह रूपवती परदेवता कुण्डलिनी वहाँ जाकर सर्वप्रथम अपने मुख के दिव्य गन्ध से पर-शिव को प्रसन्न करती है । फिर परमेशान को जगाकर उनके ऊपर निवास करती है । फिर हे प्रिये! वह कुण्डलिनी भगवान् शिव के मुख कमल का चुम्बन करती है ॥ ७०-७३ ॥

**सदाशिवेन सा देवी रमते क्षणमात्रकम् ।**
**अमृतं जायते तत्र तत्क्षणात् परमेश्वरी ॥ ७४ ॥**
**तदुद्भवामृतं देवि! साक्षात् लाक्षारसोपमम् ।**
**तेनामृतेन देवेशि! तर्पयेत् परदेवताम् ॥ ७५ ॥**

फिर सदाशिव के साथ एक क्षण रमण करती है । हे परमेश्वरि! उस समय तत्क्षण अमृत उत्पन्न होता है । हे देवि! उस रमण से उत्पन्न हुआ वह अमृत साक्षात् लाक्षारस के समान लाल होता है । हे देवेशि! उसी अमृत से पर देवता का तर्पण करे ॥ ७४-७५ ॥

**षट्चक्रदेवतास्तत्र सन्तर्प्याऽमृतधारया ।**
**आनयेत्तेन मार्गेण मूलाधारं क्रमात् सुधीः ॥ ७६ ॥**
**यतस्ततः क्रमेणैव तत्र कुर्यान्मनो लयम् ।**
**एवमभ्यस्यमानस्तु अहन्यहनि पार्वति ॥ ७७ ॥**
**जरामरणदुःखाद्यैर्मुच्यते भवबन्धनैः ।**
**इत्युक्तं परमं योगं योनिमुद्राप्रबन्धनम् ॥ ७८ ॥**

पुनः उसी अमृतधारा से षट्चक्र के देवताओं का भी तर्पण करे । फिर सुधी साधक उसी मार्ग से कुण्डली को मूलाधार में ले आवे । उसी क्रम से उस कुण्डली में अपने मन का लय करता रहे । हे पार्वति! इस प्रकार प्रतिदिन अभ्यास करते हुये साधक, संसार के बन्धनों से तथा जरा-मरण के दुःखों से छूट जाता है । इस प्रकार हमने 'योनिमुद्रा प्रबन्धन' नामक योग कहा ॥ ७६-७८ ॥

**कुलयोषित् कुलं त्यक्त्वा परं पुरुषमेति सा ।**
**रमते सेयमव्यक्ता पुनरेकाकिनी सती ॥ ७९ ॥ इति ।**

वह आधारचक्र में रहने वाली कुल (आधार चक्र) को त्याग कर परं पुरुष (परमात्म स्वरूप सदाशिव) के पास जाती है और वह वहाँ पर अव्यक्त रूप से अकेले सदाशिव से रमण करती है ॥ ७९ ॥

**संकेतपद्धत्याम्—**

**पिण्डं कुण्डलिनी शक्तिः पदं हंसः प्रकीर्तितम् ।**
**रूपं विन्दुरितिख्यातं रूपातीतं तु निष्कलम् ॥ ८० ॥**

**एतेन 'हंस' इत्यक्षरद्वयं देव्याः पादपद्मयुगं ज्ञात्वा हंसेति मन्त्रेण षट्चक्रभेद-क्रमेण सहस्रारं नीत्वा चन्द्रमण्डलामृतेनाप्लाव्य तदमृतेन षट्चक्रस्थशिवशक्त्या-दीनाप्लाव्य सोऽहमिति मन्त्रेण स्थानं नयेदित्यर्थः ।**

संकेतपद्धति में भी बतलाया गया है—'पिण्ड' कुण्डलिनी शक्ति है, 'पद' हंस कहा जाता है, बिन्दु 'रूप' है और निष्कल 'रूपातीत' है ॥ ८० ॥

इससे यह सिद्ध हुआ कि 'हंसः' यह वह अक्षर देवी का पद है । इसे जान कर 'हंसः' इस मन्त्र से षड्चक्र भेद क्रम से कुण्डली को सहस्रार में ले जावे । फिर चन्द्रमण्डल से अमृत निकालकर उस अमृत से षट्चक्रस्थ शिव एवं शक्ति को आप्लावित करते हुये पुनः 'सोऽहम्' इस मन्त्र से अपने स्थान पर ले आवे ।

**तथा चोक्तं योगतत्त्वे—**

**हंसेन मनुना देवीं सहस्रारं समानयेत् ।**
**सोऽहं मन्त्रेण च पुनः स्वस्थानमानयेत् सुधीः ॥ ८१ ॥ इति ।**

**स्वस्थानं = मूलाधारम् ।**

जैसा कि योगतत्त्व में कहा गया है—सुधी साधक 'हंस' इस मन्त्र से कुण्डलिनी को सहस्रार में ले जावे और पुनः 'सोहम्' इस मन्त्र से अपने स्थान (मूलाधार) पर ले आवे ॥ ८१ ॥

स्वस्थानम् अर्थात् मूलाधार में (ले आए)।

**समयातन्त्रे देवीवाक्यम्—**

**देवदेव! महादेव! सृष्टिस्थित्यन्तकारक ।**
**मूर्ध्नि पद्मं सहस्रारं रक्तवर्णमधोमुखम् ॥ ८२ ॥**
**तन्मध्यस्थं गुरुं ध्यायेत् शान्तरूपं सशक्तिकम् ।**
**मूलाधारे महाशक्तिः कुण्डलीरूपधारिणी ॥ ८३ ॥**
**अधोमुखं क्रमेणैव सर्वं पद्मं विभावयेत् ।**

**अंसयोश्च हरिं कृष्णं वैष्णवाचमनं त्विदम् ।**
**केशवाद्याश्चतुर्थ्यन्ता नमोऽन्ताः प्रणवादिकाः ॥ ८८ ॥ इति ।**

फिर वेदादि (ॐपूर्वक) सङ्कर्षणादि मन्त्रों से मुखादि का अङ्गुष्ठ और अङ्गुलियों से इस प्रकार न्यास करे—ॐ सङ्कर्षणाय नमः मुख में, ॐ वासुदेवप्रद्युम्नाभ्यां नमः नसोः, ॐ अनिरुद्धपुरुषोत्तमाभ्यां नमः अक्ष्णोः, ॐ अधोक्षजनृसिंहाभ्यां नमः कर्णयोः, ॐ अच्युताय नमः नाभौ, ॐ जनार्दनाय नमः हृदये, ॐ उपेन्द्राय नमः मूर्ध्निः, ॐ हरिकृष्णाभ्यां नमः अंसयोः । इस प्रकार न्यास कर प्रणवादि तदनन्तर चतुर्थ्यन्त केशवादि से आचमन करे । यथा—ॐ केशवाय नमः, ॐ नारायणाय नमः एवं ॐ माधवाय नमः—यह वैष्णव सम्प्रदाय का आचमन है ॥ ८६-८८ ॥

**आगमान्तरे—**

**प्राग्वक्त्रश्चोदङ्मुखः सूपवीती**
**बध्वा चूडां जानुमध्यस्थबाहुः ।**
**तोयं चेक्षन् नूपविष्टोऽथ मौनी**
**स्यादाप्रह्वस्त्वेकधाराचमिष्यन् ॥ ८९ ॥**

आगमान्तर में भी बतलाया गया है—साधक पूर्वाभिमुख अथवा उत्तराभिमुख होकर उपवीत धारण किये हुये, शिखा बाँध कर, जानु के मध्य में दोनों बाहु स्थापित कर, बैठे हुये, मौन होकर, हाथ में जल लेकर, विनम्र मुद्रा में एक मात्र जल से आचमन करे ॥ ८९ ॥

**अदुष्टरसगन्धाद्यैरकीटाफेनबुद्बुदैः ।**
**अनुष्णैरम्बुभिः शुद्धैराचमेदभिवीक्षितैः ॥ ९० ॥**

जिस शुद्ध जल का रस दूषित न हो, जिसमें किसी प्रकार का गन्ध न हो, जो कटि फेन एवं बुद्बुद् से रहित हो, उष्मा न हो ऐसे निर्दोष जल से आचमन करना चाहिये ॥ ९० ॥

**हृत्कण्ठास्यगताः पुनन्ति विबुधा नापो द्विजादीन् क्रमात्**
**त्रिःपीता वृषलस्त्रियावपि सकृत् कुण्डादिलोमादिकान् ।**
**आचम्य त्रिरपस्त्रिवेदपुरुषाः प्रीणन्ति निर्मार्ष्टिर्यत्**
**द्विःसाष्टार्वषडङ्गयज्ञपुरुषाः प्रोताः स्युरङ्गुष्ठतः ॥ ९१ ॥**

ब्राह्मण हृद्गत जल से, क्षत्रिय कण्ठगत जल से तथा वैश्य मुखगत जल से तीन बार पीने पर शुद्ध होता है । शूद्र, स्त्री तथा कुण्डादिलोमादि जाति के व्यक्ति तीन बार एक-एक जल पीने से शुद्ध हो जाते हैं । जो जल से मार्जन तीन बार

किया जाता है अथवा तीन बार आचमन किया जाता है; उससे त्रिवेद पुरुष तृप्त होते हैं। षडङ्ग तथा यज्ञपुरुष अङ्गुष्ठ प्रदत्त जल से प्रसन्न होते हैं ॥ ९१ ॥

**प्रीणात्यर्कमनामिका नयनयोः स्पर्शात्तथाङ्गुष्ठयुक्**
**साङ्गुष्ठा त्वथ तर्जनी सममिता घ्राणद्वये मारुतम् ।**
**अङ्गुष्ठेन कनिष्ठिका श्रवणयोराशाश्च नाभे वसू-**
**नात्मानं तु हृदंसयोर्गिरमृषीन् मूर्ध्नः समस्ताङ्गुलैः ॥ ९२॥ इति।**

अङ्गुष्ठयुक्त अनामिका द्वारा नेत्र का स्पर्श भगवान् सूर्य को प्रसन्न करता है। अङ्गुष्ठयुक्त तर्जनी द्वारा दोनों घ्राण का स्पर्श वायु को प्रसन्न करता है और अङ्गुष्ठ युक्त कनिष्ठा के द्वारा श्रवण का स्पर्श दिशाओं को प्रसन्न करता है। नाभि में स्पर्श वसुओं तथा आत्मा को तृप्त करता है। समस्त अङ्गुलियों से शिर, हृदय, दोनों कन्धा तथा वाणी का स्पर्श ऋषियों को प्रसन्न करता है ॥ ९२ ॥

**यथा मन्त्रमहोदधौ (२१.५५-७९)**

**आस्ये नसोः प्रदेशिन्यानामया नेत्रकर्णयोः ।**
**कनिष्ठया नाभिदेशेंऽगुष्ठः सर्वत्र संयुतः ॥ ९३ ॥**

मन्त्रमहोदधि में भी ऐसा ही कहा है—मुख और नासिका का स्पर्श अङ्गुष्ठ युक्त प्रदेशिनी से करे। अङ्गुष्ठ युक्त अनामिका से नेत्र एवं कान का स्पर्श करे और अङ्गुष्ठ युक्त कनिष्ठा से नाभिदेश का स्पर्श करे तथा सभी अंगुलियों से अंगूठा मिलाकर सर्वत्र न्यास करना चाहिए ॥ ९३ ॥

**तलेन हृदयं न्यस्य सर्वाभिर्मस्तकेंऽसयोः ।**

**शैवाचमनकथनम्**

**आत्मविद्याशिवैस्तत्त्वैः स्वाहान्तैः प्रपिबेदपः ॥ ९४ ॥**

शैवों की आचमन विधि—हाथ के तलवे से हृदय का न्यास करे, सभी अङ्गुलियों से मस्तक और दोनों कन्धों में न्यास करे और 'आत्मविद्याशिवतत्त्वाय स्वाहा' इस मन्त्र से आचमन करे ॥ ९४ ॥

**हां हीं हूमादिमैः शैवे शाक्ते वाग्बीजपूर्वकैः ।**
**क्षालनादिकमङ्गुल्याः स्पर्शोऽपि स्यादमन्त्रतः ॥ ९५ ॥**

शैव याग में 'हां हीं हूं' इस मन्त्र से और शक्ति याग में वाग्बीज (ऐं ह्रीं क्लीं) मन्त्र से न्यास करे। इस प्रकार साधक अङ्गुलियों का प्रक्षालन तथा स्पर्श बिना मन्त्र के ही करे ॥ ९५ ॥

**विमर्श**—'हां आत्मतत्त्वाय स्वाहा, हीं विद्यातत्त्वाय स्वाहा, हूं शिवतत्त्वाय

स्वाहा' इन मन्त्रों से शैवों को तीन बार आचमन करना चाहिए । 'ऐं आत्मतत्त्वाय स्वाहा, ह्रीं विद्यातत्त्वाय स्वाहा, क्लीं शिवतत्त्वाय स्वाहा'—इन मन्त्रों से शाक्तों को आचमन करना चाहिए ।

**एवमाचम्य सामान्यार्घेण द्वारं प्रपूजयेत् ।**
**तारः खं वह्निसर्गाढ्यं द्वारार्घ्यं साधयामि च ॥ ९६ ॥**
**उक्तास्त्रमनुना पात्रं क्षालयेत् पूरयेन्मृदा ।**
**तीर्थान्यावाह्य गन्धादीन् निक्षिपेद् निगमादिना॥ ९७ ॥**

इस प्रकार आचमन कर सामान्य अर्घ से द्वार की पूजा करे । तारः (ॐ) खं (हं) वह्नि (रं) सर्ग () द्वारार्घ्यं साधयामि (च) इस मन्त्र से तथा अस्त्र मन्त्र से पात्र प्रक्षालन करे और उसमें तीर्थादिकों का आवाहन करे ॥ ९६-९७ ॥

**धेनुमुद्रां प्रदर्श्याऽथ मूलेनाष्टाभिमन्त्रयेत् ।**
**सामान्यार्घविधिः प्रोक्तस्तेनार्चेद् द्वारदेवताः ॥ ९८ ॥**

धेनुमुद्रा प्रदर्शित करे और मूलमन्त्र से आठ बार अभिमन्त्रित करे । हमने यह सामान्य अर्घविधि कही है । इससे द्वार देवता का पूजन करे ॥ ९८ ॥

### द्वारपालपूजनम्

**द्वारमस्त्राम्बुना प्रोक्ष्य गणेशं चोर्ध्वतो यजेत् ।**
**महालक्ष्मीं दक्षभागे वामभागे सरस्वतीम् ॥ ९९ ॥**

अस्त्र के जल से द्वार का प्रोक्षण करे । उस पर गणेश की अर्चना करे । द्वार के दाहिनी ओर महालक्ष्मी की बाईं ओर सरस्वती की अर्चना करे ॥ ९९ ॥

**पुनर्दक्षे यजेद् विघ्नं गङ्गां च यमुनामपि ।**
**पुनर्वामे क्षेत्रपालं स्वःसिन्धुयमुने अपि ॥ १०० ॥**

फिर द्वार के दाहिनी ओर विघ्न गङ्गा तथा यमुना की अर्चना करे । बाईं ओर क्षेत्रपाल स्वः समुद्र तथा यमुना की पूजा करे ॥ १०० ॥

**पुनर्दक्षे च धातारं विधातारं तु वामतः ।**
**तद्वन्निधीशं खपद्मौ ततोऽर्चेद् द्वारपालकान् ॥ १०१ ॥**

फिर दाहिनी ओर धाता, विधाता की, बाईं ओर निधीश एवं ख पद्म की, फिर द्वारपालों की अर्चना करे ॥ १०१ ॥

**ये द्वारपाला देवानां ते कथ्यन्ते पृथग्विधाः ।**
**नन्दः सुनन्दश्चण्डश्च प्रचण्डो बलसञ्ज्ञकः ॥ १०२ ॥**

**प्रबलो भद्रसञ्ज्ञश्च सुभद्रो वैष्णवा मताः ।**
**नन्दिसञ्ज्ञो महाकालो गणेशो वृषभस्तथा ॥ १०३ ॥**
**भृङ्गीरी ह्यभिधः स्कन्दः पार्वतीशाभिधः परः ।**
**चण्डेश्वरा इमे शैवाः शाक्तेया मातरः स्मृताः ॥ १०४ ॥**

**मातरः = ब्राह्मयाद्या इति ।**

अब जो देवताओं के द्वारपाल हैं उन्हें अलग-अलग कह रहा हूँ । नन्द, सुनन्द, चण्ड, प्रचण्ड, बल, प्रबल, भद्र एवं समुद्र—ये विष्णु के द्वारपाल हैं । नन्दी, महाकाल, गणेश, वृषभ, भृङ्गारि, अभिध, स्कन्द तथा चण्डेश्वर—ये पार्वतीश सदाशिव के द्वारपाल हैं । समस्त ब्राह्मी आदि मातृकायें शक्ति के द्वारपाल हैं ॥ १०२-१०४ ॥

**वक्रतुण्डश्चैकदंष्ट्रो महोदरगजाननौ ।**
**लम्बोदरश्च विकटो विघ्नराजश्च सप्तमः ॥ १०५ ॥**
**धूम्रराजो गणपतेर्द्वारपाला इमे स्मृताः ।**
**इन्द्रो यमोऽथ वरुणः कुबेरस्त्रिपुरामते ॥ १०६ ॥**

वक्रतुण्ड, एकदंष्ट्र, महोदर, गजानन, लम्बोदर, विकट और सातवाँ विघ्नराज और धूम्रराज—ये आठ गणपति के द्वारपाल हैं । इन्द्र, यम, कुबेर एवं वरुण—ये चार त्रिपुरा के द्वारपाल हैं ॥ १०५-१०६ ॥

**द्वारपूजां विधायेत्थं विघ्नानुत्सारयेत् त्रिधा ।**
**आत्मानं शङ्करं ध्यात्वा दृष्ट्या दिव्यान् निवारयेत्॥ १०७ ॥**

**शङ्करमित्युपलक्षणम् । स्वोपासितदेवतारूपमिति पूज्यपूजकयोरभेदात् ।**

साधक इस प्रकार द्वार पूजा सम्पन्न कर (दिव्य, अन्तरिक्ष एवं भौम) तीन प्रकार से विघ्नों का उत्सारण करे । अपने को स्वयं शङ्कर समझते हुए ध्यान कर दिव्य दृष्टि से विघ्नों को दूर करे ॥ १०७ ॥

यहाँ शङ्कर उपलक्षण है—अपने द्वारा उपासित देवता रूप अपने को समझे । क्योंकि पूज्य पूजक में अभेद सम्बन्ध हैं ।

**नभःस्थानेऽर्घपानीयैः पार्ष्णिघातैर्धरागतान् ।**
**अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ॥ १०८ ॥**
**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।**
**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ १०९ ॥**
**सर्वेषामविरोधेन ब्रह्मकर्म समारम्भे ।**
**विनिवार्याखिलान् विघ्नान् इदं मन्त्रद्वयं पठन्॥ ११० ॥**

आकाशीय विघ्नों को अर्घ के जल से और अपने पार्ष्णि के आघात से पृथ्वी के विघ्नों को दूर करे। तीन विघ्नोत्सारण के प्रकार हैं। इसके वाद विघ्न निवारण कर 'अपसर्पन्तु' इत्यादि से आरम्भ कर 'ब्रह्मकर्म समारभे' पर्यन्त दो मन्त्र को पढ़कर विघ्नों का उत्सारण करें ॥ १०८-११० ॥

**अवकाशप्रदानायान्तरायाणां विनिर्गमे ।**
**सङ्कोचयित्त्वा वामाङ्गं गृहं दक्षपदा विशेत् ।**
**क्षेत्रपालं च धातारं नैर्ऋत्यां दिशि पूजयेत् ॥ १११ ॥**

**पञ्चाशत्संख्याकानां क्षेत्रपालानां नामानि पुरश्चरणपटले लिखामस्तत्पूजा च ।**

विघ्नों को जाने के लिये उन्हें इस प्रकार रास्ता देवे तथा अपने बायें अङ्ग को सिकोड़ लेवे। दाहिने पैर से यज्ञभूमि में प्रवेश करे और नैर्ऋत्यकोण में क्षेत्रपाल तथा धाता की पूजा करे ॥ १११ ॥

पचास क्षेत्रपालों के नाम और उनकी पूजा पुरश्चरणपटल में लिखी जाएगी।

**पूजागृहप्रवेशोत्तरमासनादिविधिः**

**अनन्तं विमलं पद्मं ङेन्तासननमोऽन्वितम् ।**
**जपं निदध्याद् दर्भांस्त्रीन् कुशचर्माम्बरासने ॥ ११२ ॥**

अनन्ताय नमः, विमलाय नमः, पद्माय नमः—इन मन्त्र का जप कर कुशा, चर्म तथा वस्त्र के आसन पर तीन कुशा स्थापित करे ॥ ११२ ॥

**काष्ठपल्लववंशाश्मगोशकृत्तृणमृण्मयम् ।**
**विषमं कठिनं मन्त्री त्यजेदासनमाधिजम् ॥ ११३ ॥**

काष्ठ, पल्लव, बाँस, पत्थर, गोबर, तृण और मिट्टी का आसन तथा विषम एवं कठिन आसन व्याधि उत्पन्न करते हैं इसलिये इनको वर्जित करे ॥ ११३ ॥

**आसनमन्त्र ऋष्यादयस्तन्त्रान्तरे—**

**तदासनस्पर्शिमुशन्ति कूर्मं**
**छन्दस्तथा स्यात् सुतलं सुधीरैः ।**
**प्रोक्ता तु पृथ्वी किल देवतास्य**
**जपादिकर्मण्युपयोग युक्तः ॥ ११४ ॥**

**पृथ्वि त्वयेति मन्त्रेण प्रागुदग्वा समाविशेत् ।**
**कुर्यात् स्वस्तिकपाथोजवीरादिष्वेकमासनम् ॥ ११५ ॥**

आसन के मन्त्र तथा ऋषि आदि अन्य तन्त्रों में इस प्रकार कहे गये हैं—आसन के कूर्म ऋषि हैं, सुतलं छन्द है, पृथ्वी देवता है और जपादि कर्म के लिये

इनका विनियोग कहा गया है । मन्त्र—

'पृथ्वि! त्वया धृता लोका देवि! त्वं विष्णुना धृता ।
त्वं च धारय मां देवि ! पवित्रं कुरु चासनम् ॥'

इत्यादि मन्त्र पढ़कर पूर्वाभिमुख अथवा उत्तराभिमुख आसन पर बैठे । स्वास्तिक, पद्मासन अथवा वीरासनों में कोई एक आसन में बैठे ॥ ११४-११५ ॥

**पौष्यं दारुमयं वस्त्रं चर्मकौशेयवाससम् ।
षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकम् ॥ ११६ ॥ इति ।**

आसन छह प्रकार के कहे गये हैं—१. पुष्पनिर्मित, २. काष्ठनिर्मित, ३. वस्त्र निर्मित, ४. चर्मनिर्मित, ५. कुशानिर्मित, ६. रेशमी वस्त्र निर्मित इन आसनों से देवता प्रसन्न होते हैं ॥ ११६ ॥

विशेष प्रकार के आसन और उनके फल का निरूपण पुरश्चरणपटल में लिखा जाएगा ।

**आसनविशेषं तत्फलं च पुरश्चरणपटले लिखामः ।**

**अर्घ्यपाद्याचमनीयमधुपर्काचमनस्य च ।
पञ्च पात्राणि पुष्पादीन् स्थापयेत् स्वीयदक्षिणे ॥ ११७ ॥**

अर्घ, पाद्य, आचमनीय, मधुपर्क तथा आचमन—इन पाँच पात्रों को तथा पुष्पादिकों को अपने दाहिने स्थापित करे ॥ ११७ ॥

**वामेऽम्बुपात्रं व्यजनं छत्रमादर्शचामरे ।
कृताञ्जलिर्वामदक्षे गुरून् गणपतिं नमेत् ॥ ११८ ॥**

बाई ओर जलपात्र, पङ्खा, छत्र, आदर्श (शीशा) एवं चामर स्थापित करे । फिर हाथ जोड़कर बाई ओर गुरु को प्रणाम करे तथा दाहिनी ओर गणपति को नमस्कार करे ॥ ११८ ॥

**न्यस्यास्त्रं करयोस्तालत्रयं दिग्बन्धनं चरेत् ।
अङ्गुष्ठयुक्ततर्जन्या सुदर्शनमनुं जपन् ॥ ११९ ॥**

सुदर्शनमन्त्रकथनम्

**प्रणवो हृदये ङेऽन्तं सुदर्शनपदं पुनः ।
अस्त्राय च फडित्युक्तो मन्त्रो द्वादशवर्णवान् ॥ १२० ॥
विधाय वह्निप्राकारं भूताजेयो भवेत् सुधीः । इति ।
चन्दनागरुकर्पूरैरन्तरं धूपयेत्ततः ॥ १२१ ॥**

अस्त्रमन्त्र से न्यास करे । फिर दोनों हाथों से ताली बजाकर दिग्बन्धन करे ।

अङ्गुष्ठ युक्त तर्जनी से सुदर्शन मन्त्र का जप करते हुये प्रणव से हृदय में न्यास करे। फिर 'ॐ सुदर्शनाय नमः अस्त्राय फट्' इस बारह वर्ण वाले मन्त्र से वह्नि का प्राकार निर्माण करे। ऐसा करने से साधक अजेय हो जाता है, फिर चन्दन अगुरु एवं कपूर का धूप देवे ॥ ११९-१२१ ॥

**प्राणानायम्य तारेण पूरकुम्भकरेचकैः।**
**द्वात्रिंशता चतुःषष्ट्या क्रमात् षोडशसंख्यया।**
**देवार्चा योग्यतावाप्त्यै भूतशुद्धिं समाचरेत् ॥१२२॥ इति।**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे स्नानादिकर्मकथनं नाम अष्टमः पटलः ॥ ८ ॥**

...~❀~...

बुद्धिमान प्रणव के सहित बत्तीस मात्रा से पूरक प्राणायाम करके, प्रणव सहित चौंसठ मात्रा से कुम्भक करे और प्रणव सहित सोलह मात्रा से रेचक प्राणायाम करे। फिर देवता की अर्चा में योग्यता प्राप्त करने के लिये मन्त्रज्ञ साधक भूतशुद्धि करे ॥ १२२ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में स्नानादिकर्मकथन नामक अष्टम पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ ८ ॥**



# नवमः पटलः

## पूजाक्रमविधानम्

**अथ भूतशुद्धिः—**

**मूलाधारे स्थितां देवीं कुण्डलीं परदेवताम् ।**
**विसतन्तुनिभां विद्युत्प्रभां ध्यायेत् समाहितः ॥ १ ॥**

अब भूतशुद्धि का विधान कहते हैं—साधक समाहित चित्त से मूलाधार में स्थित-मृणालतन्तु के समान श्वेत वर्ण वाली देदीप्यमान एवं विद्युत् के समान चमकीली पर-देवता कुण्डली का ध्यान करे ॥ १ ॥

**मूलाधारात् समुत्थाप्य सङ्गतां हृदयाम्बुजे ।**
**सुषुम्णा मार्गमाश्रित्याऽऽदाय जीवं हृदम्बुजात् ॥ २ ॥**
**प्रदीप्तकलिकाकारां ब्रह्मरन्ध्रगतां स्मरेत् ।**
**जीवं ब्रह्मणि संयोज्य हंसमन्त्रेण साधकः ॥ ३ ॥**
**पादादिब्रह्मरन्ध्रान्तं स्थितं भूतगणं स्मरेत् ।**
**स्ववर्णबीजाकृतिभिर्युक्तं तद्विधिरुच्यते ॥ ४ ॥**

उसे मूलाधार से उठाकर हृदयकमल वाले चक्र में स्थापित करे । फिर उस हृत्कमल से जीव को सुषुम्णा मार्ग द्वारा निकाल कर प्रदीप्त कली के समान आकार वाली कुण्डली के साथ ब्रह्मरन्ध्र में ध्यान करे । तदनन्तर बुद्धिमान साधक जीव को ब्रह्म में हंसः मन्त्र (सोऽहं) से मिलाकर पैर से ब्रह्मरन्ध्र पर्यन्त पञ्चभूतों का स्मरण करे जो अपने-अपने वर्ण की आकृतियों से युक्त हैं । अब उसके उत्थान की विधि कहते हैं ॥ २-४ ॥

**पादादिजानुपर्यन्तं चतुःकोणं सवज्रकम् ।**
**भूबीजाख्यं स्वर्णवर्णं स्मरेदवनिमण्डलम् ॥ ५ ॥**

पाद के आदि से लेकर जानुपर्यन्त वज्र (कठिन्य) युक्त चतुःकोण भू बीज (लं) है जिसका वर्ण सुवर्ण के समान है । इस प्रकार विद्वान् साधक अवनिमण्डल का स्मरण करे ॥ ५ ॥

**जान्वादिनाभिचन्द्रार्धनिभं पद्मद्वयाङ्कितम् ।**
**वं बीजयुक्तं श्वेताभमम्भसो मण्डलं स्मरेत् ॥ ६ ॥**

पुनः जानु से लेकर नाभिपर्यन्त दो पद्मों से युक्त 'वं' बीज वाला चन्द्राकार श्वेत वर्ण वाला जल का मण्डल है उसका स्मरण करे ॥ ६ ॥

**नाभेर्हृदयपर्यन्तं त्रिकोणं स्वस्तिकान्वितम् ।**
**रं बीजेन युतं रक्तं स्मरेत् पावकमण्डलम् ॥ ७ ॥**

फिर नाभि से लेकर हृदय पर्यन्त त्रिकोण स्वस्तिक चिह्न युक्त 'रं' बीज वाला रक्त वर्ण का पावक मण्डल है उसका स्मरण करे ॥ ७ ॥

**हृदो भ्रूमध्यपर्यन्तं वृत्तं षड्विन्दुलाञ्छितम् ।**
**यं बीजयुक्तं धूम्राभं नभस्वन्मण्डलं स्मरेत् ॥ ८ ॥**

हृदय से लेकर भ्रूपर्यन्त वृत्त एवं षड् बिन्दुओं से युक्त 'यं' बीज वाला धूम्र वर्ण की आभा वाला वायु का मण्डल है उसका स्मरण करे ॥ ८ ॥

**आब्रह्मरन्ध्रं भ्रू मध्याद् वृत्तं स्वच्छं मनोहरम् ।**
**हं बीजयुक्तमाकाशमण्डलं प्रविचिन्तयेत् ॥ ९ ॥**

फिर भ्रूमध्य से ब्रह्मरन्ध्रपर्यन्त गोलाकार स्वच्छवर्ण वाला अत्यन्त मनोहर 'हं' बीज से युक्त आकाश मण्डल है उसका स्मरण करे ॥ ९ ॥

**यद् हस्तपायूपस्थवाक् क्रमाद् ध्येया धरादिगाः ।**
**स्वकीयविषयैर्युक्ता गमनग्रहणादिभिः ॥ १० ॥**

पृथ्वी मण्डल से लेकर आकाश मण्डल तक क्रमशः हाथ, पायू, उपस्थ तथा वाणी का अपने-अपने विषयों से गमन एवं ग्रहणादि से युक्त ध्यान करे ॥ १० ॥

**घ्राणं च रसना चक्षुः स्पर्शनं श्रोत्रमिन्द्रियम् ।**
**क्रमाद् ध्येयं धरादिस्थं गन्धादिगुणसंयुतम् ॥ ११ ॥**

घ्राण, रसना, चक्षुः, स्पर्श तथा श्रोत्र इन्द्रियों को क्रमशः पृथ्वी, जल, तेज, वायु तथा आकाश में ध्यान करे । ये क्रमशः गन्ध, रस, तेज, स्पर्श तथा शब्द गुणों से युक्त है ॥ ११ ॥

**ब्रह्मविष्णुशिवेशानाः सदाशिव इतीरिताः ।**
**धरादिभूतसङ्घेशा ध्येयास्तन्मण्डलेषु ते ॥ १२ ॥**

पृथ्वी, जल, तेज, वायु और आकाश के अधीश्वर क्रमशः ब्रह्मा, विष्णु, शिव, ईशान तथा सदाशिव कहे गये हैं उनका तत्तन्मण्डलों पर ध्यान करे ॥१२॥

**निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्चतुर्थिका ।**
**शान्त्यतीतेति पञ्चैव कला ध्येया धरादिगाः ॥ १३ ॥**

निवृत्ति, प्रतिष्ठा, विद्या, चौथी शान्ति और पाँचवी शान्त्यतीता—ये पाँच कलायें कही गई हैं जिनका पृथिवी आदि में ध्यान करे ॥ १३ ॥

**समानोदानव्यानाश्चापानप्राणौ च वायवः ।**
**धरादिमण्डलगताः पञ्च ध्येयाः क्रमादिमे ॥ १४ ॥**

समान, उदान, व्यान, अपान और प्राण ये पाँच वायु हैं जो क्रमशः धरादि मण्डल में रहने वाले हैं अतः क्रमशः इनका ध्यान करे ॥ १४ ॥

**एवं भूतानि सञ्चिन्त्य प्रत्येकं प्रविलापयेत् ।**
**भुवं जले जलं वह्नौ वह्निं वायौ नभस्यमुम् ॥ १५ ॥**

इस प्रकार पञ्चभूतों का ध्यान कर इन पाँचों का क्रमशः इस प्रकार विलय करे—पृथ्वी का विलय जल में, जल का अग्नि में, अग्नि का वायु में तथा वायु का आकाश में विलय करे ॥ १५ ॥

**विलाप्य खमहङ्कारे महातत्त्वेऽप्यहंकृतिम् ।**
**महान्तं प्रकृतौ मायामात्मनि प्रविलापयेत् ॥ १६ ॥**

फिर आकाश का अहङ्कार में, उस अहङ्कार का महत्तत्व में, महान् का प्रकृति में तथा उस माया का आत्मा में विलय करे ॥ १६ ॥

**शुद्धसंविन्मयो भूत्त्वा चिन्तयेत् पापपूरुषम् ।**
**दक्षकुक्षिस्थितं कृष्णमङ्गुष्ठपरिमाणकम् ॥ १७ ॥**

इस प्रकार साधक शुद्ध ज्ञानमय होकर पापपुरुष का स्मरण करे । वह पापपुरुष दक्षिण कुक्षि में निवास करता है, वह वर्ण से काला है । उसके शरीर का परिमाण अङ्गुष्ठ मात्रा वाला है ॥ १७ ॥

**विप्रहत्याशिरोयुक्तं कनकस्तेयबाहुकम् ।**
**मदिरापानहृदयं गुरुतल्पकटिद्वयम् ॥ १८ ॥**

उसका शिर ब्रह्महत्या से युक्त है और हाथ सुवर्णस्तेय से युक्त है एवं पेट मदिरापान से तथा दोनों कटियाँ गुरुतल्पग (गुरुस्त्रीगामी) पाप से युक्त हैं ॥ १८॥

**पापिसङ्गपदद्वन्द्वमुपपातकरोमकम् ।**
**खड्गचर्मधरं दुष्टमधोवक्त्रं सुदुःसहम् ॥ १९ ॥**

दोनों पैर पापियों के साथ से युक्त हैं तथा समस्त रोयें में उपपातकों का

निवास है । वह ढाल एवं तलवार लिये हुये हैं । द्रष्ट है और नीचे मुख किये रहता है तथा बहुत क्रूर है ॥ १९ ॥

**वायुबीजं स्मरन् वायुं सम्पूर्य्यैनं विशोषयेत्।**
**स्वशरीरयुतं मन्त्री वह्निबीजेन निर्दहेत् ॥ २० ॥**
**कुम्भके परिजप्तेन ततः पापनरोद्भवम् ।**
**बहिर्भस्म समुत्सार्य वायुबीजेन रेचयेत् ॥ २१ ॥**
**सुधाबीजेन देहोत्त्थं भस्म संप्लावयेत् सुधीः ।**
**भूबीजेन घनीकृत्य भस्म तत् कनकाण्डवत् ॥ २२ ॥**

साधक वायुबीज का स्मरण कर वायुबीज (वं) से उसे पूर्ण कर उस पाप पुरुष को सुखा देवे । फिर उसे वह्नि बीज (रं) से उस पाप शरीर को जला देवे । फिर उसपाप नर के भस्म को कुम्भक के जप द्वारा बाहर एकत्र करे तदनन्तर वायु बीज के द्वारा उसे बाहर निकाले । फिर साधक सुधा बीज (वं) से पाप पुरुष के देहोत्थ भस्म को डुबो देवे। तदनन्तर भू बीज (लं) से उस भस्म को सुवर्ण के अण्डे के समान् स्थापित कर घना बना देवे ॥ २०-२२ ॥

**विशुद्धमुकुराकारं जपन् बीजं विहायसः ।**
**मूर्धादिपादपर्यन्तान्यङ्गानि रचयेत् सुधीः ॥ २३ ॥**

फिर विशुद्ध मुकुर के आकार वाले आकाश बीज (हं) का जप करते हुये उसके शिर से लेकर पादपर्यन्त अङ्गों की रचना करे ॥ २३ ॥

**आकाशादीनि भूतानि पुनरुत्पादयेत् चितः ।**
**सोऽहं मन्त्रेण चात्मानमानयेद् हृदयाम्बुजे ॥ २४ ॥**

फिर उस शुद्ध शरीर में आकाशादि पञ्चभूतों की उत्पत्ति करे । फिर उसके हत्कमल में 'सोऽहम्' इस मन्त्र से 'आत्मा' का स्थापन करे ॥ २४ ॥

**कुण्डली जीवमादाय परसङ्गात् सुधामयम् ।**
**संस्थाप्य हृदयाम्भोजे मूलाधारगतं स्मरेत् ॥ २५ ॥**

फिर परब्रह्म के संयोग से कुण्डली द्वारा सुधामय जीव लेकर हृदयाम्भोज में उसे स्थापित करे फिर मूलाधार में कुण्डली का स्मरण करे ॥ २५ ॥

**भूतशुद्धिं विधायैवं प्राणस्थापनमाचरेत् ।**
**प्राणप्रतिष्ठामन्त्रस्य विधानमभिधीयते ॥ २६ ॥**

इस प्रकार भूतशुद्धि कर जीव में प्राणस्थापन करे । अब प्राणप्रतिष्ठा मन्त्र का विधान करता हूँ ॥ २६ ॥

**प्राणमन्त्रस्य मुनयो ब्रह्मविष्णुमहेश्वराः ।**
**उक्तमृग्यजुषं साम छन्दः छन्दोविशारदैः ॥ २७ ॥**

इस प्राण मन्त्र के ब्रह्मा, विष्णु एवं महेश्वर ऋषि हैं ऋग्यजुः साम छन्द हैं । ऐसा छन्द विशारदों ने कहा है ॥ २७ ॥

**चैतन्यरूपा प्राणात्मा देवताशक्तिरीरिता ।**
**पाशो बीजं त्रपा शक्तिर्विनियोगोऽसु संस्थितौ ॥ २८ ॥**

चैतन्यरूपा प्राणात्मा देवता शक्ति कहे गये हैं, पाश बीज है, त्रपाशक्ति है । प्राण प्रतिष्ठा के लिये विनियोग है ॥ २८ ॥

**ऋषीन् शिरसि वक्त्रेषु छन्दांसि देवता हृदि ।**
**गुह्ये बीजं पदोः शक्तिं न्यस्य कुर्यात् षडङ्गकम् ॥ २९ ॥**

ऋषियों का शिर में तथा छन्दों का मुख पर, देवता का हृदय में, पाश बीज से गुह्य का और शक्ति से दोनों पदों का न्यास कर षडङ्गन्यास करे ॥ २९ ॥

**कवर्गं नभ आद्यैर्हृच्चशब्दाद्यैः शिरः स्मृतम् ।**
**टश्रोत्राद्यैः शिखा प्रोक्ता तवागाद्यैस्तनुच्छदम् ॥ ३० ॥**
**पवक्तव्यादिभिर्नेत्रमस्त्रं येनान्तरिन्द्रियैः ।**
**आत्मनेऽन्तान् मनूनङ्गान् विन्यसेद् हृदयादिषु ॥ ३१ ॥**

आदि में नभ आदि शब्द फिर कवर्ग से हृदय का, शब्दादि युक्त चवर्ग से शिर का, आदि में श्रोत्र आदि युक्त टवर्ग से शिखा का, फिर वागादि तथा तवर्ग से कवच का, वक्तव्यादि एवं पवर्ग से नेत्र का फिर 'येनान्तरिन्द्रियैः आत्मने नमः अस्त्राय फट्'—इस मन्त्र से अस्त्र का, इस प्रकार हृदयादि स्थानों में न्यास करना चाहिए ॥ ३०-३१ ॥

**पञ्चमं प्रथमं पश्चात् द्वितीयं च चतुर्थकम् ।**
**तृतीयमित्थं क्रमतो वर्गवर्णान् समुच्चरेत् ॥ ३२ ॥**

प्रथम पञ्चम (पवर्ग), पश्चात् द्वितीय (चवर्ग), फिर चतुर्थ (तवर्ग), तदनन्तर तृतीय (टवर्ग) इस प्रकार वर्ग वर्णों का उच्चारण करे ॥ ३२ ॥

**यवर्गेऽप्येवमुच्चार्यं नभश्वेतोऽन्तिमो भृगुः ।**
**विमलं चेति चोच्चार्याः क्रमाद् वर्णाः सविन्दवः ॥ ३३ ॥**

यवर्ग में भी इसी प्रकार उच्चारण कर नभ (ह) श्वेत (सकार) भृगु (सकार) फिर विमल (ल) वर्ण का विन्दु के सहित उच्चारण करे ॥ ३३ ॥

**नभो वाय्वग्निवार्भूमिनभ आदय ईरिताः ।**

**शब्दस्पर्शरूपरसगन्धाः शब्दादयो मताः ॥ ३४ ॥**
**श्रोत्रं त्वग् नयनं जिह्वा घ्राणं श्रोत्रादयः स्मृताः ।**
**वाक् पाणिपादपाय्वुपस्थाश्च वागादयः पुनः ॥ ३५ ॥**
**वक्तव्या दानगमनविसर्गानन्दसञ्ज्ञकाः ।**
**वक्तव्याद्या बुद्धिमनोऽहङ्काराश्चित्तसंयुताः ॥ ३६ ॥**
**अन्तरिन्द्रियसञ्ज्ञाः स्युरेवमुक्तं षडङ्गकम् ।**
**नाभेरारभ्य पादान्तं पाशबीजं प्रविन्यसेत् ॥ ३७ ॥**

वायु, अग्नि, जल, भूमि और नभ—ये नभादि कहे गये हैं । शब्द, स्पर्श, रूप, रस एवं गन्ध—ये शब्दादि कहे गये हैं । श्रोत्र, त्वक्, नयन, जिह्वा और घ्राण—ये श्रोत्रादि कहे गये हैं । वाक्, पाणि, पाद, पायु एवं उपस्थ—ये वागादि कहे गये हैं । दान, गमन, विसर्ग, आनन्द—ये व्यक्तव्यादि कहे गये हैं । बुद्धि, मन, अहङ्कार एवं चित्त—ये अन्तरिन्द्रय सञ्ज्ञक कहे गये हैं । (३५-३६) श्लोक तक हमने षडङ्गन्यास कहा । नाभि से लेकर पाद पर्यन्त पाश बीज (आं) से न्यास करे ॥ ३४-३७ ॥

**नाभ्यन्तं हृदयाच्छक्तिं हृदन्तं मस्तकाच्छृणिम् ।**
**त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि विन्यसेत् ॥ ३८ ॥**
**आत्मने हृदयान्तानि यादिसप्तादिकान्यपि ।**
**ओजः सद्यान्विताकाशपूर्वं प्राणं तु खादिकम् ॥ ३९ ॥**

नाभि से लेकर हृदय पर्यन्त शक्ति से तथा हृदय से लेकर मस्तक पर्यन्त सृणि (क्रौं) से न्यास करे । फिर त्वक्, असृक्, मांस, मेद, अस्थि, मज्जा एवं शुक्र में न्यास करे । आत्मा से लेकर हृदयान्त तक यकारादि सात वर्णों द्वारा न्यास करना चाहिए । ओज सद्य से युक्त आकाश पूर्वक खादिक वर्णों से प्राण का न्यास करे ॥ ३८-३९ ॥

**भृग्वादिकं न्यसेत् जीवमेतान् हृदयदेशतः ।**
**यकाराद्या आद्यवर्णाः सर्वे स्युश्चन्द्रभूषिताः ॥ ४० ॥**

भृग्वादिक से हृदयादिदेश में रहनेवाले जीव का न्यास करे । फिर पूर्व में कहे गये (द्र ९.१२१५) यकारादि सभी आद्य वर्णो को चन्द्र (अनुस्वार) से विभूषित कर न्यास करना चाहिये ॥ ४० ॥

**ततः समस्तमूलेन मूर्धादि चरणावधि ।**
**विधाय व्यापकं न्यासं ध्यायेत् प्राणेश्वरीं ततः ॥ ४१ ॥**

इसके बाद समस्त मूल मन्त्र से शिर से लेकर चरण पर्यन्त न्यास करे । इस

प्रकार व्यापक न्यास कर प्राण की अधिष्ठात्री देवी का ध्यान करे ॥ ४१ ॥

**पाशं चापासृक्ककपाले श्रृणीषून्**
**शूलं हस्तैर्विभ्रतीं रक्तवर्णाम् ।**
**रक्तोदन्वत्पोतरक्ताम्बुजस्थां**
**देवीं ध्याये प्राणशक्तिं त्रिनेत्राम् ॥ ४२ ॥**

अब ध्यान के लिये **प्राणेश्वरी का स्वरूप** कहते हैं—पाश, चाप, असृक्, कपाल, श्रृणी (अङ्कुश), बाण शूल को अपने हाथों में धारण की हुई रक्त वर्ण वाली रक्त समुद्र के पोत पर रक्त वर्ण वाले कमल पर विराजमान तीन नेत्रों वाली प्राणेश्वरी का साधक ध्यान करे ॥ ४२ ॥

**ध्यायन् हृदि करं दत्त्वा त्रिर्जपेत् तन्मनुं सुधीः ।**
**वक्ष्येऽधुना मनोस्तस्योद्धारं ध्यातृसुखावहम् ॥ ४३ ॥**

बुद्धिमान् साधक इस प्रकार ध्यान करते हुये हृदय पर हाथ रखकर प्राणेश्वरी के मन्त्र का तीन बार जप करे । अब मैं ध्यान करने वाले साधक की सुविधा के लिये सुखावह प्राणेश्वरी मन्त्र का उद्धार कहता हूँ ॥ ४३ ॥

**प्राणेश्वरीमन्त्रोद्धारः**

**पाशं मायां श्रृणिं प्रोच्य यादीन् सप्तेन्दुसंयुतान् ।**
**तारान्वितं नभः सप्तवर्णमन्त्रं ततोऽजपाम् ॥ ४४ ॥**
**मम प्राणा इह प्राणा मम जीव इह स्थितः ।**
**मम सर्वेन्द्रियाण्युक्त्वा मम वाङ्मन ईरयेत् ॥ ४५ ॥**
**चक्षुःश्रोत्रघ्राणपदात् प्राणा इह समीर्य च ।**
**आगत्य सुखमुच्चार्य चिरं तिष्ठन्त्विदं पठेत् ॥ ४६ ॥**
**वह्निजायां च सप्तार्णं मन्त्रमन्ते पुनर्वदेत् ।**
**प्राणप्रतिष्ठामन्त्रोऽयं स्मृतः प्राणनिधापने ॥ ४७ ॥**

पाश (आं) माया (ह्रीं) सृणि (क्रौं) कहकर यकारादि इन्द्र संयुत सात वर्ण (यं रं लं वं शं षं सं), फिर तारा (ॐ से युक्त) नभः आदि सात वर्ण, फिर ॐ नमः वायुअग्निजल पृथ्वी इसके बाद अजपा (हंसः), फिर मम प्राणा इह प्राणाः मम जीव इह स्थितः, फिर मम सर्वेन्द्रियाणि, फिर मम वाङ्मनः, फिर चक्षुः श्रोत्रघ्राणाः, फिर प्राणा इतना कहकर आगत्या सुखं चिरं तिष्ठन्तु—इतना पढ़े । फिर स्वाहा, फिर अन्त में सप्ताक्षर मन्त्र पुनः पढ़े । यह प्राण-प्रतिष्ठा के लिये 'प्राणप्रतिष्ठा मन्त्र' कहा गया ॥ ४४-४७ ॥

**सविन्दवो मेरुहंसाकाशाः सर्गी भृगुः पुनः ।**

**मायेति ताररुद्धोऽयं मन्त्रः सप्ताक्षरो मतः ॥ ४८ ॥**
**ममास्येति पदस्यादौ पाशादीनि समुच्चरेत् ।**
**यन्त्रेषु प्रतिमादौ वा प्राणस्थापनमाचरेत् ।**
**मम स्थाने तस्य तस्य षष्ठ्यन्तामभिधां पठेत् ॥ ४९ ॥**

अब ४४ श्लोक में कहे गये सप्तार्ण मन्त्र का उद्धार कहते हैं—बिन्दु के सहित हं सः आकाश (हं), सर्गी (विसर्ग), फिर भृगु (सः), फिर माया (ह्रीं) आदि में तार (ॐ) सप्ताक्षर मन्त्र है । 'ममास्य' इस पद के आगे पाशादि (आं आदि) का उच्चारण करे । इस प्रकार यन्त्र में अथवा प्रतिमादि में प्राणस्थापन करे । मम के स्थान पर तस्य तस्य यह षष्ठ्यन्त पद पढ़ना चाहिए ॥ ४८-४९ ॥

**अत्र विशेषो वसिष्ठसंहितायाम्—**

**हृदि हस्तं सन्निधाप्य प्राणस्थापनमाचरेत् ।**
**ततो जन्मादिकद्व्यष्टक्रिया संस्कारसिद्धये ॥ ५० ॥**

यहाँ विशेष विचार वशिष्ठसंहिता में भी किया गया है—साधक अपने हृदय पर हाथ रखकर प्राणस्थापन करे । इसके बाद संस्कार सिद्धि के लिये जन्मादि सोलह संस्कार का कार्य करना चाहिए ॥ ५० ॥

**षोडश प्रणवावृत्तीः कृत्वा शक्तिं परां स्मरेत् ।**
**एवं प्राणान् प्रतिष्ठाप्य मातृकान्याससमाचरेत् ॥ ५१ ॥**

सोलह बार प्रणव की आवृत्ति करे । फिर परा शक्ति का स्मरण करे । इस प्रकार प्राणप्रतिष्ठा कर मातृका न्यास करे ॥ ५१ ॥

**श्रीकण्ठाद्यां शम्भुभक्तो वैष्णवः केशवादिकाम् ।**
**गणेशाद्यां तु तत्सेवी शक्तिभाङ्मातृकाः कलाः ॥ ५२ ॥**

**समुद्रा मातृकाभेदा न्यासपटले लिखामः ।**

शिव का भक्त 'श्रीकण्ठ' आदि का और वैष्णव 'केशवादि' का एवं गाणपत्य 'गणेशादि' का तथा शाक्त साधक 'मातृका' कलाओं से न्यास करे ॥ ५२ ॥

मुद्रा के सहित मातृका भेद न्यास पटल में लिखेंगे ।

**न्यस्य देवमयो भूत्वा ध्यायेदिष्टं स्वमात्मवान् ।**
**तत्तन्मुद्राः प्रदर्श्याथ कुर्यान्मानसपूजनम् ॥ ५३ ॥**

साधक इस प्रकार न्यास कर देवमय तथा आत्मवान् होकर अपने इष्ट का स्मरण करे । तत्तद् मुद्राओं का प्रदर्शन करे, तदनन्तर मानस पूजन करे ॥ ५३ ॥

**प्रार्थयेत ततो देवं मन्त्रेणानेन तन्मनाः ।**

**स्वागतं देवदेवेश सम्मुखो भव केशव ।**
**गृहाण मानसीं पूजां यथार्थपरिभाविताम् ॥ ५४ ॥**

इसके बाद तन्मना होकर 'स्वागतं देवदेवेश' आदि श्लोक मन्त्र से इष्ट देवता की प्रार्थना करे । हे केशव! हे देव देवेश! सम्मुख (प्रत्यक्ष) हो जाइये । हे प्रभो! यथार्थरूप से परिभावित मेरी मानसी पूजा आप ग्रहण करें ॥ ५४ ॥

**केशवेत्युपलक्षणम् ।**

**केशवेति पदस्थाने कार्य ऊहोऽन्यदैवते ।**
**यस्य यस्य च देवस्य यथाभूषणवाहनम् ॥ ५५ ॥**
**सञ्चिन्त्य हृदयाम्भोजे पूजयेन्मानसैस्तथा ।**
**सायुधं च तथा साङ्गं सर्वोपस्करसंयुतम् ॥ ५६ ॥**
**मनसा पूजयित्वैवं क्षणं तद्गतमानसः ।**
**स्थित्वा मूलमनुं विद्वान् जपेदष्टोत्तरं शतम् ॥ ५७ ॥**

यहाँ केशव पद उपलक्षण प्रयुक्त है । यदि केशव के अतिरिक्त अन्य कोई इष्ट देवता हो तो ऊहकर केशवपद के स्थान में उस अन्य देवता का सम्बोधन करे । जिस-जिस देवता का जैसा-जैसा भूषण हो एवं वाहन हो । साधक वैसा-वैसा हृदय कमल में ध्यान करे तथा उस देवता की मानसोपचारों से पूजा करे । सायुध साङ्ग तथा सर्वोपस्कर संयुक्त उस देवता की मानस पूजा कर क्षण भर के लिये उनका ध्यान करे । फिर विद्वान् साधक उसको ध्यान करते हुये एक-सौ आठ बार मूल मन्त्र का जप करे ॥ ५५-५७ ॥

**जपं निवेद्य देवाय स्थापयेदर्घ्यमुत्तमम् ।**
**बाह्यसम्पूजनायाथ तत्प्रकारोऽभिधीयते ॥ ५८ ॥**

अपना जप देवता को निवेदन कर उत्तम अर्घ वहाँ स्थापित करे । अब उसकी विधि बाह्यसम्पूजन के लिये कही जा रही है ॥ ५८ ॥

**स्ववामाग्रे तु षट्कोणवृत्तभूपुरवेष्टितम् ।**
**कृत्त्वाग्निकोणमूर्ध्वाग्रं स्तम्भयेत् शङ्खमुद्रया ॥ ५९ ॥**

अपनी बाई ओर आगे षट्कोण युक्त वृत्त जो भूपुर से वेष्टित हो ऐसे यन्त्र का निर्माण कर अग्निकोण के ऊर्ध्वाग्र में शङ्खमुद्रा से स्थापित करे ॥ ५९ ॥

**पुष्पाक्षतैः षडङ्गानि तत्राग्न्यादिषु पूजयेत् ।**
**अस्त्रक्षालितमाधारं तत्र दध्यान्मनुं जपन् ॥ ६० ॥**

पुष्पाक्षतों से षडङ्ग करे । फिर अग्न्यादिक देवों की पूजा करे । फिर मन्त्र का जप करते हुये अस्त्र मन्त्र से क्षालित आधारपात्र स्थापित करे ॥ ६० ॥

**मं वह्निमण्डलायेति ततो दशकलात्मने ।**
**अमुकार्घेति पात्रान्ते सनाय नम इत्यपि ॥ ६१ ॥**
**चतुर्विंशतिवर्णोऽयमाधारस्थापने मनुः ।**
**आधारे पूर्वकाष्ठादि दशार्च्चेत् पावकीः कलाः ।**
**स्वमन्त्रक्षालितं शङ्खं स्थापयेत् तन्मनुं स्मरन् ॥ ६२ ॥**

फिर 'मं वह्निमण्डलाय दश कलात्मने अमुकार्घपात्रासनाय नमः' यह चौबीस अक्षर का मन्त्र आधार स्थापन के लिये कहा गया है । इसके बाद उसी आधार पर काष्ठादि रखकर दश पावकी कलाओं का अर्चन करे । फिर उसी आधार मन्त्र का स्मरण करते हुये स्वमन्त्र क्षालित शङ्ख की स्थापना करे ॥ ६१-६२ ॥

**शङ्खे विशेषस्त्रिपुरार्णवे—**

**शङ्खोदरस्थितावर्त्तं युक्त्या निस्सार्य तत्र तु ।**
**योनित्रयं तथैकं वा शङ्खे कुर्याद् विचक्षणः ॥ ६३ ॥**

अब यहाँ त्रिपुरार्णवतन्त्र में विशेष कहते हैं—साधक शङ्ख के भीतर रहने वाले आवर्त्त को छाँट कर युक्ति से निकाल लेवे । फिर विचक्षण साधक उस शङ्ख में तीन अथवा एक योनि निर्माण करे ॥ ६३ ॥

**यामलेऽपि—**

**मुख्यः शङ्खः श्वेतवर्णो मध्यः पीतादिवर्णयुक् ।**
**नीलवर्णः परित्याज्यस्तथैव कृमिभक्षितः ॥ ६४ ॥**

यामल में भी बतलाया गया है—श्वेतवर्ण वाला शङ्ख श्रेष्ठ होता है । पीतादि वर्ण वाला शङ्ख मध्यम कहा गया है । नीलवर्ण वाला शङ्ख सर्वथा परित्याज्य है । इसी प्रकार कृमि भक्षित शङ्ख भी त्याग देवे ॥ ६४ ॥

**अं सूर्यमण्डलायान्ते द्वादशेतिकलात्मने ।**
**अमुकार्घ्येति पात्राय नमोऽन्तः त्र्यक्षिवर्णवान्॥ ६५ ॥**

'अं सूर्यमण्डलाय द्वादश कलात्मने अमुकार्घ्यपात्राय नमः'—यह २३ वर्ण का मन्त्र है ॥ ६५ ॥

**शङ्खस्थापनमन्त्रोऽयं तारं कामो महाजल ।**
**चराय वर्मफट् स्वाहा पाञ्चजन्याय हृन्मनुः ॥ ६६ ॥**
**शङ्खस्य विंशत्यर्णाद्द्यस्तेन प्रक्षालयेत्तु तम् ।**
**कला द्वादश सूर्यस्य शङ्खोपरि यजेत् क्रमात् ॥ ६७ ॥**

अब शङ्ख स्थापन का मन्त्र कहते हैं—तारं (ॐ) काम (क्लीं) फिर

महाजलचराय, वर्म फट् स्वाहा पाञ्चजन्याय नमः । यह शङ्ख का बीस अक्षर का मन्त्र है इस मन्त्र से शङ्ख का प्रक्षालन करे । फिर उस शङ्ख पर सूर्य की द्वादश कलाओं का क्रमशः अर्चन करे ॥ ६६-६७ ॥

**विलोममातृकां मूलं विलोमं च पठन् जलैः ।**
**आपूर्य मनुनेष्ट्वा तं तत्रार्च्चेदैन्दवीः कलाः ॥ ६८ ॥**

**अग्निसूर्येन्दूनां कलाः द्वितीयपटलतो ज्ञेयाः ।**

इसी प्रकार विलोम मातृका का मूल विलोम रूप से पढ़ते हुये जल से अर्घ पात्र को पूर्ण करे । फिर उस अर्घ पात्र पर चन्द्रमा की सोलह कलाओं का अर्चन करना चाहिए ॥ ६८ ॥

अग्नि, सूर्य तथा चन्द्रमा की कला का विवेचन द्वितीय पटल में (द्र० २. २१२-२१६) किया गया है ।

**ॐ सोममण्डलायान्ते षोडशान्ते कलात्मने ।**
**अमुकार्घ्यामृतायेति हृन्मनुश्चार्घ्यपूजने ॥ ६९ ॥**
**आह्वयेत् तत्र तीर्थानि तन्मन्त्रश्रृणिमुद्रया ।**
**रविमण्डलतः स्वीयहृदोदेवमथाऽऽह्वयेत् ॥ ७० ॥**
**अष्टकृत्त्वो जपेन्मूलं स्पृष्ट्वा जलमनन्यधीः ।**
**अप्सु विन्यस्य चाङ्गानि हृदा सम्पूजयेदपः ॥ ७१ ॥**
**मूलं जपेदष्टशतं छादयन् मत्स्यमुद्रया ।**
**संरक्षेदस्त्रमन्त्रेण छोटिकामुद्रया जलम् ॥ ७२ ॥**

'ॐ सोममण्डलाय षोडशकलात्मने अमुकार्घ्यामृताय नमः'—यह चन्द्रमा की कलाओं को अर्घ देने का मन्त्र है । उस अर्घ पात्र में अङ्कुश मुद्रा से सभी तीर्थों का आवाहन करे । सूर्य मण्डल से 'स्वीय हृदयस्थ देव' का आवाहन करे । फिर चित्त एकाग्र कर जल का स्पर्श करते हुये आठ बार मूलमन्त्र का जप करे । जल में षडङ्ग कर 'नमः' मन्त्र से जल की पूजा करे । फिर मत्स्य मुद्रा से जल को ढँक कर एक-सौ आठ बार मूल मन्त्र का जप करे । छोटिका मुद्रा से अस्त्र मन्त्र के द्वारा जल की रक्षा करे ॥ ६९-७२ ॥

**मुद्रया चावगुण्ठिन्या वर्मणा त्ववगुण्ठयेत् ।**
**अमृतीकृत्य गोमुद्रां कुर्वन्नमृतबीजतः ॥ ७३ ॥**

फिर अवगुण्ठिनी मुद्रा से वर्म मन्त्र के द्वारा जल का अवगुण्ठन करे । गो मुद्रा प्रदर्शित कर अमृत बीज से उसका अमृतीकरण करे ॥ ७३ ॥

**संरोधिन्या सन्निरुध्य तत्र मुद्राः प्रदर्शयेत् ।**

**शङ्खमौशलचक्राख्याः परमीकृत्य तत् पुनः ॥ ७४ ॥**

फिर संरोधिनी मुद्रा से जल का सन्निरोध कर शङ्ख, मुशल एवं चक्र मुद्रायें प्रदर्शित कर जल का परमीकरण करे ॥ ७४ ॥

**महामुद्रां विरचयन् योनिमुद्रां प्रदर्शयेत् ।**
**कृष्णमन्त्रे गालिनीं च रामे गरुडमुद्रिकाम् ॥ ७५ ॥**

फिर महामुद्रा बना कर योनिमुद्रा प्रदर्शित करे । कृष्ण मन्त्र में मालिनी मुद्रा और राम मन्त्र में गरुड मुद्रा प्रदर्शित करे ॥ ७५ ॥

**शङ्खदक्षिणदिग्भागे प्रोक्षणीपात्रपूरणम् ।**
**कृत्त्वार्घाम्बु क्षिपेत्तत्र तेनोक्षेत् त्रिर्निजां तनुम् ॥ ७६ ॥**

इसके बाद शङ्ख के दक्षिण भाग में प्रोक्षणी पात्र स्थापित कर उसमें अर्घ का जल डाल कर पूर्ण करे और उस प्रोक्षणी के जल से तीन बार अपना शरीर प्रोक्षित करे ॥ ७६ ॥

**प्रजपन् मूलगायत्रीं पूजावस्तुचयं तथा ।**
**पाद्याचमनपात्रे च दध्यादर्घ्यस्य चोत्तरे ॥ ७७ ॥**

फिर मूल गायत्री पढ़ते हुये पूजा के लिये एकत्रित वस्तु समूहों का भी प्रोक्षण करे । तदनन्तर अर्घपात्र के उत्तर पाद्यपात्र एवं आचमनपात्र स्थापित करे ॥ ७७॥

**एवमर्घ्यविधिः प्रोक्तः सर्वसाधारणो मया ।**
**विहाय शङ्करं सूर्यमर्घ्ये शङ्खः प्रशस्यते ॥ ७८ ॥**

इस प्रकार सर्वसाधारण के लिये मैंने अर्घपात्र की विधि बतलाई । भगवान् शङ्कर और सूर्य को छोड़ कर सभी देवताओं के अर्घ के लिये शङ्खपात्र प्रशस्त कहा गया है ॥ ७८ ॥

**हेमरूपोदुम्बराब्जरीतिदारुमृदुद्भवम् ।**
**पालाशं पद्मपत्रं च स्मृतं पाद्यादिभाजनम् ॥ ७९ ॥**

सोना, चाँदी, गूलर, कमल, रीति तथा काष्ठ का बना हुआ पात्र होना चाहिए । इसी प्रकार पालाशपत्र एवं पद्मपत्र पाद्यादि के पात्र के लिये प्रशस्त बतलाया गया है ॥ ७९ ॥

**अशक्तावर्घ्यपात्रेण पाद्यादीनि निवेदयेत् ।**
**अन्तर्यागं ततः कुर्यात् पीठे देहमये सुधीः ॥ ८० ॥**

यदि अर्घपात्र देने में असमर्थ हो तो केवल पाद्यादि ही निवेदन करे । इसके

बाद सुधी साधक देहमय पीठ पर अन्तर्याग करे ॥ ८० ॥

**न्यासस्थानेषु मण्डूकमुख्यान् गन्धादिभिर्यजेत् ।**
**पीठमन्त्रान्तमत्रेज्या हृदये स्वेष्टदेवताः ॥ ८१ ॥**

न्यासस्थान में मण्डूक मुख्यों की गन्धादि द्वारा पूजा करे । यहाँ हृदय में स्वेष्ट देवता मानकर पीठ मन्त्रान्त इज्या करे ॥ ८१ ॥

**कुण्डलीं च तथोत्त्थाप्य द्वादशान्ते परं नयेत् ।**
**तदुत्त्थामृतधाराभिः प्रीणयेत् परदेवताम् ॥ ८२ ॥**

कुण्डली का उत्थान कर द्वादश वर्ण के अन्त में ले जावे । उससे उत्पन्न अमृत धारा से परदेवता को तृप्त करे ॥ ८२ ॥

**जपं कृत्त्वा निवद्यास्मै मनसा तां विसर्जयेत् ।**
**मूर्घ्नि हृत्पादगुह्येषु ततः पुष्पाञ्जलिं क्षिपेत् ॥ ८३ ॥**

फिर जप करे और जप का मानसिक निवेदन कर कुण्डली को विसर्जित करे। फिर शिर, हृदय, पाद और गुह्य स्थान में पुष्पाञ्जलि निवेदन करे ॥ ८३ ॥

**अन्तर्यागं विधायेत्थं बाह्यपूजनमारभेत् ।**
**द्विविधः स्याल्लब्धमानो बाह्यान्तरमुपासनम् ।**
**न्यासिनां चान्तरं प्रोक्तमन्येषामुभयं तथा ॥ ८४ ॥**

इस प्रकार अन्तर्याग कर बाह्य पूजन करे । उपासना बाह्य और आन्तर भेद से दो प्रकार की कही गई है । सन्यासियों के लिये आभ्यन्तर उपासना तथा अन्यों के लिये दोनों उपासना कही गई है ॥ ८४ ॥

**वायवीयसंहितायामपि—**

**आदावभ्यन्तरं यागमग्निकार्यावसानकम् ।**
**विधाय मानवः पश्चाद् बहिर्यागं समाचरेत् ॥ ८५ ॥ इति ।**

वायवीयसंहिता में भी बतलाया गया है—प्रथम आभ्यन्तर याग अग्नि कार्य के अन्त तक कहा गया है । मनुष्य उस अन्तर्याग को कर बहिर्याग करे ॥ ८५ ॥

**आद्यमेवं ब्रह्मचारी वानप्रस्थो यतिस्तथा ।**
**वर्धिन्यां प्रक्षिपेत् किञ्चिदर्घोदकमनन्यधीः ॥ ८६ ॥**

सर्वप्रथम ब्रह्मचारी, वानप्रस्थ तथा सन्यासी साधक एकाग्रचित्त होकर अर्घोदक वर्धिनी में डाले ॥ ८६ ॥

**प्राणानायम्य मूलेन वामे गुरुत्रयं नमेत् ।**

दक्षिणे च गणेशानं पीठपूजामथाचरेत् ॥ ८७ ॥

मूल मन्त्र से प्राणायाम करे। फिर बायीं ओर गुरुत्रय (स्वगुरु, परमगुरु एवं परमेष्ठिगुरु) को नमस्कार करे। अपने दक्षिण गणेश को नमस्कार कर फिर पीठ पूजा प्रारम्भ करे ॥ ८७ ॥

स्वर्णादिरचिते यन्त्रे यद्वा चन्दननिर्मिते ।
मण्डूकात् परतत्त्वान्तं दिङ्मध्ये पीठशक्तयः ॥ ८८ ॥
मण्डूकश्चाथ कालाग्निरुद्र आधारशक्तियुक् ।
कूर्मो धरा सुधासिन्धुः श्वेतद्वीपसुराङ्घ्रिपाः ॥ ८९ ॥
मणिहर्म्यं हेमपीठं धर्मो ज्ञानं विरागता ।
ऐश्वर्यं धर्मपूर्वास्तु चत्वारस्ते नञादिकाः ॥ ९० ॥
धर्मादयः स्मृताः पादा पीठगात्राणि चेतरे ।
मध्येऽनन्तं तत्त्वपद्ममानन्दमयकन्दकम् ॥ ९१ ॥

सुस्वर्णादि विरचित यन्त्र में अथवा चन्दनादिनिर्मित यन्त्र में मण्डूक से लेकर परतत्त्वान्त दिशाओं के मध्य में पीठशक्तियाँ बनानी चाहिये। मण्डूक एवं कालाग्नि-रुद्र—ये आधार शक्ति से युक्त हैं। कूर्म-पृथ्वी, सुधासिन्धु, श्वेतद्वीप, सुराङ्घ्रिप, मणि, हर्म्य, हेमपीठ है। धर्म, ज्ञान, वैराग्य तथा ऐश्वर्य—ये चार तथा अधर्म, अज्ञान, अवैराग्य एवं अनैश्वर्य—ये चार पीठ के पाद हैं और इतर पीठ के शरीर हैं। मध्य में अनन्त तत्त्व पद्म हैं, जिनका आनन्दमय कन्दक है ॥ ८८-९१ ॥

संविन्नालं ततः प्रोक्ता विकारमयकेशराः ।
प्रकृत्यात्मकपत्राणि पञ्चाशद्वर्णकर्णिका ।
सूर्यस्येन्दोः पावकस्य मण्डलत्रितयं ततः ॥ ९२ ॥

उस पद्म का संवित् नाल है और विकार केशर हैं। प्रकृत्यादि पत्र हैं एवं पचास वर्ण कर्णिकायें हैं सूर्य चन्द्रमा और अग्नि उसके ये तीन मण्डल हैं ॥९२॥

सत्त्वं रजस्तमः पश्चादात्मायुक्तोऽन्तरात्मना ।
परमात्माऽथ ज्ञानात्मा तत्त्वे मायाकलादिके ॥ ९३ ॥
विद्यातत्त्वं परं तत्त्वं कथिताः पीठदेवताः ।
पूजने सर्वदेवानां पीठे ताः परिपूजयेत् ॥ ९४ ॥

सत्त्व, रज, तम, आत्मा, अन्तरात्मा, परमात्मा, ज्ञानात्मा, माया एवं कला, दो तत्त्व; विद्या तत्त्व एवं पर तत्त्व—इतने पीठ देवता कहे गये हैं। पीठ पर इन सभी देवताओं की पूजा करनी चाहिये ॥ ९३-९४ ॥

पृथिव्यनन्तरं पूज्यः क्षीराब्धिर्माधवे श्रियम् ।

**इक्षुसिन्धुर्गणेशे स्यादन्यत्रामृतसागरम् ॥ ९५ ॥**
**अग्निराक्षसवाय्वीशकोणे धर्मादयः स्मृताः ।**
**इन्द्रकीनाशवरुणसोमाशासु नञादिकाः ॥ ९६ ॥**

पृथ्वी पूजा के बाद क्षीर समुद्र में माधव के साथ महाश्री का पूजन करे और गणेश की पूजा इख के समुद्र में करे अथवा अमृत सागर में करे । आग्नेय, नैर्ऋत्य, वायव्य एवं ईशान कोण में धर्मादि चार की पूर्व, दक्षिण, पश्चिम तथा उत्तर दिशा में अधर्मादि चतुष्टय की पूजा करे ॥ ९५-९६ ॥

**धर्मादिपूजने प्राची तथैवावरणार्चने ।**
**पूजकस्य पुरः कल्प्या शक्रादिषु यथास्वकम्॥ ९७ ॥**

धर्मादि के पूजन में तथा आवरणादि के अर्चन में पूर्व दिशा प्रशस्त कही गई है । पूजक के आगे शक्रादि अष्ट लोकपालों की पूजा करनी चाहिए ॥ ९७ ॥

**श्वेता कृष्णारुणा पीता श्यामा रक्ता सितासिताः ।**
**रक्ताम्बराभयधरा ध्येयाः स्युः पीठशक्तयः ॥ ९८ ॥**

**पीठ शक्तियों का ध्यान**—पीठ शक्तियों के श्वेत, कृष्ण, अरुण, पीत, श्याम, रक्त, सित एवं असित वर्ण हैं जो रक्त वस्त्र धारण की हुई हैं तथा उनके हाथ 'अभयमुद्रा' से युक्त हैं । इस प्रकार उनका ध्यान करना चाहिये ॥ ९८ ॥

**शालग्रामे मणौ यन्त्रे नित्यपूजां समाचरेत् ।**
**हेमादिप्रतिमायां वा स्थापितायां यथाविधि ॥ ९९ ॥**

पीठ देवताओं की अर्चना शालग्राम में, मणि में तथा यन्त्र में अथवा हेमादि की प्रतिमा में अथवा यथाविधि स्थापित मूर्त्तियों में नित्य करे ॥ ९९ ॥

**अङ्गुष्ठादिवितस्त्यन्तमाना स्यात् प्रतिमा गृहे ।**
**पूज्या न दग्धा भिन्ना वा नोर्ध्वाधोदृङ्मविक्रिया॥ १०० ॥**

घर में अङ्गूठे से लेकर एक वितस्ति पर्यन्त प्रमाण की प्रतिमा होनी चाहिये । जली हुई अथवा फूटी हुई ऊर्ध्वदृक् एवं अधोदृक् वाली प्रतिमा का अथवा विकृत प्रतिमा का पूजन न करे ॥ १०० ॥

**लिङ्गं वा लक्षणोपेतं तत्राऽऽवाहनमाचरेत् ।**
**मूलमुच्चार्य हृदयात् सुषुम्णा वर्त्मना महः ॥ १०१ ॥**
**द्वारेण ब्रह्मरन्ध्रस्य नासारन्ध्रविनिर्गतम् ।**
**पुष्पाञ्जलौ मातृकाब्जे योजयित्वा विनिःक्षिपेत्॥ १०२ ॥**

उपर्युक्त लक्षण से युक्त लिङ्ग की पूजा करे । उसमें आवाहन करे । मूल मन्त्र

का उच्चारण करते हुये हृदय से सुषुम्णा मार्ग द्वारा ब्रह्मरन्ध्र से नासिका रन्ध्र द्वारा तेज निकाल कर उसे मातृकाब्ज के पुष्पाञ्जलि में संयोजित करे। इस प्रकार मूर्त्ति में पुष्पाञ्जलि समर्पित करने की विधि कही गई है ॥ १०१-१०२ ॥

**मूर्त्तौ पुष्पाञ्जलिं चैतदावाहनमुदीरितम् ।**
**शालग्रामे स्थितायां वा नावाहनविसर्जने ॥ १०३ ॥**
**आवाह्याद्युपचारेषु श्लोकान् शम्भूदितान् पठेत्।**
**आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर ।**
**अरण्यामिव हव्यांशं मूर्तावावाहयाम्यहम् ॥ १०४ ॥**

मूर्त्ति में इस प्रकार पुष्पाञ्जलि का प्रक्षेप देवता का आवाहन कहा जाता है। शालग्राम की मूर्त्ति में आवाहन और विसर्जन का विधान नहीं है। आवाहन के बाद समस्त उपचारो में शम्भु के द्वारा कहे गये श्लोक मन्त्रों को पढ़े। वे श्लोक इस प्रकार हैं—

आत्मसंस्थमजं शुद्धं त्वामहं परमेश्वर ।
अरण्यामिव हव्यांशं मूर्तावावाहयाम्यहम् ॥

अर्थ—हे परमेश्वर! आप मेरी अन्तरात्मा में ही हैं, अज हैं, शुद्ध हैं, तथापि जिस प्रकार अरणी में हुताशन के रहते हुये भी वह्नि का आवाहन किया जाता है उसी प्रकार मैं इस मूर्त्ति में आपका आवाहन करता हूँ ॥ १०३-१०४ ॥

**मूर्तावितिस्थाने यन्त्रेष्वित्यादिपदकल्पना ।**

**पञ्चायतनपक्षे तु मध्ये विष्णुं ततोऽर्चयेत् ।**
**अग्निनिर्ऋतिवायव्येशानेषु गणनायकम् ॥ १०५ ॥**
**रविं शिवां शिवं मध्ये गणेशश्चेत् शिवं शिवाम् ।**
**रविं विष्णुं रवौ मध्ये विघ्नाजनगजेश्वरान् ॥ १०६ ॥**

जहाँ मूर्त्ति न हो वहाँ यन्त्रादि की कल्पना कर लेनी चाहिए। पञ्चायतन पक्ष में मध्य में विष्णु की तथा अग्नि, नैर्ऋत्य, वायव्य तथा ईशान कोणों में क्रमशः गणनायक, रवि, शिवा और शिव की पूजा करनी चाहिये। यदि मध्य में गणेशजी हों तब साधक को उन-उन कोणों में शिव, शिवा, रवि और विष्णु की पूजा करनी चाहिए। यदि मध्य में रवि हों तब साधक विघ्नेश्वर, अजेश्वर, नगेश्वर और गजेश्वर की पूजा करे ॥ १०५-१०६ ॥

**भवान्यां मध्यसंस्थायामीशविघ्नार्कमाधवान् ।**
**हरे मध्यगते सूर्यगणेशगिरिजाच्युतान् ॥ १०७ ॥**

यदि भवानी मध्य में हों तब साधक ईश्वर, विघ्नेश्वर, सूर्य और माधव की पूजा करे। यदि मध्य में शिव हों तब मन्त्रज्ञ को सूर्य, गणेश, गिरिजा और

अच्युत की पूजा करनी चाहिए ॥ १०७ ॥

**सम्पूज्यादौ मध्यंगतं गणेशादि ततो यजेत् ।**
**गणेशे मध्यसंस्थे तु पूजयेद् भास्करादितः ॥ १०८ ॥**

सर्वप्रथम मध्य गत देवता की पूजा कर पश्चात् गणेशादि का यजन करे । यदि गणेश मध्य में हों तो साधक प्रथम भास्कर की पूजा करे । तत्पश्चात् अन्य देवों का यजन करे ॥ १०८ ॥

**केषाञ्चिद्विषये पञ्चाङ्गाभावो यामले—**

**श्यामायां भैरवीताराछिन्नमस्तासु भैरवि ।**
**मञ्जुघोषे तथा रौद्रे पञ्चाङ्गो नेष्यते बुधैः ॥ १०९ ॥**

**तत्रापि गुह्यकालीविषये पञ्चायतनी अस्त्येव।**

किन्हीं देवताओं में पञ्चाङ्ग के पूजन का विधान नहीं है यथा यामल में कहा गया है—श्यामा, भैरवी, तारा, छिन्नमस्तका, मञ्जुघोषा तथा रुद्र के विषय में बुद्धिमान् लोग पञ्चाङ्ग पूजा नहीं मानते हैं किन्तु वहाँ भी गुह्यकाली के विषय में पञ्चायतन पूजा होती ही है ॥ १०९ ॥

**यन्त्रेषु पूजाक्रमो यथा विश्वसारे—**

**भूपुरेषु चतुःकोणे पूजयेत् क्रमतः सूधीः ।**
**मध्ये सम्पूज्य विधिवत् पञ्चायतनदेवताः ॥ ११० ॥**

यन्त्रों में पूजा क्रम जैसा कि विश्वसार तन्त्र में कहा गया है—सुधी साधक भूपुर के चारो कोणों में क्रमशः मध्य में विधिवत् पूजा करे । तत्पश्चात् पञ्चायतन देवता का पूजन करे ॥ ११० ॥

**पुनर्मन्त्रमहोदधौ—**

**विधायावाहनं चेत्थमावाहिन्या तु मुद्रया ।**
**संस्थापिन्या स्थापयेत् तं मूलान्ते श्लोकमुच्चरन्॥ १११ ॥**

पुनः मन्त्रमहोदधि में भी बतलाया गया है—(विधायावाहनम् से लेकर । हरिद्राद्यै पर्यन्त १११-१४० श्लोक मुद्रित मन्त्रमहोदधि में नहीं हैं)

आवाहनी मुद्रा से इस प्रकार आवाहन कर मूलमन्त्र के अन्त में इन श्लोकों को पढ़ते हुये संस्थापनी मुद्रा से शिव की स्थापना करे ॥ १११ ॥

**तवेयं महिमा मूर्तिस्तस्यां त्वां सर्वगं प्रभो! ।**
**भक्तिस्नेहसमाकृष्टं दीपवत् स्थापयाम्यहम् ॥ ११२ ॥**

हे प्रभो! आपकी महिमा को प्रगट करने वाली यह मूर्त्ति है । हे प्रभो! सर्वत्र

व्यापक आप की भक्ति एवं स्नेह से पूर्ण दीप के समान अब मैं इसमें स्थापना करता हूँ ॥ ११२ ॥

**ऊहः कार्यो भवान्यादौ श्लोकमावाहनादिषु ।**
**मूलश्लोकौ पठन् कुर्यादासनं चोपवेशनम् ॥ ११३ ॥**

भवानी आदि की स्थापना में साधक ऊह (वाक्य विचार) करे और मूल श्लोक पढ़ते हुये आवाहित देवता को आसन तथा उपवेशन प्रदान करे ॥ ११३॥

**सर्वान्तर्यामिने देव! सर्वबीजमयं शुभम् ।**
**स्वान्तःस्थाय परं शुद्धमासनं कल्पयाम्यहम् ॥ ११४ ॥**

हे देव ! आप सर्वान्तर्यामी तथा स्वान्तः स्थित के लिये सर्वबीजमय शुभ तथा शुद्ध आसन की मैं कल्पना (रचना) किया हूँ ॥ ११४ ॥

**अस्मिन् वरासने देव! सुखासीनोऽक्षरात्मकः ।**
**प्रतिष्ठितो भवेश! त्वं प्रसीद परमेश्वर ॥ ११५ ॥**

हे भवेश! हे देव! हे परमेश्वर! इस श्रेष्ठ अक्षरात्मक आसन पर आप अक्षरात्मक सुखपूर्वक प्रतिष्ठित होकर प्रसन्नतापूर्वक आसीन हो जाइये ॥ ११५॥

**मूलं श्लोकं पठन् कुर्यात् सन्निधानं समुद्रया ।**
**अनन्या तव देवेश मूर्तिशक्तिरियं प्रभो ॥ ११६ ॥**

साधक मूल श्लोक को पढ़ते हुये सन्निधान मुद्रा से भगवान् का सन्निधान करे। हे प्रभो! हे देवेश! यह मूर्त्ति शक्ति आप से भिन्न नहीं है, यह आपका स्वरूप ही है ॥ ११६ ॥

**सान्निध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्परः ।**
**पठन् मूलं तथा श्लोकं सन्निरुध्यात् स्वमुद्रया ॥ ११७ ॥**

आप भक्तों पर अनुग्रह करने के लिये सदैव तत्पर रहते हैं । अतः इस मूर्त्ति में सन्निहित हो जाइये । सन्निधान मुद्रा प्रदर्शित करते हुये साधक मूल मन्त्र तथा उक्त श्लोक पढ़े ॥ ११७ ॥

**आज्ञया तव देवेश कृपाम्भोधे गुणाम्बुधे ।**
**आत्मानन्दैकतृप्तं त्वां संरुणध्मि महेश्वर! ॥ ११८ ॥**

हे कृपाम्भोधे ! हे गुणाम्बुधे ! हे देवेश ! मैं आपकी आज्ञा लेकर ही एक आत्मानन्द में तृप्त आपको इस मूर्त्ति में स्थापित कर रहा हूँ ॥ ११८ ॥

**मुद्रया सम्मुखीकुर्यान्मूलं श्लोकं च सम्पठन्।**

**अज्ञानाद् दौर्मनस्याद्वा वैकल्यात् साधनस्य च ॥ ११९ ॥**
**यदपूर्णं भवेत् कृत्यं तदप्यभिमुखो भव ।**
**कुर्वीत मूलश्लोकाभ्यां प्रार्थिन्या मुद्रयार्चनम् ॥ १२० ॥**

मूल श्लोक पढ़ते हुये सम्मुखी मुद्रा दिखाकर सम्मुखी करण करे । हे प्रभो! अज्ञान से अथवा मन की दुर्बलतावश अथवा जल्दीबाजी से अथवा साधन की हीनता से गुरु में जो कमी रह गई है उस पर विचार न करते हुये आप सम्मुख हो जाइये । इस प्रकार साधक को मूल श्लोकों को पढ़ते हुये प्रार्थिनी मुद्रा से अर्चना करनी चाहिए ॥ ११९-१२० ॥

**दृशा पीयूषवर्षिण्या पूरयन् यज्ञविष्टरम् ।**
**मूर्त्तावायज्ञसम्पूर्तेः स्थिरो भव महेश्वर! ॥ १२१ ॥**

हे महेश्वर! आप अपनी पीयूष वर्षिणी दृष्टि से यज्ञविष्टर की कमी को पूर्ण करते हुये इस मूर्त्ति में यज्ञ की सम्पूर्त्ति पर्यन्त स्थिर होकर रहिये ॥ १२१ ॥

**न्यसेत् षडङ्गं देवाङ्गे सकलीकरणं सुधीः ।**
**मूलं श्लोकं पठन् कुर्यादवगुण्ठनमुद्रया ॥ १२२ ॥**

फिर सुधी साधक मूल श्लोक पढ़ते हुये अवगुण्ठन मुद्रा प्रदर्शित कर देवता के अङ्ग में न्यास कर सकलीकरण करे ॥ १२२ ॥

**अभक्तवाङ्मनश्चक्षुःश्रोत्रदूरादपि स्थिते ।**
**सुतेजःपञ्जरेणाशु वेष्टितो भव सर्वतः ॥ १२३ ॥**

हे अभक्तों के वाणी, मन, चक्षु तथा श्रोत्रों से दूर रहने वाले प्रभो! आप अपने सुतेजः पञ्जर से इस मूर्त्ति को चारों ओर से घेर कर स्थित रहिए ॥ १२३॥

**गोमुद्रयाऽमृतीकृत्य विदध्यात् परमीकृतिम् ।**
**महामुद्रां विरचयन् ततः स्वागतमाचरेत् ॥ १२४ ॥**

इस प्रकार गोमुद्रा प्रदर्शित कर अमृतीकरण करके परमीकरण करे । तदनन्तर महामुद्रा बनाकर भगवान् का स्वागत करे ॥ १२४ ॥

**मूलमन्त्रं तथा श्लोकं पठन् तद्गतमानसः ।**
**यस्य दर्शनमिच्छन्ति देवाः स्वाभीष्टसिद्धये ॥ १२५ ॥**
**तस्मै ते परमेशाय स्वागतं स्वागतं च मे ।**
**ततः सुस्वागतं कुर्यान्मूलश्लौकौ समुच्चरन् ॥ १२६ ॥**

साधक मूलमन्त्र पढ़ते हुये सदाशिव में चित्त लगाकर प्रार्थना करे । अर्थ देवता लोग भी अपनी अभीष्ट सिद्धि के लिये जिसका दर्शन चाहते हैं, उन आप

शिव के लिये मेरा स्वागत है मेरा स्वागत है । फिर मूल पढ़कर दो श्लोक पढ़ते हुये भगवान् का सुस्वागत करे ॥ १२५-१२६ ॥

**कृतार्थोऽस्मि गृहीतोऽस्मि सफलं जीवनं मम ।**
**आगतो देवदेवेश सुस्वागतमिदं पुनः ।**

हे प्रभो! मैं कृतार्थ हूँ, मैं अनुग्रहीत हूँ । मेरा जीवन सफल हो गया । हे देवदेवेश! आप यहाँ पधारे हैं । पुनः-पुनः आप का सुस्वागत है ॥ १२७ ॥

**श्यामाकविष्णुक्रान्ताब्जदूर्वोशीरं च चन्दनम् ॥ १२७ ॥**
**मूलश्लोकेन चामन्त्र्य पाद्यं पादाम्बुजेऽर्पयेत् ।**
**यद् भक्तिलेशसम्पर्कात् परमानन्दसम्भवः ॥ १२८ ॥**
**तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये ।**
**लवङ्गजातीकक्कोलान् प्रक्षिप्याचमनीयके ॥ १२९ ॥**

श्यामक, विष्णुक्रान्ता, कमल, दूर्वा, उशीर एवं चन्दन युक्त जल का पाद्य बनाकर साधक मूल श्लोक से आमन्त्रित कर चरण कमल में पाद्य अर्पित करे । पाद्य के समर्पण के मन्त्र का अर्थ—जिसके भक्ति के लेश मात्र सम्पर्क से परमानन्द की प्राप्ति होती है उन आपके शुद्ध चरण कमल के लिये यह पाद्य समर्पित कर रहा हूँ । फिर साधक जल में लवङ्ग, कक्कोल एवं जाती डालकर आचमन प्रदान करे ॥ १२७-१२९ ॥

**दद्यादाचमनं वक्त्रे मूलश्लोकसुधाक्षरैः ।**
**वेदानामपि वेदाय देवानां देवतात्मने ॥ १३० ॥**
**आचमनं कल्पयामीश! शुद्धानां शुद्धिहेतवे ।**
**अर्घ्यपात्रे क्षिपेद् दूर्वां तिलदर्भाग्रसर्षपान् ॥ १३१ ॥**
**यवपुष्पाक्षतान् गन्धं मूर्ध्नि तेनार्घ्यमाचरेत् ।**
**मूलश्लोकशिरोमन्त्रैर्देवस्य मन्त्रवित्तमः ॥ १३२ ॥**
**तापत्रयहरं दिव्यं परमानन्दलक्षणम् ।**
**तापत्रयविनिर्मुक्तं तवार्घ्यं कल्पयाम्यहम् ॥ १३३ ॥**

यह आचमन मूलश्लोक के सुधाक्षरों से मुख में देवे । मूल मन्त्र का अर्थ—जो वेदों के भी वेद हैं, देवताओं के भी देवतात्मा है, हे ईश! शुद्धों को भी शुद्ध करने वाले आप के मुख के लिये मैं यह आचमन दे रहा हूँ । फिर अर्घपात्र में दूर्वा, तिल एवं दर्भ का अग्रभाग, सर्षप, भव पुष्प, अक्षत और गन्ध डालकर शिर पर अर्घ प्रदान करे । सदाशिव देवता के शिर पर अर्घ प्रदान का मन्त्रार्थ—तीनों तापों को हरण करने वाला दिव्य परमानन्द लक्षण वाला तापत्रय से विनिर्मुक्त यह अर्घ आपको समर्पित कर रहा हूँ ॥ १३०-१३३ ॥

पात्रे तु मधुपर्कस्य दध्याज्यमधु निक्षिपेत् ।
मूलश्लोकसुधामन्त्रैर्दध्यात् तं वदने प्रभोः ॥ १३४ ॥
सर्वकालुष्यहीनाय परिपूर्णसुखात्मने ।
मधुपर्कमिदं देव! कल्पयामि प्रसीद मे ॥ १३५ ॥

फिर मधुपर्क के पात्र में दधि, घी, मधु डाले । उस मधुपर्क को मूल श्लोक के सुधाक्षर से भगवान् के मुख में समर्पित करे । मन्त्रार्थ—सभी कालुष्य से हीन परिपूर्ण सुखात्म स्वरूप आपके लिये हे देव! यह मधुपर्क समर्पित कर रहा हूँ । आप मुझ पर प्रसन्न हो जाइये ॥ १३४-१३५ ॥

जातीकर्पूरकक्कोलबहुमूलतमालकान् ।
तच्चूर्णयेद् यथान्यायं पुनराचमनीयकम् ॥ १३६ ॥
पुनराचमनं दद्यान्मूलं श्लोकान्तरं पठन् ।

जाती, कपूर, कक्कोल, बहुमूल और तमाल का यथाभाग चूर्ण युक्त आचमनीय बनाकर भगवान् को इस मन्त्र से समर्पित करे ॥ १३६-१३७ ॥

उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः ॥ १३७ ॥
शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम् ।
स्नानवस्त्रोपवीतान्ते नैवद्यान्तेऽपि तत् स्मृतम् ॥ १३८ ॥

पुनराचमनीय मन्त्र का अर्थ—जिसके स्मरण मात्र से उच्छिष्ट और अशुचि भी शुद्धि प्राप्त कर लेता है इस प्रकार वाले आपको मैं यह पुनराचमनीय समर्पित कर रहा हूँ । यह पुनराचमनीय भगवान् को स्नान, वस्त्र, यज्ञोपवीत तथा नैवेद्य प्रदान करने के पश्चात् समर्पित करना चाहिये ॥ १३७-१३८ ॥

पाद्यादिद्रव्याभावे तु तत् स्मरन्नक्षतान् क्षिपेत् ।
गन्धतैलं ततो दद्यान्मूलं श्लोकं पठन् सुधीः ।
स्नेहं गृहाण स्नेहेन लोकनाथ महाशय ॥ १३९ ॥
सर्वलोकेषु शुद्धात्मन् ददामि स्नेहमुत्तमम् ।
हरिद्राद्यैस्तमुद्वर्त्य स्नापयेदुभयं पठन् ॥ १४० ॥

पाद्यादि द्रव्य के अभाव में भगवद् भक्त साधक भगवान् का स्मरण करते हुये केवल अक्षत छोड़ देवे । फिर सुधी साधक गन्ध तैलादि भगवान् को निम्न श्लोक पढ़ते हुये समर्पित करे । स्नेह समर्पण के लिये मन्त्र का अर्थ—हे लोकनाथ! हे महाशय! मुझ पर स्नेह करते हुये आप इस स्नेह को ग्रहण कीजिये । हे सर्वलोक शुद्धात्मन्! यह उत्तम स्नेह आपको समर्पित कर रहा हूँ । इन दो मन्त्र श्लोकों को पढ़ते हुये हरिद्रादियुक्त तैल से भगवान् का उद्वर्त्तन करे ॥ १३९-१४० ॥

**महाकपिलपञ्चरात्रे विशेषः—**

**रजनी सहदेवी च शिरीषो लक्ष्मणाऽपि च।**
**सदाभद्राकुशाग्राण्युद्वर्तनकमिहोच्यते ॥ १४१ ॥**

महाकपिल पञ्चरात्र में विशेष कहा गया है—रजनी (हल्दी), सहदेवी, शिरीष, लक्ष्मणा, सदाभद्रा और कुशाग्र इतने औषधियों से युक्त उद्वर्तन होता है ॥१४१॥

**अभ्यङ्गोद्वर्तने चापि महास्नानं समाचरेत्।**
**परमानन्दबोधाब्धिनिमग्ननिजमूर्तये ॥ १४२ ॥**
**साङ्गोपाङ्गमिह स्नानं कल्पयाम्यहमीश ते।**
**ततः सहस्रं शङ्खेन शतं वा शक्तितोऽपि वा ॥ १४३ ॥**
**गन्धयुक्तोदकैरीशमभिषिञ्चेन्मनुं जपन्।**
**पठन् मूलं ततः श्लोकं दद्याद् वस्त्रोत्तरीयके ॥ १४४ ॥**

अभ्यङ्ग एवं उद्वर्त्तन के बाद महास्नान कराना चाहिये। अर्थ—'परमानन्दबोध रूप समुद्र में अपनी मूर्त्ति को निमग्न करने वाले हे ईश! मैं आपको साङ्गोपाङ्ग स्नान समर्पित कर रहा हूँ।' इसके बाद साधक भगवान् को शङ्ख से एक सहस्र बार अथवा सौ बार अथवा अपनी शक्ति के अनुसार यथासंख्य मूल मन्त्रों से अभिषिञ्चित करे। इसके बाद निम्न मूल मन्त्रों को पढ़ते हुये वस्त्र और उत्तरीय प्रदान करे ॥ १४२-१४४ ॥

**मायाचित्रपटच्छन्ननिजगुह्योरुतेजसे।**
**निरावरणविज्ञानवासस्ते कल्पयाम्यहम् ॥ १४५ ॥**

अर्थ—जिन्होंने अपने तेज को मायाचित्र के पट्ट से आच्छन्न कर रखा है ऐसे हे निरावरण विज्ञान प्रभो! मैं आप को वस्त्र समर्पित कर रहा हूँ ॥ १४५ ॥

**यमाश्रित्य महामाया जगत्सम्मोहिनी सदा।**
**तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम् ॥ १४६ ॥**

अर्थ—जिसका आश्रय लेकर महामाया सदा के लिये सारे जगत् की मोहिनी बन गई हैं उन आप परमेश के लिये मैं यह उत्तरीय समर्पित कर रहा हूँ ॥१४६॥

**पीतं विष्णुं सितं शम्भुं रक्तं विघ्नार्कशक्तिषु।**
**सच्छिद्रं मलिनं जीर्णं त्यजेत्तैलादिदूषितम् ॥ १४७ ॥**

विष्णु को पीत वर्ण, सदाशिव को श्वेत वर्ण और गणेश, सूर्य तथा शक्ति को रक्त वर्ण का वस्त्रोत्तरीय समर्पित करे। छिद्र युक्त, मलिन, जीर्ण एवं तैलादि से दूषित वस्त्रोत्तरीय का त्याग करे ॥ १४७ ॥

उपवीतं भूषणानि प्रयच्छेदुभयं पठन् ।
यस्य शक्तित्रयेणेदं सम्प्रोतमखिलं जगत् ॥ १४८ ॥
यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पये ।
स्वभावसुन्दराङ्गाय नानाशक्त्याश्रयाय ते ॥ १४९ ॥
भूषणानि विचित्राणि कल्पयाम्यमरार्चित! ।
मूलमन्त्रेण पुटितमेकैकं मातृकाक्षरम् ॥ १५० ॥
विन्यसेद् देवताङ्गेषु योगोऽयं लोकमोहनः ।
कनिष्ठया पात्रसंस्थं पूर्ववद् गन्धमर्पयेत् ॥ १५१ ॥

उपवीत और आभूषण नीचे लिखे दो मन्त्रों को पढ़कर समर्पित करे । अर्थ—'समस्त जगत् जिसकी तीन शक्तियों से अनुस्यूत है उस यज्ञसूत्र परमात्मा को यह यज्ञसूत्र समर्पित कर रहा हूँ । जिनका अङ्ग प्रत्यङ्ग स्वभावतः सुन्दर है, जो नाना शक्तियों के आश्रय हैं । हे अमरार्चित! ऐसे आप के लिये ये विचित्र भूषण समर्पित कर रहा हूँ ।' इसके बाद मूलमन्त्र से सम्पुटित एक-एक मातृकाक्षरों से देवता के अङ्गों में न्यास करे । यह 'लोकमोहन योग' कहा जाता है । इसके बाद कनिष्ठा अङ्गुली से पात्र में संस्थित गन्ध पूर्ववत् भगवान् को निम्न श्लोक मन्त्र से अर्पित करे ॥ १४८-१५१ ॥

परमानन्दसौभाग्यपरिपूर्णदिगन्तरम् ।
गृहाण परमं गन्धं कृपया परमेश्वर! ॥ १५२ ॥
ततः कनिष्ठाङ्गुष्ठाभ्यां गन्धमुद्रां प्रदर्शयेत् ।
मूलं श्लोकं पठन् नत्वा पुष्पाणि विनिवेदयेत् ॥ १५३ ॥

गन्धसमर्पण मन्त्र का अर्थ—हे परमेश्वर! अपने परमानन्द सौभाग्य से सभी दिशाओं को पूर्ण करने वाले इस परम गन्ध को कृपापूर्वक आप स्वीकार कीजिये। फिर कनिष्ठा एवं अङ्गुष्ठ को मिलाकर गन्ध मुद्रा प्रदर्शित करते हुये भगवान् को गन्ध समर्पण करे । इसके बाद मूल श्लोक मन्त्र पढ़ते हुये पुष्प निवेदित करना चाहिए ॥ १५२-१५३ ॥

तुरीयवनसम्भूतं नानागुणमनोहरम् ।
अमन्दसौरभं पुष्पं गृह्यतामिदमुत्तमम् ॥ १५४ ॥

पुष्प समर्पण मन्त्र का अर्थ—तुरीय वन में उत्पन्न हुये अनेक गुणों से मनोहर अत्यन्त सुगन्धियुक्त इस उत्तम पुष्प को हे भगवान्! स्वीकार कीजिये ॥ १५४ ॥

तर्जन्यङ्गुष्ठयोगेन पुष्पमुद्रां प्रदर्शयेत् ।
अक्षतानर्कधत्तूरौ विष्णौ नैवार्पयेत् सुधीः ॥ १५५ ॥

फिर तर्जनी एवं अङ्गुष्ठ को मिलाकर पुष्पमुद्रा प्रदर्शित करे। सुधी साधक अक्षतमन्दार तथा धतूर विष्णु को न चढ़ावे ॥ १५५ ॥

**बन्धूकं केतकीं कुन्दं केशरं कुटजं जपाम्।**
**शङ्करे नार्पयेत् विद्वान् मालतीं यूथिकामपि।**
**शक्तौ दूर्वार्कमन्दारान् मालूरं तगरं रवौ ॥ १५६ ॥**

**दूर्वाशब्दं श्वेतदूर्वापरम्। एतद्विधायकवाक्यं सङ्केतपटले द्रष्टव्यम्।**

बन्धूक, केशर, केतकी, कुन्द, कुटज, जया, मालती और यूथिका पुष्प शङ्कर को न चढ़ावे। दूब एवं मन्दार शक्ति को न चढ़ावे। मालूर (विल्व) और तगर सूर्य को न चढ़ावे ॥ १५६ ॥

यहाँ दूर्वा शब्द श्वेत दूर्वा के लिये आया है यह विधि वाक्य सङ्केत पटल में द्रष्टव्य है।

**विनायके तु तुलसीं नार्पयेद् जातुचिद् बुधः।**
**श्वेतं पीतं हरेरिष्टं रक्तं रविगणेशयोः ॥ १५७ ॥**

बुद्धिमान् साधक गणेशजी को भूलकर भी तुलसीदल न चढ़ावे। श्वेत और पीत पुष्प भगवान् विष्णु को तथा रक्त वर्ण का पुष्प सूर्य और गणेशजी को प्रीतिकारक होता है ॥ १५७ ॥

**निर्गन्धिकेशकीटादिदूषितं चोग्रगन्धकम्।**
**मलिनं तनुसंस्पृष्टमाघ्रातं स्वविकासितम्।**
**अशुद्धभाजनानीतं स्नात्वानीतं च याचितम् ॥ १५८ ॥**
**शुष्कं पर्युषितं कृष्णं भूमिगं नार्पपेत् सुमम्।**
**चम्पकं कमलं त्यक्त्वा कलिकामपि वर्जयेत्॥ १५९ ॥**

गन्धरहित केश-कीटादि दूषित, उग्र गन्ध वाला, मलिन, किसी के शरीर पर संस्पृष्ट किया गया, आघ्रात, अपने द्वारा विकसित, अशुद्ध पात्र में लाया गया, स्नान कर लाया गया, किसी से याचना द्वारा प्राप्त किया गया, शुष्क एवं पर्युषित, काला अथवा पृथ्वी पर गिरा हुआ पुष्प किसी भी देवता को समर्पित न करे। चम्पा और कमल को छोड़कर किसी भी पुष्प की कली देवताओं को समर्पित न करे ॥ १५८-१५९ ॥

**कुरण्डकं काञ्चनारं वर्जयेद् बृहतीद्वयम्।**
**पुष्पं पत्रं फलं देवे न प्रदद्यादधोमुखम् ॥ १६० ॥**

कुरण्डक, काञ्चनार, दोनों प्रकार की बृहती पुष्प पत्र एवं फल किसी भी देवता को अधोमुख कर न चढ़ावे ॥ १६० ॥

पुष्पाञ्जलौ न तद्दोषः तथा पर्युषितस्य च ।
तुलसी वकुलोऽब्जश्च चम्पकश्च सरोजिनी॥ १६१ ॥
बिल्वकल्हारदमनास्तथा मरुबकं कुशः ।
दूर्वा हि वल्ल्यपामार्गविष्णुक्रान्तामुनिद्रुमः ॥ १६२ ॥
धात्रीयुतानामेतेषां पत्रैः कुर्यात् सुरार्चनम् ।
जम्बूदाडिमजम्बीरतिन्तिणीबीजपूरकाः ।
रम्भा धात्री च बदरी रसालः पनसोऽपि च ॥ १६३ ॥
एषां फलैर्यजेद् देवं तुलसी तु हरेःप्रिया ।
सुवर्णपुष्पतुलसी नैव निर्माल्यतां व्रजेत् ॥ १६४ ॥

पुष्पाञ्जलि में उपर्युक्त पुष्प तथा पर्युषित पुष्प को दूषित नहीं माना जाता । तुलसी, वकुल, कमल, चम्पक, सरोजिनी, विल्व, कल्हार, दमनक, मरुबक, कुशा, दूर्वा, वल्ली, अपामार्ग, विष्णुक्रान्ता, अगस्त्य तथा आमलकी इनके पत्रों से भी देवार्चन किया जा सकता है । जामुन, अनार, बड़ा नीबू, इमली, बीजपूर, केला, आँवला, वैर, आम एवं कटहल इनके फलों से भी देवार्चन करे । तुलसी तो भगवान् को अत्यन्त प्रिय हैं ही । सुवर्णपुष्प और तुलसी ये कभी भी निर्माल्य नहीं होती ॥ १६१-१६४ ॥

एतेषां निर्माल्यकथनं ज्ञानमालायाम्—

बिल्वापामार्गजातीतुलसिशमिशताकेतकीभृङ्गदूर्वा-
मन्दाम्भोजा हि दर्भा मुनितिलतगरब्रध्नकल्हारमल्ली ।
चम्पाश्वारातिकुम्भीमरुबकदमना बिल्वतोऽहानि च स्यु-
स्त्रिंशत् त्र्येकार्य्यरीशोदधिनिधिवसुभूभूयमा भूय एव ॥ १६५ ॥

प्रथमावृत्त्या बिल्वादीनां द्वितीयावृत्त्या दर्भादीनां दिनसंख्या बोध्या ।

अब पुष्पों के निर्माल्यत्व का कथन ज्ञानमाला तन्त्र में कहते हैं—विल्व, अपामार्ग, जाती, तुलसी, शमिशता, केतकी, भँगरैया, दूर्वा, मन्दाम्भोजा ३० दिन में निर्माल्य होते हैं । दर्भ ३, मुनि १, तिल ६, तगर ६, ब्रघ्न कल्हार मल्ली ११, चम्पा ४, अश्वाराति कुम्भी ८ दिन में, मरुबक १ और दमनक १ दिन में निर्माल्य होते हैं । मूल श्लोक में प्रथम आवृत्ति में बिल्वादि को जानना चाहिए । द्वितीय आवृत्ति में दर्भ आदि से दिन की संख्या कही गई है ॥ १६५ ॥

**विमर्श**—यहाँ सङ्केतित संख्याक्रम इस प्रकार है—त्रिंशत् ३०, त्रि ३, एक १, आर्य ६, अरि ६, ईश ११, उदधि ४, निधि ९, वसु ८, भू १, भू १ ।

पुष्पपूजां विधायेत्थं कुर्यादावरणार्चनम् ।

**इदानीं तन्त्रान्तरोक्तो विशेषो लिख्यते—**

**अनिर्माल्यं सनिर्माल्यमर्चनं द्विविधं मतम् ।**
**दिव्यैर्मनोरमैर्द्रव्यैर्गन्धपुष्पैः स्रगादिभिः ।**
**यदर्चनमनिर्माल्यं दिव्यभोगापर्गदम् ॥ १६६ ॥**

इस प्रकार देवता की पूजा कर उनके आवरण (परिवार) की अर्चना करे । इस विषय में अन्य तन्त्र में कही गई विशेष बात लिखते हैं—अर्चन अनिर्माल्य एवं सनिर्माल्य भेद से दो प्रकार के कहे गये हैं । दिव्य मनोरम द्रव्यों से, गन्ध पुष्पों से एवं माल्यादि से जो अर्चना की जाती है वह अनिर्माल्य अर्चन है । उससे दिव्य भोग एवं मोक्ष प्राप्त होता है ॥ १६६ ॥

**ग्राम्यारण्यादिसम्भूतैर्यागद्रव्यैर्मनोरमैः ।**
**भक्तैर्यत् क्रियते सम्यक् सनिर्माल्यं तदर्चनम् ॥ १६७ ॥**

ग्राम एवं अरण्य में उत्पन्न होने वाले मनोरम यागद्रव्यों से भक्तों द्वारा सम्यक् की जाने वाली पूजा सनिर्माल्य कही जाती है ॥ १६७ ॥

**तत्र तत्त्वसागरसंहितायां निर्माल्यत्वमुक्तम्—**

**जातमात्राणि पुष्पाणि घ्रातान्येव निसर्गतः ॥ १६८ ॥**
**पञ्चभिश्च महाभूतैर्भानुना शशिना तथा ।**
**प्राणिभिश्च द्विरेफाद्यैः पौष्पैरेव न संशयः ॥ १६९ ॥**
**अतो निर्माल्यमित्युक्तम्..................... ।**

तत्त्वसागरसंहिता में निर्माल्य इस प्रकार कहा गया है—पुष्प उत्पन्न होते ही पञ्चमहाभूतों से, सूर्य से, चन्द्रमा से और पुष्प लोभी भ्रमरादि प्राणियों से स्वभावतः आघ्रात हो जाते हैं अतः वे सभी निर्माल्य कहे जाते हैं ॥१६८-१७०॥

**निर्माल्यं चेदनेन फलं कथमित्याशंक्य तत्रैवोक्तम्—**

**घ्रातपुष्पात् फलं सिध्येदल्पं नो मानसाद् यथा ।**
**तस्मादपरिहार्यत्वादन्यथा चानुपायतः ।**
**अल्पबुद्ध्या ततो नृणां बाह्यपुष्पैर्भवेत् क्रिया ॥ १७० ॥**

अब यदि ये पुष्प निर्माल्य हैं तब इनकी पूजा से फल किस प्रकार सम्भव है ? सूँघे हुये पुष्प की पूजा से अल्प भी फल नहीं होता है । जैसा कि मानस पूजा से फल होता है किन्तु अपरिहार्य होने से, अन्य कोई उपाय न होने से एवं मनुष्यों की अल्पबुद्धि से बाह्य पुष्पों द्वारा ही पूजा सम्भव है । अतः उन्हीं पुष्पों से पूजा करे ॥ १७० ॥

अङ्गानि दिक्पहेत्यन्तं ततो धूपादिकं चरेत् ।
अग्निनिर्ऋतिवाय्वीशकोणेषु हृदयं शिरः ॥ १७१ ॥
शिखां कवचमाराध्य नेत्रमग्रे प्रपूजयेत् ।
दिक्ष्वस्त्रमङ्गदेव्यस्ता ध्यातव्या वामलोचनाः ॥ १७२ ॥

फिर षडङ्गन्यास करे दिक्पाल से लेकर उनके वज्रादि शस्त्रपर्यन्त गन्ध-धूपादि देवे । आग्नेय, नैर्ऋत्य, वायव्य तथा ईशानकोण में हृदय, शिर, शिखा तथा कवच की आराधना कर अपने आगे नेत्र की पूजा करे । चारों दिशाओं में अस्त्र-सहित अङ्ग देवियों का, जो अत्यन्त सुन्दर हैं उनका ध्यान करे ॥ १७१-१७२ ॥

सिताश्वेताऽसितास्तिस्रो रक्ता इष्टाऽभयान्विताः ।
स्वस्वदिक्षु यजेद् दिक्पान् जातिहेत्यादिसंयुतान् ॥ १७३ ॥
तारादिनिजबीजाद्यान् तत्प्रयोगोऽधुनोच्यते ।

जिनमें सित, श्वेत एवं आसित वर्ण की तीन देवियाँ तथा चौथी रक्त वर्ण की हैं इनके हाथों में वर तथा अभयमुद्रा है । इसके पाद ॐपूर्वक अपने-अपने बीज के सहित दिक्पालों का अपनी-अपनी दिशाओं में जाते शस्त्रों के सहित पूजन करे । अब उसका प्रयोग कहते हैं ॥ १७३-१७४ ॥

तारं बीजमथेन्द्रायाऽमुकाधिपतये ततः ।
सायुधाय सवाहान्ते नायसान्ते तथा परि ॥ १७४ ॥
वारायान्ते सशक्तीतिकायामुकपदं ततः ।
पार्षदाय नमोऽन्तोऽयं दिक्पालानां मनुः स्मृतः ॥ १७५ ॥
इन्द्रायेति पदस्थाने वह्न्यादिपदमुच्चरेत् ।
अग्निं तथा यमं रक्षो वरुणं पवनं विधुम् ॥ १७६ ॥
ईशानं पन्नगाधीशमध ऊर्ध्वं पितामहम् ।
पीतो रक्तः सितो धूम्रः शुक्लो धूम्रसितावुभौ ॥ १७७ ॥
गौरोऽरुणः क्रमादेते वर्णतः परिकीर्तिताः ।
स्वस्वबीजादिका बीजसमूहः कथ्यतेऽधुना ॥ १७८ ॥

इन्द्र के लिये तार (ॐ), फिर उनका बीज, फिर इन्द्राय फिर प्राचीदिगधि-पतये सायुधाय सवाहनाय सपरिवाराय सशक्तिकाय अमुक पदपार्षदाय नमः । यह दिक्पालों का बलि मन्त्र है । यहाँ अन्यत्र दिशा में इन्द्राय के स्थान पर वह्न्यादि का उच्चारण करे । अग्नि, यम, रक्ष, वरुण, पवन, चन्द्रमा, ईशान, पन्नगाधीश अनन्त इसके पश्चात् पितामह (ब्रह्मदेव)—ये दशो दिशाओं के देवता कहे गये हैं । इनका वर्ण पीत, रक्त, श्वेत, धूम, शुक्ल, धूम्रसित गौर और अरुण कहा गया है । अब इनके जो स्व-स्व बीज हैं उन बीज समूहों को कहता हूँ ॥ १७४-१७८ ॥

**मांसं रक्तं विषं मेरुं जलं वायुर्भृगुर्वियत् ।**
**एतानि शशियुक्तानि पाशो मायान्तिमा मता ॥ १७९ ॥**

मांस (?) रक्तं (?) विषं (?) मेरुं (?) जलं (वं) वायुं (यं) भृगु (सं) वियत् (हं) पाश (आं) और माया (ह्रीं) ये क्रमशः दशो दिक्पालों के बीज हैं ॥ १७९॥

**आद्याऽमुकपदस्थाने क्रमाज्जातिं वदेत् सुधीः ।**
**सुरतेजः प्रेतरक्षः सलिलप्राणतारकाः ॥ १८० ॥**
**भूताहिलोका विज्ञेया आशापालकजातयः ।**
**वज्रं शक्तिं दण्डमसि पाशमंकुशकं गदाम् ॥ १८१ ॥**
**शूलं चक्रं पद्ममेषामायुधानि क्रमाद् विदुः ।**
**पीतशुक्लसिताकाशविद्युद्रक्तसितासिताः ॥ १८२ ॥**
**कुरुविन्दपाटलाभा वज्राद्याः परिकीर्तिताः ।**

पूर्व श्लोक (द्र० ९.१७३) जहाँ अमुक जाति पद आया है वहाँ अब दशो दिक्पालों की जाति क्रमशः बतलाता हूँ । १. सुर, २. तेज, ३. प्रेत, ४. रक्ष, ५. सलिल, ६. प्राण, ७. तारक, ८. भूत, ९. सर्प और १०.लोक—इतनी लोकपालों की जातियाँ बतलायी गयी हैं । वज्र, शक्ति, दण्ड, असि, पाश, अङ्कुश, गदा, शूल, चक्र और पद्म—ये दशो दिक्पालों के शस्त्र हैं । इनका वर्ण पीत, शुक्ल, सित, आकाश, विद्युत्, रक्त, सित, असित, कुरुविन्द और पाटल के समान है ॥ १८०-१८३ ॥

**ऐरावतोऽजमहिषप्रेतमीनपृषन्नराः ॥ १८३ ॥**
**वृषभः स्यन्दनं हंसो वाहनानि प्रकीर्तिताः ।**
**पार्षदात् पूर्वममुकस्थाने स्यात् स्वेष्टदेवता ॥ १८४ ॥**

ऐरावत, अज, महिष, प्रेत, मीन, जल, मनुष्य, वृषभ, स्यन्दन और हंस इनका वाहन कहा गया है । अतः पार्षद से पूर्व में अमुक स्थान में स्वेष्ट देवता का नाम संयोजित करना चाहिए ॥ १८३-१८४ ॥

**यातुतोयपयोर्मध्येऽनन्तं पूर्वेशयोऽस्तुकम् ।**
**पूजान्ते लोकपालानां मुद्रां सन्दर्शयेदिमाम् ॥ १८५ ॥**

यातुधान और वरुण के मध्य में अनन्त का तथा ईशान और इन्द्र के मध्य में ब्रह्मदेव का पूजन करे । पूजा के पश्चात् दश दिक्पालों की इन-इन मुद्राओं को प्रदर्शित करे ॥ १८५ ॥

**पाणिमूले सुसंलग्ने शाखाः सर्वाः प्रसारिताः ।**
**लोकेशानामियं मुद्रा तेषामर्चासु दर्शयेत् ॥ १८६ ॥**

दोनों हाथों के मूल भाग को एक में मिलावे तथा अङ्गुलियों को ऊपर की ओर फैलाये रखें । यही सभी लोकपालों की मुद्रा है । उनकी पूजा में यह मुद्रा प्रदर्शित करनी चाहिये ॥ १८६ ॥

**प्रत्यावृत्तिं क्षिपेद् देवे पुष्पं मन्त्रमिमं जपन् ।**
**अभीष्टसिद्धिं मे देहि शरणागतवत्सल! ॥ १८७ ॥**
**भक्त्या समर्पये तुभ्यमिदमावरणार्चनम् ।**
**आह्वानाद्युपचारेषु प्रत्येकं पुष्पपायसी ॥ १८८ ॥**

प्रत्येक पूजा की प्रत्यावृत्ति में 'अभीष्टसिद्धिं मे देहि......आवरणार्चनम्' पर्यन्त मन्त्र पढ़े, तदनन्तर पुष्प प्रक्षेप करे । आवाहनादि उपचारों में पुष्प और जल का प्रक्षेप करे ॥ १८७-१८८ ॥

**दत्त्वा प्रक्षाल्य च करौ उपचारान्तरं चरेत् ।**
**धूपपात्रस्थिताङ्गारे क्षिप्त्वाऽगरुपुरादिकम् ॥ १८९ ॥**
**पात्रमस्त्रेण सम्प्रोक्ष्य हृदा पुष्पं समर्पयेत् ।**
**संस्पृशन् वामतर्जन्या मूलं श्लोकं च सम्पठन् ॥ १९० ॥**
**वनस्पतिरसोपेतो गन्धाढ्य: सुमनोहर: ।**
**आघ्रेय: सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ १९१ ॥**
**साङ्गाय सपरीत्यन्ते वाराय ङेन्तदेवता ।**
**धूपं समर्पयामीति नमोऽन्तं मन्त्रमुच्चरन् ॥ १९२ ॥**
**शङ्खाम्बु प्रक्षिपेद् भूमौ धूपमुद्रां प्रदर्शयन् ।**
**तर्जन्यङ्गुष्ठयोगेन घण्टामर्चेत् स्वमन्त्रत: ॥ १९३ ॥**

फिर कर प्रक्षालन कर अन्य पूजोपचार करे । धूपपात्र में स्थित अङ्गार में अगुरु कर्पूरादि प्रक्षिप्त करे । फिर पुष्प पात्र का प्रोक्षण कर 'नम:' इस मन्त्र से पुष्प समर्पित करे । फिर मूल श्लोक पढ़ते हुये बायें हाथ की तर्जनी से पात्र का स्पर्श करते हुये 'वनस्पतिरसोपेतो.......प्रतिगृह्यताम्' साङ्गाय सपरिवाराय देवतायै धूपं समर्पयामि' नम: इस मन्त्र का उच्चारण करते हुये शङ्ख स्थित जल चारों ओर छिड़के तथा भूमि पर तर्जनी एवं अङ्गूठा मिलाकर धूपमुद्रा प्रदर्शित करे । फिर घण्टा की अपने मन्त्र से पूजा करे ॥ १८९-१९३ ॥

**जयध्वनिमन्त्रमात: स्वाहान्तश्च दशाक्षर: ।**
**वादयन् वामहस्तेन कीर्तयन् देवतागुणान् ॥**
**धूपयेद् दक्षहस्तेन देवता नाभिदेशत: ॥ १९४ ॥**

'जयध्वनिमन्त्रमात: स्वाहा' यह दश अक्षर का घण्टा का मन्त्र है । बायें हाथ

से घण्टा बजावे, मुख से देवता का गुणगान करे और दाहिने हाथ से देवता को नाभि पर्यन्त धूप दिखाए ॥ १९४ ॥

**जलं पुष्पाञ्जलिं दद्याद् दीपदानमपीदृशम्।**
**वाममध्यमया स्पर्शो मूलश्लोकस्य कीर्तनम् ॥ १९५ ॥**

फिर जल पुष्पाञ्जलि तथा इसी प्रकार दीपदान करे । बायें हाथ की मध्यमा से देय वस्तु का स्पर्श करे तथा मूल श्लोक पढ़े ॥ १९५ ॥

**सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ।**
**सबाह्याभ्यन्तरज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ १९६ ॥**
**धूपस्थाने दीपपदं मध्यमाङ्गुष्ठयोगतः ।**
**दीपमुद्रादर्शनं तु तद्दानं नेत्रदेशतः ॥ १९७ ॥**
**भूमपक्षे तु वर्त्तीनां विषमा वर्त्तिका मताः ।**
**घृतदीपो दक्षिणे स्यात् तैलदीपस्तु वामतः ॥ १९८ ॥**
**सितवर्त्तियुतो दक्षे वामाङ्गे रक्तवर्त्तिका ।**
**दीपान्यद् धूपवज्ज्ञेयं ततो नैवेद्यमर्पयेत् ॥ १९९ ॥**

सुप्रकाशो महादीपः........................दीपोऽयं प्रतिगृह्यताम्' यह मन्त्र पढ़कर दीपदान करे । मध्यमा एवं अगुष्ठ मिलाकर दीप मुद्रा प्रदर्शित करे । यह दीपदान के स्थान पर करना चाहिये । यदि बहुत दीपक देना है तब वर्त्तिका की संख्या विषम बतलायी गई है । यदि घी का दीपक है तब दक्षिण से दीपदान करे और तैल का दीप है तो बायें से देवे । दाहिनी ओर से दिये जाने वाले दीप की बत्ती सफेद होनी चाहिये और बायीं ओर से दिये जाने वाले दीप की बत्ती लाल होनी चाहिये । अन्य प्रकार का दीपक धूप के समान ही देवे । इसके बाद नैवेद्य समर्पित करे ॥ १९६-१९९ ॥

**स्वर्णादिभाजने साज्यशर्करं पायसादिकम्।**
**परिवेश्य यथाशक्ति प्रोक्षेत् कैरस्त्रमन्त्रितैः॥ २०० ॥**
**चक्रमुद्रामथाऽऽरच्य सम्प्रोक्षेन्मन्त्रितैर्जलैः ।**
**वायुबीजेनार्कवारं ततस्तज्जातमारुतैः ॥ २०१ ॥**
**नैवेद्यदोषं संशोध्य चिन्तयेद् दक्षिणे करे ।**
**अग्निबीजं तस्य पृष्ठे वामे करतले न्यसेत् ॥ २०२ ॥**
**तं दर्शयित्वा नैवेद्ये तदुत्त्थेनाग्निनाऽखिलम् ।**
**नैवेद्यदोषं सन्दह्य बीजोत्त्थाऽमृतधारया ॥ २०३ ॥**
**प्रोक्ष्य मूलेन तत् स्पृष्ट्वाऽष्टशो मूलमनुं जपेत् ।**
**दर्शयित्वा धेनुमुद्रां गन्धपुष्पैस्तदर्पयेत् ॥ २०४ ॥**

स्वर्ण आदि निर्मित पात्र में घृत एवं शर्करा सहित पायसादि निवेदनीय पदार्थ परिवेषण (=परोसे) करे। फिर अस्त्राभिमन्त्रित जल से उसका प्रोक्षण करे। चक्र मुद्रा बनाकर उससे अभिमन्त्रित जल द्वारा निवेदनीय पदार्थ का प्रोक्षण करे। वायु बीज (यं) से बारह बार व्यजन डुलाकर उसके हवा से नैवेद्य गत दोषों को शुद्ध करे। उसे अपने दाहिने हाथ में स्थापित होने का ध्यान करे। उसके पीछे वाले भाग में तथा वाम कर तल में अग्निबीज (रं) से न्यास करे। उसे नैवेद्य में दिखा कर उससे उठी हुई अग्नि के द्वारा नैवेद्य के दोषों को जला देवे। फिर वरुण बीज (वं) से उत्पन्न अमृतधारा द्वारा मूल से उसका प्रोक्षण करे और आठ बार पुनः मूल मन्त्र का जप करे। धेनुमुद्रा प्रदर्शित कर सुगन्ध पुष्पों द्वारा नैवेद्य इष्टदेवता को इस प्रकार समर्पित करे ॥ २००-२०४ ॥

**देवे पुष्पाञ्जलिं दत्त्वा तेजो देवमुखोत्थितम्।**
**विचिन्त्य वामाङ्गुष्ठेन स्पृशेन्नैवेद्यभाजनम् ॥ २०५ ॥**

प्रथम देव को पुष्पाञ्जलि प्रदान करे। फिर देव के मुख से निकले हुये तेज को ध्यान करते हुये बायें हाथ के अङ्गुष्ठ से नैवेद्य पात्र का स्पर्श करे ॥ २०५ ॥

**दक्षहस्ते जलं धृत्वा मूलं श्लोकं शिरः पठन्।**
**सत्पात्रसिद्धं सुहविर्विविधानेकभक्षणम् ॥ २०६ ॥**
**निवेदयामि देवेश! सानुगाय गृहाण तत्।**
**साङ्गायेत्यादिकं प्रोच्य जलमुत्सृज्य भूतले॥ २०७ ॥**
**नैवेद्यमुद्रामङ्गुष्ठानामिकाभ्यां प्रदर्शयेत्।**
**सपुष्पाभ्यां कराभ्यां त्रिःप्रोद्धरन् भोज्यभाजनम्॥ २०८ ॥**
**निवेदयामि भवते जुषाणेदं हविर्हरे!।**
**षोडशार्णमिति प्रोच्य ग्रासमुद्रां प्रदर्शयेत् ॥ २०९ ॥**

दाहिने हाथ में जल लेकर शिर झुकाकर इस मूल श्लोक 'सत्पात्रसिद्धं... सानुगाय गृहाण तत्। साङ्गाय सपरिवाराय सशक्तिकाय सवाहनाय सायुधाय अमुक देवाय नैवेद्यं समर्पयामि। यह पढ़कर दाहिने हाथ में स्थित जल को पृथ्वी पर छोड़ देवे। तदनन्तर अङ्गूठा और अनामिका मिलाकर नैवेद्य मुद्रा प्रदर्शित करे। दोनों हाथों में पुष्प लेकर सपुष्प दोनों हाथों से तीन बार भोज्य भाजन को ऊपर उठावे। फिर 'निवेदयामि................हविर्हरे' पर्यन्त सोलह अक्षर का मन्त्र पढ़े, तदनन्तर ग्रासमुद्रा प्रदर्शित करे। बायें हाथ से कमल की मुद्रा 'ग्रासमुद्रा' कही जाती है। दाहिने हाथ से प्राणादि मुद्रा इस प्रकार प्रदर्शित करे ॥ २०६-२०९ ॥

**वामहस्तेन पद्माभा प्राणाद्या दक्षिणेन तु।**
**कनिष्ठानामिकाङ्गुष्ठैर्मुद्रा प्राणस्य कीर्तिता ॥ २१० ॥**

**तर्जनीमध्यमाङ्गुष्ठैरपानस्य तु मुद्रिका ।**
**अनामामध्यमाङ्गुष्ठैर्व्यानस्येयं तु मुद्रिका ॥ २११ ॥**
**कनिष्ठानामामध्याभिः साङ्गुष्ठाभिश्चतुर्थिका ।**
**सर्वाभिः सा समानस्य प्राणाद्यान् ङे द्विठान्वितान् ॥ २१२ ॥**

कनिष्ठा, अङ्गुष्ठ और अनामिका अङ्गुलियों के मिलाने से 'प्राणमुद्रा' बन जाती है । तर्जनी, मध्यमा और अङ्गुष्ठ मिलाने से 'अपान मुद्रा' बन जाता है । अनामिका, मध्यमा और अङ्गुष्ठ मिलाने से 'व्यान मुद्रा' बन जाती है । कनिष्ठा, अनामा और मध्यमा तथा अङ्गुष्ठा को मिलाने से 'चतुर्थी व्यान मुद्रा' बनती है सभी अङ्गुलियों को एक में मिलाने से 'समान मुद्रा' बन जाती है ॥२१०-२१२॥

**तारपूर्वान् जपन् मुद्राः प्राणादीनां प्रदर्शयेत् ।**
**ततो जवनिकां धृत्वा ब्रह्मेशाद्यैरिदं पठेत् ।**
**पद्यं शाली भक्तमिति मूलमन्त्रं च सप्तधा ॥ २१३ ॥**

साधक ॐप्राणाय स्वाहा ॐअपानाय स्वाहा इत्यादि मन्त्र पढ़ते हुए प्राणादि पाँच मुद्रायें प्रदर्शित करे । फिर भोजन स्थान पर पर्दा लगा देवे और 'ब्रह्मेशाद्यैः' श्लोक का पाठ करे । 'शालीभक्तम्' इस मूल मन्त्र को सात बार पढ़े ॥ २१३ ॥

**ब्रह्मेशाद्यैः परित उरुभिः सूपविष्टैः समेतो**
**लक्ष्म्या सिञ्जद्वलयकरया सादरं वीज्यमानः ।**
**नर्मक्ष्वेल्या प्रहसितमुखैर्हासयन् पङ्क्तिभोक्तॄन्**
**भुङ्क्ते पात्रे कनकघटिते षड्रसं श्रीरमेशः ॥ २१४ ॥**

**लक्ष्म्या इति पदे गौर्या, सिद्ध्या, प्रभया । रमेशपदेऽन्यदेवस्याऽप्यूहः श्रीमहेशः, गणेशः, दिनेशः, चिद्विलासेत्यादि ।**

जिन रमेश के भोजन काल में ब्रह्मा ईश्वरादि देवता ऊरु के बल चारो ओर बैठे हुये हैं, कङ्कण सिञ्जित हाथों से महालक्ष्मी जिन्हें आदरपूर्वक पङ्खा कर रही हैं, व्यङ्ग्य युक्त वचनों से जो पङ्क्ति में बैठे हुये अपने मित्रों को हँसा रहे हैं ऐसे श्रीरमेश कनक विरचित पात्र में षडरसों का भोजन कर रहे हैं ॥ २१४ ॥

**शालीभक्तं सुभक्तं शिशिरकरसितं पायसापूपसूपं**
**लेह्यं चोष्यं च पेयं सितममृतफलं वारिमृष्टं सुखाद्यम् ।**
**आज्यं प्राज्यं समज्यं नयनरुचिकरं राजिकैलामरीचि-**
**स्वाद्वाद्यं शाकराजीपरिकरममृताहारजोषं जुषस्व ॥ २१५ ॥**

लक्ष्म्या इस पद के स्थान में गौर्या, सिद्ध्या, प्रभया आदि की कल्पना कर लेनी चाहिये । यहाँ 'श्रीरमेशः' पद के स्थान में अन्य देव की कल्पना कर लेनी

चाहिये । जैसे—श्रीमहेशः, श्रीगणेशः, श्रीदिनेशः एवं चिद्विलास इत्यादि ।

शाली का सर्वश्रेष्ठ भात जो चन्द्रमा तथा कपूर के समान उज्ज्वल है उसके साथ पायस, पूआ, दाल, लेह्य, चोष्य, पेय, मिश्री, अमृतफल, मीठा जल जो सुख पहुँचाने वाला है प्रभूत मात्रा में भोज्य है, नेत्रों के लिये रुचिकर पदार्थ राजिक (हरदी) इला (लाची) मरीच युक्त होने से अत्यन्त स्वादिष्ट है, हे प्रभो! शाक एवं राजी आदि परिकरो से युक्त इस अमृताहार का भोजन करें ॥ २१५ ॥

**प्रतिसीरामपाकृत्य दद्यात् श्लोकं पठन् जलम् ।**
**समस्तदेवदेवेश सर्वतृप्तिकरं परम् ॥ २१६ ॥**
**अखण्डानन्दसम्पूर्णं गृहाण जलमुत्तमम् ।**
**स्थण्डिलेऽग्निमुपादाय वैश्वदेवक्रियां चरेत् ॥ २१७ ॥**
**मूलेन वीक्ष्य चास्त्रेण कृत्त्वा प्रोक्षणताडने ।**
**कुशैस्तद्वर्मणाऽभ्युक्ष्य यथोक्तं स्थापयेत् शुचिम् ॥ २१८ ॥**

फिर पर्दा हटा कर साधक इस श्लोक का पाठ करते हुये भगवान् को जल देवे । 'समस्तदेवदेवेश...........गृहाण जलमुत्तमम्'—यह जल देने का श्लोक है । इस प्रकार भगवान् को भोजन करा लेने के पश्चात् स्थण्डिल (वेदी) पर अग्नि स्थापन कर वैश्वदेव क्रिया करे । मूल मन्त्र पढ़ कर वेदी देखे अस्त्र मन्त्र से प्रोक्षण एवं ताडन करे । वर्म मन्त्र से कुशों द्वारा अभ्युक्षण कर शास्त्र विधि के अनुसार उस पर अग्नि स्थापन करे ॥ २१६-२१८ ॥

**तन्मन्त्रेण समभ्यर्च्याऽऽह्वयेत् तत्रेष्टदेवताम् ।**
**पूजयेद् गन्धपुष्पैस्तां महाव्याहृतिभिस्ततः ॥ २१९ ॥**

अग्नि मन्त्र से अभ्यर्चन कर उस पर इष्टदेवता का आवाहन करे । फिर गन्ध पुष्प से उनका पूजन करे ॥ २१९ ॥

**हुत्वा व्यस्तसमस्ताभिराहुतीनां चतुष्टयम् ।**
**अन्नैर्मूलेन जुहुयात् पञ्चविंशतिसंख्यया ॥ २२० ॥**

फिर समस्त (एक साथ) तथा व्यस्त (अलग-अलग) महाव्याहृतियों द्वारा चार आहुती प्रदान करे । मूल मन्त्र पढ़कर अन्न के द्वारा पच्चीस आहुति प्रदान करनी चाहिए ॥ २२० ॥

**पुनर्व्याहृतिभिर्हुत्त्वा मूर्तौ देवं नियोजयेत् ।**
**वह्निं विसृज्य देवाय दद्यादाचमनोदकम् ॥ २२१ ॥**
**तेजःसंयोज्य देवास्ये निर्गतं देववक्त्रतः ।**
**नैवेद्यांशं तदुच्छिष्टभोजिने विनिवेदयेत् ॥ २२२ ॥**

**विष्वक्सेनो हरेरुक्तश्चण्डेश्वर उमापतेः ।**
**विकर्त्तनस्य चण्डांशुर्वक्रतुण्डो गणेशितुः ॥ २२३ ॥**

फिर व्याहृतियों से हवन करे । मूर्त्ति में देव को स्थापित करे और अग्नि का विसर्जन कर देवाधिदेव को आचमन प्रदान करे । फिर उन इष्टदेवता के मुख से निकले हुये तेज को मूर्त्ति में स्थापित करे । शेष नैवेद्यांश इष्टदेवता के उच्छिष्ट भोजियों को प्रदान करे । विष्णु के उच्छिष्ट भोजी विष्वक्सेन हैं । उमापति महादेव के उच्छिष्टभोजी चण्डेश्वर हैं । विकर्त्तन (सूर्य) के उच्छिष्ट भोजी चण्डांशु हैं और गणेश के उच्छिष्टभोजी वक्रतुण्ड हैं ॥ २२१-२२३ ॥

**शक्तेरुच्छिष्टचाण्डाली स्मृता उच्छिष्टभोजिनः ।**
**ततो जवनमूर्त्ताय कुर्यादारात्रिकं सुधीः ॥ २२४ ॥**
**अथो निवेद्य ताम्बूलं दर्शयेच्छत्रचामरे ।**
**पठेदेकमना भूत्वा सार्धं श्लोकचतुष्टयम् ॥ २२५ ॥**

शक्ति की उच्छिष्ट भोजी 'उच्छिष्ट चाण्डाली' है यहाँ तक उच्छिष्ट भोजियों के विषय में कहा गया । फिर सुधी साधक मूर्त्ति की आरती करे तथा ताम्बूल निवेदन करे छत्र और चामर प्रदर्शित करे । फिर एकाग्रचित्त हो नीचे लिखे साढ़े चार श्लोकों को पढ़े ॥ २२४-२२५ ॥

**बुद्धिः सवासना क्लृप्ता दर्पणं मङ्गलानि च ।**
**मनोवृत्तिर्विचित्रा ते नृत्यरूपेण कल्पिता ॥ २२६ ॥**
**ध्वनयो गीतरूपेण शब्दो वाद्यप्रभेदतः ।**
**छत्राणि तव पद्मानि कल्पितानि मया प्रभो! ॥ २२७ ॥**
**सुषुम्णा ध्वजरूपेण प्राणाद्याश्चामरात्मना ।**
**अहङ्कारो गजत्वेन वेगः क्लृप्तो रथात्मना ॥**
**इन्द्रियाणयश्वरूपाणि शब्दादि रथवर्त्मना ॥ २२८ ॥**
**मनः प्रग्रहरूपेण बुद्धिः सारथिरूपतः ।**
**सर्वमन्यत्तथा क्लृप्तं तवोपकरणात्मना ॥ २२९ ॥**

साधक 'बुद्धिः सवासना........तवोपकरणात्मना' (श्लो. २२६-२२९)—इन चार श्लोकों से प्रार्थना करे ॥ २२६-२२९ ॥

**श्लोकानेतान् पठित्वा तु मूलमन्त्रमनन्यधीः ।**
**यथाविधि जपित्वा तं मन्त्रेण विनिवेदयेत् ॥ २३० ॥**

**जपविधिस्तु मन्त्रसङ्केतपटले लिखामः ।**

साधक एकाग्रचित्त हो इन श्लोकों को पढ़ने के पश्चात् मूल मन्त्र का

यथाविधि जप करे और उसका समर्पण मन्त्रपूर्वक करे ॥ २३० ॥

जप की विधि 'मन्त्रसङ्केत' नामक पटल में की जायेगी ।

**क्षिपन्नर्ध्यस्य पानीयं देवता दक्षिणो करे ।**
**गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत् कृतं जपम् ॥ २३१ ॥**
**सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थिता ।**
**कीर्तितः श्लोकरूपोऽयं मन्त्रो जपनिवेदने ॥ २३२ ॥**

फिर अर्घ का जल 'गुह्यातिगुह्य..........त्वत्प्रसादात् त्वयि स्थिता' पर्यन्त मन्त्र पढ़ते हुये देवता के दक्षिण हाथ में प्रक्षिप्त करते हुये जप निवेदन करे। मैंने जप निवेदन में यह श्लोक रूप मन्त्र कहा ॥ २३१-२३२ ॥

**दत्त्वा पराङ्मुखं चार्ध्यं पुष्पैः शङ्खं प्रपूजयेत् ।**
**दण्डवत् प्रणिपत्येशं देवे कुर्यात् प्रदक्षिणाः ॥ २३३ ॥**
**अजेशशक्तिगणपभास्कराणां क्रमादिमाः ।**
**वेदार्धचन्द्रवह्न्यद्रिसंख्याः स्युः सर्वसिद्धये ।**
**स्तुत्वा ब्रह्मार्पणाख्येन मनुनाऽऽत्मानमर्पयेत् ॥ २३४ ॥**

**स्तुत्वेति संस्कृतप्राकृतभाषारूपैः कवचसहस्रनामस्तोत्रादिभिरिति ।**

फिर देवता के सामने खड़े होकर अर्घ प्रदान करे । पुष्पों द्वारा शङ्ख का पूजन करे और दण्डे की तरह गिर कर तत्तत्कार्यों की सिद्धि के लिये भगवान् की प्रदक्षिणा करे ।

अब तत्तद् **देवताओं के परिक्रमा का क्रम** कहते हैं—ब्रह्मदेव की चार, सदाशिव की आधा, शक्ति की एक, गणेश की तीन तथा भास्कर की सात प्रदक्षिणा करे । फिर ब्रह्मार्पण मन्त्र से भगवान् की स्तुति कर अपने को समर्पित कर देवे ॥ २३३-२३४ ॥

स्तुत्वा का अर्थ संस्कृत एवं प्राकृत भाषा में कहे गये कवच सहस्रनाम तथा स्तोत्रादि हैं । अब ब्रह्मार्पण मन्त्र कहते हैं—

**इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः ।**
**जाग्रत्स्वप्नसुषुप्त्यन्तेऽवस्थासु मनसा वदेत् ।**
**वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्नकस्ततः ॥ २३५ ॥**
**मेषोऽनन्तान्वितो यत्स्मृतं यदुक्तं च यत्कृतम् ।**
**तत्सर्वं प्रोच्य ब्रह्मार्पणं भवत्वग्निवल्लभा ॥ २३६ ॥**
**मां मदीयं च सकलं हरयेऽन्ते समर्पयेत् ।**

**तारस्तत्सदिति प्रोक्तो ब्रह्मार्पणमनुर्बुधैः ॥ २३७ ॥**
**प्रणवादिद्व्यर्शीत्यर्णो देवतात्मसमर्पणे ।**
**संहारमुद्रया देवं संहरेद् हृदये निजे ॥ २३८ ॥**

**ब्रह्मार्पण का मन्त्र**—ॐ इतः पूर्वं प्राण बुद्धिदेह धर्माधिकारतः जाग्रत्स्वप्न-सुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतम् तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा मां मदीयं चं सकलं हे हरये समर्पये ॐ तत्सत्'— इस प्रकार ८२ अक्षर का ब्रह्मार्पण मन्त्र बतलाया गया है । इस प्रकार साधक को ब्रह्मार्पण करना चाहिए और फिर संहारमुद्रा से अपने इष्टदेव को अपने हृदय में स्थापित करना चाहिए ॥ २३५-२३८ ॥

**अन्यस्मिन् दैवते कार्य ऊहो हरिपदे बुधैः ।**
**एवं सम्पूज्य देवेशं ब्रह्मयज्ञं समाचरेत् ।**
**योगक्षेमं ततः कृत्त्वा मध्याह्ने स्नानमाचरेत् ॥ २३९ ॥**

यदि साधक के इष्टदेवता विष्णु के अतिरिक्त कोई अन्य हैं तब साधक विष्णु के स्थान पर ऊहकर उस देवता के नाम का ग्रहण करे । इस प्रकार देवेश की पूजा कर ब्रह्मयज्ञ करे । तदनन्तर अपना योग क्षेम (अनन्य लाभो योगः, लब्धस्य रक्षणं क्षेमम्') सम्पादन कर मध्याह्न में स्नान करे ॥ २३९ ॥

**स्मार्तं तान्त्रं च पूर्वोक्तं सन्ध्यां तर्पणमप्यथ ।**
**सम्पूज्य पूर्ववद् देवं वैश्वदेवादिकं चरेत् ॥ २४० ॥**

फिर पूर्वोक्त स्मार्त्त एवं तान्त्रिकी सन्ध्या तथा तर्पण कर पूर्ववत् देव की पूजा कर वैश्वदेवादि विधि का सम्पादन करे ॥ २४० ॥

**देवप्रसादं भुञ्जीत सम्भोज्य ब्राह्मणोत्तमान् ।**
**आचम्य देवं संस्मृत्य पुराणं श्रृणुयात् सुधीः ॥ २४१ ॥**

तदनन्तर ब्राह्मणों को भोजन करा कर देवप्रसाद स्वयं भक्षण करे । फिर आचमन कर देवता का स्मरण करे । फिर विद्वान् साधक को पुराण श्रवण करना चाहिए ॥ २४१ ॥

**सन्ध्यां होमं च निर्वृत्त्य देवं सम्पूज्य पूर्ववत् ।**
**शयीत शुद्धशय्यायां भुक्त्वाल्पं देवतां स्मरन् ॥ २४२ ॥**

सन्ध्या काल में सन्ध्या होम करे और पूर्ववत् देव पूजन करे । अल्प भोजन कर देवता का स्मरण करते हुये शुद्ध शय्या पर शयन करे ॥ २४२ ॥

**एवं यः पूजयेत् देवं त्रिकालं धर्ममाचरन् ।**

**न जातु वैरिभिर्दुःखैः पीड्यते देवरक्षितः ॥ २४३ ॥**

इस प्रकार धर्म का आचरण करते हुये जो त्रिकाल देवार्चन करता है वह देवरक्षित हो जाता है। वैरीजन उसका कुछ बिगाड़ नहीं सकते ॥ २४३ ॥

**त्रिकालपूजनाशक्तौ कार्यं द्विः सकृदर्थदः।**
**विशेषेण यजेद् देवं सङ्क्रान्त्यादिषु पर्वसु ॥ २४४ ॥**

यदि पूजा करने में अशक्त हो तब दो काल अथवा एक काल ही पूजन करे। उससे भी मनोरथ पूर्ण होता है और अर्थ की प्राप्ति होती है। विशेष कर देवता की पूजा सङ्क्रान्त्यादि पर्व में ही करना चाहिये ॥ २४४ ॥

**दशभिः पञ्चभिर्वापि पूजयेदुपचारकैः।**
**अशक्तः कारयेत् पूजां दद्यादर्चनसाधनम् ॥ २४५ ॥**

यदि षोडशोपचार अप्राप्य हो तब दश अथवा पाँच ही उपचारों से पूजन करे। अशक्त होने पर दूसरे से पूजा करावे। किन्तु उसे अर्चन की समस्त सामग्री स्वयं प्रदान करे ॥ २४५ ॥

पञ्चपूजाप्रकारकथनम्

**दानाऽशक्तः समर्चन्तं पश्येत् तत्परमानसः।**
**साधना भाविनी त्रासी दौर्बोधी सौतकी तथा॥ २४६ ॥**
**आतुरी पञ्चधोक्ता सा पूजास्ताः कीर्त्यते क्रमात्।**
**पूजा साधनवस्तूनामभावान् मनसैव सा॥ २४७ ॥**
**पूजाम्भसा वा शुद्धेन साधना भाविनी तु सा।**
**त्रस्तः सम्पूजयेद् देवं यथालब्धोपचारकैः॥ २४८ ॥**
**मानसैर्वापि सा त्रासी ज्ञेया सम्पूर्णसिद्धिदा।**

यदि सामग्रीदान तथा अर्चा करने में असमर्थ हो तब पूजा करने वाले व्यक्ति द्वारा की जाने वाली पूजा एकाग्रचित्त से देखे। यह साधना १. भाविनी, २. त्रासी, ३. दौर्वाधी, ४. सौतकी तथा ५. आतुरी भेद से पाँच प्रकार की कही गई है। अब क्रमशः उनका वर्णन करता हूँ। जो पूजा पूजोपचारों के अभाव में मन से ही अथवा शुद्धजल से ही की जाती है वह साधना भाविनी कही जाती है। त्रास होने पर यथा लब्धोपचारों से अथवा केवल मन से ही जो पूजा की जाती है वह त्रासी साधना कही जाती है जो सम्पूर्ण सिद्धियाँ प्रदान करती है ॥ २४६-२४९ ॥

**बाला वृद्धा स्त्रियो मूर्खा दुर्बोधा तत्कृता स्तुता ॥ २४९ ॥**
**यथाज्ञानं सुरार्चा सा दौर्बोधी कीर्तिता बुधैः।**

**सूतकी तु नरः स्नात्वा कृत्त्वा सन्ध्यां च मानसीम्॥ २५०॥**
**मानसैर्वार्चयेत् कामी निष्कामः सर्वमाचरेत् ।**
**सौतक्युक्ताऽऽतुरो रोगी न स्नायात् न च पूजयेत् ॥ २५१ ॥**
**विलोक्य मूर्ति देवस्य यदि वा सूर्यमण्डलम् ।**
**सकृन्मूलमनुं जप्त्वा तत्र पुष्पं विनिक्षिपेत् ॥ २५२ ॥**
**ततो रोगे गते स्नात्वा पूजयित्वा गुरून् द्विजान् ।**
**पूजाविक्षेपदोषो मे माऽस्त्विति प्रार्थयेत्तु तान् ॥ २५३ ॥**
**तेभ्यश्चाशिषमादाय स्वं देवं पूर्ववद् यजेत् ।**
**आतुरी कीर्तिता पूजा पञ्चैव शिवकीर्तिता ॥ २५४ ॥**

बालक, वृद्ध स्त्रियाँ, मूर्ख अथवा दुर्बोधों के द्वारा की जानी वाली स्तुति अथवा अपने-अपने ज्ञान के अनुसार की जाने वाली सुरार्चा को बुद्धिमानों ने दौर्बोधी पूजा कहा है सूतकी पूजा उसे कहते हैं जो सूतक में ही स्नान कर लेने पर मानसी सन्ध्या के पश्चात् किसी कामना से मानसी पूजा करे अथवा निष्काम होकर पूजा करे उसे सौतकी पूजा कहते हैं । आतुरीसाधना उसे कहते हैं जो मनुष्य रोगी है । न स्नान कर सकता है, न पूजा कर सकता है; केवल देवता की मूर्त्ति का अथवा सूर्य मण्डल का दर्शन कर केवल एक बार मूल मन्त्र का जप कर देवता के ऊपर पुष्प प्रक्षेप करता है । तदनन्तर रोग के चले जाने पर स्नान कर गुरु एवं ब्राह्मणों की पूजा कर साधक को उनसे 'मुझे पूजाविक्षेपदोष न लगे' ऐसी प्रार्थना करनी चाहिए । तदनन्तर उनका आशीर्वाद लेकर अपने इष्ट देव की पूजा करे उसे आतुरी पूजा कहते हैं । यहाँ तक हमने पञ्च साधना कही जिसे शिवजी ने स्वयं कहा है ॥ २४९-२५४ ॥

**स्वयं सम्पाद्य सर्वाणि श्रद्धया साधनानि यः।**
**पूजयेत् तत्परो देवं स लभेताऽखिलं पदम् ॥ २५५ ॥**

जो स्वयं अपनी श्रद्धा से पूजा के समस्त साधन एकत्रित कर तत्परता से अपने इष्टदेव का पूजन करता है वह साधक सम्पूर्ण पूजा का फल प्राप्त कर लेता है ॥ २५५ ॥

**पूजनेन फलार्धः स्यादन्यदत्तैस्तु साधनैः ।**
**तस्मात् स्वयं समानीय साधनान्यर्चनं चरेत् ॥ २५६ ॥**

जो अन्यों द्वारा एकत्रित किये गये साधनों से अपने इष्ट देवता का पूजन करता है, उसे आधा ही पूजा फल प्राप्त होता है । इसलिये स्वयं साधनों को एकत्रित कर इष्टदेव की पूजा करे ॥ २५६ ॥

**देवपूजाविहीनो यः स नरो नरके पतेत् ।**

**यथाकथञ्चित् देवार्चा विधेया श्रद्धयान्वितैः ॥ २५७ ॥**
**पूज्यैहिकसुखं भुक्त्वाप्यन्ते देवत्वमाप्नुयात् ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे पूजाक्रमं नाम नवमः पटलः ॥ ९ ॥**

जो मनुष्य देवपूजा से रहित है वह नरकगामी होता है इसलिये श्रद्धा से युक्त होकर जैसे-कैसे पूजा अवश्य करे । ऐसा पुरुष देवता की पूजा कर ऐहिक सुख तो प्राप्त करता ही है अन्त में देवत्व भी प्राप्त करता है ॥ २५७ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में पूजाक्रम नामक नवम पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ ९ ॥**



# दशमः पटलः

## न्यासकथनम्

**अथानन्तरं न्यासस्यावश्यकत्वात् कतिचिन्न्यासा लिख्यन्ते ।**

अब इसके बाद न्यास आवश्यक होने के कारण कुछ न्यास लिख रहा हूँ—

**कुलप्रकाशतन्त्रे—**

**न्यासं विना जपं प्राहुरासुरं विफलं बुधाः ।**
**न्यासात् तदात्मको भूत्वा देवो भूत्वा तु तं यजेत्॥ १ ॥**

कुलप्रकाशतन्त्र में भी बतलाया गया है—बुद्धिमानों ने न्यास के बिना किये गये जप को आसुर जप तथा निष्फल कहा है । इसलिये न्यास से न्यासात्मक हो कर देव बने और तब देवता बन कर जप करे ॥ १ ॥

**आगमोक्तेन मार्गेण न्यासान् नित्यं करोति यः ।**
**देवताभावमाप्नोति मन्त्रसिद्धिश्च जायते ॥ २ ॥**
**अकृत्त्वा न्यासजालं यो मूढात्मा प्रभजेन्मनून् ।**
**सर्वविघ्नैश्च बाध्येत व्याधैर्मृगशिशुर्यथा ॥ ३ ॥**
**यो न्यासकवचच्छन्नो मन्त्रं जपति तं प्रिये ।**
**विघ्ना दृष्ट्वा पलायन्ते सिंहं दृष्ट्वा यथा गजाः ॥ ४ ॥**

जो साधक आगमविधान के अनुसार नित्य न्यास करता है वह देवत्व प्राप्त कर लेता है तथा उसे शीघ्र मन्त्रसिद्धि प्राप्त हो जाती है । जो मूर्ख बिना न्यास जाल किये मन्त्रों का जप करता है उसे समस्त विघ्न इस प्रकार बाधा पहुँचाते हैं जैसे व्याघ्र मृग शिशुओं को व्यथित करता है । हे प्रिये! जो न्यास एवं कवच से सुरक्षित होकर मन्त्र जप करता है उसको देखकर ही समस्त विघ्न इस प्रकार भागते हैं जैसे हाथी सिंह को देखकर भाग जाता है ॥ २-४ ॥

**ते च सर्वसाधारणत्वेन गान्धर्वे, विशेषाश्च तत्तत्कल्पतो ज्ञेयाः ।**

**भूतशुद्धिं मातृकां च पीठन्यासं तथैव च ।**
**ऋष्यादिसहितानीह षडङ्गानि कराङ्गयोः ॥ ५ ॥**

**विद्यान्यासं महेशानि कृत्त्वा देवमयो भवेत् ।**
**एतदेव हि नित्यं स्यादन्यत् काम्यं प्रकीर्तितम् ॥ ६ ॥**

सर्वसाधारण के लिये वे न्यास गान्धर्वो द्वारा उक्त हैं । तथा विशेष न्यास तत्तद् सम्प्रदाय द्वारा कल्पित हैं—ऐसा समझना चाहिये—भूतशुद्धि, मातृका, पीठन्यास ऋष्यादि सहित षडङ्ग हृदयादि न्यास, करन्यास तथा विद्यान्यास इतना कर साधक देवमय हो जाता है । इतने न्यास नित्य न्यास हैं । अन्य न्यास काम्य न्यास हैं ॥ ५-६ ॥

**ये तु षोढादयो न्यासाः कार्याः सौभाग्यवाञ्छया ।**
**तत् तत् कल्पे च द्रष्टव्या एतदेव ब्रवीमि ते ॥ ७ ॥**

ये षोढादि न्यास हैं उन्हें सौभाग्य प्राप्ति के लिये करे । उन्हें तत्तत्कल्प में देखना चाहिये, यहाँ मैं इसी को कहता हूँ ॥ ७ ॥

**देव एव यजेद् देवं नादेवो देवमर्चयेत् ।**
**न्यासात् तदात्मको भूत्वा देवो भूत्वा तु तं यजेत्॥ ८ ॥**

देवता साधक ही देवता का यजन करे । अदेव साधक देव का यजन कदापि न करे । न्यास से देवात्मक बन कर देव बने तत्पश्चात् देव का यजन करे ॥ ८ ॥

**भूतशुद्धिस्तु पूजापटले कथितैव । तथापि किञ्चिल्लिखामि । शैवागमे—**

**शरीराकारभूतानां भूतानां यद् विशोधनम् ।**
**अव्यक्तब्रह्मसम्पर्काद् भूतशुद्धिरियं मता ॥ ९ ॥**
**भूतशुद्धिं विना कर्म जपहोमार्चनादिकम् ।**
**भवेत् तन्निष्फलं सर्वप्रकारेणाऽप्यनुष्ठितम् ॥ १० ॥**

भूतशुद्धि तो पूजा पटल (नवम पटल) में हमने कह ही दिया है । फिर भी यहाँ कुछ लिख रहा हूँ—शरीर के आकार में परिणत जो पञ्चभूत हैं उनका विशोधन ही भूतशुद्धि है । यह भूतशुद्धि अव्यक्त ब्रह्म के सम्पर्क से होती है । जप, होम एवं अर्चनादि कर्म भले ही सर्व प्रकार से सम्पन्न किये जाँय किन्तु बिना भूतशुद्धि की वे फल प्रदान नहीं करते ॥ ९-१० ॥

**स्वभावतः सदाशुद्धं पञ्चभूतात्मकं वपुः ।**
**मलमूत्रसमायुक्तं सर्वदैव महेश्वरि ॥ ११ ॥**
**तस्यैव हि विशुद्ध्यर्थं वाय्वग्निसलिलाक्षरैः ।**
**शोषदाहौ तथा भस्म प्रोत्सारामृतवर्षणम्॥ १२ ॥**
**आप्लावनं च कर्त्तव्यं पूरकुम्भकरेचकैः ।**
**आदौ विलाप्य भूतानि पृथिव्यादीनि च क्रमात्॥ १३ ॥**

यह पञ्चभूतात्मक शरीर स्वभावतः सदा अशुद्ध रहता है । हे महेश्वरि ! क्योंकि यह सर्वदा मलमूत्र से युक्त होने के कारण दूषित ही रहता है । उसी की शुद्धि के लिये वायु (यं) अग्नि (रं) सलिल (वं) अक्षरों से उसका शोषण, दाह, भस्म, प्रोत्सारण (बाहर करना), अमृतवर्षण तथा आप्लावन पूरक, कुम्भक एवं रेचक से करना चाहिये । सर्वप्रथम पृथ्व्यादि भूतों का विलयन करने के पश्चात् यह सारी क्रिया करनी चाहिये ॥ ११-१३ ॥

**तद्यथा—**

**गन्धादिघ्राणसंयुक्तां पृथिवीमप्सु संहरेत् ।**
**रसादिजिह्वया सार्धं जलमग्नौ प्रलापयेत् ॥ १४ ॥**
**रूपादि चक्षुषा सार्धमग्निं वायौ नयेल्लयम् ।**
**समीरमम्बरे विद्वान् स्पर्शादि त्वक्समन्वितम् ॥ १५ ॥**
**अहङ्कारे हरेद् व्योम सशब्दं तं महत्यपि ।**
**महच्च सर्वशक्तीनामव्यक्ते कारणे परे ॥ १६ ॥**

वह इस प्रकार—गन्धादिघ्राण से संयुक्त पृथ्वी को जल में, रसादि जिह्वा के साथ जल को अग्नि में, रूपादि चक्षु के साथ अग्नि को वायु में, स्पर्शादि त्वक् समन्वित उस वायु को आकाश में, शब्द सहित आकाश का अहङ्कार में, अहङ्कार का महत्तत्त्व में, महत्तत्त्व का सर्वशक्ति में और सर्वशक्ति का पर कारण भूत अव्यक्त में लय करे ॥ १४-१६ ॥

**सच्चिदानन्दरूपं यद् वैष्णवं परमं पदम् ।**
**पृथिव्यादिक्रमात् सर्वं तत्र लीनं विचिन्त्य च ॥ १७ ॥**
**आप्लावनादिकं कार्यं प्राणायामप्रयोगतः ।**
**हृदि हस्तं सन्निधाय प्राणान् संस्थापयेत्ततः ।**
**प्राणान् संस्थाप्य विधिवन्मातृकान्यासमाचरेत् ॥ १८ ॥**

जो सच्चिदानन्द स्वरूप हैं एवं वैष्णवों का परम्पद है । इस प्रकार पृथ्व्यादि सभी का वैष्णव साधक अव्यक्त में लीन होने का ध्यान करे और प्राणायामादि के प्रयोग से उनका आप्लावनादि कर्म करे । तदनन्तर हृदय पर हाथ रख कर प्राणप्रतिष्ठा करे । इस प्रकार प्राण संस्थापित करने के पश्चात् विधिवत् मातृका न्यास करे ॥ १७-१८ ॥

**अथ मातृकान्यासो मन्त्रमहोदधौ—**

**एवं प्राणान् प्रतिष्ठाप्य मातृकान्यासमाचरेत् । इति ।**

**अन्यच्च—**

**मातृकायाः षडङ्गं च मातृकान्यासमेव च ।**

**सर्वेषां प्रथमं कृत्त्वा पश्चात् तन्त्रोदितान् न्यसेत्॥ १९ ॥**

मातृकान्यास मन्त्रमहोदधि में कहा गया है—इस प्रकार प्राण प्रतिष्ठा के पश्चात् मातृकान्यास करे। अन्य ग्रन्थ में और भी कहा गया है—प्रथम मातृका से षडङ्ग करे। तदनन्तर मातृकान्यास सर्वप्रथमकर पश्चात् तान्त्रिक न्यास करे ॥१९॥

**अन्यत्रापि—**

**रुद्रैर्युक्तां केवलाम्बा मनूनां**
**कर्मारम्भे मातृकां विन्यसेद् यः।**
**मन्त्रास्तस्य कुर्वते शीघ्रसिद्धिं**
**पापैःसार्द्धं याति नाशं जरा च॥ २० ॥**

**सा द्विधा—**

**मातृका द्विविधा प्रोक्ता परा च अपरा तथा।**
**सुषुम्णान्तः परा ज्ञेया अपरा देहमाश्रिता॥ २१ ॥ इति।**

अन्यत्र भी बतलाया गया है—जो कर्म के आरम्भ में सभी मन्त्रों की मातृ भूता मातृका वर्णों का रुद्र के साथ न्यास करता है, मन्त्र उसकी शीघ्र सिद्धि करते हैं। उसकी वृद्धावस्था पाप के साथ विनष्ट हो जाती है। वह मातृका दो प्रकार की कही गई है। उसके परा और अपरा ये दो भेद कहे गए हैं। परा सुषुम्णा के भीतर है और अपरा इस शरीर में ही व्याप्त है॥ २०-२१ ॥

**तत्क्रमस्तु मन्त्रमहोदधौ—**

**अकाराद्या क्षकारान्ता वर्णाः प्रोक्ता तु मातृका।**
**प्रजापतिर्मुनिस्तस्या गायत्री छन्द ईरितम्॥ २२ ॥**
**सरस्वती देवतोक्ता विनियोगोऽखिलाप्तये।**
**हलो बीजानि चोक्तानि स्वराः शक्तय ईरिताः॥ २३ ॥**
**मूर्ध्नि वक्त्रे हृदि न्यस्य ऋष्यादीन् साधकोत्तमः।**
**पञ्चवर्गैर्यादिभिश्च षडङ्गानि समाचरेत्॥ २४ ॥**
**क्लीबहीनशशाङ्काद्य ह्रस्वदीर्घान्तरस्थितैः।**
**सानुस्वारैर्जातियुक्तैर्ध्यायेद् देवीं ततोऽम्बुजे॥ २५ ॥**

अकार से लेकर क्षकार पर्यन्त वर्ण मातृका कहे जाते हैं। इन मातृका वर्णों के प्रजापति ऋषि हैं, गायत्री छन्द हैं, सरस्वती देवता हैं, हल बीज है, स्वर शक्तियाँ हैं, स्वाभीष्ट प्राप्ति के लिये इसके विनियोग का विधान है। साधक शिर, मुख एवं हृदयादि में क्रमशः ऋषि छन्द देवता का न्यास करे। यह न्यास क्लीव वर्ण (ऋ ॠ ऌ ॡ) वर्णों को छोड़कर मात्र ह्रस्व दीर्घ वर्णों से सम्पुटित होना

चाहिये । इसी प्रकार ह्रस्व दीर्घ वर्णों से सम्पुटित सानुस्वार कवर्ग, चवर्ग, टवर्ग, तवर्ग, पवर्ग और यवर्ग से करन्यास एवं हृदयन्यास करे । पश्चात् सरस्वती के वक्ष्यमाण रूप का ध्यान अपने हृदयकमल में करना चाहिये ॥ २२-२५ ॥

**पञ्चाशदर्णै रचिताङ्गभागां**
**धृतेन्दुखण्डां कुमुदावदाताम् ।**
**वराभये पुस्तकमक्षसूत्रं**
**भजे गिरं सन्दधतीं त्रिनेत्राम् ॥ २६ ॥**

**ध्यात्वा प्रपूजयेत् पीठे देवताः पूर्वमीरिताः ।**

कुल पचास वर्णों से जिनके शरीर की रचना है, जिनके मस्तक पर चन्द्रकला विराजमान है, जो कुमुद के समान अत्यन्त शुभ्र वर्ण वाली हैं, जिनके दाहिने हाथ में वर मुद्रां, अक्षमाला तथा बायें हाथ में अभयमुद्रा एवं पुस्तक सुशोभित है मैं उन समस्त वाणी को धारण करने वाली एवं तीन नेत्रों वाली सरस्वती देवी का ध्यान करता हूँ ॥ २६-२७ ॥

**पीठशक्तयस्तु मण्डूकादिपरतत्त्वान्ता पूजापटलतो ज्ञेयाः ।**

**पीठशक्तेस्तदुपरि सरस्वत्यो नवार्चयेत् ।**
**मेधा प्रज्ञा प्रभा विद्या श्रीधृतिस्मृतिबुद्धयः ॥ २७ ॥**
**विद्येश्वरीति सम्प्रोक्ता मातृकापीठशक्तयः ।**
**वियद्भृगुस्थं मनुयुक् विसर्गाढ्यं च मातृका॥ २८ ॥**
**योगपीठाय नत्यन्तो मनुरासनदेशने ।**
**मूर्तिं सङ्कल्प्य मूलेन तस्यां वाणीं प्रपूजयेत् ॥ २९ ॥**
**आदावङ्गानि सम्पूज्य द्वितये पूजयेत् स्वरौ ।**
**द्वौ द्वौ तृतीये वर्गांश्च वर्गशक्तोश्चतुर्थके ॥ ३० ॥**

इस प्रकार सरस्वती का ध्यान कर पीठ शक्तियाँ मण्डूक से लेकर परतत्त्वान्त तक पूजा पटल में कह दी गई है—पीठ शक्तियों के ऊपर नव सरस्वती का पूजन करे । मेधा, प्रज्ञा, प्रभा, विद्या, श्री, धृति, स्मृति, बुद्धि और विद्येश्वरी—ये नव मातृका शक्तियों के नाम हैं । वियत् (ह्) भृगु (स्) के आगे मनु (औ) पश्चात् विसर्ग लगाकर फिर मातृयोगपीठाय नमः कह कर आसन का पूजन करना चाहिये (हसौः मातृका योगपीठाय नमः)। तदनन्तर मूल मन्त्र से मूर्त्ति की कल्पना कर वाणी देवी की पूजा करनी चाहिये । प्रथमावरण में अङ्गों का, द्वितीयावरण में दो-दो स्वरों का, तृतीयावरण में कवर्गादि अष्टवर्गों का और चतुर्थ आवरण में वर्ग शक्तियों का पूजन करना चाहिये ॥ २७-३० ॥

**व्यापिनी पालिनी चेति पावनी क्लेदिनी पुनः।**

धारिणी मालिनी पश्चाद् हंसिनी शङ्खिनी तथा ॥ ३१ ॥
वर्गशक्तय इत्युक्ताः पञ्चमे त्वष्टमातरः ।
षष्ठे शक्रादयो देवाः सप्तमे वज्रपूर्वकाः ।
इत्थं सम्पूज्य देवेशीं न्यसेद् वर्णान् निजाङ्गके ॥ ३२ ॥

व्यापिनी, पालिनी, पावनी, क्लेदिनी, धारिणी, मालिनी, हंसिनी और शङ्खिनी —ये वर्ग शक्तियाँ कही गई हैं । इसके बाद पञ्चम आवरण में ब्राह्मी आदि अष्ट मातृकाओं का, षष्ठ आवरण में इन्द्रादि देवगणों का और सप्तम आवरण में उनके वज्रादि आयुधों का पूजन कर देवेशी का पूजन करना चाहिये । तदनन्तर अपने शरीर में वर्णों का न्यास करना चाहिये ॥ ३१-३२ ॥

**अथ मातृकान्यासस्य द्विधात्वकथनात् आदावन्तर्मातृका यामले—**

अथान्तर्मातृकान्यासं शृणु त्वं कमलानने ।
द्व्यष्टपत्राम्बुजे कण्ठे स्वरान् षोडश विन्यसेत् ॥ ३३ ॥
द्वादशच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत् ।
दशपत्राम्बुजे नाभौ डकारादीन् न्यसेद् दश ॥ ३४ ॥
षट्पत्रमध्ये लिङ्गस्थे वकारादीन् न्यसेच्च षट् ।
आधारे चतुरो वर्णान् वादीन् सान्तान् न्यसेदथ॥ ३५ ॥
हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये । इति ।

अब हे कमलानने! आप अन्तर्मातृका न्यास सुनिए—षोडश पत्र वाले कमल के कण्ठ में सोलह स्वरों से न्यास करे । द्वादश पत्रात्मक हृत्कमल में कादि द्वादश वर्ण से न्यास करे । दशपत्रात्मक नाभि कमल में डकारादि दश वर्णों से न्यास करे । षट् पत्रात्मक लिङ्ग कमल में बकारादि षट् वर्णों का, चतुष्पत्रात्मक कमल में बकारादि सकारान्त चार वर्ण से और द्विदलात्मक भ्रूमध्य स्थित काल में ह क्ष वर्णों से हे प्रिये ! न्यास करे ॥ ३३-३६ ॥

**बहिर्न्यासस्तु मन्त्रमहोदधौ—**

ललाटमुखवृत्ताक्षिश्रवोनासासु गण्डयोः ।
ओष्ठयो दन्तपङ्क्त्योश्च मूर्ध्नि वक्त्रे न्यसेत् स्वरान् ॥ ३६ ॥
बाह्वोः सन्धिषु साग्रेषु कचवर्गौ न्यसेत् सुधीः ।
टतवर्गौ पदोस्तद्वत् पार्श्वयोः पृष्ठदेशतः ॥ ३७ ॥
नाभौ कुक्षौ पवर्गं च हृदंश-ककुदंशतः ।
न्यस्य यादिचतुर्वर्णात् शादिषट्कं ततो न्यसेत् ॥ ३८ ॥
हृदादिकरयोरङ्घ्र्योर्जठरे वदने तथा ।
यादियोगं त्वगसृगादिषु सदान्यासे प्रकीर्तितः ॥ ३९ ॥

मन्त्रमहोदधि में बहिर्न्यास इस प्रकार कहा गया है—ललाट, मुखवृत्त, दोनों नेत्र, दोनों कान, दोनों नासापुट, दोनों गण्डस्थल, दोनों होठ, दोनों दन्त पङ्क्ति, शिर एवं मुख में स्वरों से न्यास करना चाहिये । दोनों बाहुओं के मूल, कूर्पर, मणिबन्ध, अङ्गुलि मूल और अङ्गुल्यग्रभाग में क्रमशः कवर्ग, चवर्ग का न्यास करना चाहिये । खवर्ग तवर्ग का न्यास दोनों पैरों के मूल, जानु, गुल्फ, पादाङ्गुलिमूल तथा पादाङ्गुलि के अग्रभाग में करना चाहिए । पवर्ग का न्यास दोनों पार्श्व, पीठ, नाभि एवं उदर में, यवर्ग के चार वर्ण य र व ल का न्यास हृदय, दोनों कन्धे एवं ककुद में तथा श ष स ह का न्यास दोनों हाथ एवं दोनों पैरों में, ल और क्ष का न्यास उदर एवं मुख में करना चाहिए । यादि सात वर्णों का न्यास त्वक्, असृक् आदि सात धातुओं में करना चाहिए । यह न्यास सदान्यास में बतलाया गया है ॥ ३६-३९ ॥

**सृष्टिन्यासं विधायैवं स्थितिन्यासं समाचरेत् ।**
**ऋषिश्छन्दश्च पूर्वोक्तं देवता विश्वपालिनी ॥ ४० ॥**
**उपविष्टां वल्लभाङ्के ध्यायेद् देवीमनन्यधीः ।**
**मृगबालं वरं विद्यामक्षसूत्रं दधत्करैः ॥ ४१ ॥**
**मालाविद्यालसद्हस्तां वहन् ध्येयः शिवो गिरम् ।**
**एवं ध्यात्वा डकाराद्यान् वर्णानङ्गेषु विन्यसेत् ॥ ४२ ॥**

इस प्रकार सृष्टि न्यास कर स्थिति न्यास करे । स्थिति न्यास के ऋषि छन्द आदि पूर्वोक्त हैं, विश्वपालिनी देवता है, साधक को एकाग्रचित्त से अपने प्रियतम की गोद में बैठी हुई इस देवता का ध्यान करना चाहिये । इनके दाहिने हाथों में वरमुद्रा, अक्षसूत्र, दिव्यमाला तथा बायें हाथ में मृगशावक, विद्या और वर्ण माला है । इस प्रकार विश्व पालिनी सरस्वती देवी का ध्यान करना चाहिये । इस प्रकार ध्यान कर डकारादि वर्णों से अपने अङ्गों में न्यास करे ॥ ४०-४२ ॥

**गुल्फादिजानुपर्यन्तं स्थितिन्यासोऽयमीरितः ।**
**न्यासे संहारसञ्ज्ञे तु ऋषिश्छन्दश्च पूर्ववत् ॥ ४३ ॥**
**संहारिणी सपत्नानां शारदा देवता स्मृता ।**
**अक्षस्त्रक्टङ्कसारङ्गविद्याहस्तां त्रिलोचनाम् ॥ ४४ ॥**
**चन्द्रमौलिं कुचानम्रां रक्ताब्जस्थां गिरं भजे ।**
**ध्यात्वैवं विन्यसेद् वर्णान् क्षाद्यानन्तान् विलोमतः ॥ ४५ ॥**
**सृष्टिन्यासे तु सर्गान्ता सर्गबिन्द्वन्तिका स्थितौ ।**
**बिन्द्वन्ता संहृतौ चैषा पूर्ववच्चाङ्गपूजने ॥ ४६ ॥**
**न्यस्याः सर्वत्र नत्यन्ता वर्णा वा तारसम्पुटाः ।**
**सृष्टिन्यासं स्थितिन्यासं पुनः कुर्यात् प्रयत्नतः ॥ ४७ ॥**

यह स्थितिन्यास दक्षिण गुल्फ से लेकर वामजानु पर्यन्त कहा गया है । इसके बाद संहारन्यास करना चाहिये । संहारन्यास में ऋषि और छन्द पूर्ववत् हैं । सपत्नों का संहार करने वाली शारदा देवी इस संहारन्यास की देवता कही गई हैं ।

अब ध्यान कहते हैं—जो रक्तकमल पर विराजमान हैं, जिनके दाहिने हाथों में अक्षमाला और परशु एवं बायें हाथों में मृगशावक तथा विद्या है, ऐसे चन्द्रकला से सुशोभित, स्तनागार से विनम्र, तीन नेत्रों वाली, शत्रुसंहारकारिणी शारदा देवी का मैं ध्यान करता हूँ । इस प्रकार शारदा देवी का ध्यान कर विलोम रीति से अन्त के क्षादिवर्णों से अकारादि पर्यन्त वर्णों से न्यास करे । सृष्टिन्यास में विसर्गयुक्त वर्णों से, स्थितिन्यास में सविसर्ग वर्णों से तथा सानुस्वार दोनों प्रकार के वर्णों से, संहार न्यास में मात्र अनुस्वार युक्त वर्णों से न्यास करना चाहिये । अङ्ग पूजनकी प्रक्रिया में वर्ण के आदि में प्रणव तथा अन्त में नमः लगाकर न्यास करने की विधि बतलायी गयी है ॥ ४४-४७ ॥

**किञ्चिद् विशेषस्तु यामले—**

**स्थित्यन्ता तु गृहस्थानां सृष्ट्यन्ता ब्रह्मचारिणाम् ।**
**संहारान्ता मातृका स्यान्न्यासे तु यतिबाणयोः ॥ ४८ ॥**
**विरक्तानां गृहस्थानां संहारान्तापि शस्यते ।**
**सपत्नीकवनस्थानां स्थित्यन्तापि विधीयते ॥ ४९ ॥**

यामल तन्त्र में कुछ और विशेष कहा गया है—गृहस्थों के लिये स्थित्यन्त न्यास, ब्रह्मचारियों के लिये सृष्ट्यन्त न्यास, सन्यासी तथा वानप्रस्थी के लिये संहारान्त मातृका न्यास का विधान है । विरक्त एवं गृहस्थों के लिये संहारान्त न्यास भी प्रशस्त है । सपत्नीक वानप्रस्थी के लिये स्थित्यन्त न्यास भी प्रशस्त बतलाया गया है ॥ ४८-४९ ॥

**विद्यार्थिनामथैतेषां सृष्ट्यन्तापि विधीयते ।**
**मुद्रया मनसा वाऽथ पुष्पेन तत्त्वमुद्रया ।**
**मातृकां विन्यसेत् प्राज्ञोऽप्यन्यथा विफलं भवेत् ॥ ५० ॥**

इन विद्यार्थियों के लिये सृष्ट्यन्त न्यास का भी विधान है । मानसी मुद्रा से अथवा पुष्प, अथवा तत्त्वमुद्रा से, बुद्धिमान् साधक मातृका न्यास करे । अन्यथा पुष्प से, अथवा तत्त्वमुद्रा से, बुद्धिमान् साधक मातृका न्यास करे, अन्यथा न्यास विफल हो जाता है ॥ ५० ॥

**अन्यत्रापि—**

**ओमाद्यन्तो नमोऽन्तो वा सबिन्दुर्बिन्दुवर्जितः ।**

**पञ्चाशद्वर्णविन्यासः क्रमादुक्तो मनीषिभिः॥ ५१ ॥ इति ।**

अन्य तन्त्र में भी कहा गया है—मनीषियों ने इन पचास वर्णों का न्यास आदि में ॐ पूर्वक और अन्त में नमः पूर्वक, अथवा सविन्दु, अथवा बिन्दुरहित क्रमशः चारो वर्णों के लिये कहा है ॥ ५१ ॥

**अपरं च—**

**चतुर्धा मातृका प्रोक्ता केवला बिन्दुसंयुता ।**
**सविसर्गा शोभया च रहस्यं श्रृणु कथ्यते ॥ ५२ ॥**

और भी कहा गया है—मातृकायें चार प्रकार की कही गई हैं । केवला, बिन्दुसंयुता सविसर्गा और सानुनासिका । अब इनका रहस्य कहता हूँ प्रभो ॥५२॥

**विद्याकरी केवला च शोभया मुक्तिदायिनी ।**
**सविसर्गा भुक्तिदात्री सबिन्दुर्बिन्दुदायिनी ॥ ५३ ॥**

**बिन्दुर्मोक्षम् ।**

केवला मातृका, विद्याकरी, शोभा (सानुनासिका) से युक्त मातृका मुक्तिदायिनी है, सविसर्गा, भोगदात्री है और सविन्दु मातृका मोक्षदायिनी कही गई है ॥ ५३ ॥

बिन्दु का अर्थ मोक्ष है ।

**विशुद्धेश्वरे—**

**वाग्भवाद्या च वाक्सिद्ध्यै रमाद्या श्रीप्रवृद्धये ।**
**हृल्लेखाद्या सर्वसिद्ध्यै कामाद्या लोकवश्यदा ॥ ५४ ॥**

विशुद्धेश्वर तन्त्र में भी बतलाया गया है—वाग्भवादि मातृकायें (ऐं इत्यादि) वाक्सिद्धि के लिये, रमा (श्रीं) आदि श्रीप्रवृद्धि के लिये, हृल्लेखा (ह्रीं) आदि सर्वसिद्धि के लिये तथा काम (क्लीं) आदि लोकों को वशीकरण करने वाली कही गयी है ॥ ५४ ॥

**श्रीकण्ठाद्यामिमां न्यस्य सर्वमन्त्रः प्रसीदति ।**
**धन्यं यशस्यमायुष्यं कलिकल्मषनाशनम् ॥ ५५ ॥**

इन्हें श्रीकण्ठादि के साथ न्यास करने से समस्त मन्त्र सिद्ध हो जाते हैं । यह न्यास धन्य, यशस्कर तथा कलिकल्मष नाशक है ॥ ५५ ॥

**यः कुर्यान्मातृकान्यासं स एव स्यात् सदाशिवः ।**
**पूज्य ध्यायन् महेशानीं समाहितमनाः सुधीः ॥ ५६ ॥**

जो इस प्रकार मातृकाओं का न्यास करता है वह स्वयं सदाशिव बन जाता

है । अतः सुधी साधक को एकाग्रचित्त हो इन मातृकाओं का पूजन कर उनका ध्यान करना चाहिए ॥ ५६ ॥

**स्थानेषु क्रमतो न्यस्य पूर्वोक्तेषु जपेल्लिपिम् ।**
**पञ्चाशत्संख्यया नित्यं यावल्लक्षं प्रपूर्यते ॥ ५७ ॥ इति ।**

**लक्षं लक्षसंख्ययेति । एकवारं न्यासं कृत्वा एकवारं जपेदिति ज्ञेयम् ।**

पूर्वोक्त स्थानों में मातृकाओं का न्यास करे लिपि (वर्णों) का जप करे पचास बार की संख्या में जप करे अथवा जब तक लक्ष की पूर्त्ति न हो तब तक जप करे। यहाँ विशेष कहते हैं कि जब एक बार न्यास करे तब एक बार जप करे, यही क्रम है ॥ ५७ ॥

**दशांशेन तिलैर्होमं कुर्याच्च मधुराप्लुतैः ।**
**पयो मधु घृतं चेति समं त्रिमधुरं स्मृतम् ॥ ५८ ॥ इति ।**

दूध, मधु और घृत तीनों द्रव्य समान मात्रा में एकीकरण करने से त्रिमधुर कहे जाते हैं । मातृका जप के अनन्तर जप के दशांश से तिल युक्त त्रिमधुर पदार्थों से हवन करे ॥ ५८ ॥

**अन्ये बहवो भेदास्तथापि दश भेदाः लिख्यन्ते—**

**शुद्धं बिन्दुयुतं विसर्गसहितं हृल्लेखया श्रीयुतं**
**बालासम्पुटितं तथा च परया श्रीविद्ययाऽलंकृतम्।**
**आरोहादवरोहतश्च सततं न्यासं पुनर्हंसयो-**
**र्यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृत्॥ ५९ ॥**

**अत्र शुद्धत्वेऽपि बिन्दुयुक्तत्वं वर्णानां वीर्यद्योतनार्थमिति सम्प्रदायः ।**

इस प्रकार न्यास के अन्य बहुत से भेद हैं किन्तु केवल दश भेद लिख रहा हूँ—१. शुद्ध, २. बिन्दुयुक्त, ३. विसर्ग सहित, ४. हृल्लेखा (ह्रीं) युक्त, ५. श्रीयुक्त, ६. बाला सम्पुटित, ७. परा श्रीविद्यायुक्त, ८+९. आरोहावरोह युक्त और १०. हंसः युक्त ये दश न्यास कहे गये हैं । जो इसे जानता है वही समस्त जगत् के सृष्टि, स्थिति तथा न्यास करने में समर्थ हैं ॥ ५९ ॥

यहाँ वर्णों के शुद्ध होने पर भी बिन्दु युक्त इसलिये कहा गया है कि बिन्दु युक्त वर्ण ही वीर्यवान् हैं ।

**अन्यच्च—**

**शुद्धश्चापि सबिन्दुकस्त्वथकलायुक् केशवाद्या तथा**
**श्रीकण्ठादियुतश्च शक्तिकमलामारैस्तथैकैकशः ।**

न्यासास्ते दशधा पृथङ्निगदितास्ते ब्रह्मयागान्तिकाः
सर्वे साधकसिद्धिसाधनविधौ सङ्कल्पकल्पद्रुमाः ॥ ६० ॥ इति ।
प्राणायामं ततः कुर्यात् प्रणवेन यथाविधि ।

अन्य तन्त्र में और भी बतलाया गया है—शुद्ध सविन्दुक कला युक्त, केशवादि युक्त, श्रीकण्ठादियुक्त, शक्ति युक्त, कमला युक्त और मारक युक्त इन एक-एक से युक्त इस प्रकार हमने पृथक्-पृथक् दश न्यास कहा ये न्यास ब्रह्मयाग के अन्त में किये जाते हैं । ये सभी न्यास साधक की सिद्धि के साधन विधि में उनके सङ्कल्पों को पूरा करने के लिये साक्षात् कल्पवृक्ष हैं । इस न्यास के बाद प्रणव से यथाविधि प्राणायाम करे ॥ ६०-६१ ॥

प्राणायाममुद्रा यथा—

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥ ६१ ॥

प्राणायाम की मुद्रा इस प्रकार है—कनिष्ठा, अनामिका तथा अङ्गुष्ठ अङ्गुलियों को एक में मिलाकर नासापुट धारण करना प्राणायाम कहा जाता है । उसमें तर्जनी मध्यमा का योग नहीं होना चाहिये ॥ ६१ ॥

तद्यथा विशुद्धेश्वरे—

प्राणायामत्रयं चैव कुर्याद् वै तदनन्तरम् ।
पूरकं वामनाड्या तु कुर्यात् षोडशधा जपात् ॥ ६२ ॥
कुम्भकं मध्यनाड्या तु चतुष्षष्टिजपात्ततः ।
रेचनं पिङ्गलया तु द्वात्रिंशज्जपसंख्यया ॥ ६३ ॥

जैसा कि विशुद्धेश्वर तन्त्र में भी कहा गया है—न्यास के बाद तीन प्राणायाम करे अर्थात् वाम नाडी से सोलह बार जप करते हुये पूरक करे और मध्य नाडी से चौसठ बार जप करते हुये कुम्भक करे । फिर पिङ्गला नाडी से बत्तीस बार जप करते हुये रेचक करे ॥ ६२-६३ ॥

विपरीतं ततः कुर्याद् यथाशक्त्या तु साधकः ।
तदशक्तौ तदर्धेन तदर्धेनाऽथवा शिवे ।
प्राणायामं विना देवपूजने न हि योग्यता ॥ ६४ ॥ इति ।

इसके बाद साधक अपनी शक्ति के अनुसार विपरीत प्राणायाम करे । हे शिवे! उसमें अशक्त होने पर आधा और उसमें भी अशक्त होने पर उसका भी आधा प्राणायाम करे । क्योंकि प्राणायाम किये बिना देवपूजन में अधिकार नहीं होता है ॥ ६४ ॥

**अन्यच्च हठयोगे—**

**इडया पिब षोडशभिः पवनं**
**कुरु षष्टिचतुष्टयमन्तरगम् ।**
**त्यज पिङ्गलया शनकैः शनकै-**
**र्दशभिर्दशभिर्दशभिर्द्व्यधिकैः ॥ ६५ ॥**

और हठयोग में भी कहा गया है—इडा से ॐ पढ़कर सोलह बार प्राणवायु खीचें । इसके बाद चौसठ पर्यन्त ॐ पढ़कर उसे भीतर स्थापित करे । फिर पिङ्गला से १२, १२, १२ बार 'ॐ' पढ़कर वायु बाहर निकाले ॥ ६५ ॥

**अन्यत्रापि—**

**कर्मणोन्ते तथारम्भे प्राणसंयममाचरेत् ।**
**प्रणवेन तथा मूलमुखार्णेन प्रयत्नतः ।**
**प्राणायामं विना कर्म कृतमप्यकृतं भवेत् ॥ ६६ ॥ इति ।**

**प्राणायामस्य सगर्भादयोऽन्ये षड्भेदाः अनावश्यकत्वान्न लिखितास्ते योगपटले द्रष्टव्याः ।**

अन्यत्र भी कहा गया है—कर्म के अन्त में तथा प्रारम्भ में प्राणायाम करे । यह प्राणायाम मूल मुख के वर्ण ॐ से प्रयत्नपूर्वक करे । क्योंकि प्राणायाम के बिना किया गया कर्म भी अकृत हो जाता है ।

प्राणायाम के सगर्भ अगर्भ आदि छह भेद और हैं । किन्तु यहाँ उसकी आवश्यकता नहीं है । अतः उसे योग पटल में देखना चाहिए ॥ ६६ ॥

**श्रीकण्ठाद्यां शम्भुभक्तो वैष्णवः केशवादिकाम् ।**
**गणेशाद्यां तु तत्सेवी शक्तिभाङ् मातृकाः कलाः ॥ ६७ ॥**

**इति पूजापटलोक्तत्वादत्र लिखामः ।**

**ताः क्रमेणैव कथ्यन्ते ऋष्यादिन्यासपूर्वकाः ।**
**मुनिः स्याद् दक्षिणामूर्तिर्गायत्री छन्द ईरितम् ॥ ६८ ॥**
**अर्धाद्रिजा हरो देवो नियोगः सर्वसिद्धये ।**
**हलो बीजानि गुह्येषु स्वराः शक्तिः पदोर्न्यसेत् ॥ ६९ ॥**
**हसाभ्यां दीर्घयुक्ताभ्यां कृत्वाङ्गं शङ्करं स्मरेत् ।**
**पाशाङ्कुशवराक्षस्रक्पाणिं शीतांशुशेखरम् ॥ ७० ॥**
**त्र्यक्षं रक्तसुवर्णाभमर्धनारीश्वरं भजे ।**
**एवं ध्यात्वा शम्भुशक्ती चतुर्थ्यन्तो नमोऽन्वितः ॥ ७१ ॥**

शिव का भक्त श्री कण्ठादि न्यास करे और वैष्णव साधक केशवादि न्यास

करे तथा गणेशादि न्यास गाणपत्य साधक करे । शाक्त साधक मातृका कलाओं से न्यास करे यह बात हम पूजापटल में कह आये हैं इसलिये यहाँ उनका विवेचन लिख रहा हूँ ।

अब उन-उन न्यासों को ऋषि आदि न्यासपूर्वक कह रहा हूँ । प्रथम श्रीकण्ठन्यास इस श्रीकण्ठन्यास के दक्षिणामूर्त्ति ऋषि हैं, गायत्री छन्द है, अर्धनारीश्वर देवतां हैं, सर्वसिद्धि के लिये इसका विनियोग है, हल् बीज है, उनसे गुह्य स्थान में स्वर शक्ति है उससे पैर में न्यास करे । आं इत्यादि दीर्घ वर्णों से युक्त 'हसाभ्यां नमः' पढ़कर अङ्गन्यास करे । फिर शङ्कर का ध्यान करे, जो शीतांशुशेखर, पाश, अङ्कुश, वर, अक्षमाला अपने हाथों में धारण किये हुये हैं, जिनके तीन नेत्र हैं, जिनके शरीर की कान्ति रक्त सुवर्ण के समान है, ऐसे अर्धनारीश्वर का मैं भजन कर रहा हूँ ॥ ६७-७१ ॥

**ह्सौंबीजमातृकापूर्वो विन्यसेन्मातृकास्थले ।**

शम्भु भक्त इस प्रकार शिव का ध्यान कर चतुर्थ्यन्त 'नमः' से युक्त मातृका पूर्वक ह्सौं बीज से मातृका स्थल में न्यास करे ॥ ७२ ॥

### श्रीकण्ठादिमातृकान्यासकथनम्

**श्रीकण्ठपूर्णोदर्यौ चानन्तो विरजयान्वितः ॥ ७२ ॥**
**सूक्ष्मेशः शालिनीयुक्तो लोलाक्षीयुक् त्रिमूर्तिकः।**
**अमरेशो वर्तुलाक्ष्या चार्वीशो दीर्घघोणया ॥ ७३ ॥**
**भारभूतिर्दीर्घमुखी तिथीशो गोमुखीयुतः ।**
**स्थाण्वीशो दीर्घजिह्वायुक् हरः कुण्डोदरीयुतः॥ ७४ ॥**
**झिण्टीशश्चोर्ध्वकेशीयुग् भौतिको विकृतिमुख्यपि ।**
**सद्योजातो ज्वालामुख्यनुग्रह उल्कामुखीयुतः ॥ ७५ ॥**
**अक्रूरः श्रीमुखी महासेनो विद्यामुखीयुतः ।**
**क्रोधीशश्च महाकाल्या चण्डीशश्च सरस्वती ॥ ७६ ॥**
**पञ्चान्तकः सर्वसिद्धिगौरीयुक्तः प्रकीर्तितः ।**
**शिवोत्तमोऽसौ विन्यस्यो युक्तस्त्रैलोक्यविद्यया ॥ ७७ ॥**
**एकरुद्रो मन्त्रशक्तिः कूर्मेशश्चात्मशक्तियुक् ।**
**एकनेत्रो भूतमाता युक्तः स्याच्चतुराननः ॥ ७८ ॥**
**लम्बोदर्या युतः प्रोक्तो, अजेशो द्राविणीयुतः।**
**सर्वेशो नागरीयुक्तः सोमेशश्चापि खेचरी ॥ ७९ ॥**
**लाङ्गलीशश्च मञ्जर्या दारुकेशस्वरूपिणी ।**
**अर्धनारीशवीरिण्या उमाकान्तः पुनर्युतः ॥ ८० ॥**

काकोदर्या तथा खाढीपूतनायुक्त ईरितः ।
दण्डीशो भद्रकालीयुगत्रीशो योगिनीयुतः ॥ ८१ ॥
मीनेशः शङ्खिनीयुक्तो मेषेशस्तर्जनीयुतः ।
लोहितः कालरात्री च शिखीशः कुब्जिनीयुतः ॥ ८२ ॥
छागलण्डः कपर्दिन्या द्विरण्डेशश्च वज्रिणी ।
महाकालोऽजयायुक्तो वालीशश्च सुखीश्वरी ॥ ८३ ॥
भुजङ्गो रेवतीयुक्तः पिनाकी माधवीयुतः ।
खड्गीशो वारुणीयुक्तोऽवकेशो वायवीयुतः ॥ ८४ ॥
श्वेतो रक्षो विदारिण्या भृगुः सहजया युतः ।
लकुलीशश्च लक्ष्मीयुक् शिवेशो व्याधिनीयुतः ॥ ८५ ॥
संवर्तको महामाया प्रोक्ता श्रीकण्ठमातृका ।

अब शक्ति समेत श्रीकण्ठादि कहते हैं—पूर्णोदरी युक्त श्रीकण्ठ; बिरजा युक्त अनन्त; शालिनीयुक्त सूक्ष्मेश, लोलाक्षीयुक्त त्रिमूर्त्ति, वर्त्तुलाक्षी युक्त अमरेश, दीर्घ घोणायुक्त चार्वीश, दीर्घमुखी युक्त भारभूति, गोमुखी युक्त तिथीश, दीर्घजिह्वायुक्त स्थाणवीश, कुण्डोदरी युक्त हर, ऊर्ध्वकेशीयुक्त झिण्टीश, विकृतिमुखी युक्त भौतिक, ज्वालामुखी युक्त सद्योजात, उल्कामुखी युक्त अनुग्रह, श्रीमुखी युक्त अक्रूर, विद्यामुखी युक्त महासेन, महाकालीयुक्त क्रोधीश, सरस्वती युक्त चण्डीश, सर्वसिद्धि युक्त पञ्चान्तक, गौरीयुक्त शिवोत्तम, त्रैलोक्य विद्या युक्त विन्यस्य, मन्त्रशक्ति युक्त एकरुद्र, आत्मशक्तियुक्त कूर्मेश, भूतमातायुक्त एकनेत्र, लम्बोदरी युक्त चतुरानन, द्राविणीयुक्त अजेश, नागरीयुक्त सर्वेश, खेचरी युक्त सर्वेश, मञ्जरीयुक्त लाङ्गलीश, स्वरूपिणी युक्त दारुकेश, वीरिण्या युक्त अर्धनारीश, काकोदरी समेत उमाकान्त, पूतनायुक्त खाढी, भद्रकाली युक्त दण्डीश, योगिनीयुक्त अत्रीश, शङ्खिनीयुक्त मीनेश, तर्जनीयुक्त मेषेश, कालरात्रीयुक्त लोहित, कुब्जिनी युक्त शिखीश, कपर्दिनी युक्त छागलण्ड, वज्रिणी युक्त द्विरण्डेश, अजायुक्त महाकाल, सुखीश्वरीयुक्त वालीश, रेवतीयुक्त भुजङ्ग, गाधवीयुक्त पिनाकी, वारुणीयुक्त खड्गीश, वायवी युक्त अवकेश, विदारिणी के साथ श्वेत रक्ष, सहजा से युक्त भृगु, लक्ष्मीयुक्त लकुलीश और व्याधिनी युक्त शिवेश एवं महामाया युक्त संवर्त्तक यहाँ तक श्रीकण्ठमातृका कही गई हैं ॥ ७२-८६ ॥

यत्र त्वीशपदं नोक्तं श्रीकण्ठादिषु धामसु ॥ ८६ ॥
तत्र सर्वत्र कर्त्तव्यं शक्तिभ्यां हृत् ततो वदेत् ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राण्यसून् वदेत् ॥ ८७ ॥
शक्तिं क्रोधं तथात्मभ्यामन्तान्यादि दशस्वपि ।

इन श्रीकण्ठादि नाम समूह में जहाँ-जहाँ ईश पद नहीं कहा गया है उन-उन

स्थानों में 'शक्तिभ्यां नमः' कहे । इसके बाद त्वक्, असृक्, मांस, मेद, अस्थि, मज्जा, शुक्र, असुर, शक्ति एवं क्रोध—इन दशों में अन्त के दो में दो अकारों से तथा शेष आठ में यकारादि आठ वर्णों से; इस प्रकार साधक को कुल दशों में न्यास करना चाहिए ॥ ८६-८८ ॥

**केशवादिमातृकायाः साध्यनारायणो ऋषिः ॥ ८८ ॥**
**अमृताद्या तु गायत्रीछन्दो लक्ष्मीहरिः सुरः ।**
**द्विरुक्तैः शक्तिश्रीकामैः षडङ्गानि समाचरेत् ॥ ८९ ॥**

अब केशवादि मातृका कहते हैं—इस केशवादि मातृका के साध्यनारायण ऋषि हैं, अमृत गायत्री छन्द है, लक्ष्मी हरि देवता हैं शक्ति (ह्रीं) श्री (श्रीं) काम (क्लीं) का दो-दो बार उच्चारण कर षडङ्ग न्यास करे ॥ ८८-८९ ॥

**शङ्खचक्रगदापद्मकुम्भादर्शाब्जपुस्तकम् ।**
**बिभ्रतं मेघचपलावर्णं लक्ष्मीहरिं भजे ॥ ९० ॥**

अब लक्ष्मी-हरि का ध्यान कहते हैं—शङ्ख, चक्र, गदा, पद्म, कलश, आदर्श, कमल और पुस्तक धारण करने वाले मेघ एवं चपला विद्युत् वर्ण वाले श्री लक्ष्मी हरि का मैं ध्यान करता हूँ ॥ ९० ॥

**एवं ध्यात्वा न्यसेत् शक्तिश्रीकामपुटिताक्षराम् ।**
**भ्यामन्तविष्णुशक्त्यन्तां नमोऽन्तां प्रणवादिकाम्॥ ९१ ॥**

इस प्रकार ध्यान करने के पश्चात् शक्ति (ह्रीं) श्री (श्रीं) काम (क्लीं) से सम्पुटित अक्षर वाले भ्यामन्त विष्णुशक्त्यन्त नमोऽन्त एवं प्रणवादि से न्यास करे। १. ॐ, २. ह्रीं, ३. श्रीं, ४. क्लीं विष्णु, ५. शक्तिभ्यां, ६. नमः—इस प्रकार षडङ्ग न्यास करे ॥ ९१ ॥

### केशवादिमातृकान्यासकथनम्

**केशवः कीर्तिसंयुक्तः कान्तिर्नारायणान्विता।**
**माधवस्तुष्टिसंयुक्तो गोविन्दः पुष्टिसंयुतः ॥ ९२ ॥**
**विष्णुस्तु धृतिसंयुक्तः शान्तियुङ् मधुसूदनः ।**
**त्रिविक्रमः क्रियायुक्तो वामनो दययान्वितः ॥ ९३ ॥**
**श्रीधरो मेधया युक्तो हृषीकेशश्च हर्षया ।**
**पद्मनाभयुता श्रद्धा लज्जा दामोदरान्विता ॥ ९४ ॥**
**वासुदेवश्च लक्ष्मीयुक् सङ्कर्षणसरस्वती ।**
**प्रद्युम्नः प्रीतिसंयुक्तोऽनिरुद्धो रतिसंयुतः ॥ ९५ ॥**
**चक्री जया गदी दुर्गा शार्ङ्गी तु प्रभयान्वितः ।**

खड्गी तु सत्यया युक्तः शङ्खी चण्डीसमन्वितः ॥ ९६ ॥
हली वाणीसमायुक्तो मुसली तु विलासिनी ।
शूली तु विजयायुक्तो पाशी विरजयान्वितः ॥ ९७ ॥
अंकुशी विश्वया युक्तो मुकुन्दो विनयान्वितः ।
नन्दजश्च सुनन्दायुक् नन्दी स्मृत्या समन्वितः ॥ ९८ ॥
नरो ऋद्ध्या नरकजित् समृद्ध्या शुद्धियुक् हरिः ।
कृष्णबुद्धी सत्यभुक्ती सात्वतो मतिसंयुतः ॥ ९९ ॥
शौरिक्षमे शूररमे जनार्दन उमान्वितः ।
भूधरः क्लेदिनीयुक्तो विश्वमूर्तिश्च क्लिन्नया ॥ १०० ॥
वैकुण्ठो वसुधायुक्तो वसुदापुरुषोत्तमौ ।
बलस्तु परया युक्तो बलानुजपरायणा ॥ १०१ ॥
बालः सूक्ष्मा वृषघ्नस्तु सन्ध्यायुक् प्रज्ञया वृषः ।
हंसः प्रभासमायुक्तो वाराहो निशयान्वितः ॥ १०२ ॥
विमलो मोघया युक्तो नृसिंहो विद्यया युतः ।
केशवाद्या मातृकोक्ता यादियोगश्च पूर्ववत् ॥ १०३ ॥

अब शक्ति सहित केशवादि मातृका कहते हैं—कीर्त्ति युक्त केशव, कान्ति युक्त नारायण, तुष्टि संयुक्त माधव, पुष्टि संयुक्त गोविन्द, धृति युक्त विष्णु, शान्ति युक्त मधुसूदन, क्रियायुक्त त्रिविक्रम, दयान्वित वामन, मेधायुक्त श्रीधर, हर्षायुक्त हृषीकेश, श्रद्धायुक्त पद्मनाभ, लज्जा युक्त दामोदर, लक्ष्मीयुक्त वासुदेव, सरस्वती युक्त सङ्कर्षण, प्रीति युक्त प्रद्युम्न, रति संयुक्त अनिरुद्ध, जया युक्त चक्री, दुर्गायुक्त गदी, प्रभान्वित शार्ङ्गी, सत्या युक्त खड्गी; चण्डी समन्वित शङ्खी, वाणी से युक्त हली, विलासिनी से युक्त मुसली; विजयायुक्त शूली, विरजा युक्त पाशी, विश्वायुक्त अङ्कुशी, विनयान्वित मुकुन्द, सुनन्दायुक्त नन्दज, स्मृति से समन्वित नन्दी, ऋद्धि युक्त नर, समृद्धि युक्त नरकजित्, शुद्धि युक्त हरि, बुद्धि युक्त कृष्ण, भुक्ति युक्त सत्य, मति संयुक्त सात्त्वत, क्षमा युक्त शौरि, रमा युक्त शूर, उमान्वित जनार्दन, क्लेदिनी युक्त भूधर, क्लिन्ना युक्त विश्वमूर्त्ति, वसुधा युक्त वैकुण्ठ, वसुदा युक्त पुरुषोत्तम, परा युक्त बल, परायणा युक्त बलानुज, सूक्ष्मा युक्त बाल, सन्ध्या युक्त वृषघ्न, प्रज्ञा युक्त वृष, प्रभा समायुक्त हंस, निशान्वित वाराह, मोघायुक्त विमल विद्या युक्त नृसिंह । यहाँ तक हमने केशवादि मातृकाओं का वर्णन किया । यादि का योग पूर्ववत् समझना चाहिये ॥ ९२-१०३ ॥

### गणेशमातृकाकथनम्

गणेशमातृकायास्तु मुनिर्गणक ईरितः ।

**निवृद् गायत्रिका छन्दो देवः शक्तिविनायकः ॥ १०४ ॥**

अब गणेशमातृका के विषय में कहते हैं—इस गणेश मातृका के गणक मुनि हैं; निवृत् गायत्री छन्द है और इसके शक्तिविनायक देवता हैं ॥ १०४ ॥

**स्मृत्या दीर्घाढ्यया त्वङ्गं कृत्त्वा ध्यायेद् गजाननम् ।**
**गुणाङ्कुशवराभीतिपाणिं रक्ताब्जहस्तया ॥ १०५ ॥**
**प्रिययाऽऽलिङ्गितं रक्तं त्रिनेत्रं गणपं भजे ।**
**एवं ध्यात्वा न्यसेत् स्वीयबीजपूर्वाक्षरान्विताम् ॥ १०६ ॥**

पञ्च दीर्घयुक्त स्मृति (गं) से षडङ्ग करे (ॐ आं गं) हृदयाय नमः हृदये इत्यादि । इस प्रकार न्यास के बाद गजानन का निम्न प्रकार से ध्यान करे—तीनों सत्त्वादि गुण अङ्कुश, वर, अभय मुद्रा अपने तीन हाथों में धारण किये हुये । लाल कमल चौथे हाथ में लिये हुए अपनी प्रिया से आलिङ्गित, रक्त वर्ण वाले, त्रिनेत्र गणपति का मैं ध्यान करता हूँ । इस प्रकार ध्यान कर स्वीय बीज (गं) बीज को पहले लगाकर तदनन्तर न्यास करे ॥ १०५-१०६ ॥

**विघ्नेशो ह्रीसमायुक्तो विघ्नराजः श्रिया युतः ।**
**विनायकः पुष्टियुतः शान्तियुक्तः शिवोत्तमः ॥ १०७ ॥**
**विघ्नकृत् स्वस्तिसंयुक्तो विघ्नहर्ता सरस्वती ।**
**गणस्तु स्वाहया युक्त एकदन्तस्तु मेधया ॥ १०८ ॥**
**द्विदन्तः कान्तिसंयुक्तः गजवक्त्रश्च कामिनी ।**
**निरञ्जनो मोहिनीयुक् कपर्दी तु नटीयुतः ॥ १०९ ॥**
**दीर्घजिह्वः पार्वतीयुक् शङ्कुकर्णश्च ज्वालिनी ।**
**वृषभध्वजनं देवसुरेशीगणनायकौ ॥ ११० ॥**
**गजेन्द्रः कामरूपिण्या शूर्पकर्णस्तथोमया ।**
**त्रिलोचनस्तेजोवत्या लम्बोदरस्तु सत्यया ॥ १११ ॥**
**महानन्दश्च विघ्नेशी चतुर्मूर्तिस्वरूपिणी ।**
**सदाशिवः कामदायुक्, आमोदो मदजिह्वया ॥ ११२ ॥**
**दुर्मुखो भूतिसंयुक्तः सुमुखो भौतिकान्वितः ।**
**प्रमोदः सितया युक्तः एकपादो रमायुतः ॥ ११३ ॥**
**द्विजिह्वो महिषीयुक्तः शूरश्चापि तु भञ्जिनी ।**
**वीरो विकर्णया युक्तः षण्मुखो भ्रुकुटीयुतः ॥ ११४ ॥**
**वरदो लज्जया वामदेवः स्याद् दीर्घघोणया ।**
**धनुर्धरावक्रतुण्डो द्विरण्डो यामिनीयुतः ॥ ११५ ॥**
**सेनानी रात्रिसंयुक्तः कामान्धो ग्रामणीयुतः ।**

मत्तः शशिप्रभायुक्तो विमलो लोललोचना ॥ ११६ ॥
मत्तवाहनचञ्चले च जटी दीप्तिसमन्वितः ।
मुण्डी सुभगया युक्तः खड्गी दुर्भगया तथा ॥ ११७ ॥
वरेण्यश्च शिवायुक्तो भर्गायुग् वृषकेतनः ।
भक्षप्रियश्च भगिनी गणेशो भोगिनीयुतः ॥ ११८ ॥
मेघनादश्च सुभगा व्यापी स्यात् कालरात्रियुक् ।
गणेश्वरः कालिकेति प्रोक्ता विघ्नेशमातृका ॥ ११९ ॥
त्वगादियोगो यादीनां पूर्ववत् परिकीर्तितः ।

ह्रीं से युक्त विघ्नेश, श्री युक्त विघ्नराज, पुष्टि युक्त विनायक, शान्ति युक्त शिवोत्तम, स्वस्ति संयुक्त विघ्नकृत्, सरस्वती युक्त विघ्नहर्त्ता, स्वाहा युक्त गण, मेधा युक्त एकदन्त, कान्तिसंयुक्त द्विदन्त, कामिनी युक्त गजवक्त्र, मोहिनी युक्त निरञ्जन, नटी युक्त कपर्दी, पार्वती युक्त द्विजिह्व, ज्वालिनी युक्त शङ्कुकर्ण, देवसुरा सहित वृषभध्वज, सुरेशी के सहित गणनायक, कामरूपिणी युक्त गजेन्द्र, उमा युक्त शूर्पकर्ण, तेजोवती युक्त त्रिलोचन, सत्या युक्त लम्बोदर, विघ्नेशी युक्त महानन्द, स्वरूपिणी युक्त चतुर्मूर्त्ति, कामदा युक्त सदाशिव, मदजिह्वा युक्त आमोद, भूति संयुक्त दुर्मुख, भौतिकान्वित सुमुख, सिता युक्त प्रमोद, रमा युक्त एकपाद, महिषीयुक्त द्विजिह्व, भञ्जनी युक्त शूर, विकर्णा युक्त वीर, भ्रुकुटी युक्त षण्मुख, लज्जा युक्त वरद, दीर्घ घोणा युक्त वामदेव, धनुर्धरायुक्त वक्रतुण्ड, यामिनी युक्त द्विरण्ड, रात्रि युक्त सेनानी, ग्रामणी युक्त कामान्धः, शशिप्रभा युक्त मत्त, लोललोचना युक्त विमल, चञ्चला युक्त मत्तवाहन, दीप्ति समन्वित जटी, सुभगा युक्त मुण्डी, दुर्भगा युक्त खड्गी, शिवा युक्त वरेण्य, भर्गा युक्त वृषकेतन, भगिनी युक्त भक्षप्रिय, भोगनी युक्त गणेश, सुभगा युक्त मेघनाद, कालरात्रि युक्त व्यापी, कालिका युक्त गणेश्वर—इतनी विघ्नेश मातृकायें कहीं गई । यकारादि का त्वगादि न्यास पूर्ववत् करे ॥ १०७-१२० ॥

कलायुग् मातृकायास्तु प्रजापतिऋर्षिः स्मृतः ॥ १२० ॥
छन्द उक्तं तु गायत्री देवता शारदाभिधा ।
तारैः षडङ्गं कुर्वीत ह्रस्वदीर्घान्तरस्थितैः ॥ १२१ ॥

अब शक्तिन्यास बतलाते हैं—कलायुक्त मातृका के प्रजापति ऋषि हैं, गायत्री छन्द हैं, शारदा नाम्नी देवता हैं, दीर्घ से समन्वित ॐ से षडङ्गन्यास करना चाहिए ॥ १२०-१२१ ॥

शङ्खचक्राब्जपरशूकपालेणाक्षमालिकाः ।
पुस्तकामृतकुम्भौ च त्रिशूलं दधती करैः ॥ १२२ ॥

**श्वेतपीतासितश्वेतरक्तवर्णैस्त्रिलोचनैः ।**
**पञ्चास्यैः संयुतां चन्द्रमाकान्तिं शारदां भजे ॥ १२३ ॥**

अब भगवती शारदा का ध्यान कहते हैं—शङ्ख, चक्र, कमल, परशु, कपाल, वालमृग, अक्षमाला, पुस्तक, अमृत, कलश तथा त्रिशूल अपने दश हाथों में धारण की हुई श्वेत, पीत, असित, श्वेत तथा रक्त वर्णों वाली त्रिनेत्रा, पाँच मुखों से युक्त, चन्द्रमा के समान कान्तिमती वाग्देवी शारदा का मैं ध्यान करता हूँ ॥ १२२-१२३ ॥

**ध्यात्वैवं तारपूर्वां तां न्यसेन् ङेऽन्तकलान्विताम् ।**

इस प्रकार साधक सरस्वती का ध्यान कर तार पूर्वा (ॐ) कला युक्त चतुर्थी विभक्ति लगाकर न्यास करे ॥ १२३-१२४ ॥

**कलामातृकान्यासकथनम्**

**निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिरनन्तरम् ॥ १२४ ॥**
**इन्धिका दीपिका चैव रेचिका मोचिका परा ।**
**सूक्ष्मासूक्ष्मामृताज्ञानामृता चाप्यायनी ततः ॥ १२५ ॥**
**व्यापिनी व्योमरूपा चानन्ता सृष्टिः स ऋद्धिका ।**
**स्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिश्चैव स्थिरा तथा ॥ १२६ ॥**
**स्थितिः सिद्धिर्जरा चैव पालिनी शान्तिरीश्वरी ।**
**रतिश्च कामिका चैव वरदाऽऽह्लादिनी तथा ॥ १२७ ॥**
**प्रीतिर्दीर्घा तथा तीक्ष्ण रौद्री प्रोक्ता तथाऽभया ।**
**निद्रा तन्द्रा क्षुधा चैव क्रोधिनी च तथा क्रिया ॥ १२८ ॥**
**उत्कारी च तथा मृत्युः पीताश्वेतारुणासिता ।**
**अनन्ता च तथा ज्ञेया प्रोक्तेयं मातृकाकला ॥ १२९ ॥**

अब कलाओं को कहते हैं—निवृत्ति, प्रतिष्ठा, विद्या, शान्ति, इन्धिका, दीपिका, रेचिका, मोचिका, परा, सूक्ष्मा, असूक्ष्मा, अमृता, ज्ञानामृता, आप्यायनी, व्यापिनी, व्योमरूपा, अनन्ता, सृष्टि, सत्रऋद्धिका, स्मृति, मेधा, कान्ति, लक्ष्मी, द्युति, स्थिरा, स्थिति, सिद्धिजरा, पालिनी, शान्ति, ईश्वरी, रति, कामिका, वरदा, आह्लादिनी, प्रीति, दीर्घा, तीक्ष्णा, रौद्री, अभया, निद्रा, तन्द्रा, क्षुधा, क्रोधिनी, क्रिया, उत्कारी, मृत्यु, पीता, श्वेता, अरुणा, असिता तथा अनन्ता—ये मातृका कलायें कही गई हैं ॥ १२४-१२९ ॥

**तत्तद्भक्तो न्यसेदित्थं मातृकां विश्वमातृकाम् ।**
**विन्यसेच्च ततः पीठमातृकां देवतामयीम् ॥ १३० ॥**

**ऋषिः स्याद् दक्षिणामूर्तिः पङ्क्तिश्छन्दस्तथा स्मृतः ।**
**मातृकापीठशक्तिश्च देवता परिकीर्तिता ॥ १३१ ॥**

तत्तद् देवताओं का भक्त साधक को इस प्रकार से न्यास करना चाहिए । फिर विश्वमातृका एवं मातृकाओं का तथा देवतामयी पीठमातृकाओं का न्यास करे । इन मातृकाओं के दक्षिणामूर्त्ति ऋषि हैं पङ्क्ति छन्द है और मातृका पीठशक्ति देवता कही गई हैं ॥ १३०-१३१ ॥

**हलो बीजानि प्रोक्तानि स्वराः शक्तय ईरिताः ।**
**अव्यक्तं कीलकमिति नियोगो देहशोधने ॥ १३२ ॥**
**अङ्गक्लृप्तिर्मातृकावदथो ध्यायेत् समाहितः ।**

हल् वर्ण बीज कहे गये हैं, स्वर शक्तियाँ कही गई हैं, अव्यक्त कीलक हैं, यहाँ देह शोधन में इनका विनियोग कहा गया है । अब देह शोधन के लिये न्यास कहते हैं । अङ्गन्यास मातृका की तरह ही करना चाहिए । फिर एकाग्रचित्त होकर इस प्रकार ध्यान करे ॥ १३२-१३३ ॥

**सिताऽसितारुणश्यामहरित्पीतान्यनुक्रमात् ॥ १३३ ॥**
**पुनः पुनः क्रमादेव पञ्चाशत्पीठसञ्चयः ।**
**पीठानि संस्मरेद् विद्वान् सर्वकामार्थसिद्धये ॥ १३४ ॥**

सित असित अरुण श्याम हरित पीत इस क्रम से पुनः पुनः पचासों पीठ शक्तियों वाले पीठों का बुद्धिमान् साधक अपनी सभी कामनाओं की सिद्धि के लिये स्मरण करे ॥ १३३-१३४ ॥

### मातृकापीठनामानि

**कामरूपस्तथा वाराणसी नेपाल इत्यथ ।**
**पौंड्रवर्धनपुरस्थितौ कान्यकुब्जस्ततः स्मृतः ॥ १३५ ॥**
**पूर्णशैलोऽर्बुदाख्यश्च तथैवाम्रातकेश्वरः ।**
**एकाम्रत्रिस्त्रोतसौ च कामकोटस्तथापरः ॥ १३६ ॥**
**कैलासो भृगुनगरकेदारौ चन्द्रश्रीपुरौ ।**
**ओंकारोऽपि तथा जालन्धरो मालवतस्तथा ॥ १३७ ॥**
**कुलान्तको देवकोटी गोकर्णो मारुतेश्वरः ।**
**अट्टहासश्च विरजस्तथा राजगृहः स्मृतः ॥ १३८ ॥**
**महापथः कोलापुरमेलापुरमतः परम् ।**
**कालेश्वरो जयन्ती च तथाचोज्जयिनी स्मृतः ॥ १३९ ॥**
**चरित्रापुरपीठश्च तथा स्यात् क्षीरपीठकः ।**

**हस्तिनापुरमुड्डीशप्रयागौ च ततः परम् ॥ १४० ॥**
**षष्ठीशश्च तथा मायापुरं चैव जलेश्वरम् ।**
**मलयाख्यं गिरिं तद्वत् श्रीशैलं मेरुनामकम् ॥ १४१ ॥**
**गिरिं गिरिवरं पश्चान्महेन्द्रगिरिपीठतः ।**
**स्याद् वामनपुरं तद्वत् हिरण्यपुरसञ्ज्ञकम् ॥ १४२ ॥**
**महालक्ष्मीपुरं तद्वदोड्याणं च ततः परम् ।**
**छायाछत्रपुरं ज्ञेयं पीठान्तं मातृकादिकम् ॥ १४३ ॥**
**ङेऽन्तं न्यसेन्मातृकोक्तस्थानेषु क्रमतः सुधीः ।**
**तत ऋष्यादिकं न्यासं कुर्यात् कल्पोक्तवर्त्मना ॥ १४४ ॥**

कामरूप, वाराणसी, नेपाल, पौण्ड्रवर्धनपुर, इसके बाद काव्यकुब्ज, पूर्णशैल, अर्बुद, आम्रातकेश्वर, एकाम्र, त्रिस्रोतृस, कामकोट, कैलाश, भृगुनगर, केदार, चन्द्रपुर, श्रीपुर, ॐकार, जालन्धर, मालवा, कुलान्तक, देवकोटी, गोकर्ण, मारुतेश्वर, अट्टहास, विरजा, राजगृह, महापथ, कोल्हापुर, मेलापुर, कालेश्वरी, जयन्ती, उज्जयिनी, चरित्रापुर, पीठ, क्षीरपीठक, हस्तिनापुर, उड्डीश, प्रयाग, षष्ठीश, मायापुर, जलेश्वर, मलयागिरि, श्रीशैल, मेरु, गिरिवरगिरि, महेन्द्रगिरि, वामनपुर, हिरण्यपुर, महालक्ष्मीपुर, ओड्याण, छायापुर तथा छत्रपुर—इतने मातृका पीठ हैं। मातृका में कहे गये उन-उन स्थानों में इन पीठों में ङे (चतुर्थी एकवचन) विभक्ति लगाकर अन्त में 'नमः' कहकर न्यास करे। अब इसके बाद कल्पोक्त विधि से ऋष्यादिक न्यास करे ॥ १३५-१४४ ॥

**महेश्वरमुखाद् ज्ञात्वा यः साक्षात् तपसा मनुम् ।**
**संसाधयति शुद्धात्मा स तस्य ऋषिरीरितः ॥ १४५ ॥**

जो साधक तपस्या कर महेश्वर को प्रसन्न कर उनसे साक्षात् मन्त्र का ज्ञान करता है तथा शुद्धचित्त होकर मन्त्र सिद्धि करता है वही उन-उन मन्त्रों के ऋषि कहे जाते हैं ॥ १४५ ॥

**गुरुत्वान्मस्तके चास्य न्यासस्तु परिकीर्तितः ।**
**सर्वेषां मन्त्रतत्त्वानां छादनाच्छन्द उच्यते ॥ १४६ ॥**
**अक्षरत्वात् पदत्त्वाच्च मुखे छन्दः समीरितम् ।**
**सर्वेषामेव जन्तूनां भाषणात् प्रेरणात् तथा ॥ १४७ ॥**
**हृदयाम्भोजमध्यस्था देवता तत्र तां न्यसेत् ।**
**ऋषिच्छन्दोऽपरिज्ञानान्न मन्त्रः फलभाग् भवेत् ॥ १४८ ॥**
**दौर्बल्यं याति मन्त्राणां विनियोगमजानताम् ।**
**ऋषिं न्यसेन् मूर्ध्नि देशे छन्दस्तु मुखपङ्कजे ॥ १४९ ॥**

यतः वही ऋषि गुरु हैं अतः 'ऋषये नमः' से मस्तक पर उसे धारण करे। यतः सभी मन्त्र तत्त्वों को आच्छादित करता है इसलिये छादन करने के कारण उसे 'छन्द' कहते हैं। वह छन्द अक्षर स्वरूप तथा पद स्वरूप होने के कारण 'छन्दसे नमः' कहकर मुख में न्यास किया जाता है। सभी जन्तुओं से भाषण करने के कारण और सबको प्रेरणा देने के कारण देवता हृदयाम्भोज के मध्यस्थ रहते हैं। इसलिये 'देवतायै नमः' कहकर हृदय में न्यास किया जाता है। यदि ऋषि, छन्द और देवता का ज्ञान साधक को ज्ञात न हो तब मन्त्र का फल प्राप्त नहीं होता ॥ १४६-१४९ ॥

**देवतां हृदये चैव बीजं तु गुह्यदेशके ।**
**शक्तिं तथा पादयोश्च सर्वाङ्गे कीलकं न्यसेत् ॥१५०॥ इति ।**

देवता से हृदय में, बीज से गुह्य देश में, शक्ति से दोनों पैरों में तथा कीलक से सर्वाङ्ग में न्यास करे ॥ १५० ॥

**ऋष्यादयस्तु स्वस्वकल्पोक्ता एव । येषु येषु मन्त्रेषु ऋष्यादीनामभावस्त-त्साङ्गत्वसिद्धये ऋष्यादिकल्पना कार्या । तथाचोक्तं प्रयोगसारे—**

**चतुर्विधे बीजशक्ती सर्वमन्त्रेषु चिन्तयेत् ।**
**परमेष्ठी समस्तस्य ऋषिरुक्तो मनीषिभिः ॥ १५१ ॥**
**तत् शक्तिरेव गायत्रीछन्दः सर्वत्र निश्चितम् ।**
**ईश्वरो जगतां बीजमाद्यं ब्रह्म तदुच्यते ॥ १५२ ॥**

ऋष्यादि अपने-अपने कल्पों में ही बता दिये गये हैं जिन-जिन मन्त्रों में ऋषि का नाम प्राप्त नहीं होता वहाँ साङ्गतर की सिद्धि के लिये ऋष्यादि की कल्पना कर लेनी चाहिये। जैसा कि प्रयोगसार में कहा गया है—

इस प्रकार साधक सभी मन्त्रों में बीज एवं शक्ति चार प्रकार की समझे। मनीषियों ने सभी मन्त्रों का ऋषि परमेष्ठी को कहा है। यतः उसकी शक्ति गायत्री है अतः सर्वत्र गायत्री छन्द निश्चित है। समस्त जगत् का आद्यबीज ईश्वर है जिसे ब्रह्म भी कहा जाता है ॥ १५१-१५२ ॥

**तस्य माया समाख्याता शक्तिर्गुणमयी तु सा ।**
**स एव भगवान् देवो बुद्धिसाक्षी द्वितीयकम् ॥ १५३ ॥**

उसकी शक्ति माया है जो त्रिगुणमयी है। द्वितीय भगवान् वही हैं जिसमें बुद्धि साक्षी है ॥ १५३ ॥

**बीजमत्र समाख्यातं बुद्धिः शक्तिरुदाहृता ।**
**उदानश्चित्समायुक्तस्तृतीयं बीजमुच्यते ॥ १५४ ॥**

**शक्तिः कुण्डलिनी तत्र सामान्यं त्रितयं त्विदम्।**
**ज्ञातव्यं सर्वमन्त्रेषु बीजशक्ती ततो निजे ॥ १५५ ॥**

इन दोनों में भगवान् बीज हैं और बुद्धि शक्ति कही गई है । चित्समायुक्त उदान तृतीय बीज कहा गया है । वहाँ कुण्डलिनी शक्ति है । इस प्रकार तीन बीज तीन शक्ति सामान्य रूप से कही गई । इसके बाद अपने मन्त्रों में भी बीज और शक्ति का ज्ञान साधक को करना चाहिए । यहाँ तक चार बीज और चार शक्तियाँ बतलायी गई ॥ १५४-१५५ ॥

**ऋषिच्छन्दो देवतानां विन्यासेन विना यतः ।**
**जप्यते साधकोऽप्येषस्तत्र तन्निष्फलं भवेत् ।**
**एवमृष्यादिकं न्यस्य कुर्यादङ्गानि देशिकः ॥१५६॥ इति ।**

यदि साधक मन्त्र के ऋषि, छन्द तथा देवता के ज्ञान के बिना जप करता है तो वह निष्फल होता है । इसलिये देशिक ऋष्यादि का न्यास करे । तदनन्तर हृदयन्यास तथा करन्यास करे ॥ १५६ ॥

**गौतमेन षडङ्गकरणप्रयोजनमप्युक्तम्—**

**ईज्यमानो हृदात्माऽयं हृदये स्याच्चिदात्मकः ।**
**क्रियते तत्परत्वं तु हृन्मन्त्रेण नृदेशिकैः ॥ १५७ ॥**

गौतम ने षडङ्गकरण का प्रयोजन भी कहा है—यतः आचार्यों द्वारा यह चिदात्मक हृदात्मा हृदय में ईज्यमान होता है । अतः साधकों द्वारा हृन्मन्त्र से उसे हृदय में स्थापित किया जाता है ॥ १५७ ॥

**षडङ्गकरणस्य प्रयोजनम्**

**सर्वज्ञादिगुणोत्तुङ्गे संविद्रूपे परात्मनि ।**
**क्रियते विषयाहारः शिरोमन्त्रेण धीमता ।**
**हृत्शिरोरूपचिद्धाम्नि संयता भावना दृढा ॥ १५८ ॥**
**क्रियते निजदेहस्य शिखामन्त्रेण सादरम् ।**
**मन्त्रात्मकस्य देहस्य मन्त्रवाच्येन तेजसा ॥ १५९ ॥**
**सर्वतो वर्म्ममन्त्रेण क्रियते तनुसंवृतिः ।**
**यद् ददाति परं ज्ञानं संविद्रूपे परात्मनि ॥ १६० ॥**
**हृदयादिमयं तेजः स्यादेतन्नेत्रसञ्ज्ञकम् ।**
**आध्यात्मिकादिरूपं यत् साधकस्य विनाशयेत् ॥**
**अविद्याजातमस्त्रं तत् परधाम समीरितम् ॥१६१॥ इति ।**

सर्वज्ञादि गुणों से सर्वश्रेष्ठ ज्ञान रूप परमात्मा में धीमान् लोग शिरोमन्त्र से विषयाहार करते हैं। हृदय एवं शिर रूप चिद् धाम में अपने शरीर के द्वारा शिखा मन्त्र से ईष्ट की दृढ़ भावना संयत की जाती है। मन्त्रात्मक देह के मन्त्र-वाच्य तेज से सर्वतो कवच मन्त्र द्वारा शरीर की रक्षा की जाती है। जो संविद् रूप परमात्मा में ब्रह्म ज्ञान देता है वह हृदयादिमय तेज नेत्र सञ्ज्ञक है जो साधक को आध्यात्मिकादि तेज प्रदान करता है। अविद्या जात अज्ञान को जो नष्ट करता है वह अस्त्र धाम परमधाम कहा जाता है॥ १५८-१६१॥

**मन्त्रमहोदधौ—**

**अङ्गुष्ठादिस्वङ्गुलीषु करस्य तलपृष्ठयोः।**
**अङ्गुष्ठाभ्यां तर्जनीभ्यां नम इत्यादिकं वदन्॥ १६२॥**

मन्त्रमहोदधि में भी बतलाया गया है—अङ्गुष्ठादि अङ्गुलियों पर तथा करतल करपृष्ठ पर न्यास करते समय 'अङ्गुष्ठाभ्यां नमः तर्जनीभ्यां नमः मध्यमाभ्यां नमः' इत्यादि कहे॥ १६२॥

अङ्गन्यासविधानम्

**हृदयादिष्वथाङ्गानि जातियुक्तानि विन्यसेत्।**
**स्वस्वमुद्राभिरधुना प्रोच्यन्ते जातयश्च ताः॥ १६३॥**
**हृदयाय नमश्चेति शिरसे स्वाहया युतम्।**
**शिखायै वषडन्तं स्यात् कवचाय हुमित्यपि॥ १६४॥**
**नेत्रत्रयाय वौषट् स्यादस्त्राय फडितीरितम्।**
**जातिषट्कं द्विनेत्रे तु नेत्राभ्यां वौषडश्चरेत्॥ १६५॥**
**पञ्चाङ्गे नेत्रसंत्यागो मुद्राऽङ्गानामथोच्यते।**

अब अङ्गन्यास विधान कहते हैं—अपनी-अपनी मुद्रा एवं जातियों के साथ हृदयादि अङ्गों पर न्यास करना चाहिये। अब उन-उन मुद्राओं को तथा जातियों को कहा जा रहा है। हृदयाय नमः, शिरसे स्वाहा, शिखायै वषट्, कवचाय हुं, नेत्रत्रयाय वौषट् तथा अस्त्राय फट् से छह जाती कही गई है। दो नेत्र वाले देवता के न्यास में नेत्राभ्यां वौषट् कहना चाहिये। जहाँ पञ्चाङ्ग न्यास करना हो वहाँ नेत्र न्यास वर्जित है॥ १६३-१६६॥

**प्रसारितमनङ्गुष्ठं तर्जन्यादिचतुष्टयम्॥ १६६॥**
**हृदि मूर्धनि चाङ्गुष्ठहीना मुष्टिः शिखातले।**
**स्कन्धमारभ्य नाभ्यन्तं दशाङ्गुल्यस्तु वर्मणि॥ १६७॥**
**तर्जन्यादित्रयं नेत्रत्रये नेत्रद्वये द्वयम्।**

**विष्णवाद्यङ्गमुद्राकथनम्**

**प्रसारिताभ्यां हस्ताभ्यां कृत्वा तालत्रयं सुधीः ॥ १६८ ॥**
**तर्जन्यङ्गुष्ठयोरग्रे स्फालयन् बन्धयेद् दिशः ।**
**एषा मुद्रा तु श्रीविष्णोरङ्गमुद्रा प्रकीर्तिता ॥ १६९ ॥**

अब अङ्गन्यास की मुद्रा कहते हैं—अँगूठे के अतिरिक्त तर्जनी आदि चार अङ्गुलियों को ऊपर की ओर फैलाकर हृदय और शिर पर, पुनः अङ्गुठा रहित मुट्ठी से शिखा पर, कन्धे से लेकर नाभि पर्यन्त दशो अङ्गुलियों से कवच, तीन नेत्र वाले देवता के न्यास में तर्जनी आदि तीन अङ्गुलियों से और दो नेत्र वाले देवता के न्यास में तर्जनी और मध्यमा इन दो अङ्गुलियों से मुद्रा प्रदर्शित करनी चाहिये । हाथ को फैलाकर तीन बार ताली बजाकर साधक तर्जनी और अङ्गुठे के अग्र भाग को फैलाते हुये दिग्बन्धन मुद्रा प्रदर्शित करे । यह अस्त्र मुद्रा कही गई है । ये विष्णु के अङ्गन्यास में कही गई मुद्रायें हैं ॥ १६६-१६९ ॥

**हृद्यङ्गुलीत्रयं न्यस्येत् तर्जन्यादिद्वयं तु के ।**
**शिखाप्रदेशेऽथाङ्गुष्ठं दशाङ्गुल्यस्तु वर्मणि ॥ १७० ॥**
**हृद्वन्नेत्रं पूर्वमस्त्रं शक्तेरङ्गस्य मुद्रिका ।**
**मुष्टीविनिर्गताङ्गुष्ठौ संयुक्तौ हृदि विन्यसेत् ॥ १७१ ॥**

तर्जनी आदि तीन-तीन अङ्गुलियों को फैलाकर हृदय पर, दो अङ्गुलियों से शिर पर, अङ्गुष्ठे से शिखा पर, दशो अङ्गुलियों से वर्म पर, हृदय के समान ही नेत्र पर तथा पूर्ववत् विष्णु न्यास के समान अस्त्र न्यास करना चाहिये । यहाँ तक शक्ति मुद्रायें कही गई ॥ १७०-१७१ ॥

**निस्तर्जनी तादृशौ तु शिस्यथ शिखातले ।**
**निरङ्गुष्ठकनिष्ठौ तु निरङ्गुष्ठप्रदेशिनी ॥ १७२ ॥**
**मुष्टी पृथक्कृतौ स्कन्धाद् हृदन्तं वर्मणि स्मृतौ ।**
**तर्जन्यादित्रयं नेत्रे तलास्फोटोऽस्त्र ईरितः ॥ १७३ ॥**
**शैवे षडङ्गमुद्रोक्ता वर्णन्यासमथाचरेत् ।**

**स्वस्वमूलवर्णन्यासमिति ।**

**जप्तापि विफला मन्त्रा गदिता न्यासमन्तरा ।**
**विद्यान्यासमथो कुर्याद् ध्यायन् देवमनन्यधीः ॥ १७४ ॥**

अङ्गूठे को बाहर निकाल कर बनी मुष्टि की मुद्रा से हृदय पर, तर्जनी और अङ्गूठे के अतिरिक्त शेष अङ्गुलियों को एक में मिला देवे, उसकी मुट्ठी बनाकर शिर पर, अङ्गूठा और कनिष्ठारहित अङ्गुलियों की मुट्ठी बनाकर शिखा पर,

अङ्गूठा और तर्जनीरहित मुष्टी से कवच पर, तर्जनी आदि तीन अङ्गुलियों से नेत्र पर न्यास करना चाहिये। दोनों हथेली को बजा देने से अस्त्र मुद्रा बन जाती है। ये शिव की षडङ्ग न्यास मुद्रायें कही गई हैं। अब इसके बाद वर्णन्यास करे। यदि न्यास न किया जाय तो जप करने पर भी मन्त्र निष्फल हो जाता है। अतः देवता का ध्यान करते हुए सावधान होकर साधक विद्यान्यास करे ॥१७२-१७४॥

**नवरत्नेश्वरे—**

**मूर्ध्नि मूले च हृदये नेत्राणां त्रय एव च।**
**श्रोत्रयोश्च नसोर्देवि मुखे च भुजयोः पुनः ॥ १७५ ॥**
**पृष्ठे जानुनि नाभौ च विद्यान्यासं समाचरेत्।**
**एवं न्यासे कृते देवि साक्षात् पशुपतिः स्वयम् ॥ १७६ ॥**

नवरत्नेश्वर में भी बतलाया गया है—हे देवि! शिर, मूलस्थान, हृदय, तीनों नेत्र, दोनों कान, दोनों नाक, मुख, दोनों भुजायें, पृष्ठ, दोनों जानु तथा नाभि में विद्यान्यास करे। हे देवि! इस प्रकार के न्यास से साधक स्वयं साक्षात् पशुपति हो जाता है ॥ १७५-१७६ ॥

**प्रणवं सम्पुटीकृत्य मूलेन व्यापकं चरेत्।**
**पञ्चधा नवधा वापि चाष्टधा सप्तधा तथा ॥ १७७ ॥**
**शीर्षादिपादपर्यन्तं पादादि च शिरोऽन्तकम्।**
**हृदयादिमुखान्तं च व्यापकन्यासमाचरेत् ॥ १७८ ॥**
**प्राणायामं षडङ्गं च कृत्वा ध्यात्वा निजेश्वरम्।**
**समाप्य मानसं यागं बहिर्यागमथाचरेत् ॥ १७९ ॥**

मूल मन्त्र से प्रणव को सम्पुट कर व्यापक मुद्रा करे। यह व्यापक मुद्रा पाँच नव अथवा आठ बार अथवा सात बार करे। शिर से लेकर पाद पर्यन्त तथा पाद से लेकर शिरः पर्यन्त करे। इसी प्रकार हृदय से लेकर मुख पर्यन्त व्यापक मुद्रा करे। फिर प्राणायाम एवं षडङ्ग करे। तदनन्तर अपने इष्ट देवता का ध्यान करे। इस प्रकार मानसयाग समाप्त कर बहिर्याग करे ॥ १७७-१७९ ॥

**यस्मिन् मन्त्रे षडङ्गाभावस्तत्रैवं कार्यम्। तथा च भैरवतन्त्रे—**

**अङ्गन्यासकरन्यासौ मायया दीर्घया चरेत्।**
**यद् बीजाद्याथवा विद्या तद्बीजेनाङ्गकल्पना।**
**कुर्यात् षड्दीर्घयुक्तेन सर्वसाधारणो विधिः ॥ १८० ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे न्यासकथनं नाम दशमः पटलः ॥ १० ॥**

...❧❀❧...

जिस मन्त्र में षडङ्ग नहीं कहा गया है, वहाँ निम्न प्रकार की विधि है । जैसा कि भैरवतन्त्र में कहा गया है—

जहाँ षडङ्गन्यास नहीं कहा गया है वहाँ छह दीर्घ युक्त माया (ह्रीं) मन्त्र से न्यास करे (ॐ आं ह्रीं हृदयाय नमः इत्यादि) अथवा उसके बीज की कल्पना कर अङ्गन्यास कर (षडङ्ग) न्यास करे । इस प्रकार षडङ्गदीर्घ युक्त बीज से अङ्गन्यास एवं करन्यास करे । यह सर्वसाधारण विधि न्यास के लिये कही गई ॥ १८० ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में न्यासकथन नामक दशम पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १० ॥**



# एकादशः पटलः

### मालामन्त्रयन्त्रसंस्कारकथनम्

अथानन्तरं मन्त्रमालायन्त्रादीनां संस्कारावश्यकत्वादेतानि लिख्यन्ते । अथ मन्त्र-संस्कारो यथा शारदायाम्—

छिन्नादिदुष्टा मन्त्रा ये पालयन्ति न साधकम् । इति ।

अन्यत्रापि—

छिन्ना रुद्धाः कीलिताः स्तम्भिता ये
सुप्ता मत्ता मूर्च्छिता हीनवीर्याः ।
दग्धास्त्रस्ता शत्रुपक्षे स्थिता ये
बाला वृद्धा गर्विता यौवनेन ॥ १ ॥
ये निर्वीया ये च सत्त्वेन हीना
खण्डीभूताश्चाङ्गमन्त्रैर्विहीनाः ।
एते मुद्राबन्धनेनैव योन्या
मन्त्राः सर्वे वीर्यवन्तो भवन्ति ॥ २ ॥

अब मन्त्र, माला और यन्त्रादि के संस्कार की आवश्यकता समझते हुये ग्रन्थकार उसी को लिख रहे हैं—शारदातिलक के अनुसार मन्त्र संस्कार कह रहे हैं—छिन्न और दुष्ट मन्त्र साधक की रक्षा नहीं कर सकते । अन्यत्र भी कहा है—

छिन्न, रुद्ध, कीलित, स्तम्भित, सुप्त, मत्त, मूर्च्छित, वीर्यरहित, दग्ध, त्रस्त, शत्रु पक्ष में स्थित, बाल, वृद्ध, जवानी से गर्वित, निर्वीर्य, सत्त्वरहित एवं खण्डीभूत जिसमें अङ्ग मन्त्र नहीं है—इस प्रकार के सभी मन्त्र योनिमुद्रा के बन्धन से वीर्यवान् हो जाते हैं ॥ १-२ ॥

### मन्त्रदोषनिवृत्यर्थं योनिमुद्राकथनम्

योनिमुद्रालक्षणं यथा योगशास्त्रे—

पार्ष्णिभागात् तु सम्पीड्य योनिमार्गं तथा गुदम् ।
अपानमूर्ध्वमाकर्षेन्मूलबन्धो निगद्यते ॥ ३ ॥

**गुदमेढ्रान्तरं योनिस्तामाकुञ्च्य प्रबन्धयेत् ।**
**युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ॥ ४ ॥**

योनि मुद्रा का लक्षण योगशास्त्र में भी बतलाया गया है—पार्ष्णि भाग से योनि मार्ग तथा गुदा को बन्द कर लेवे और अपान को ऊपर खींचे । यह मूलबन्ध मुद्रा कही गई है । गुदा और लिङ्ग के अन्तर में योनि हैं, उसे सिकोड़ कर बाँधे । इस प्रकार सर्वदा मूलबन्ध मुद्रा करने से वृद्ध भी युवावस्था को प्राप्त कर लेता है ॥ ३-४ ॥

**योनिस्थानमुद्रणाद् योनिमुद्रात्वमस्य ।**

**सेयं मयोक्ता खलु योनिमुद्रा**
**बन्धश्च देवैरपि दुर्लभोऽस्याः ।**
**अनेन बन्धेन न साध्यते यन्**
**नास्त्येव तत् साधकपुङ्गवस्य ॥ ५ ॥**

योनि स्थान का मुद्रण करने से इसी को योनि मुद्रा भी कहते हैं—मैंने वही योनि मुद्रा कह दी है जिसका बाँधना योगियों के लिये भी दुर्लभ है । इस बन्धन से जो साधक को सिद्ध न हो और जिसकी सत्ता ही संसार में नहीं हो वह भी उसे सिद्ध हो जाता है ऐसा समझना चाहिये ॥ ५ ॥

**ये साधका योनिमुद्राऽनभिज्ञा-**
**स्तद्वद् ये च प्राणरोधेऽप्यशक्ताः ।**
**तेषामर्थे संस्कृतिः पङ्क्तिरुक्ता**
**यस्मादेते वीर्यवन्तो भवन्ति ॥ ६ ॥**

जिन साधकों को योनिमुद्रा का ज्ञान नहीं है तथा जो प्राणायाम करने में असमर्थ हैं उनके लिये हम यह संस्कार की पद्धति लिख रहे हैं । जिससे मन्त्र वीर्यवान् हो जाते हैं ॥ ६ ॥

**मन्त्राणां दशसंस्काराः**

**ते संस्काराः पिङ्गलामते, शारदायां, गौतमीये च—**

**जननं जीवनं पश्चात् ताडनं बोधनं तथा ।**
**अथाऽभिषेको विमलीकरणाप्यायने पुनः ॥ ७ ॥**
**तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ।**

वे संस्कार पिङ्गलामत तन्त्र में, शारदातिलक तन्त्र में तथा गौतमीय तन्त्र में इस प्रकार बतलाये गए हैं—मन्त्रों के संस्कार जनन, जीवन, पश्चात् ताडन, बोधन, अभिषेक, विमलीकरण, आप्यायन, तर्पण, दीपन एवं गुप्ति—ये दश

मन्त्र के संस्कार हैं ॥ ७-८ ॥

मन्त्रशोधनप्रकारविधानम्

**स्वर्णादिपत्रे संलिख्य मातृकायन्त्रमुत्तमम् ॥ ८ ॥**
**काश्मीरचन्दनेनाथ भस्मना वाथ सुव्रते ।**
**काश्मीरं शक्तिसंस्कारे चन्दनं वैष्णवे मनौ ॥ ९ ॥**
**शैवे भस्म समाख्यातं मातृकायन्त्रलेखने ।**
**मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ॥ १० ॥**

१. साधक सुवर्णादि निर्मित पत्र में उत्तम प्रकार से मातृका यन्त्र केशर, चन्दन अथवा भस्म से; हे सुव्रते! लिखे । शक्ति मन्त्र का संस्कार करना हो तब तो केशर से लिखे । वैष्णव मन्त्र लिखना हो तो चन्दन से और शैव मन्त्र लिखना हो तो भस्म से लिखे । मातृका यन्त्र लिखने की यही विधि है । मातृका के मध्य से मन्त्र का उद्धार जनन कहा जाता है ॥ ८-१० ॥

तच्च गान्धर्वतन्त्रे—

**भूमौ गोमयलिप्तायां विलिख्याष्टदलान्वितम् ।**
**चतुरस्रं चतुर्द्वारं तार्त्तीयं कर्णिकागतम् ॥ ११ ॥**

तार्त्तीयं सौरिति ।

**कादिमान्ताः पञ्चवर्गाः पूर्वादिक्रमतो न्यसेत् ।**
**यादिवान्ताः सादिहान्ताः ळक्षमीशे प्रविन्यसेत् ॥ १२ ॥**

यही विषय विचार गान्धर्वतन्त्र में भी बतलाया गया है—गोमय से उपलिप्त भूमि में आठ दलों से युक्त चौकोर चतुर्द्वार यन्त्र निर्माण करे । कर्णिका में सौः लिखे और पूर्वादि क्रम से कादि से मान्त पाँचों वर्गों को लिखे । यकारादि से लेकर वकार पर्यन्त तथा सकारादि से हकारान्त पर्यन्त एवं ळ और क्ष वर्ण ईशान कोण में लिखे ॥ ११-१२ ॥

**प्राणान् स्थाप्य प्रपूज्याथ ध्यायन् देवमथोद्धरेत्।**
**एतज्जननमित्याहुरथो तज्जीवनं चरेत् ॥ १३ ॥**

उस यन्त्र में प्राणप्रतिष्ठा कर पूजन करे । फिर ध्यान करते हुये विज्ञ साधक मन्त्र का उद्धार करे । यह मन्त्र का जनन संस्कार कहा जाता है तदनन्तर जीव स्थापित करे ॥ १३ ॥

**पङ्क्तिक्रमेण विधिना मुनिभिस्तन्त्रनिश्चितम् ।**
**प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः ॥ १४ ॥**

२. प्रणव से सम्पुटित पङ्क्ति क्रम से मन्त्र के प्रत्येक वर्णों का सौ-सौ बार साधक द्वारा जप करने से जीवन होता है ऐसा विद्वान् मुनियों ने तन्त्रों में निश्चय किया है ॥ १४ ॥

**प्रत्येकं शतवारं तु तज्जीवनमुदाहृतम् ।**
**मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ॥ १५ ॥**
**प्रत्येकं वायुबीजेन पूर्ववत् ताडनं मतम् ।**
**पृथक् शतं वा दशधा बोधयेत् तं मनुं ततः ॥ १६ ॥**

३. मन्त्र वर्णों को लिखकर चन्दन के जल से मन्त्र के प्रत्येक अक्षरों का पृथक्-पृथक् सौ या दश बार वायु बीज से पूर्ववत् ताडन करना ताडन कहा जाता है । इसके बाद उस मन्त्र का बोधन करे ॥ १५-१६ ॥

**विलिख्य मन्त्रवर्णांस्तु प्रसूनैः करवीरजैः ।**
**तन्मन्त्रवर्णसंख्याकैर्हन्याद् रेफेण बोधनम् ॥ १७ ॥**

४. मन्त्र के प्रत्येक वर्णों को करवीर प्रसूनों के रस से लिखे । फिर उस मन्त्र के प्रत्येक अक्षर से सौ या दश बार अथवा 'रेफ' वर्ण से हनन करने को बोधन कहा जाता है ॥ १७ ॥

**तत्तन्मन्त्रोक्तविधिना अभिषेकः प्रकीर्तितः ।**
**अश्वत्थपल्लवैः सिञ्चेन्मन्त्री मन्त्रार्णसंख्यया ॥ १८ ॥**
**शतधा वाष्टधा तद्वत् प्रत्येकमभिषेचनम् ।**
**शुद्धोदकेन दुग्धेन अभिषेकमुदाहृतम् ॥ १९ ॥**

५. तत्तन्मन्त्रोक्त विधि से अश्वत्थ के पल्लव से प्रत्येक मन्त्र के अक्षर (वर्ण) की संख्या के अनुसार अथवा सौ की संख्या में अथवा आठ की संख्या में शुद्धोदक से अथवा गौ दुग्ध से विद्वान् साधक अभिषिक्त करे । इसे अभिषेचन कहा जाता है ॥ १८-१९ ॥

**पिङ्गलामते विशेषः—**

**मालतीकलिकाभिस्तु न्यस्याणुं कर्णिकोपरि ।**
**अश्वत्थपल्लवैः शुद्धैस्तन्मन्त्राक्षरसम्मितैः ।**
**अभिषेकं प्रकुर्वीत स्वमन्त्रे विहितं यथा ॥ २० ॥**

**स्वमन्त्रकल्पोक्तमार्गेणेत्यर्थः ।**

पिङ्गलामत तन्त्र के अनुसार विशेष कथन इस प्रकार है—कर्णिका के ऊपर मालती पुष्प की कली से आणव न्यास कर शुद्ध अश्वत्थ के पत्रों से मन्त्राक्षर की संख्या के अनुसार प्रत्येक अक्षर पर जल से अपने सम्प्रदायानुसार मन्त्र के द्वारा

अभिषेक करे ॥ २० ॥

**विमलीकरणं कुर्यादथो देशिकसत्तमः ।**
**सञ्चिन्त्य मनसा मन्त्रं सुषुम्णामूलमध्यतः ॥ २१ ॥**
**ज्योतिर्मन्त्रेण विधिवन्निर्दहेत् तन्मलत्रयम् ।**
**तारं व्योमाग्निमनुयुक् दण्डी ज्योतिर्मनुर्मतः ॥ २२ ॥**

**तारं प्रणवं, व्योम ह, अग्नि र, मनुरौकारः, दण्डी अनुस्वारः, तेन ॐ हौं इति ।**

६. इसके बाद मन्त्रज्ञ साधक देशिकसत्तम मन्त्र का मानसिक ध्यान करते हुये सुषुम्णा के मूल से मध्य पर्यन्त ज्योति मन्त्र से तीनों प्रकार के मल को विधिवत् जला देवे। इसे विमलीकरण कहते हैं। तार (ॐ) व्योम (ह) जो अग्नि (र्) मनु (औ) तथा दण्डी (अनुस्वार) से युक्त करने पर 'ॐ हौं'—यह ज्योति मन्त्र बतलाया गया है ॥ २१-२२ ॥

**एवं तं विमलीकृत्य चरेदाप्यायनं पुनः ।**
**कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ।**
**तेन मन्त्रेण विधिवदेतदाप्यायनं मतम् ॥ २३ ॥**

**तेन ज्योतिर्मन्त्रेणेति केचन व्याचक्षते । तदयुक्तं ग्रन्थान्तरविरोधात् । तेन मूलेनेत्यर्थः ।**

७. इस प्रकार विमलीकरण करने के पश्चात् पुनः आप्यायन करे और मन्त्र का जप करते हुये प्रत्येक अक्षर का प्रोक्षण कुशोदक से करे। इसे मन्त्र के देवता का विधिवत् आप्यायन कहा जाता है ॥ २३ ॥

**विमर्श**—कुछ विद्वान् ज्योतिमन्त्र (ॐ हौं) द्वारा आप्यायन करने को बतलाते हैं। किन्तु यह ठीक नहीं है क्योंकि अन्य ग्रन्थानुसार यह विरोध प्रकट करता है। अतः मूल मन्त्र से ही आप्यायन करे।

**पिङ्गलामते—**

**अष्टोत्तरशता लब्धं विशुद्धं कुशवारिणा ।**
**आप्यायितो भवेन्मन्त्रः प्रत्यर्णं प्रोक्षितो यदि ॥ २४ ॥**

पिङ्गलामत तन्त्र में भी बतलाया गया है—यदि कुश के जल से मन्त्र का प्रत्येक अक्षर एक-सौ आठ बार प्रोक्षित किया जाय तो वह मन्त्र विशुद्ध हो जाने से आप्यायित हो जाता है ॥ २४ ॥

**एवमाप्यायनं कृत्वा कुर्याच्च तर्पणं ततः ।**
**मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं मतम् ॥ २५ ॥**

८. इस प्रकार आप्यायन करने के बाद तर्पण करे। मन्त्र पढ़कर जल से

जल में तर्पण करे तो उसे तर्पण कहा जाता है ॥ २५ ॥

**अमुकमन्त्रं तर्पयामि नम इत्यम्भसा शतम् ।**
**मधुना शक्तिमन्त्रेषु वैष्णवे चेन्दुमज्जलैः ॥ २६ ॥**
**शैवे घृतेन दुग्धेन तर्पणं सम्यगीरितम् ।**

'अमुक मन्त्रे तर्पयामि नमः' इस प्रकार जल से १०० बार तर्पण करे । शक्ति मन्त्र में मधु से तर्पण करे । वैष्णव मन्त्र का तर्पण इन्द्र (कर्पूर) युक्त जल से तथा शैव मन्त्र का तर्पण दुग्ध एवं घृत से करना चाहिए । यहाँ तक हमने तर्पण की विधि कही ॥ २६-२७ ॥

**एवं च तर्पणं कृत्वा मनोर्दीपनमाचरेत् ।**
**तारमायारमायोगात् मनोर्दीपनमुच्यते ॥ २७ ॥**

९. इस प्रकार तर्पण करने के पश्चात् मन्त्र का दीपन करे । तार (ॐ) माया (ह्रीं) रमा (श्रीं) इस मन्त्र से दीपन किया जाता है ॥ २७ ॥

**अत्रैवं विधिः—**

**तारं मायां रमामादौ दत्त्वान्ते मूलमुच्चरेत् ।**
**शतमष्टोत्तरेणैव दीपयेत् साधकोत्तमः ॥ २८ ॥**

अब यहाँ दीपन की विधि कहते हैं—आदि में तार (ॐ) फिर माया (ह्रीं) फिर रमा (श्रीं) कह कर उसके अन्त में मूल मन्त्र का उच्चारण करे । इस प्रकार एक-सौ आठ बार जप करने से साधकोत्तम मन्त्र का उद्दीपन करे ॥ २८ ॥

**जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ।**
**एते च दशसंस्काराः मन्त्रदोषविनाशकाः ॥ २९ ॥**

१०. जप किये जाने वाले मन्त्र को प्रकाशित नहीं करना चाहिए । यही मन्त्र का गोपन कहा जाता है । ये दश प्रकार के मन्त्र के संस्कार मन्त्र के समस्त दोषों के विनाशक कहे गये हैं ॥ २९ ॥

**अन्यत्र मन्त्रमहोदधिश्रीक्रमसंहितादिष्वपरः प्रकारः—**

**छिन्नत्वादिकदोषा ये पञ्चाशन्मन्त्रसंस्थिताः ।**
**तैर्दोषैः सकला व्याप्ता मनवः सप्तकोटयः ।**
**अतस्तद्दोषशान्त्यर्थं संस्कारदशकं चरेत् ॥ ३० ॥**

**तेषां विनियोगमाह—वश्योच्चाटनेति ॥ छिन्नत्वादिति छिन्नो रुद्धः शक्तिहीन इत्यादयः । पञ्चाशद् दोषास्तल्लक्षणानि च शारदातिलके द्वितीयपटले उक्तानि ग्रन्थ गौरवभयान्न लिख्यन्ते । सप्तकोटिमिता मन्त्राः सन्ति । ते सर्वेऽपि तद्दोषाक्रान्ता एव ॥**

जननाख्यं संस्कारमाह—भूर्जपत्रे रोचनाकुंकुमचन्दनैरात्माभिमुखं त्रिकोणं कृत्वा त्रिभ्योऽपि कोणेभ्यो मध्ये कृताभिः षट्षड्रेखाभिः समाभिर्मध्ये नववेदमिता । एकोन-पञ्चाशत्त्रिकोणाः कोष्ठा जायन्ते । तत्रेशानादि पश्चिमकोणान्तर्मन्त्रमातृकां लिखित्वाऽऽवाह्य सम्पूज्य तत एकैक मन्त्रार्णमुद्धरेत् । ततः सम्मार्ज्य पत्रान्तरे लिखेदित्यर्थः । एतज्जनम् ॥

दीपनमाह—जप इति । हंसमन्त्रेण पुटितस्य मन्त्रस्य सहस्त्रञ्जपो—दीपनम् । हंसः रामाय नमः सोहं इति । बोधनमाह—नभ इति । नभो हः वहनी रः इन्दुर्बिन्दुस्तैर्युक्तोऽर्घी ऊः । तेन ह्रूं । एतत्सम्पुटितस्य मनोः पञ्चसहस्त्रजपो—बोधनम् । ह्रूं रामाय नमः ह्रूं इति । फट् रामाय नमः फडिति सहस्त्रजपस्तु—ताडनम् । अभिषेकमाह—वागिति । ऐं हं सः ॐ इति मन्त्रेण सहस्त्राभिमन्त्रितैर्जलैस्तेनैव मन्त्रेण ताडपत्रोपरि लिखितमन्त्रेऽभिषेचनम्—अभिषेकः । विमलीकरणमाह—हरिरिति । हरिस्तः वहन्यन्वितो रयुतः तारो प्रणव युतः—त्रों । ॐ त्रों वषट् रामाय नमः वषट् त्रों आं इति सहस्त्रजपो—विमलीकरणम् ।

जीवनमाह—स्वधेति । स्वधा वषट् रामाय नमः वषट् स्वधेति सहस्त्रजपो—जीवनम् । तर्पणमाह—क्षीरेति । दुग्धघृतोदकैस्तेनैव मन्त्रेण तस्मिन्नेव शतं तर्पयेदिति—तर्पणम् । गोपनमाह—जपेदिति । ह्रीं पुटस्य सहस्त्रञ्जपो—गोपनम् । आप्यायनमाह—बालेति । बालायास्तार्तीयंसौः गगनं हः तदाद्येन । तेन हंसोः इति बीजेन सम्पुटस्य सहस्त्रं जपः—आप्यायनम् । एकवर्णेन सम्पुटत्वम्—आदावन्ते चोच्चारणमेव । एकस्य विलोमत्वाशक्तेः ॥

अन्यत्र मन्त्रमहोदधि तथा श्रीक्रमसंहिता में मन्त्र के दोषों के नाश के लिये दूसरा प्रकार कहा गया है—छिन्नत्वादि दोष जो पचास मन्त्र वर्णों में स्थित हैं उन दोषों से समस्त सात करोड़ मन्त्र व्याप्त हैं ॥ ३० ॥

**भूर्जपत्रे लिखेत् सम्यक् त्रिकोणं रोचनादिभिः।**
**वारुणं कोणमारभ्य सप्तधा विभजेत् समम् ॥ ३१ ॥**
**एवमीशाग्निकोणाभ्यां जायन्ते तत्र योनयः ।**
**नववेदमितास्तत्र विलिखेन्मातृकां क्रमात् ॥ ३२ ॥**

भोजपत्र पर गोरोचन या हल्दी इत्यादि अष्टगन्धों से त्रिकोण लिखे । फिर वरुणकोण (पश्चिम) से आरम्भ कर उसे बराबर-बराबर सात भागों में विभाजित करे । इसी प्रकार ईशान और अग्निकोणों से भी । ऐसा करने से ४९ योनियाँ होंगी । उनमें क्रम से मातृकाओं को लिखे ॥ ३१-३२ ॥

**अकारादिहकारान्तानीशादिवरुणावधि ।**
**देवीं तत्र समावाह्य पूजयेच्चन्दनादिभिः ॥ ३३ ॥**
**ततः समुद्धरेन्मन्त्रं जननं तदुदीरितम् ।**

१. अकार से लेकर हकार पर्यन्त समस्त ४९ वर्ण ईशान कोण से लेकर वरुण दिक् पर्यन्त लिखे वहाँ मातृका देवी का आवाहन कर चन्दनादि से पूजा करे। फिर उसमें से मन्त्र का उद्धार करे। इसे जनन कहा जाता है ॥ ३३-३४॥

जननयन्त्र




**जपो हंसपुटस्यास्य सहस्रं दीपनं स्मृतम् ॥ ३४ ॥**
**नभोवह्नीन्दुयुक्तार्घीसम्पुटस्य जपो मनोः ।**
**सहस्रपञ्चकमितो बोधनं तत् स्मृतं बुधैः ॥ ३५ ॥**

२. हंस मन्त्र से सम्पुटित कर मूल मन्त्र का एक सहस्र बार जप दीपन कहा जाता है।।

३. नभ (ह) वह्नि (र) इन्दु युक्त सानुनासिक अर्घी (ॐ) से (ह्रूँ) सम्पुटित पाँच सहस्र मूल मन्त्र का जप बुद्धिमानों ने बोधन कहा है ॥ ३४-३५ ॥

**सहस्रं तं जपेदस्त्रपुटितं ताडनं तु तत् ।**
**वाग्घंसतारैर्जप्तेन सहस्रं पाथसा मनुम् ॥ ३६ ॥**
**अभिषिञ्चेत वागाद्यैरभिषेकोऽयमीरितः ।**
**हरिवह्न्यन्वितस्तारो वषडन्तो ध्रुवादिकः ॥ ३७ ॥**
**सहस्रं तत्पुटं जप्त्वा विमलीकरणं मनोः ।**
**स्वधावषट्पुटं जप्त्वा सहस्रं जीवनं मनोः॥ ३८ ॥**

४. अस्त्र सम्पुटित मन्त्र का जप ताडन कहा गया है ।

५. वाक् (ऐं) हंस (सः) तार (ॐ) युक्त मूल मन्त्र का जल द्वारा अभिषेक

करे तो उसे अभिषेक कहा जाता है ।

६. हरि (त्) वह्नि (र) से युक्त तार (ॐ) अन्त में वषट् एवं आदि में ध्रुव (ॐ) अर्थात् ॐ त्रों वषट् से सम्पुटित मन्त्र का एक सहस्र जप विमलीकरण कहा जाता है ।

७. स्वधा सहित वषट् से सम्पुटित मूल मन्त्र का एक सहस्र बार जप मन्त्र का जीवन संस्कार कहा जाता है ॥ ३६-३८ ॥

**क्षीराज्ययुतपाथोभिस्तर्पणैस्तर्पयेन्मनुम् ।**
**जपेन्मायापुटं मन्त्रं सहस्रं गोपनं हि तत् ।**
**बालातार्त्तीयबीजेन गगनाद्येन सम्पुटम् ॥ ३९ ॥**
**सहस्रं प्रजपेन्मन्त्रमेतदाप्यायनं मतम् ।**
**संस्कारदशकं प्रोक्तं मनूनां दोषनाशकम् ॥ ४० ॥**

**इति मन्त्रसंस्कारः । उभयोरप्येकतमः सम्प्रदायप्राप्तः साध्यः ।**

८. दूध एवं घी से युक्त जल से मन्त्र का एक-सौ बार तर्पण कहा जाता है ।

९. माया सम्पुटित मन्त्र का एक सहस्र बार मन्त्र का जप गोपन कहा जाता है ।

१०. बाला के तृतीय बीज से आदि में गगन (ह् ह सौः) इस मन्त्र से सम्पुट मन्त्र का एक सहस्र संख्या में जप करे तो उसे आप्यायन संस्कार कहा जाता है । यहाँ तक हमने दशों संस्कार कहा जो सर्वदोषविनाशक है ॥ ३९-४० ॥

यहाँ तक मन्त्र संस्कार कहा गया । दोनों प्रकार के संस्कार में अपने सम्प्रदाय के अनुसार किसी एक से ये दशो संस्कार करे ।

### मालासंस्कारकथनम्

**एवं मन्त्रं तु संस्कृत्य मालां वै शोधयेत् ततः ।**
**सा ज्ञेया त्रिविधा माला मातृकाद्या ततो परा ।**
**करमालेति विख्याता मणिमाला ततः परम् ॥ ४१ ॥**

इस प्रकार मन्त्र का संस्कार कर साधक माला का संस्कार करे । वह माला तीन प्रकार की कही गई है—आदि मातृका माला, दूसरी कर माला तथा तीसरी मणि माला बतलायी गयी है—ये माला के तीन भेद हैं ॥ ४१ ॥

**तच्च परारहस्ये—**

**मातृकामालिकां देवि शृणु वक्ष्यामि तत्त्वतः ।**
**माला शिवमयी प्रोक्ता सूत्रं शक्तिमयं च यत् ॥ ४२ ॥**

परारहस्य में भी बतलाया गया है—हे देवि! अब मातृका माला को तत्त्वतः

कह रहा हूँ उसे सुनिए । माला शिवमयी कही जाती है और उससे लगा हुआ सूत्र शक्तिमय कहा जाता है ॥ ४२ ॥

**वर्णाः शिवमयास्ते च स्वराः शक्तिमया यतः ।**
**पञ्चाशद्वर्णिका प्रोक्ता सूत्रं शक्तिशिवात्मकम् ।**
**कुण्डलीग्रथिता शक्तिः कलान्ते मेरुसंस्थितः ॥ ४३ ॥**

इसी प्रकार वर्ण शिवमय हैं और स्वर शक्तिमय हैं । अतः कुल पचासों वर्ण शक्तिशिवात्मक कहे गये हैं । कुण्डली में शक्ति ग्रथित है और सब कलाओं के अन्त में मेरु की स्थिति है ॥ ४३ ॥

### १. वर्णमालाकथनम्

**अनुलोमविलोमेन मातृकानां शतं भवेत् ।**
**अकचटतपयशास्त्वष्टवर्गाः प्रकीर्तिताः ॥ ४४ ॥**
**अष्टवर्गं प्रकल्प्यान्ते अष्टोत्तरशती भवेत् ।**
**अष्टोत्तरशतीमाला सर्वकार्यार्थसिद्धिदा ॥ ४५ ॥**

अनुलोम विलोम दोनों प्रकारों से मातृकाओं की संख्या सौ हो जाती है । अ क च ट त प य श ये ८ वर्ग हैं, इस प्रकार अन्त में आठ वर्गों को मिलाकर कुल एक-सौ आठ वर्ण संख्या हो जाती है । यह अष्टोत्तर शती मातृका माला सभी सिद्धियाँ प्रदान करने वाली है ॥ ४४-४५ ॥

**मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितान् मनून् ।**
**कुर्याद् वर्णमयीं मालां सर्वमन्त्रप्रकाशिनीम् ॥ ४६ ॥**

मन्त्र से सम्पुटित वर्ण और वर्ण से सम्पुटित मन्त्र इस प्रकार वर्णमयी माला निर्माण करे । जिससे सारे मन्त्र प्रकाशित होने लगें ॥ ४६ ॥

**चरमार्णं मेरुरूपं लङ्घनं नैव कारयेत् ।**
**सबिन्दुं वर्णमुच्चार्य पश्चान्मन्त्रं जपेत् सुधीः ॥ ४७ ॥**

अन्तिम में रहने वाला 'वर्ण' मेरु स्वरूप है, अतः उसका लङ्घन किसी भी प्रकार न करे । सुधी साधक सविन्दु वर्ण का उच्चारण कर पश्चात् मन्त्र का जप करे ॥ ४७ ॥

**श्रीशिवाक्षरमालेयं वर्णिता स्नेहतो मया ।**
**षट्त्रिंशत्तत्त्वभिर्देवि योजयेत् सप्तभिर्ग्रहैः ॥ ४८ ॥**

मैंने स्नेहवश यह श्रीशिवाक्षर माला का वर्णन किया । हे देवि! इसमें ३६ तत्त्वों तथा सात ग्रहों को संयुक्त कर देवे ॥ ४८ ॥

**तत्त्वमालेयमाख्याता श्रीविद्याप्रीतिकारिणी ।**
**पञ्चषष्ट्यक्षरैश्चत्वारिंशद्भिर्भैरवैस्तथा ॥ ४९ ॥**
**त्र्यधिकैर्योजयेन्मालां भैरवीयमुदाहृता ।**
**सुप्तकीलितसंरुद्धाः छिन्ना व्याकीर्णयोनयः ॥ ५० ॥**
**धनी वैरी वीर्यहीनः काणखञ्जादयोऽपि ये ।**
**तेऽपि सिद्धा भवन्त्येव मातृकामालया शिवे ॥ ५१ ॥**

तब यह तत्त्वमाला कही जाती है जो श्री विद्या को प्रसन्न करने वाली है । इसको ६५ अक्षरों तथा ४०+३ भैरवों से युक्त कर देना चाहिये तो यह भैरवीय माला हो जाती है । तब इसके जप से सुप्त, कीलित, संरुद्ध, छिन्न, बिखरे हुये योनियों वाले, धनी, वैरी, काण एवं खञ्जादि मन्त्र भी इस मातृका माला से सिद्ध हो जाते हैं ॥ ४९-५१ ॥

**गुरोः पञ्च गणेशस्य त्रयं च परिकीर्तितम् ।**
**शेषमिष्टाय सन्दद्यात् तेन सिद्धीश्वरो भवेत् ॥ ५२ ॥**

गुरु को पाँच मातृका माला तथा गणेश को तीन मातृका माला और शेष दो अपने इष्ट देव को समर्पित करे तो वह सिद्धियों का ईश्वर हो जाता है ॥ ५२ ॥

**त्रयं गुरौ त्रयं देवि गणपे परिकीर्तितम् ।**
**न्यूनातिरिक्ते द्वितयं शेषमिष्टाय योजयेत् ॥ ५३ ॥**

अथवा हे देवि! तीन गुरु को, तीन ही गणेश को और न्यून एवं अतिरिक्त होने पर केवल दो-दो शेष इष्ट देव को समर्पित करे ॥ ५३ ॥

**अष्टोत्तरशतीभेदः कथितः, कथ्यतेऽपरः ।**
**रुद्राणां तु शतं चैव भैरवाष्टकयोजितम् ॥ ५४ ॥**
**कृत्त्वा मेरुं महारुद्रं जपमालां च कारयेत् ।**
**न हन्याद् भैरवान् रुद्रैः रुद्रांश्च भैरवैस्तथा ॥ ५५ ॥**
**अन्यथा जपहानिः स्याद् रुद्रस्य वचनं त्विदम् ।**
**एतद् गुह्यतमं भद्रे तव स्नेहान्मयेरितम् ॥ ५६ ॥**

यहाँ तक हमने अष्टोत्तरशती भेद कहा । अब दूसरा भेद कहता हूँ । रुद्र एक सौ तथा भैरवों की संख्या आठ इनको जोड़ने पर कुल एक सौ आठ संख्या हो जाती है अन्त में महारुद्र मेरुस्वरूप है । इस प्रकार जप माला की एक-सौ आठ संख्या तथा अन्त में मेरु का निर्माण करे, जिससे रुद्रों से भैरवों का हनन न हो और भैरवों से रुद्रों का हनन न हो । अन्यथा जप में हानि होती है ऐसा रुद्र का वचन है । हे भद्रे! यह अत्यन्त गोपनीय रहस्य माला के विषय में हमने तुमसे

स्नेहवश कहा ॥ ५४-५६ ॥

**मालारहस्यसर्वस्वं नाख्येयं यस्य कस्यचित् ।**
**करमालामथो वक्ष्ये सर्वमन्त्रप्रबोधिनीम् ॥ ५७ ॥**

यह माला का रहस्यसर्वस्व है । इसे किसी से नहीं कहना । अब समस्त मन्त्रों को प्रबुद्ध करने वाली करमाला के विषय में कहता हूँ ॥ ५७ ॥

२. करमालाविधानम्

**नित्यं जपं करे कुर्यान्न तु काम्यं कदाचन ।**
**काम्यमपि करे कुर्यान्मालाऽभावे प्रियंवदे ॥ ५८ ॥**

नित्य जप करमाला से ही करे । काम्य कर्म में जप करमाला से कदापि न करे । हे प्रियम्वदे! यदि माला अप्राप्त हो तब काम्य कर्म का जप भी कर माला से ही करे ॥ ५८ ॥

**तन्नियमो यथा—**

**करमालां च संशोध्य त्रिधा तद्विद्यया पुनः ।**
**जपेन्मन्त्रं निर्विकल्पस्तद्विद्यामधुनोच्यते ॥ ५९ ॥**
**काली कामः कृपा कुन्ती करमाले हरं वनम् ।**
**मन्त्रोऽयं करमालायाः शुद्धिदः सर्वसिद्धिदः ॥ ६० ॥**

जप का नियम—साधक करमाला का संशोधन करे । फिर उसकी विद्या से पुनः तीन बार जप कर शोधन करे । तदनन्तर सन्देहरहित हो मन्त्र का जप करे । अब माला विद्या कहता हूँ । 'कालीकाम कृपा कुन्ती करमाले हरं वनम्'—यह करमाला का शुद्धि तथा सिद्धि देने वाला मन्त्र है ॥ ५९-६० ॥

**हृदये हस्तमारोप्य तिर्यक् कृत्त्वा कराङ्गुलीः ।**
**आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत् ॥ ६१ ॥**

हृदय पर हाथ रख कर अङ्गुलियों को तिरछी कर वस्त्र से दोनों हाथों को आच्छादित कर दाहिने हाथ से जप करे ॥ ६१ ॥

**अङ्गुलीर्न वियुञ्जीत किञ्चिदाकुञ्चिते तले ।**
**अङ्गुलीनां वियोगाच्च छिद्रे च स्रवते जपः ॥ ६२ ॥**

अङ्गुलियों को हाथ पर से न हटावे । अङ्गुलियों के हस्त तल से वियुक्त कर देने पर छिद्र से जप का फल चू जाता है ॥ ६२ ॥

**अङ्गुल्यग्रेण यज्जप्तं यज्जप्तं मेरुलङ्घने ।**

**पर्वसन्धिषु यज्जप्तं तत् सर्वं निष्फलं भवेत् ॥ ६३ ॥**

**असंख्यातेन यज्जप्तमित्यपि पाठः ।**

अङ्गुली के अग्रभाग से जो जप किया जाता है और मेरु का लङ्घन कर जो जप किया जाता है तथा पर्वों के गाँठ पर जो जप किया जाता है, हे देवि! वह जप निष्फल है । कहीं-कहीं असंख्यातेन यज्जप्तम् यह पाठ है जिसका अर्थ है बिना गणना किये जो जप किया जाता है वह भी निष्फल होता है ॥ ६३ ॥

**कनिष्ठामूलपर्वादिक्रमेण करगाः सुराः ।**
**तान् शृणुष्व महादेवि यथावद् वर्ण्यते मया ॥ ६४ ॥**

कनिष्ठा के मूल पर्व के आदि से हाथ के सभी पर्व देवताओं का निवास कहा गया है । हे महादेवि! उसे सुनिए, मैं यथावद् वर्णन कर रहा हूँ ॥ ६४ ॥

**ईशानोऽग्नि र्निर्ऋतिश्च वायुरिन्दुर्यमस्तथा ।**
**वरुणश्च कुबेरश्च सूर्यः सोमो बुधो गुरुः ॥ ६५ ॥**
**सितमन्दारराह्वन्ता ब्रह्मविष्णुमहेश्वराः ।**
**जपसिद्धिकरा देवि सकलाः करदेवताः ॥ ६६ ॥**
**दिक्पालाश्च ग्रहाश्चाष्टौ शक्तिः षोडशपर्वसु ।**
**प्रलभ्य पर्वत्रितये त्रयो देवाः सदा स्थिताः ॥ ६७ ॥**

ईशान, अग्नि, निर्ऋति, वायु, इन्द्र, यम, वरुण, कुवेर, सूर्य, सोम, बुध, गुरु, शुक्र, शनैश्चर, राहु, ब्रह्मा, विष्णु एवं महेश—ये हाथ पर रहने वाले जप सिद्धि करने वाले देवता हैं । आठ दिक्पाल और आठ ग्रह—ये सोलह पर्वों पर सदा स्थित रहते हैं । तीन पर्व पर तीन देवता सर्वदा स्थित रहते हैं ॥ ६५-६७ ॥

**क्रूरग्रहौ च मन्दारौ दिक्पालौ यमनिर्ऋती ।**
**कुलिकश्चेति विख्यातो जपहानिकरो मतः ॥ ६८ ॥**

क्रूर ग्रह शनि, यम, निर्ऋति, दो दिक्पाल तथा कुलिक—ये जप में हानि पहुँचाने वाले देवता कहे गए हैं ॥ ६८ ॥

**कुलिकांशं त्यजेद् देवि मन्त्री करजपे सदा ।**
**कुलिको मुद्गरो ज्ञेयो मुद्गरे तु महद्भयम् ॥ ६९ ॥**

हे देवि! अतः मन्त्रज्ञ साधक कर-जप में कुलिक का अंश त्याग देवे । कुलिक को मुद्गर समझना चाहिये और यह मुद्गर महा भयानक होता है ॥६९॥

**मुद्गरोल्लङ्घने शक्तिर्महारुद्रस्य केवलम् ।**
**कुलिकं तु महाकेतुं मेरुरूपं न लङ्घयेत् ॥ ७० ॥**

मुद्गर के उल्लङ्घन की शक्ति केवल महारुद्र में है। यह कुलक मेरु रूप में महान् केतु हैं। अतः इनका कभी भी उल्लङ्घन न करे ॥ ७० ॥

**दिक्पालांशे ग्रहांशे च कुलिकांशं परित्यजेत्।**
**अनामिकाद्वयं पर्व कनिष्ठादिक्रमेण तु ॥ ७१ ॥**
**तर्जनीमूलपर्यन्तं जपेद् दशसु पर्वसु।**
**तर्जन्यग्रे च मध्ये च योजयेत् स तु पापकृत् ॥ ७२ ॥**

दिक्पाल के अंश में तथा ग्रहांश में कुलिकांश का परित्याग कर देवे। अनामिका के दो पर्व, फिर कनिष्ठा के ३ पर्व, फिर अनामिका मध्यमा के एक-एक पर्व, फिर तर्जनी के तीन पर्व इस प्रकार कुल दश पर्वों पर जप करे। जो तर्जनी के अग्रभाग तथा मध्य भाग दोनों का जप में विनियोग करता है वह देवता के समक्ष पापी होता है ॥ ७१-७२ ॥

**अन्यत्रापि—**

**अनामायास्त्रयं पर्व कनिष्ठायास्त्रिपर्वकम्।**
**मध्यमायास्त्रयं पर्व तर्जनीमूलपर्वणि ॥ ७३ ॥**
**प्रादक्षिण्यक्रमेणैव जपेद् दशसु पर्वसु।**
**शक्तिमाला समाख्याता सर्वमन्त्रप्रदीपिका ॥ ७४ ॥**

अन्य तन्त्र में भी कहा गया है—अनामिका का तीन पर्व, कनिष्ठा का तीन पर्व, मध्यमा का तीन और तर्जनी का मूल—ये दश पर्व शक्तिमाला कहे जाते हैं। इनका जप दक्षिण क्रम से करना चाहिए। ये सभी मन्त्रों को प्रदीप्त करने वाले हैं ॥ ७३-७४ ॥

**पर्वद्वयं तु तर्जन्याः मेरुं तद् विद्धि पार्वति।**
**तर्जन्यग्रे तथा मध्ये यो जपेत् स च पामरः।**
**चत्वारि तस्य नश्यन्ति आयुर्विद्यायशोधनम् ॥ ७५ ॥**

हे पार्वति! तर्जनी का दो पर्व मेरु समझना चाहिये। अतः तर्जनी के अग्र तथा मध्य में जो जप करता है। वह मूर्ख है वहाँ जप करने वाले साधक के आयु, विद्या, यश और धन का नाश होता है ॥ ७५ ॥

**श्रीविद्यायां विशेषः—**

**अनामामध्ययोश्चैव मूलाग्रं च द्वयं द्वयम्।**
**कनिष्ठायाश्च तर्जन्यास्त्रयं पर्व महेश्वरि ॥ ७६ ॥**
**अनामामध्यमायाश्च मेरुः स्याद् द्वितयं शुभे।**
**प्रदक्षिणक्रमेणैव जपेत् त्रिपुरसुन्दरीम् ॥ ७७ ॥**

**दशांशं सञ्जपेद् देवि केवलं करमालया ।**
**अनामिकाद्वयं पर्व कनिष्ठादिक्रमेण तु ।**
**तर्जनीमूलपर्यन्तं जपेद् द्वादशपर्वसु ॥ ७८ ॥**

श्रीविद्या में विशेष कथन इस प्रकार है—हे महेश्वरि! अनामिका एवं मध्यमा दो अङ्गुलियों का मूल और अग्र दो-दो पर्व, कनिष्ठा और तर्जनी के तीन-तीन पर्व, हे शुभे! अनामा एवं मध्यमा का दो पर्व मेरु बनावे । इस प्रकार प्रदक्षिण क्रम से त्रिपुरसुन्दरी का जप केवल करमाला से करे तथा उसका दशांश करे अथवा अनामिका का दो पर्व, कनिष्ठा का तीन पर्व, मध्यमा का तीन पर्व, तदनन्तर तर्जनी के तीन पर्व एवं मूल पर्यन्त इस प्रकार बारह पर्व तक जप करना चाहिए ॥ ७६-७८ ॥

**अथवा—**

**कनिष्ठा च चतुःपर्वाऽनामापर्वत्रयं तथा ।**
**मध्यमापर्व देव्येकं तर्जन्याश्च चतुष्टयम् ॥ ७९ ॥**
**संयोज्य प्रजपेद् विद्यां मन्त्री द्वादशपर्वसु ।**
**शक्तिमालेयमाख्याता त्यक्त्वा पर्वचतुष्टयम् ॥ ८० ॥**
**नवावृत्त्या जपेद् देवि सहस्राद्ययुतावधि ।**
**प्रोक्तेयं करमाला त्वं मणिमालामथो शृणु ॥ ८१ ॥**

अथवा—कनिष्ठा का ४ पर्व, अनामा का तीन पर्व, हे देवि! मध्यमा का एक पर्व तथा तर्जनी का ४ पर्व, इनको संयुक्त कर कुल द्वादश पर्वों में मन्त्रज्ञ महाविद्या का जप करे । इस प्रकार ४ पर्वों को छोड़कर शेष द्वादश पर्वों की शक्तिमाला कही जाती है । कुल नव आवृत्ति में एक-सौ आठ संख्या हो जाती है । इस प्रकार सहस्र से लेकर दश हजार की संख्या में जप करे । यहाँ तक करमाला के विषय में कहा गया; अब मणिमाला के विषय में सुनिए ॥ ७९-८१ ॥

### ३. अक्षमालानिरूपणम्

**पद्मबीजादिभिर्माला बहिर्यागेष्वथो भवेत् ।**
**रुद्राक्षशङ्खपद्माक्षपुत्रजीवकमौक्तिकैः ॥ ८२ ॥**
**स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा ।**
**राजतैः कुशमूलैश्च गृहस्थस्याक्षमालिका ॥ ८३ ॥**

बहिर्याग में कमल के बीज (कवल गट्टा) आदि की माला बनानी चाहिये । रुद्राक्ष, शङ्ख, पद्माक्ष, पुत्रजीवक, मौक्तिक, स्फटिक, मणि, रत्न, सौवर्ण, मूँगा, चाँदी एवं कुशमूल की माला गृहस्थों के जप के लिये कही गई है ॥ ८२-८३ ॥

**पुत्रजीवैर्दशगुणं ततः शङ्खैः सहस्रकम् ।**
**प्रवालैर्मणिरत्नैश्च दशसाहस्रकं स्मृतम् ॥ ८४ ॥**

सामान्य माला की अपेक्षा पुत्रजीव की माला से जप करने से दश गुणित, शङ्ख की माला से सहस्रगुणित, प्रवाल एवं मणि और रत्न की माला से दश सहस्र गुणित फल कहा गया है ॥ ८४ ॥

**तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते।**
**पद्माक्षैर्दशलक्षं स्यात् सौवर्णैः कोटिरुच्यते ॥ ८५ ॥**
**कुशग्रन्थ्या कोटिशतं रुद्राक्षैः स्यादनन्तकम् ।**
**सर्वैर्विरचिता माला नृणां मुक्तिफलप्रदा ॥ ८६ ॥ इति ।**

स्फटिक माला से भी उतना ही फल, मोती की माला से लक्षगुणित, कमलगट्टा की माला से दशलक्षगुणित फल, सौवर्ण की माला से करोड़ गुणित, कुश ग्रन्थि की माला से सौ करोड़ गुना और रुद्राक्ष की माला से अनन्त गुना फल होता है । इस प्रकार उपरोक्त सभी के द्वारा विरचित माला से जप करने पर मनुष्यों को मुक्ति का फल प्राप्त होता है ॥ ८५-८६ ॥

### देवविशेषेमणिमालाकथनम्

**अन्यत्रापि—**

**वैष्णवे तुलसीमाला गणेशे गजदन्तजा ।**
**रुद्राक्षसम्भवा शम्भौ स्फाटिकी च तथा रवौ ॥ ८७ ॥**
**अथवा सर्वमन्त्रेषु शस्ता रुद्राक्षमालिका ।**
**पद्माक्षमालिका तद्वत् सर्वमन्त्रप्रबोधिनी ॥ ८८ ॥**

वैष्णवों के लिये तुलसी माला, गाणपत्यों के लिये गजदन्त की माला, शैवों के लिये रुद्राक्षमाला और सौरों के लिये स्फटिक माला प्रशस्त कही गई है, अथवा सभी के लिये रुद्राक्ष माला प्रशस्त है । उसमें कमलगट्टा की माला सभी प्रकार के मन्त्रों को जागरूक बनाती है ॥ ८७-८८ ॥

**सौवर्णी मौक्तिकी वाऽथ शङ्खजा वा प्रवालजा।**
**रक्तचन्दनबीजोत्था शक्तिमाला प्रकीर्तिता॥ ८९ ॥**

सुवर्ण, मोती, शङ्ख, अथवा मूँगे की, अथवा रक्तचन्दन की माला, अथवा कमलगट्टे की माला शक्तिमाला कही जाती है ॥ ८९ ॥

**सौवर्णेऽष्टगुणं विन्द्यात् स्फाटिके च दशाधिकम् ।**
**स्याच्छतं शङ्खमणिभिः प्रवालैश्च सहस्रकम् ।**

**अयुतं चन्दनैश्चैवानन्तं रुद्राक्षमालया ॥ ९० ॥**

सौवर्ण माला पर आठ गुना, स्फटिक माला पर दशगुना, शङ्ख की मनियों पर जप करने से सौ गुना, प्रवाल पर सहस्र गुना, चन्दन की माला पर दश हजार गुना और रुद्राक्षमाला से जप करने पर अनन्त गुना फल होता है ॥ ९० ॥

**कालिका छिन्नमस्ता च त्रिपुरा तारिणी तथा ।**
**एता रुद्राक्षमालाया जपे तोषं न यान्ति हि ॥ ९१ ॥**
**एतासां च जपं मन्त्री रुद्राक्षमालया चरन् ।**
**व्याधिमाप्नोति सततं निष्फलं तस्य तज्जपः ॥ ९२ ॥**

कालिका, छिन्नमस्ता, त्रिपुरा और तारिणी (तारा)—ये देवियाँ रुद्राक्ष माला पर जप करने से सन्तुष्ट नहीं होती । यदि साधक इन देवियों का मन्त्र रुद्राक्ष माला से करे तो वह व्याधि प्राप्त करता है । किं बहुना? उसका सारा जप निष्फल हो जाता है ॥ ९१-९२ ॥

**विशेषोऽपि—**

**दिवा नैव प्रजप्तव्यं रुद्राक्षमालया क्वचित् ।**
**शक्तिमन्त्रं महेशानि कृते तन्निष्फलं भवेत् ॥ ९३ ॥**

इस विषय में विशेष कथन भी है—हे महेशानि! दिन में कभी भी रुद्राक्षमाला द्वारा शक्ति मन्त्र का जप न करे । क्योंकि वह जप निष्फल हो जाता है ॥ ९३ ॥

**निष्फलत्वे हेतुमाह तन्त्रान्तरे—**

**शिवशक्तिसमायोगो रात्रावेव प्रकीर्तितः ।**
**रुद्राक्षे शिवरूपत्वं शक्तित्वं शक्तिमन्त्रके ॥ ९४ ॥ इति ।**

क्यों निष्फल होता है? इसका उत्तर अन्य तन्त्रों में इस प्रकार है—यतः शिवशक्ति का समायोग रात्रि में ही कहा गया है और रुद्राक्ष में शिवरूपत्व है तथा शक्ति मन्त्र में शक्तित्व है ॥ ९४ ॥

### मालासंस्कारकालविशेषनिरूपणम्

**द्वादश्यां वैष्णवी माला संस्कार्या सोपवासकैः ।**
**मन्त्रज्ञैर्विष्णुमन्त्रेण दिवाभागे प्रशस्यते ॥ ९५ ॥**
**चतुर्थ्यां च गणेशस्य सूर्यस्य सप्तमीतिथौ ।**
**अष्टम्यां वा नवम्यां वा चतुर्दश्यां तथैव च ।**
**शक्तीनामपि कर्त्तव्या रात्रावेव समाहितः ॥ ९६ ॥**

साधक उपवासपूर्वक वैष्णवी माला का संस्कार द्वादशी में ही करे । मन्त्रज्ञ

साधक के लिये दिन में भी विष्णु मन्त्र द्वारा माला का संस्कार प्रशस्त कहा गया है । गाणपत्य के साधक को चतुर्थी में, सूर्य के उपासको को सप्तमी तिथि में, शाक्तों के लिये अष्टमी, नवमी एवं चतुर्दशी को रात्रि में एकाग्रचित्त हो माला का संस्कार करना चाहिये ॥ ९५-९६ ॥

त्रयोदश्यां तथा कुर्यात् शिवस्यापि सुरेश्वरि ।
अष्टोत्तरशतमणिभिर्निर्मिता या तु मालिका ॥ ९७ ॥
राज्यं वितनुते नूनं देहान्ते मोक्षदायिनी ।
पञ्चविंशतिभिर्मोक्षं त्रिंशद्भिर्धनसिद्धिदम् ॥ ९८ ॥
चतुर्दशमयी मोक्षदायिनी भोगवर्द्धिनी ।
सर्वथा सप्तविंशत्या पञ्चदश्यभिचारके ॥ ९९ ॥
पञ्चाशद्भिः कार्यसिद्धिस्तथा च चतुरुत्तरैः ।
यथालाभं साधकेन्द्रो ह्यक्षान्यादाय यत्नतः ॥ १०० ॥
अन्योन्यसमरूपाणि नातिस्थूलकृशानि च ।
कीटादिभिरदुष्टानि तथा जीर्णानि सुन्दरि ॥ १०१ ॥
द्विजस्त्रीनिर्मितं सूत्रं कर्पासभवमुत्तमम् ।
शुक्लं रक्तं तथा कृष्णं पट्टसूत्रमथापि वा ॥ १०२ ॥
शान्तिवश्याभिचारेषु मोक्षैश्वर्यजयेषु च ।
सर्वेषामेव वर्णानां रक्तं सर्वेप्सितप्रदम् ।
आश्रमेषु तथा चैवं रक्तं सर्वसमृद्धिदम् ॥१०३॥ इति ।

अन्यच्च हंसपारमेश्वरे—

उच्चाटने मार्कटमेव सूत्रं
लोहस्य सूत्रं खलु मारणे च ।
पट्टसय सूत्रं तु महद्वशीये
कर्पाससूत्रं खलु सर्वसिद्ध्यै ॥ १०४ ॥

हे सुरेश्वरि! शैवो को शिवमाला का संस्कार त्रयोदशी तिथि में करना चाहिये । एक सौ आठ मणियों द्वारा बनाई गई माला निश्चय ही राज्य प्रदान करने वाली होती है । इतना ही नहीं देहान्त होने पर वह मोक्ष भी प्रदान करती है । २५ मनियों की माला से जप करने पर मोक्ष, ३० मनियों से धनसिद्धि, चौदह मनियों की माला मोक्षदायिनी, २७ मनियों की भोगवर्द्धिनी, १५ मनियों की माला अभिचार में, पचास मनियों की माला कार्य सिद्धि, ५४ मनियों की माला यथा लाभप्रद होती है । साधकेन्द्र प्रयत्नपूर्वक अक्षों को अपने हाथ में लेवे जो एक दूसरे के समान हो, अत्यन्त स्थूल अथवा अत्यन्त कृश न हो, कीटादि के काटने

से दूषित न हो और अत्यन्त जीर्ण भी न हो । माला जिस सूत से गूँथी जाय उसे ब्राह्मण की स्त्री निर्माण करे । वह सूत्र कपास का हो, अथवा शुक्ल वर्ण का हो, अथवा रक्त हो, इसके अलावा पटुआ का सूत्र काले वर्ण का भी प्रशस्त कहा गया है । शान्ति, वश्य, अभिचार, मोक्ष, ऐश्वर्य एवं विजय में सभी वर्णों के लिये रक्त वर्ण का सूत्र सभी अभीष्ट प्रदान करता है । इसी प्रकार सभी आश्रमियों के लिये भी रक्त वर्ण का सूत्र सर्व समृद्धि प्रदान करता है ॥ ९७-१०४ ॥

**मालाग्रथनप्रकारकथनम्**

**सनत्कुमारीये तु—**

**त्रिगुणं त्रिगुणीकृत्य ग्रन्थयेत् शिल्पशास्त्रतः ।**
**एकैकं मातृकावर्णं सतारं प्रजपन् सुधीः ।**
**मणिमादाय सूत्रेण ग्रन्थयेन्मध्यभागतः ॥ १०५ ॥**
**ब्रह्मग्रन्थिं विधायेत्थं मेरुं च ग्रन्थिसंयुतम् ।**
**ग्रन्थयित्वा पुरो मालां ततः संस्कारमाचरेत् ॥ १०६ ॥**

**अत्र कस्यचिन्मते मूलविद्यया ग्रन्थनं विधेयम् ।**

तिगुने सूत को पुनः त्रिगुणित कर शिल्पशास्त्र के अनुसार सूत्र में मनियों का ग्रथन करे । प्रत्येक मनियों के गूँथते समय तार (ॐ) युक्त एक-एक मातृकाओं का जप करे । मणि को लेकर उसके मध्य भाग में सुधी साधक सूत्र से ग्रन्थन करे । इस प्रकार ब्रह्मग्रन्थिपूर्वक माला ग्रथन कर ग्रन्थि संयुक्त मेरु का निर्माण करे। सर्वप्रथम माला का ग्रथन करे तदनन्तर माला का संस्कार करे । किसी के मत में मूल विद्या से गाँठ देना चाहिये ॥ १०५-१०६ ॥

**तथा च एकवीराकल्पे—**

**मातृकामन्त्रतो ग्रन्थिं विद्यया वा प्रकारयेत् ।**
**सुवर्णादिगुणैर्वापि ग्रन्थयेत् साधकोत्तमः ॥ १०७ ॥**
**ब्रह्मग्रन्थिं ततो दद्यान्नागपाशमथापि वा ।**
**कवचेन च बध्नीयान्मालां ध्यानपरायणः ॥ १०८ ॥**

जैसा कि एकवीराकल्प तन्त्र में भी बतलाया गया है—साधक विद्या मन्त्र से ग्रथन करे और मातृका मन्त्र से गाँठ देवे । उत्तम साधक सुवर्णादि के मनियों का भी ग्रथन करे । तदनन्तर ब्रह्मग्रन्थि देवे, अथवा नागपाश से गूँथकर बाँधे और ध्यान परायण होकर कवच से माला बन्धन करे ॥ १०७-१०८ ॥

**सर्वशेषे ततो मेरुं सूत्रद्वयसमन्वितम् ।**
**ग्रन्थयेत् तारयोगेन बध्नीयात् साधकोत्तमः ।**

**सर्वस्माच्च स्थूलतरं मेरुं कुर्यात् सजातिकम्॥ १०९ ॥**
**मुखे मुखं तु संयोज्य पुच्छे पुच्छं च योजयेत्।**
**गोपुच्छसदृशी माला यद्वा सर्पाकृतिः शुभा ॥ ११० ॥**

जब सभी माला गूँथ ली जावे तब दोनों सूत्रों को मिलाकर मेरु का ग्रथन करे। फिर उत्तम साधक ॐ पढ़कर दोनों सूत्रों में बाँधे। मेरु मनियों की जाति का ही होना चाहिये। किन्तु सब मनियों से उसे थोड़ा स्थूल होना चाहिये। मुख में मुख मिलावे और पुच्छ में पुच्छ मिलावे। माला की आकृति गोपुच्छ के सदृश अथवा साँप की आकृति के समान होनी चाहिये। ऐसी माला कल्याणकारिणी होती है ॥ १०९-११० ॥

**आद्यं स्थूलं ततस्तस्मान्न्यूनान्न्यूनतरं तथा।**
**विन्यसेत् क्रमतस्तत्र सर्पाकारा हि सा यतः ॥ १११ ॥**

आदि में मोटी दाना की मनियों इसके बाद क्रमशः उससे न्यून उसके बाद उससे भी न्यून माला सर्पाकार होती है ॥ १११ ॥

### अक्षे मुखपुच्छलक्षणम्

**मुखपुच्छनियमस्तु स्वच्छन्दमाहेश्वरे—**

**रुद्राक्षस्योन्नतं प्रोक्तं मुखं पुच्छं तु निर्मलम्।**
**कमलाक्षस्य सूक्ष्मांशं सबिन्दुद्वितयं मुखम् ॥ ११२ ॥**
**सबिन्दुकस्य स्थूलांशं पृष्ठं श्लक्ष्णमिति स्मृतम्।**
**एवं ज्ञात्वा मुखं पुच्छं रुद्राक्षाम्भोरुहाक्षयोः ॥ ११३ ॥**
**तत् सजातीयमेकाक्षं मेरुत्वेनाग्रतो न्यसेत्।**
**एकैकं मणिमादाय ब्रह्मग्रन्थिं प्रकल्पयेत् ॥ ११४ ॥**

मुख पुच्छ के विचार का नियम स्वछन्दमाहेश्वर तन्त्र में भी बतलाया गया है—रुद्राक्ष का उन्नत भाग मुख होता है, पुच्छ निर्मल होता है और कमलगट्टा का सूक्ष्मांश दो बिन्दुओं से युक्त मुख होता है। एक बिन्दु से युक्त स्थूलांश उसका पृष्ठभाग होता है जो चिकना होता है। इस प्रकार के चिह्न से रुद्राक्ष और कमलगट्टे के मुख और पुच्छ का निर्धारण करे। उसी का सजातीय मेरु सबसे आगे ग्रथन करे। फिर एक-एक मनियाँ लेकर ब्रह्मग्रन्थि देवे ॥ ११२-११४ ॥

**एकैकं मातृकावर्णं ग्रन्थनादौ तु सञ्जपेत्।**
**त्रिवृत्तिग्रन्थनैकेन तथार्द्धेन विधीयते ॥ ११५ ॥**

एक-एक मनियाँ ग्रथन करते समय एक-एक मातृका वर्ण का जप करे। तीन बार ग्रथन कर एक-एक मातृका का अथवा आधे के जप का विधान है ॥ ११५॥

**सार्धद्वयावर्तनेन ग्रन्थिं कुर्याद् यथा दृढम् ।**
**त्रिरावर्त्या मध्यमेन चार्धावर्त्या तु देशतः ।**
**स्याद् ग्रन्थिर्दक्षिणावर्त्तस्तद् ग्रन्थिब्रह्मसञ्ज्ञकम्॥ ११६ ॥**

अथवा ढाई वार आवर्त्तन कर दृढ ग्रन्थि देना चाहिए । तीन आवृत्ति मध्यम से तथा अर्धावृत्ति से देशतः दक्षिणावर्त्त ग्रन्थि का निर्माण करे । इसी को ब्रह्मग्रन्थि कहते हैं ॥ ११६ ॥

**ग्रन्थिहीना न कर्तव्या सापि कुत्रापि युज्यते ।**
**कालिका त्वरितायाश्च वज्राख्या षट्कभेदके ॥ ११७ ॥**
**तथा च वनवासिन्या वाराह्याश्च तथेश्वरि ।**
**चण्डिकाया महेशानि ग्रन्थिहीनापि शस्यते ॥ ११८ ॥**

ग्रन्थिहीन माला का निर्माण नही करना चाहिए । किन्तु ग्रन्थिरहित माला का निर्माण कहीं-कहीं प्रशस्त भी होता है । हे ईश्वरि! कालिका, त्वरिता, व्रज्राख्या, वनवासिनी, वाराही और चण्डिका की माला ग्रन्थिरहित होने पर भी प्रशस्त मानी जाती है ॥ ११७-११८ ॥

**मालाप्रतिष्ठाविधानम्**

**एवं निर्माय मालां वै प्रतिष्ठां च ततश्चरेत् ।**
**अप्रतिष्ठितमालाभिर्नित्यं जपति यो नरः ॥ ११९ ॥**
**सर्वं तन्निष्फलं विद्यात् क्रुद्धा भवति देवता ।**
**तस्मात् प्रतिष्ठां प्रोक्तेन कुर्यान्मार्गेण साधकः ॥ १२० ॥**

इस प्रकार माला का निर्माण करने के पश्चात् उसकी प्रतिष्ठा करे । जो मनुष्य प्रतिष्ठारहित माला से जप करता है वह जप निष्फल होता है तथा मन्त्र के देवता उससे कुपित होते हैं । इसलिये शास्त्र में प्रोक्त विधि से साधक माला की प्रतिष्ठा करे । अब माला की प्रतिष्ठा विधि कहते हैं ॥ ११९-१२० ॥

**नित्यकर्म समाप्याथ प्रणम्य गुरुदैवतम् ।**
**अश्वत्थपत्रनवकैः पद्माकारं तु कल्पयेत् ॥ १२१ ॥**

साधक नित्य कर्म समाप्त कर गुरु और देवता को प्रणाम कर नव अश्वत्थ के पत्रों से पद्म का आकार निर्माण करे ॥ १२१ ॥

**तन्मध्ये स्थापयेन्मालां मातृकां मूलमुच्चरन् ।**
**क्षालयेत् पञ्चगव्येन सद्योजातेन सज्जलैः ॥ १२२ ॥**

अश्वत्थपत्र निर्मित उस पद्म में मूल मातृका का उच्चारण करते हुये माला

स्थापित करे । फिर 'सद्योजातेन' इस मन्त्र को पढ़कर पञ्चगव्य से पश्चात् उत्तम जल से उसे प्रक्षालित करे ॥ १२२ ॥

**पञ्चगव्यविधिः**

**पञ्चगव्यनिर्माणं तु तन्त्रान्तरे—**

**गोसकृद् द्विगुणं मूत्रं सर्पिर्दद्याच्चतुर्गुणम् ।**
**क्षीरमष्टगुणं प्रोक्तं पञ्चगव्ये तथा दधि ॥ १२३ ॥**
**गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।**
**आप्यायस्वेति च क्षीरं दधिक्राव्णऋचा दधि ॥ १२४ ॥**
**तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ।**
**वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः ।**
**दध्नि वायुः समुद्दिष्टः सोमः क्षीरे घृते रविः ॥१२५॥ इति ।**

पञ्चगव्य का निर्माण जैसा कि अन्य तन्त्रों में कहा गया है उसे कहते हैं— गोबर, उसका दूना गोमूत्र, उसका चौगुना गोघृत, उसका आठ गुना गोदुग्ध तथा दधि पञ्चगव्य के लिये कहा गया है । गायत्री से गोमूत्र ग्रहण करे और 'गन्धद्वारा' मन्त्र से गोमय ग्रहण करे । 'आप्यायस्व' इस मन्त्र से दूध तथा 'दधिक्राव्णो' इस मन्त्र से दधि 'तेजोऽसि शुक्रमसि' इस मन्त्र से घृत ग्रहण करे । 'देवस्य त्वा' इस मन्त्र से कुशोदक ग्रहण करे । गोमूत्र में वरुण, गोमय में अग्नि, दही में वायु, दूध में सोम और घृत में रवि का आवाहन कर पञ्चगव्य निर्माण कर मणिमाला का प्रक्षालन करे ॥ १२३-१२५ ॥

**चन्दनागरुपुष्पाद्यैर्वामदेवेन घर्षयेत् ।**
**धूपयेत् तामघोरेण लिम्पेद् तत्पुरुषेण तु ॥ १२६ ॥**
**मन्त्रयेत् पञ्चमेनैव प्रत्येकं तु शतं शतम् ।**
**सकृद् वापि तथा मेरु तेनैव च शतं पुनः ॥ १२७ ॥**

**तेन पञ्चमेन ईशानेनेति ।**

फिर 'वामदेव' मन्त्र से चन्दन लगावे । अगुरु एवं धूप देवे और पुष्प निवेदित करे । 'अघोर' मन्त्र से धूप देवे । 'तत्पुरुष' मन्त्र से चन्दन का लेप करे । पञ्चम ईशान मन्त्र से प्रत्येक मनियों को सौ-सौ बार अभिमन्त्रित करे । मेरु को एक बार अभिमन्त्रित करे । इसी प्रकार पुनः सौ बार अभिमन्त्रित करे ॥ १२६-१२७ ॥

**तत्रावाह्य यजेद् देवं यथाविभवविस्तरैः ।**
**संस्कृत्यैवं बुधो मालां तत्प्राणांस्तत्र स्थापयेत् ॥ १२८ ॥**

**तत्प्राणानाराध्यदेवताप्राणान् ।**

उस माला पर देवता का आवाहन कर विद्वान् साधक अपने विभव के अनुसार पूजन करे । इस प्रकार माला का संस्कार कर उसमें आराध्य देवता की प्राण प्रतिष्ठा करे ॥ १२८ ॥

तत् प्राणान् = आराध्य देवता का प्राण

**ततो देवं प्रपूज्याथ परिवारगणैः सह ।**
**अनुलोमविलोमेन मातृकार्णेन मन्त्रयेत् ॥ १२९ ॥**
**ततः प्रेतेन समन्त्र्य तां नयेद् देवतात्मिकाम् ।**

**प्रेतेन प्रेतबीजेनेत्यर्थः ।**

**मूलमन्त्रेण तां मालां पूजयेत् साधकोत्तमः ॥ १३० ॥**

इसके बाद आवरण सहित आराध्य देव का पूजन कर उन्हें अनुलोम एवं विलोम क्रम से मातृका वर्णों से अभिमन्त्रित करे । इसके बाद (ह्सौः) प्रेत बीज से अभिमन्त्रित कर माला को देवतात्मक बनावे । इसके बाद माला के मूल मन्त्र से उत्तम साधक माला का पूजन करे ॥ १२९-१३० ॥

**मालाशोधनमन्त्रकथनम्**

**मूलमन्त्रस्तु वाराहीतन्त्रे—**

**ॐ माले माले महामाले सर्वतत्त्वस्वरूपिणि ।**
**चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ १३१ ॥**
**प्रणवादिद्विठान्तोऽयं सर्वमालाविशोधनः ।**
**वह्निं सम्पूज्य विधिवदष्टोत्तरशतं हुनेत् ॥ १३२ ॥**

माला का मूल मन्त्र वाराहीतन्त्र में भी बतलाया गया है—'ॐ माले माले—सिद्धिदाभव' पर्यन्त है, इसके आदि में प्रणव एवं अन्त में स्वाहा लगावे । यथा 'ॐ माले माले महामाले सर्वतत्त्वस्वरूपिणि चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव स्वाहा'—यह मन्त्र सभी मालाओं की शुद्धि में कहा गया है । फिर अग्नि की पूजा कर उक्त मन्त्र से एक-सौ आठ बार हवन करे ॥ १३१-१३२ ॥

**जपविधिनिरूपणम्**

**हुतशेषं प्रतिहुतौ प्रदद्याद् देवताधिया ।**
**होमकर्मण्यशक्तश्चेद् द्विगुणं जपमाचरेत् ॥ १३३ ॥**
**इत्थं सा संस्कृता माला जपकर्मणि सर्वदा ।**
**प्रयोक्तव्या साधकेन सर्वाभीष्टफलप्रदा ।**
**एवं संस्कृत्य मालां च गोमुख्यां स्थापयेद् बुधः ॥ १३४ ॥**

देवता बुद्धि से पुनः हुतशेष हवन में देवे । यदि होम कर्म में अशक्त हो तब द्विगुण जप करे । इस प्रकार सुसंस्कृत की गई माला का जप कर्म में सदा प्रयोग करे । ऐसी माला समस्त अभीष्ट प्रदान करती है । बुद्धिमान् साधक इस प्रकार शुद्ध की गई माला को गोमुखी में स्थापित करे ॥ १३३-१३४ ॥

**गोमुखीलक्षणकथनम्**

**गोमुखीलक्षणं मायातन्त्रे यथा—**

**चतुर्विंशाङ्गुलमितं पट्टवस्त्रादिसम्भवम् ।**
**निर्मायाष्टाङ्गुलमुखं ग्रीवां तत् षड्दशाङ्गुलम् ॥ १३५ ॥**

पट्टवस्त्रादि से चौबीस अङ्गुल की गोमुखी का निर्माण करे । उसका मुख आठ अङ्गुल का और ग्रीवा सोलह अङ्गुल का निर्माण करे ॥ १३५ ॥

**ज्ञेयं गोमुखयन्त्रं च सर्वतन्त्रेषु गोपितम् ।**
**तन्मुखे स्थापयेन्मालां ग्रीवामध्यगतः करः ।**
**प्रजपेद् विधिना गुह्यं वर्णमालाधिकं प्रिये ॥१३६॥ इति ।**

ऐसा गोमुख यन्त्र सभी तन्त्रों में गुप्त कहा गया है । अतः उसके मुख (अनुभाग) में माला स्थापित करे और हाथ ग्रीवा के मध्य में रखे । इस गोमुखी में विधिपूर्वक जप करे उस जप को वर्णमाला से अधिक गुप्त रखे ॥ १३६ ॥

**मुण्डमालातन्त्रे—**

**गोमुखे गोपयेन्मालां एवं सिध्यति साधकः ।**
**जपादौ पूजयेन्मालां तोयैरभ्यर्च्य यत्नतः ।**
**मालामूलेन देवेशि मूलमन्त्रेण साधकः ॥ १३७ ॥**

मुण्डमालातन्त्र में भी बतलाया गया है—साधक को सिद्धि तभी प्राप्त होती है जब वह माला को गोमुखी में गुप्त रखे । जब जप करना हो तो हे देवेशि! जल से यत्नपूर्वक माला की मूल मन्त्र से अर्चना करे ॥ १३७ ॥

**मालामन्त्राः**

**मालामन्त्राः यामलेषूक्ताः—**

**मालामन्त्रान् प्रवक्ष्येऽहं शृणुष्वावहितं प्रिये ।**
**तारं तारात्रयं तारं वधूं तुलसि वैष्णवि ॥ १३८ ॥**
**वौषड् वनं महामन्त्रस्तुलसीशोधने मतः ।**
**तारमब्धिरमामायासिन्धुं रुद्राक्षमालिनि ॥ १३९ ॥**
**शुद्धाभव वनं मन्त्रो देवि रुद्राक्षशोधनः ।**

**तारमादौ समुच्चार्य सूर्याख्यं बीजमुत्तमम् ॥ १४० ॥**
**अर्कमाले हरं नीरं मन्त्रः स्फाटिकशुद्धिकृत् ।**
**तारं च वायुपूज्यां च तारं पद्माक्षमालिनि ॥ १४१ ॥**
**हरितं ठद्वयं मन्त्रो देवि पद्माक्षशोधनः ।**
**वेदाद्यं कमलां कुन्तीं वाग्बीजं कामशक्तिकम्॥ १४२ ॥**
**सुवर्णमाले शक्त्याख्यो मन्त्रोऽयं स्वर्णशोधनः।**
**तारं लज्जायुगं तारं मुक्तामालिनि मायुगम् ।**
**ठद्वयं मन्त्रराजोऽयं मुक्तामालाविशोधनः ॥ १४३ ॥**

माला मन्त्र यामल ग्रन्थों में इस प्रकार कहा गया है—हे प्रिये! अब मैं माला मन्त्रों को कहता हूँ सावधान होकर सुनिए । तार (ॐ) फिर तीन बार तारा (ह्रीं) फिर तार (ॐ) फिर वधू तदनन्तर 'तुलसि वैष्णवि वौषट् वनम्'—यह तुलसी माला के संशोधन का महामन्त्र है । फिर 'तारमब्धि....शुद्धा भव वनम्' पर्यन्त मन्त्र रुद्राक्ष माला के संशोधन का है । इसी प्रकार तार का उच्चारण कर सूर्य का बीज, तदनन्तर 'अर्कमाले हरं नीरम्' यह स्फटिक माला की शुद्धि का मन्त्र है । तार (ॐ) वायुपूज्या, फिर तार (ॐ) 'पद्माक्षमालिनि हरितं स्वाहा' यह मन्त्र पद्माक्ष माला के संशोधन का है । पहले वेदादि (ॐ) कमला कुन्ती वाग्बीज (ऐं) कामशक्ति (क्लीं) 'सुवर्णमाले शक्तिः' यह मन्त्र स्वर्णमाला शोधन का है । तार (ॐ), लज्जायुग (ह्रीं ह्रीं), तार (ॐ), मुक्तामालिनि, फिर मा युग (ह्रीं ह्रीं) फिर स्वाहा, यह मन्त्र मुक्ता की माला के विशोधन का है ॥ १३८-१४३ ॥

**तारं रमा रमा तारं शङ्खिनीति पदं वदेत् ।**
**तारं रमा तारमन्ते मन्त्रोऽयं शङ्खमालिकः ॥ १४४ ॥**

तार (ॐ), रमा (श्रीं), रमा (श्रीं), तार (ॐ), तदनन्तर शङ्खिनी, फिर तार (ॐ), फिर रमा (श्रीं), अन्त में फिर तार (ॐ), यह मन्त्र शङ्ख माला के संशोधन का है ॥ १४४ ॥

### प्रतिष्ठितमालाजपविधिकथनम्

**सम्पूज्य च ततो मालां गृहीत्वा दक्षिणे करे ।**
**हृत्समीपे समानीय न तु वामेन संस्पृशेत् ॥ १४५ ॥**

इस प्रकार माला का पूजन कर उसे दक्षिण हाथ में ग्रहण करे । फिर उसे उसी हाथ से हृदय के समीप ले आवे । बायें हाथ से स्पर्श न करे ॥ १४५ ॥

**मध्यमाया मध्यभागे स्थापयित्वा समाहितः ।**
**अङ्गुष्ठमध्यभागेन चालयेच्च मणीन् क्रमात् ।**

अक्षाणां चालनेऽङ्गुष्ठे नान्यमक्षं तु संस्पृशेत् ॥ १४६ ॥

सावधानी से उस माला को मध्यमा अङ्गुली के मध्य भाग में स्थापित कर अङ्गुष्ठ के मध्य भाग से मणियों को चलावे । अङ्गुष्ठ पर मनियों को चलाते समय अन्य मनियों का स्पर्श न करे ॥ १४६ ॥

जपकाले सदा विद्वान् मेरुं नैव विलङ्घयेत् ।
परिवर्तनकाले च सङ्घट्टं नैव कारयेत् ॥ १४७ ॥

विद्वान् साधक जप करते समय मेरु का उल्लङ्घन कदापि न करे । जब उसे बदलना हो तो मेरु को किसी अन्य मनियों से सङ्घट्ट (रगड़) न करावे ॥ १४७ ॥

एवं सर्वं परिज्ञाय मालायां जपमाचरेत् ।
अङ्गुष्ठाग्रेण यज्जप्तं निष्फलं तद्धि पार्वति ॥ १४८ ॥

इन सभी बातों का विचार करते हुये माला पर जप करे । हे पार्वति! अङ्गुष्ठ के अग्रभाग से जो जप किया जाता है वह निष्फल हो जाता है ॥ १४८ ॥

अशुचिर्न स्पृशेन्मालां करभ्रष्टां न कारयेत् ।
तर्जन्या न स्पृशेदेनां गुरोरपि न दर्शयेत् ॥ १४९ ॥

अपवित्र होने की स्थिति में माला का स्पर्श न करे । उसे हाथ से न गिरावे । तर्जनी से स्पर्श न करे । गुरो को भी माला न दिखावे ॥ १४९ ॥

भुक्तौ मुक्तौ तथा पुष्टौ मध्यमायां सदा जपेत् ।
अङ्गुष्ठानामिकाभ्यां तु यजेदुत्तमकर्मणि ॥ १५० ॥

भुक्ति मुक्ति तथा पुष्टि के लिये सर्वदा मध्यमा अङ्गुली पर ही जप करे । श्रेष्ठ कर्म में अनामिका एवं अङ्गुष्ठ अङ्गुलियों को मिलाकर जप करे ॥ १५० ॥

अङ्गुष्ठमध्यमाभ्यां तु जपेदाकृष्टकर्मणि ।
तर्जन्यङ्गुष्ठयोगेन विद्वेषोच्चाटने मतः ॥ १५१ ॥

आकर्षणकर्म में अँगूठा और मध्यमा अङ्गुलियों को मिलाकर जप करे । विद्वेष एवं उच्चाटन कर्म में तर्जनी अँगूठा मिलाकर जप करे ॥ १५१ ॥

अङ्गुष्ठमध्यमायोगान्मन्त्रसिद्धिः सुनिश्चितम् ।
ज्येष्ठाकनिष्ठायोगेन शत्रूणां नाशनं मतम् ॥ १५२ ॥

अङ्गुष्ठ मध्यमा के योग से किये गये जप द्वारा सिद्धि निश्चित है । ज्येष्ठा और कनिष्ठा के योग से जप द्वारा शत्रु का नाश निश्चित है ॥ १५२ ॥

एकैकं च मणिं देवि चालयन् प्रजपेदथ ।

**जपन् देवमनुध्यायन् भावयेदखिलान्मणीन्॥ १५३ ॥**

हे देवि! साधक क्रमशः एक-एक मनियों का सञ्चालन करते हुये जप करे। जप के समय देवता का ध्यान करते हुये भक्त साधक समस्त मनियों पर ध्यान रखे ॥ १५३ ॥

**प्रदक्षिणं पुनः कृत्त्वा प्राग्वदेवं समाचरेत्।**
**कासे क्षुते च जृम्भायामेकमावर्त्तकं त्यजेत् ॥ १५४ ॥**

एक माला समाप्त होने पर पुनः प्रदक्षिण कर प्राग्वत् उसी प्रकार से जप करे। खाँसी आने पर, छींक में अथवा जँभाई में उस एक आवर्त्तक का त्याग कर देना चाहिए ॥ १५४ ॥

**प्रमादात् तर्जनीस्पर्शो भवेदावर्त्तकं त्यजेत्।**
**अदीक्षितानां स्पर्शे च पुनः शोधनमाचरेत्॥ १५५ ॥**

यदि प्रमादवश तर्जनी का स्पर्श हो गया हो तो उस आवर्त्तक को त्याग देवे। यदि अदीक्षित से स्पर्श हो गया हो तब माला का पुनः शोधन करे ॥ १५५ ॥

**न धारयेन् मूर्ध्नि कण्ठे कर्णे च जपमालिकाम्।**
**ऊरुपादाधरस्पृष्टा वामहस्तप्रचालिता ॥ १५६ ॥**
**अगुप्ता च तथा भूस्था पुनः संस्कारमर्हति।**
**जीर्णे सूत्रे पुनश्छिन्ने ग्रन्थयित्वा शतं जपेत्॥ १५७ ॥**

जप माला को शिर पर, कण्ठ में तथा कान में कदापि धारण न करे। माला के ऊरुपाद तथा अधर से स्पर्श हो जाने पर, अथवा बायें हाथ से सञ्चालन करने पर, अथवा पृथ्वी पर रखने से, अथवा सबको दिखा देने से माला पुनः संस्कार करने पर ही शुद्ध होती है। माला गूँथे हुये सूत्र के पुराने या जीर्ण हो जाने के कारण टूट जाने पर पुनः माला का ग्रथन कराना चाहिए। ग्रथन के पश्चात् एक सौ बार जप करे ॥ १५६-१५७ ॥

**प्रतिष्ठितायां तस्यां तु मन्त्रं जप्यादनन्यधीः।**
**एवं प्रतिष्ठितायां तु अन्यं नैव जपेन्मनुम्॥ १५८ ॥**

माला की प्रतिष्ठा कर लेने के पश्चात् अनन्य-धी होकर मन्त्र का जप करे। इस प्रकार की प्रतिष्ठित माला पर साधक अन्य मन्त्र का जप न करे ॥ १५८ ॥

**येन प्रतिष्ठिता माला तमेव तु मनुं जपेत्।**
**अन्यमन्त्रजपाविद्धा न कार्या कर्हिचिद् बुधैः॥ १५९ ॥**

जिस मन्त्र से माला की प्रतिष्ठा की गई है उसी मन्त्र का जप करे। अन्य

मन्त्र के जप से माला विद्धा हो जाती है । अतः बुद्धिमान् किसी भी अवस्था में अन्य मन्त्र का जप न करे ॥ १५९ ॥

**जपमाला मया देवि! कथिता देवदुर्लभा ।**
**सदा गोप्या प्रयत्नेन यथा त्वं मम वल्लभा ॥ १६० ॥**

हे देवि! इस प्रकार हमने जपमाला के विषय में कहा जो देवताओं के लिये भी दुर्लभ है । ऐसी माला सदा गोपनीय रखे जैसे मेरी वल्लभा तुमको मैं गुप्त रखता हूँ ॥ १६० ॥

**एवं कर्तुमशक्तश्चेदित्थं कुर्यादतन्द्रितः ।**
**भूतशुद्ध्यादिपूजान्तं समाप्य तत्र पूजयेत् ॥ १६१ ॥**
**गणेशसूर्यविष्ण्वीशान् दुर्गामावाह्य मन्त्रवित् ।**
**पञ्चगव्ये ततः क्षिप्त्वा मूलमन्त्रेण मन्त्रवित् ॥ १६२ ॥**

**मन्त्रेण-मालामूलमन्त्रेण ।**

**तस्मादुत्तोल्य तां मालां स्वर्णपात्रे निधाय च ।**
**पयो दधि घृतं क्षौद्रं शर्कराद्यैरनुक्रमात् ॥ १६३ ॥**
**तोयधूपान्तरैः कृत्वा पञ्चामृतविधिं बुधः ।**
**क्रमात् तत्रैव संस्थाप्य स्थापयेत् शीतले जले ॥ १६४ ॥**
**ततः चन्दनसौगन्धकस्तूरीकुंकुमादिभिः ।**
**तामालिप्य प्रेतमन्त्रमष्टोत्तरशतं जपेत् ॥ १६५ ॥**

**प्रेतमन्त्रं हकारदन्त्यसकारचतुर्दशस्वरविसर्गयोगेन ह्सौरिति ।**

**तस्यां नवग्रहाँश्चैव दिक्पालाँश्च प्रपूजयेत् ।**
**ततः सम्पूज्य च गुरुं गृह्णीयान्मालिकां शुभाम् ॥ १६६ ॥**

यदि साधक ऐसा करने में असमर्थ हो तब सावधान होकर ऐसा करे । आदि में भूतशुद्धि से लेकर पूजान्त कर्म समाप्त कर गणेश, सूर्य, विष्णु, शिव तथा दुर्गा का आवाहन कर पूजा करे । फिर माला के मूल मन्त्र से माला को पञ्चगव्य में डाल देवे । उस पञ्चगव्य से माला को निकाल कर स्वर्णपात्र में स्थापित करे । फिर दूध, दही, घृत, मुनक्का एवं शर्करादि का पञ्चामृत बनावे । उसमें माला को स्थापित कर शीतल जल में स्थापित करे । फिर धूपादि प्रदान करे । फिर चन्दन सुगन्ध कस्तूरी तथा कुङ्कुमादि का माला में अनुलेप करे । तदनन्तर प्रतमन्त्र (ह्सौः) का एक-सौ आठ बार जप करे । फिर उसी माला में नवग्रह एवं दिक्पालों का पूजन करे । तदनन्तर गुरु का पूजन कर उस कल्याणकारिणी माला को ग्रहण करे ॥ १६१-१६६ ॥

यन्त्रसंस्कारकथनम्

**एवं मालां च संस्कृत्य यन्त्रसंस्कारमाचरेत् ।**
**विना यन्त्रेण पूजायां देवता न प्रसीदति ॥ १६७ ॥**
**सर्वेषामपि देवानां यन्त्रे पूजा प्रशस्यते ।**
**देहात्मनोर्यथाऽभेदो यन्त्रदेवतयोस्तथा ॥ १६८ ॥**

इस प्रकार माला का संस्कार कर यन्त्र संस्कार करे । पूजा कर्म में यन्त्र के बिना देवता प्रसन्न नहीं होते । क्योंकि सभी देवताओं के पूजन में यन्त्र पूजा सर्वश्रेष्ठ कही गई है । जिस प्रकार देह और आत्मा में अभेद है उसी प्रकार यन्त्र और देवता में भी अभेद सम्बन्ध है ॥ १६७-१६८ ॥

**तथा यन्त्रं मन्त्रमयं मन्त्रात्मा देवतेति च ।**
**कामक्रोधादिदोषोत्त्थसर्वदुःखनियन्त्रणात् ।**
**यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति पूजितः ॥ १६९ ॥**

जिस प्रकार यन्त्र मन्त्रमय है उसी प्रकार देवता भी मन्त्रात्मक हैं । काम एवं क्रोधादि दोषों से उत्पन्न दुःख का नियन्त्रण करने से यन्त्र को यन्त्र कहा जाता है । उस यन्त्र पर पूजा करने से देवता प्रसन्न होते हैं ॥ १६९ ॥

**संहितायामपि—**

**यन्त्रं मन्त्रमयं प्राहुर्देवता मन्त्ररूपिणी ।**
**यन्त्रेणापूजितो देवः सहसा न प्रसीदति ॥ १७० ॥**
**सर्वेषामपि देवानां यन्त्रे पूजा प्रशस्यते ।**
**सौवर्णे राजते ताम्रे स्फाटिके वैद्रुमे तथा ॥ १७१ ॥ इति ।**

संहिता में भी बतलाया गया है—यन्त्र मन्त्रमय कहा गया है और देवता भी मन्त्र स्वरूप ही हैं । अतः बिना यन्त्र की पूजा किये देवता प्रसन्न नहीं होते । सभी देवताओं की यन्त्र में पूजा सर्वप्रधान कर्त्तव्य हैं । वह यन्त्र सुवर्ण का निर्मित हो या चाँदी का या ताम्र का या स्फटिक का या मूँगे का इनमें से किसी से भी निर्मित होना चाहिये ॥ १७०-१७१ ॥

**तन्त्रराजे—**

**रत्ने हेमनि रौप्ये वा ताम्रे दृषदि च क्रमात् ।**
**कृत्वा चक्रस्य निर्माणं स्थापयेत् पूजयेदपि ॥ १७२ ॥**

**दृषदि गण्डकीशिलायाम् ।**

तन्त्रराजतन्त्र में भी बतलाया गया है—रत्न में, सुवर्ण में, चाँदी में, ताँबे में

अथवा शालग्राम में, इनमें किसी एक में चक्र का निर्माण कर स्थापना करे और पूजा भी करे ॥ १७२ ॥

दृषद् का अर्थ गण्डकी नदी में प्राप्त शिला है ।

**तथा च यामले—**

**गण्डकीभवपाषाणे स्वर्णे रजतताम्रयोः ।**
**विद्रुमे रचिते यन्त्रे पद्मरागेऽथवा प्रिये ।**
**इन्द्रनीलेऽथ वैदूर्ये महामारकतेऽपि वा ॥ १७३ ॥**

यामल में भी बतलाया गया है—गण्डकी में उत्पन्न पाषाण (शालग्राम) में, स्वर्ण में, रजत और ताँबे में तथा विद्रुम (मूँगे) में, पद्मराग मणि में, इन्द्रनील वैदूर्य तथा मारकत में; हे प्रिये! यन्त्र की रचना करे ॥ १७३ ॥

**अथ धातुविशेषे कालसंख्या लक्षसागरे—**

**यावज्जीवं सुवर्णे स्यात् रूपे द्वाविंशतिः प्रिये ।**
**ताम्रे द्वादशकं वर्षं स्फाटिकादौ तु सर्वदा ॥१७४॥ इति ।**

धातु के विषय में देवता के वास का काल लक्षसागर तन्त्र में इस प्रकार कहा गया है—सुवर्ण रचित यन्त्र में यावज्जीव, चाँदी के यन्त्र में २२ वर्ष, ताम्र में द्वादश वर्ष और स्फटिक में सर्वदा यन्त्र देवता का वास रहता है ॥ १७४ ॥

**अन्यच्च—**

**सौवर्णं राजतं ताम्रं श्रेष्ठं मध्यं तथोत्तमम् ।**
**ताम्रे लक्षगुणं प्रोक्तं रौप्ये कोटिगुणं भवेत् ।**
**सौवर्णेऽनन्तफलदं स्फाटिके च तथा समम् ॥ १७५ ॥**

सौवर्ण यन्त्र श्रेष्ठ है, चाँदी का यन्त्र मध्यम है तथा ताँबे का यन्त्र उत्तम है । ताँबे का यन्त्र लक्षगुणित है, चाँदी का यन्त्र कोटिगुणित हैं और सौवर्ण यन्त्र अनन्त फलप्रद है । स्फटिक यन्त्र भी उसी के समान फलप्रद है ॥ १७५ ॥

**फलं च लक्षसागरे—**

**भूमौ सिन्दूररजसा रचितं सर्वकामदम् ।**
**सुवर्णरचितं यन्त्रं सर्वराजवशङ्करम् ॥ १७६ ॥**
**राजतेन कृतं यन्त्रमायुरारोग्यकामदम् ।**
**ताम्रे तु रचितं यन्त्रं सर्वैश्वर्यप्रदं मतम् ॥ १७७ ॥**
**यन्त्रं हि स्फाटिकं देवि मनोऽभिलषितप्रदम् ।**
**माणिक्यरचितं यन्त्रं राज्यदं भुक्तिदं मतम् ॥ १७८ ॥**

**गोमेदरचितं यन्त्रं सर्वैश्वर्यप्रदं मतम् ।**
**क्लृप्तं मरकते यन्त्रं सर्वशत्रुविनाशनम् ।**
**लोहत्रयोद्भवं यन्त्रं सर्वसिद्धिकरं परम् ॥ १७९ ॥**

यन्त्रों का फल लक्षसागर तन्त्र में भी बतलाया गया है—पृथ्वी पर सिन्दूर के रज से बनाया गया यन्त्र सर्व कामप्रद होता है । सुवर्ण पर बनाया गया यन्त्र सभी राजाओं को वश में करने वाला होता है । चाँदी पर बनाया गया यन्त्र आयु एवं आरोग्य प्रदान करता है । ताँबे पर बनाया गया यन्त्र सभी प्रकार का ऐश्वर्य प्रदान करता है । हे देवि! स्फटिक पर बनाया गया यन्त्र मनोऽभिलषित प्रद होता है । मणि पर बनाया गया यन्त्र राज्य तथा भोग प्रदान करता है । गोमेद का यन्त्र सभी प्रकार का ऐश्वर्य प्रदान करता है । मरकत पर बना हुआ यन्त्र सभी शत्रुओं का विनाश करता है तीनों लोहा (सोना, चाँदी तथा ताँबा) पर बनाया गया यन्त्र समस्त सिद्धि प्रदान करता है ॥ १७६-१७९ ॥

**लोहत्रयस्य लक्षणं तत्रैव—**

**भागा दश सुवर्णस्य रजतस्य च षोडश।**
**ताम्रस्य रविभागेन पीठं कुर्यान्मनोहरम् ॥ १८० ॥**
**चक्रेऽस्मिन् पूजयेद् यो हि स सौभाग्यमवाप्नुयात् ।**
**अणिमाद्यष्टसिद्धीनामधिपो जायतेऽचिरात् ॥ १८१ ॥**

लोहत्रय का लक्षण भी वहीं किया गया है—सुवर्ण का दश भाग, चाँदी का षोडशभाग तथा ताँबे का बारह भाग मिलाकर अत्यन्त मनोहर पीठ निर्माण करे । जो इस प्रकार के चक्र पीठ में पूजा करता है वह सौभाग्यशाली हो जाता है वह बहुत शीघ्र ही अणिमादि अष्टसिद्धियों का अधिपति हो जाता है ॥१८०-१८१॥

**निषिद्धधातवस्तत्रैव—**

**वङ्गेऽथ शीशके लोहे न कर्त्तव्यं कदाचन ।**
**फलकायां पटे भित्तौ स्थापयेन्न कदाचन ॥ १८२ ॥**
**कुलं वित्तमपत्यं च निर्मूलयति सर्वथा ।**

यन्त्र में निषिद्ध धातु—वङ्ग (राँगा), शीशा एवं लोहे (टीन) पर कदापि यन्त्र निर्माण न करे । इसी प्रकार फलक (लकड़ी), पट (वस्त्र) तथा भित्ति (दीवाल) पर यन्त्र स्थापित न करे । फलक पर यन्त्र स्थापित करने से कुल का निर्मूलन, पट पर स्थापित करने से वित्त का तथा भित्ति पर स्थापित करने से अपत्य का निर्मूलन होता है ॥ १८२-१८३ ॥

**अथ प्रस्तारभेदेन त्रैविध्यं चक्रस्य तत्रैव—**

**त्रैविध्यं शृणु चक्रस्य भूप्रस्तारोर्ध्वमेरुकम् ॥ १८३ ॥**

पातालवासिनां देवि प्रस्तारो निम्नरेखकः ।
ऊर्ध्वरेखं महेशानि मर्त्यलोकनिवासिनाम् ॥ १८४ ॥
स्वर्गलोकनिवासीनां यन्त्रारारामेरुसञ्ज्ञकः ।
भूपुरं तु समारभ्य बैन्दवान्तं महेश्वरि ॥ १८५ ॥
क्रमात् समुन्नतं सर्वं मेरुरूपं मयोदितम् ।
समोर्ध्वरेखं नवकमूर्ध्वरेखं प्रकीर्तितम् ॥ १८६ ॥

**नवकमिति केवलं श्रीचक्रे न त्वन्यत्र ।**

अब प्रस्तार भेद से चक्र के तीन भेद भी वहीं पर वर्णित हैं—हे देवि! अब आप मुझसे चक्र के भू-प्रस्तार, ऊर्ध्व-प्रस्तार तथा मेरु प्रस्तार रूप तीन भेदों को सुनिए—निम्न रेखा वाला प्रस्तार पाताल वासियों के लिये होता है । हे महेशानि! ऊर्ध्व रेखा वाला प्रस्तार मृत्युलोक में निवास करने वालों के लिये होता है । अरा वाला मेरु सञ्ज्ञक 'यन्त्र' स्वर्ग लोक वासियों का है । हे महेश्वरि! भूपुर से आरम्भ कर बिन्दुपर्यन्त जो क्रमशः समुन्नत है वह सब मेरु रूप है—ऐसा मैंने ही बतलाया है। चक्र में जो समान रूप से नव रेखायें होती हैं उनको ऊर्ध्व रेखा कहा जाता है ॥ १८३-१८६ ॥

ये समान रूप से रहने वाली नव ऊर्ध्व रेखायें श्रीचक्र में ही होती हैं । अन्यत्र नहीं ।

**एतस्मिन् विषये भूतभैरवे—**

योऽस्मिन् यन्त्रे महेशानि केशराणि प्रकल्पयेत् ।
योगिनीसहितास्तस्य हिंसां कुर्वन्ति भैरवाः ॥१८७॥ इति ।

इस विषय में भूतभैरवतन्त्र में भी बतलाया गया है—हे महेशानि! जो इस चक्र यन्त्र में केशरों का निर्माण करता है योगिनियों के साथ भैरव उसकी हिंसा कर देते हैं ॥ १८७ ॥

निम्नरेखा समायोगात् भूप्रस्तारो मयोदितः ।
एकतोलं द्वितोलं वा त्रितोलं पञ्चतोलकम् ॥ १८८ ॥
रसतोलं चतुस्तोलं सप्ततोलमथापि वा ।
पलप्रमाणं कर्त्तव्यमर्वाक्पीठं मनोहरम् ॥ १८९ ॥
अग्निरङ्गुलविस्तारं प्राक् प्रत्यग् दक्षिणोत्तरम्।
यवार्धोच्चं प्रकुर्वीत चतुरस्रं समन्ततः ॥ १९० ॥

**चत्वारिंशन्माषकाः पलम् । अङ्गुलं तिर्यक्स्थापितैरष्टभिर्यवैः । ऋजुस्थापितैः शालिभिर्वा ।**

निम्न रेखाओं के समायोग से मैंने भू-प्रस्तार कहा, जिसका तौल एक तोला, दो तोला, तीन तोला, चार तोला, पाँच तोला, छह तोला अथवा सात तोला होना चाहिये । सर्वप्रथम पल प्रमाण का सुन्दर पीठ निर्माण करना चाहिये । उसका विस्तार पूर्व, पश्चिम, दक्षिण एवं उत्तर की ओर तीन अङ्गुल तथा ऊँचाई आधा यव एवं चारों ओर से उसे चौकोर बनाना चाहिये ॥ १८८-१९० ॥

चालीस मासा का एक पल होता है । आठ जौ (=यव) तिरछे स्थापित करने पर एक अङ्गुल प्रमाण होता है अथवा सीधे-सीधे आठ शाली धान स्थापित करने से एक अङ्गुल होता है—

**एतदुक्तं कपिलपञ्चरात्रे—**

**विन्यस्तैस्तिर्यगष्टाभिर्यवैर्मानान्तराङ्गुलम् ।**
**शालिभिर्वा ऋजुन्यस्तैस्त्रिभिर्मानान्तरं भवेत् ॥१९१॥ इति ।**

यही बात कपिलपञ्चरात्र में कही गई है—आठ यव तिरछे स्थापित करने पर एक अङ्गुल मान होता है । तीन संख्या में सीधे-सीधे स्थापित शाली धान्य का मान अन्य हो जाता है ॥ १९१ ॥

**सौत्रामणीये—**

**ऋजुरेखा भवेल्लक्ष्मीर्वक्ररेखा दरिद्रकृत् ।**
**अग्निरङ्गुलविस्तारो यवार्धेनोच्छ्रितिर्भवेत् ॥ १९२ ॥**
**हेम्नश्च रजतस्याथ मानं ताम्रस्य कीर्तितम् ।**
**माणिक्यपुष्परागादौ नीलादौ च यथेच्छया ॥ १९३ ॥**

सौत्रामणीयतन्त्र में भी बतलाया गया है—चक्र यन्त्र में सीधी रेखा बनाने से लक्ष्मी तथा वक्र रेखा से दारिद्र्य प्राप्त होता है । उन रेखाओं का विस्तार तीन अङ्गुल तथा ऊँचाई आधा यव होना चाहिये । सोना, चाँदी तथा ताँबे का मान हमने पहले कह दिया है । मणि, पुखराज तथा नीलमणि द्वारा चक्र निर्माण का मान यथेच्छ है ॥ १९२-१९३ ॥

**लक्षसागरेऽपि—**

**यन्त्रराजस्वरूपं ते मया स्नेहात् प्रकाशितम् ।**
**गोपनीयं त्वया भद्रे स्वगुह्यमिव सन्ततम् ॥ १९४ ॥**

लक्षसागरतन्त्र में भी बतलाया गया है—हे देवि! मैंने तुम्हारे स्नेहवश यन्त्रराज का स्वरूप प्रकाशित किया । हे भद्रे! अपने गुप्ताङ्ग के समान आप इसे सर्वदा गुप्त रखना ॥ १९४ ॥

### यन्त्रस्थापनविधिकथनम्

अथ प्रतिष्ठाकालो ज्योतिषशास्त्रतो बोध्यः ।

स्थापनं तु प्रवक्ष्यामि सर्वकामप्रसाधनम् ।
सर्वकाले प्रकर्त्तव्यं कृष्णपक्षे विशेषतः ॥ १९५ ॥

इसके प्रतिष्ठा का काल ज्योतिषशास्त्र के अनुसार जानना चाहिये । अब सभी कामनाओं को पूर्ण करने वाले इस यन्त्रराज की स्थापन विधि कहता हूँ । इनका स्थापन सर्वकाल में किया जा सकता है किन्तु विशेष रूप से कृष्ण पक्ष ही प्रशस्त है ॥ १९५ ॥

देव्याः शिवस्य शुक्ले तु स्थिरांशे स्थिरलग्नके ।
सौम्यायने च देवानां तच्छक्तीनां च दक्षिणे ॥ १९६ ॥

देवी तथा शिव की प्रतिष्ठा शुक्ल पक्ष में, स्थिरांश में, स्थिर लग्न में करनी चाहिए । उत्तरायण में अन्य देवताओं की प्रतिष्ठा तथा उनके शक्तियों की प्रतिष्ठा दक्षिणायन में करनी चाहिये ॥ १९६ ॥

अत्र किञ्चिद् विशेषो देवीपुराणे—

मातृभैरववाराहनरसिंहत्रिविक्रमाः ।
महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने ॥ १९७ ॥

इस सम्बन्ध में कुछ विशेष देवीपुराण में भी बतलाया गया है—मात्तृकाओं, भैरवों, वाराह, नृसिंह एवं त्रिविक्रम की प्रतिष्ठा तथा महिषासुरघ्नी की प्रतिष्ठा दक्षिणायन में करे ॥ १९७ ॥

प्रतिष्ठा तन्त्रराजे—

क्षौद्राज्यदुग्धैः प्रथमं नारिकेलाम्भसा ततः ।
अभिषिच्याथ तोयेन क्वथितेनाक्षरौषधैः ॥ १९८ ॥
आवाह्याभ्यर्च्य सल्लग्ने चक्रे संस्थाप्य पूजयेत् ।
नित्यातत्त्वाप्तिकालोत्थविद्ययाऽभ्यर्च्य तत् क्रमात् ॥ १९९ ॥
स्पृशन् जपेत् कराग्रेण श्रीचक्रं पूजयेदपि ।
एवं दिनत्रयं कृत्त्वा ततो नित्यक्रमं भजेत् ॥ २०० ॥
गन्धैः पुष्पैर्धूपदीपैर्नैवेद्यैस्तर्पणैस्तथा ।
त्रिरात्रं पूजयेद् देवीं योगिनीयोगिभिः समम् ।
एवं देवि! प्रतिष्ठायाः क्रमः सान्निध्यकारकः ॥ २०१ ॥

देवीमित्युपलक्षणम् । अक्षरौषधैरिति पञ्चाशद्वर्णौषधैः ।

प्रतिष्ठा विधि तन्त्रराजतन्त्र में भी बतलाई गई है—मुनक्का, घी एवं दूध से

प्रथम मूर्त्ति को स्नान करावे। फिर नारियल के जल से स्नान करावे। तदनन्तर औषधियों के क्वाथ से स्नान करावे। फिर उत्तम लग्न में चक्र स्थापित कर नित्या तत्त्व की प्राप्ति काल में विद्या का आवाहन एवं पूजन करे। हाथ से चक्र का स्पर्श करते हुये कराग्र से चक्र की भी पूजा करे। इस प्रकार तीन दिन तक पूजन कर पश्चात् नित्य क्रम के अनुसार गन्ध, पुष्प, धूप, दीप, नैवेद्य एवं तर्पण द्वारा योगिनी और योगियों के साथ तीन रात तक देवी की पूजा करे। हे देवि! इस प्रकार प्रतिष्ठा का क्रम देवता के सान्निध्य का कारक होता है ॥१९८-२०१॥

यहाँ देवी शब्द उपलक्षण है। जिस देवता की प्रतिष्ठा करनी हो उसकी पूजा करे। १९८ श्लोक में अक्षरौषधि का तात्पर्य ५० वर्णोषधि से है।

**ता यथा कादिमते—**

**चन्दनागरुकर्पूरोशीररोगजलघु(?)कणः ।**
**कक्कोलजातीमांसीमुरचोरग्रन्थिरोचनापत्राः ॥ २०२ ॥**
**पिप्पलबिल्वगुहारुणतृणवल्कलवङ्गार्ककुम्भवन्दिन्यः ।**
**सौदुम्बरिकास्मरिकास्थिराब्जदरपुष्पिकामयूरशिखाः॥२०३॥**
**प्लक्षाग्निमन्थसिंही कुशाह्वदर्भाश्च कृष्णदरपुष्पी ।**
**रोहिणटुण्टुकबृहतीपाटलिचित्रातुलस्यपामार्गाः ॥ २०४ ॥**
**शतमखलताद्विरेफाविष्णुक्रान्तामुशल्यथाञ्जलिनी ।**
**दूर्वाश्रीदेविसहे तथैव लक्ष्मी सदा भद्रे ॥ २०५ ॥**
**आदीनामिति कथिता वर्णानां क्रमादथौषधयः ।**

**केचितु अक्षरौषधैरिति स्थाने सर्वौषधिजलैरिति पठन्ति ।**

वे औषधियाँ कादिमत तन्त्र में इस प्रकार कही गई है—चन्दन, अगुरू, कर्पूर, उशीर, रोगज, लघुकण, कक्कोल, जाती, जटामाँसी, मुरा, चोर, ग्रन्थि, रोचना, पत्रा, पिप्पल, बिल्व, गुहा, अरुणतृण, वल्कल, वङ्ग, अर्क, कुम्भवन्दिनी सौदुम्बरिका स्मरिका, स्थिरा, अब्ज, दरपुष्पिका, मयूरशिखा, प्लक्षा, अग्निमन्था, सिंही, कुशा दर्भा, कृष्णदरपुष्पी, रोहिण, टुण्टुक-बृहती, पाटलि, चित्रा, तुलसी, अपामार्ग, शतमख लता, द्विरेफ, विष्णुक्रान्ता, मुशली, अञ्जलिनी, दूर्वा, श्रीदेवी, सहदेवी, लक्ष्मी भद्रा आदि—इस प्रकार वर्णों के क्रम से पचास औषधियाँ कही गई हैं ॥ २०२-२०६ ॥

कोई-कोई अक्षरौषधि के स्थान में 'सर्वौषधि जलैः' यह पाठ मानते हैं।

**तन्मते सर्वौषधयस्तु—**

**लाजा कुष्टं वला चैव प्रियङ्गुघनसर्षपाः ॥ २०६ ॥**
**हरिद्रादेवदारुश्च पुङ्खा लोध्रं तथा जलम् ।**

**सर्वविघ्नहरं चैव सर्वौषधमितीरितम् ॥ २०७ ॥**

**वर्णौषधयस्तु श्रीविद्यायामेव । अन्यत्र सर्वौषधयः ।**

उनके मत में सर्वौषधियाँ इस प्रकार हैं—लाजा, कुष्ट, प्रियङ्गु, घनसर्षप, हरिद्रा, देवदारु, पुङ्खा, लोध्र तथा जल इतनी सर्वौषधियाँ कही जाती हैं जो समस्त विघ्नो का नाश करने वाली हैं ॥ २०६-२०७ ॥

वर्णौषधि का प्रयोग में श्रीविद्या में होता है किन्तु अन्यत्र सर्वौषधियों का प्रयोग होता है ।

**अथ क्रमः सम्मोहनतन्त्रे—**

**यथा मन्त्रस्य संस्कारस्तथा यन्त्रस्य कल्पयेत् ।**
**असंस्कृतौ मन्त्रयन्त्रौ रोगशोकभयप्रदौ ॥ २०८ ॥**

इसका क्रम सम्मोहनतन्त्र में भी बतलाया गया है—साधक जिस प्रकार मन्त्र का संस्कार किया जाता है उसी प्रकार यन्त्र का भी संस्कार करे । संस्काररहित मन्त्र एवं यन्त्र रोग और भय प्रदान करते हैं ॥ २०८ ॥

**कथितो मन्त्रसंस्कारो दशधा सर्वतन्त्रके ।**
**यन्त्रसंस्कारमधुना शृणु देवि समाहिता ॥ २०९ ॥**

हमने मन्त्र का संस्कार दश प्रकार का पहले ही कह दिया है जो सभी तन्त्रों के अनुसार है, अब हे देवि! समाहित चित्त से यन्त्र का संस्कार सुनिए ॥ २०९॥

**यन्त्रसंस्कारकथनम्**

**चक्रराजं विनिर्माय तत्तत्संस्कारमाचरेत् ।**
**प्रतिष्ठा विधिना देवि! तां शृणु त्वं समाहिता ॥ २१० ॥**

चक्रराज का निर्माण कर उसका तत्तत् संस्कार करे । हे देवि! सर्वप्रथम उसकी प्रतिष्ठा जिस प्रकार की जाती है उसे सावधान होकर सुनिए ॥ २१० ॥

**गुरोराज्ञां समादाय नित्यकृत्यं समाप्य च ।**
**प्रणवं तत्सदद्येति मासपक्षतिथीरपि ॥ २११ ॥**
**अमुकोऽमुकगोत्रोऽहं पूजार्थं प्रीतये तथा ।**
**चक्रेऽस्मिन्नमुकीदेव्याः प्राणजीवेन्द्रियाणि च ॥ २१२ ॥**
**प्रतिष्ठाकर्मशब्दान्ते करिष्ये प्रागुदङ्मुखः ।**
**ततो गुरुं च वृणुयात् वस्त्रालङ्कारचन्दनैः ॥ २१३ ॥**

प्रथम गुरु की आज्ञा लेकर नित्य कृत्य समाप्त कर पहले प्रणव उसके बाद वर्त्तमान मास पक्ष तिथि का उच्चारण करे फिर अपने गोत्र का नाम लेकर अपना

नाम लेवे । फिर 'पूजार्थं प्रीतये चक्रे अस्मिन् अमुकी देव्या: प्राणजीवेन्द्रियाणि प्रतिष्ठाकर्म करिष्ये'—इस प्रकार का सङ्कल्प साधक को पूर्वाभिमुख अथवा उत्तराभिमुख होकर करना चाहिए । फिर वस्त्र, अलङ्कार एवं चन्दन द्वारा आचार्य का वरण करे ॥ २११-२१३ ॥

**भूतशुद्ध्यादिन्यासान्तं मन्त्रन्यासं समाप्य च ।**
**पञ्चगव्ये निजैर्मन्त्रैः शिवमन्त्रेण मन्त्रितम् ॥ २१४ ॥**
**तस्मिन् चक्रं क्षिपेन्मन्त्री प्रणवेन विलोडयेत् ।**
**ततश्चक्रं समुद्धृत्य स्थापयेत् तच्च भाजने ॥ २१५ ॥**
**शङ्खतोयेन देवेशि! तथा पुण्योदकेन च ।**
**वारिणा चन्दनेनाऽपि स्नापयेत् परमेश्वरि ॥ २१६ ॥**

तदनन्तर भूतशुद्धि कर न्यासान्त तक मन्त्रन्यास समाप्त करने के पश्चात् अपने मन्त्र से अथवा शिव मन्त्र से अभिमन्त्रित चक्र को पञ्चगव्य में डाल देवे । तदनन्तर प्रणव मन्त्र से उसका विलोडन करे । फिर उस चक्र को वहाँ से निकाल कर किसी पात्र में स्थापित करे । तदनन्तर हे परमेशानि! हे देवेशि! शङ्ख के जल से अथवा किसी तीर्थ के जल से अथवा चन्दन के जल से साधक उसे स्नान करावे ॥ २१४-२१६ ॥

**नारिकेलोदकैश्चैव सर्वौषधिजलैरपि ।**
**पञ्चामृतैः पञ्चगव्यैः स्नापयेत् परमेश्वरि ॥ २१७ ॥**

तदनन्तर नारिकेल के जल से, फिर सर्वौषधिजल से, फिर पञ्चामृत से, फिर पञ्चगव्य से, हे परमेश्वरि! स्नान करावे ॥ २१७ ॥

**नातितप्तं नातिशीतं कवोष्णं स्नपने मतम् ।**
**अत्युष्णं वज्रतुल्यं स्यादनुष्णं जाड्यकृद् भवेत्॥ २१८ ॥**

स्नपन में अत्यन्त तप्त अथवा अतिशीत जल निषिद्ध है । अत: किञ्चित् उष्ण जल से स्नान करावे । अत्यन्त उष्ण जल वज्र तुल्य है और अत्यन्त शीत जाड्यकारी होता है ॥ २१८ ॥

**घृतं क्षीरं तथा नीरं शर्करामधुसंयुतम् ।**
**पञ्चामृतमिदं ख्यातं प्रत्येकं तु पलं पलम् ॥ २१९ ॥**
**एवं स्नाप्य ततो मन्त्री स्थापयेत् स्वर्णपीठके ।**
**तत्रैव पीठं सम्पूज्य चार्घ्यपात्रादिकं चरेत् ॥ २२० ॥**

घी दूध जल शर्करा और मधु एक में मिला देने से पञ्चामृत हो जाता है । प्रत्येक का परिमाण एक-एक पल कहा गया है । इस प्रकार पञ्चगव्य से स्नान

कराने के पश्चात् मन्त्रज्ञ साधक उस यन्त्र को स्वर्ण पीठ पर स्थापित करे। फिर उसी स्थान पर पीठ की पूजा कर अर्घपात्रादि देवे ॥ २१९-२२० ॥

### यन्त्रपूजाविधिकथनम्

**स्पृष्ट्वा यन्त्रं कुशाग्रेण गायत्र्या चाभिमन्त्रयेत्।**
**अष्टोत्तरशतं देवि देवताभावसिद्धये ॥ २२१ ॥**

तदनन्तर कुशाग्र से यन्त्र का स्पर्श कर गायत्री मन्त्र से उसे अभिमन्त्रित करे। हे देवि! यन्त्र में देवता भाव प्रदान के लिये एक-सौ आठ की संख्या में उक्त गायत्री जप करे ॥ २२१ ॥

**प्रणवं यन्त्रराजाय विद्महे तदनन्तरम्।**
**महायन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयात् ॥ २२२ ॥**

प्रथम प्रणव (ॐ) फिर 'यन्त्रराजाय' फिर विद्महे फिर 'महायन्त्राय धीमहि' फिर 'तन्नो यन्त्रः प्रचोदयात्' यह यन्त्र गायत्री है ॥ २२२ ॥

**आवाह्य पञ्चमुद्राभिः प्राणस्थापनमाचरेत्।**
**वं बीजेनाऽमृतीकृत्य ततश्च धेनुमुद्रया ॥ २२३ ॥**

फिर पञ्चमुद्रा प्रदर्शित करते हुये प्राणप्रतिष्ठा करे। फिर धेनुमुद्रा प्रदर्शित करते हुये 'वं' बीज से यन्त्र का अमृतीकरण करे ॥ २२३ ॥

**प्राणानथो प्रतिष्ठाप्य प्राणमन्त्रेण देशिकः।**
**स्वकल्पोक्तविधानेन पूजां कुर्यात् समाहितः ॥ २२४ ॥**

तदनन्तर आचार्य प्राणमन्त्र से यन्त्र में प्राणप्रतिष्ठा कर समाहित चित्त हो अपने कल्प के अनुसार पूजा करे ॥ २२४ ॥

**उपचारैः षोडशभिर्देवीं च पूजयेत् क्रमात्।**
**देव्यङ्गे तत्परीवारान् पूजयेत् परमेश्वरि ॥ २२५ ॥**
**ततो जपेत् सहस्रं तु शतमष्टोत्तरं प्रिये।**
**बलिदानं ततो दत्त्वा प्रणमेत् चक्रराजकम् ॥ २२६ ॥**
**अष्टोत्तरशतं होमं कुर्याच्च साधकोत्तमः।**
**मूलमन्त्रेण देवेशि जुहुयाच्चक्रसिद्धये ॥ २२७ ॥**

षोडशोपचार से एक-एक क्रम से यन्त्र में देवी का पूजन करे। हे परमेश्वरि! इसके बाद देवी के अङ्ग में उनके परिवारों का पूजन करे। इसके बाद हे प्रिये! एक सहस्र अथवा एक-सौ आठ बार जप करे। तदनन्तर बलिदान देकर चक्रराज को प्रणाम करे। फिर हे देवेशि! साधकोत्तम चक्र में सिद्धि के लिये मूल मन्त्र से

एक-सौ आठ बार हवन करे ॥ २२५-२२७ ॥

**आहुत्यन्ते चक्रराजे सम्पाताज्यं विनिःक्षिपेत् ।**
**पूर्णाहुतिं ततो दत्त्वा तज्जलैरभिषेचयेत् ॥ २२८ ॥**

आहुति के बाद सम्पाताज्य (हुतशेष) चक्र पर छोड़ देवे । फिर पूर्णाहुति देकर उसी जल से अभिषेचन करे ॥ २२८ ॥

**मन्त्राभिषिक्तं चक्रन्तु सर्वेषां सिद्धिदायकम् ।**
**होमकर्मण्यशक्तश्चेद् द्विगुणं जपमाचरेत् ॥ २२९ ॥**

मन्त्राभिषिक्त चक्र सभी के लिये सिद्धिदायक होता है । होम कर्म में अशक्त होने पर दूना जप करे ॥ २२९ ॥

**गुरवे दक्षिणां दद्याद् यथाविभवविस्तरैः ।**
**एवं दिनत्रये पूज्य षोडशैरुपचारकैः ॥ २३० ॥**
**संहारमुद्रया देव्या विसर्जनमतः परम् ।**
**ब्राह्मणान् भोजयेत् सम्यक् प्रतिष्ठान्ते तु भक्तितः ॥ २३१ ॥**

अपने विभव विस्तार के अनुकूल गुरु को दक्षिणा प्रदान करे । इस प्रकार षोडशोपचार से तीन दिन तक पूजन करे और संहार मुद्रा प्रदर्शित कर देवी का विसर्जन कर देवे । प्रतिष्ठा के बाद अच्छी प्रकार से ब्राह्मणों को भक्तिपूर्वक भोजन करावे ॥ २३०-२३१ ॥

**प्रतिष्ठयेच्चक्रराजमनेन विधिना यदि ।**
**पुरश्चर्याफलं तस्य भवेद् विधियुतस्य च ॥ २३२ ॥**

जो इस विधि से चक्रराज की प्रतिष्ठा करता है, इस विधि से प्रतिष्ठा करने वाले आराधक को पुरश्चर्या का फल प्राप्त होता है ॥ २३२ ॥

**गुरोराज्ञां समादाय यन्त्रशुद्धिमुपाचरेत् ।**
**एवं विशोध्य यन्त्रं तु गोपयेन्न प्रकाशयेत् ॥ २३३ ॥**

गुरु की आज्ञा लेकर यन्त्र शुद्धि करे । इस प्रकार शुद्ध किये हुये यन्त्र को सुगुप्त रखे अर्थात् किसी को प्रदर्शित न करे ॥ २३३ ॥

**यन्त्रमन्त्रप्रकाशेन क्रुद्धा भवति देवता ।**
**निजमन्त्राभिषिक्तं तु गुरोरपि न दर्शयेत् ॥ २३४ ॥**

यन्त्र और मन्त्र को प्रकाशित करने से देवता क्रुद्ध होते हैं । अपने मन्त्र से अभिषिक्त यन्त्र गुरु को भी न दिखावे ॥ २३४ ॥

**प्रतिमापटयन्त्राणां नित्यं स्नानं न कारयेत् ।**
**कारयेत् पर्वदिवसे तथा मलनिवारणम् ॥ २३५ ॥**

प्रतिमा चित्रपट तथा यन्त्रों को नित्य स्नान न करावे । किन्तु पर्व दिवस पर इस प्रकार स्नान करावे जिससे उस पर का मैल निकल जावे ॥ २३५ ॥

**अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।**
**ग्रहणं मन्त्रयन्त्राणां शुभदं तत् प्रकीर्तितम् ॥ २३६ ॥**

अयन, विषुव अथवा चन्द्र-सूर्य के ग्रहण में मन्त्र एवं यन्त्र का धारण करना कल्याणकारक होता है ॥ २३६ ॥

ईशानशिवेनाप्युक्तम्—

**शक्तिं निजैक्येन तथैव चक्रे**
**चित्रे पटे वा यजनं न भूमौ ।**
**मोहादसौ स्थण्डिलगां यजेच्चेत्**
**भ्रश्येत् त्रिवर्गादपि मन्त्रसिद्धः ॥ २३७ ॥**

ईशानशिवतन्त्र में भी इस प्रकार कहा गया है—अपने में अभेद मानकर चक्र में, चित्रपट में तथा स्थण्डिल (वेदी) पर अथवा भूमि पर जो मोहवश शक्ति का पूजन करता है वह मन्त्र सिद्ध होने पर भी त्रिवर्ग (धर्म, अर्थ एवं काम) से भ्रष्ट हो जाता है ॥ २३७ ॥

**यन्त्राभावे तु प्रतिमां कृत्त्वा देवस्वरूपिणीम् ।**
**पूजयेत् तं प्रतिष्ठाप्याथवाऽन्यत्र प्रपूजयेत् ॥ २३८ ॥**

यन्त्र के अभाव में देव के स्वरूप से युक्त प्रतिमा बनवा कर प्रतिष्ठापूर्वक पूजन करे अथवा अन्यत्र भी पूजन करे ॥ २३८ ॥

**लिङ्गस्थां पूजयेद् देवीं पुस्तकस्थां तथैव च ।**
**मण्डलस्थां जलस्थां च शिलास्थां वा प्रपूजयेत् ॥ २३९ ॥**

लिङ्ग में प्रतिष्ठा कर अथवा पुस्तक में प्रतिष्ठा कर देवी का पूजन करना चाहिये । इसी प्रकार मण्डल पर अथवा जल पर अथवा शिला पर प्रतिष्ठा कर पूजन करे ॥ २३९ ॥

**यत्राऽपराजितापुष्पं जपापुष्पं च विद्यते ।**
**करवीरं तथा रक्तं शुक्लं वा द्रोणपुष्पकम् ।**
**तत्र देवी वसेन्नित्यमस्मात् तेषु प्रपूजयेत् ॥ २४० ॥**

जहाँ अपराजिता पुष्प है, जहाँ जपा पुष्प है, जहाँ रक्त वर्ण का करवीर (कनैल) पुष्प है अथवा शुक्ल वर्ण का द्रोण (अगस्त्य) पुष्प है, वहाँ नित्य देवी का वास रहता है अतः उन-उन स्थानों में पूजन करे ॥ २४० ॥

**श्रीविष्णुपूजायां विशेषो नारदीये गौतमीये च—**

**शालग्रामे मणौ यन्त्रप्रतिमामण्डलेषु वा ।**
**नित्यपूजा हरेः कार्या न तु केवलभूतले ॥ २४१ ॥**

श्रीविष्णु की पूजा में विशेष नारदीयतन्त्र और गौतमीयतन्त्र में भी बतलाया गया है—शालग्राम में, मणि में, यन्त्र एवं प्रतिमा और मण्डल में श्री भगवान् विष्णु की पूजा नित्य करे । केवल पृथ्वी पर पूजा न करे ॥ २४१ ॥

**शालग्रामशिलास्पर्शात् कोटिजन्माऽघनाशनम् ।**
**किं पुनरर्चनं तत्र हरिसान्निध्यकारकम् ॥ २४२ ॥**
**बहुभिर्जन्मभिः पुण्यैर्यदि कृष्णशिलां लभेत् ।**
**गोपदेन तु चिह्नेन तेन न प्राप्यते जनुः ॥ २४३ ॥**

शालिग्राम शिला के स्पर्श मात्र से करोड़ों जन्म के पाप नष्ट हो जाते हैं । फिर हरि सान्निध्यकारक अर्चन के विषय में क्या कहना! यदि गोपद चिह्न से युक्त काली शिला वाली (शालिग्राम) प्रतिमा प्राप्त हो जावे तो बहुत जन्म का पुण्य समझना चाहिये । ऐसे पुरुष का पुनर्जन्म नहीं होता ॥ २४२-२४३ ॥

**आपोऽग्निहृदयं विष्णोश्चक्रं क्षेत्रसमुद्भवम् ।**
**यन्त्रं च प्रतिमास्थानमाधारत्वेन वै विभोः ॥२४४॥ इति ।**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे मन्त्रमालायन्त्रसंस्कार-**
**कथनं नाम एकादशः पटलः ॥ ११ ॥**

...❦...

जल अग्नि हृदय क्षेत्र समुद्भव चक्र यन्त्र और प्रतिमा स्थान—ये सर्व व्यापक विष्णु के आधार हैं ॥ २४४ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय**
**कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में**
**मन्त्रमालायन्त्रसंस्कारकथन नामक एकादश पटल की**
**सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ ११ ॥**



## द्वादशः पटलः

### पुरश्चरणविधावासनजपसङ्केतकथनम्

**इत्थं यन्त्रं तु संस्कृत्य पुरश्चर्यामथाचरेत् ।**
**पुरश्चरणसम्पन्नो मन्त्रो हि फलदायकः ॥ १ ॥**

इस प्रकार यन्त्र का संस्कार करने के पश्चात् पुरश्चरण का कार्य आरम्भ करे क्योंकि पुरश्चरण युक्त ही मन्त्र फल देने में समर्थ होता है ॥ १ ॥

**किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ।**
**रहस्यानां हि मन्त्राणां यदि न स्यात् पुरस्क्रिया॥ २ ॥**

होम, जप तथा विस्तारपूर्वक किये गये न्यास का कुछ भी फल नहीं होता यदि रहस्यों में और मन्त्रों में पुरश्चरण क्रिया न की जावे ॥ २ ॥

**पुरस्क्रिया हि मन्त्राणां प्रधानं जीवमुच्यते ।**
**वीर्यहीनो यथा देही सर्वकर्मसु न क्षमः ॥ ३ ॥**
**पुरश्चरणहीनोऽपि तथा मन्त्रः प्रकीर्तितः ।**
**आदौ पुरस्क्रियां कर्तुं स्थाननिर्णय उच्यते ॥ ४ ॥**

एकमात्र पुरश्चरण ही मन्त्रों का प्रधान जीव है । जिस प्रकार वीर्यरहित प्राणी किसी भी कार्य के योग्य नहीं होता उसी प्रकार पुरश्चरणविहीन मन्त्र भी कुछ फल नहीं देता । अब पुरश्चरण कार्य करने के लिये सर्वप्रथम स्थान का निर्णय कहा जा रहा है ॥ ३-४ ॥

#### पुरश्चरणस्थानविधानम्

**पुण्यक्षेत्रं नदीतीरं गुहा पर्वतमस्तकम् ।**
**तीर्थप्रदेशाः सिन्धूनां सङ्गमः पावनं वनम् ॥ ५ ॥**
**उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः ।**
**तुलसीकाननं गोष्ठं वृषशून्यं शिवालयम् ॥ ६ ॥**

**अश्वत्थामलकीमूलं गोशाला जलमध्यतः ।**
**देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥ ७ ॥**

पुण्यक्षेत्र, नदी का तट, गुफा, पर्वत का ऊँचा भाग, नदियों के तट पर रहने वाले तीर्थ प्रदेश, नदियों का सङ्गम, पवित्र वन, पवित्र एकान्त उद्यान, विल्वमूल, पहाड़ का तट, तुलसीवन, गोशाला, शूद्ररहित अर्थात् अधर्मरहित शिवालय, अश्वत्थ और आँवले का मूल, गोशाला, जल का मध्य भाग, देवतायतन, समुद्र का किनारा और अपना घर—ये पुरश्चरण के स्थान हैं ॥ ५-७ ॥

**गृहे शतगुणं प्रोक्तं गोष्ठे लक्षगुणं भवेत् ।**
**कोटिर्देवालये पुण्यमनन्तं शिवसन्निधौ ॥ ८ ॥**

घर पर पुरश्चरण सौगुना गोष्ठ में लक्ष गुना, देवालय में कोटि गुना तथा शिव सन्निधान में अनन्त पुण्य देने वाला होता है ॥ ८ ॥

**वायवीयसंहितायामपि—**

**सूर्यस्याग्नेर्गुरोरिन्दोर्दीपस्य ज्वलितस्य च ।**
**विप्राणां च गवां चैव सन्निधौ शस्यते जपः ॥ ९ ॥**
**अथवा निवसेत् तत्र यत्र चित्तं प्रसीदति ।**

वायवीयसंहिता में भी बतलाया गया है—सूर्य, अग्नि, गुरु, चन्द्रमा के रहते, जलते हुये दीपक के सन्निधान में, ब्राह्मणों तथा गायों के सन्निधान में किया जाने वाला जप प्रशस्त कहा गया है । अथवा पुरश्चरण के लिये उस स्थान पर रहे जिसे देखने से मन प्रसन्न हो ॥ ९-१० ॥

**तथा—**

**म्लेच्छदुष्टमृगव्यालशंङ्कातङ्कविवर्जिते ।**
**एकान्ते पावने निन्दारहिते भक्तसंयुते ॥ १० ॥**
**सुदेशे धार्मिके देशे सुभिक्षे निरुपद्रवे ।**
**रम्ये भक्तजनस्थाने निवसेन् न पराश्रये ॥ ११ ॥**
**राजानः सचिवाः राजपुरुषाः प्रभवो जनाः ।**
**चरन्ति येन मार्गेण न वसेत्तत्र तत्त्ववित् ॥ १२ ॥**

और भी बतलाया गया है—जो स्थान म्लेच्छ, दुष्ट, जङ्गली जीव, हाथी, साँप की शङ्का तथा आतङ्क से वर्जित हो, एकान्त और पावन हो, निन्दारहित हो, जहाँ भक्तों का निवास हो, सुदेश, धार्मिक, सुभिक्ष, उपद्रवरहित, सुरम्य, भक्तों से परिपूर्ण हो, परतन्त्र न हो, ऐसे स्थान में पुरश्चरणकर्त्ता निवास करे । जहाँ राजा, राजसचिव, राजपुरुष अथवा उनसे सम्बन्धित पुरुषों के आने-जाने का मार्ग हो

तत्त्ववेत्ता साधक वहाँ निवास न करे ॥ १०-१२ ॥

**जीर्णदेवालयोद्यानगृहवृक्षतलेषु च ।**
**नदीकूलाद्रिकुञ्जेषु भूच्छिद्रादिषु नो वसेत् ॥ १३ ॥**

जीर्ण देवालय, जीर्ण उद्यान, जीर्ण गृह, जीर्ण वृक्ष के नीचे, नदी, कूल, पहाड़ का कुञ्ज तथा जहाँ भूच्छिद्र हो वहाँ पुरश्चरणकर्त्ता वास न करे ॥ १३ ॥

**एषामन्यतमं स्थानमाश्रित्य जपमाचरेत् ।**
**यत्र ग्रामे वसेन्मन्त्री तत्र कूर्मं विचिन्तयेत् ॥ १४ ॥**

ऊपर कहे गये किसी एक स्थान में रहकर साधक जप करे । जिस ग्राम में मन्त्रानुष्ठान कर्त्ता निवास करे वहाँ वक्ष्यमाण कूर्मस्थान का विचार करे ॥ १४ ॥

**पर्वते सिन्धुतीरे वा पुण्यारण्ये नदीतटे ।**
**यदि कुर्यात् पुरश्चर्यां तत्र कूर्मं न चिन्तयेत् ॥ १५ ॥**

पर्वत पर, नदी के तट पर अथवा पुण्यारण्य में यदि साधक निवास करे तो वहाँ कूर्म चक्र का विचार न करे ॥ १५ ॥

**देवीयामलेऽपि—**

**कुरुक्षेत्रे प्रयागे च गङ्गासागरसङ्गमे ।**
**महाकाले च काश्यां वा दीपस्थानं न चिन्तयेत् ॥ १६ ॥**

देवीयामल में भी बतलाया गया है—कुरुक्षेत्र, प्रयाग, गङ्गासागरसङ्गम, महाकाल (उज्जैन) तथा काशी में पुरश्चरण करने पर कूर्मचक्र में दीपस्थान का भी विचार न करे ॥ १६ ॥

### कूर्मचक्रे दीपस्थानविधानम्

**ग्रामे वा यदि वा वास्तौ गृहे वा तं विचिन्तयेत् ।**
**कूर्मचक्रमविज्ञाय यः कुर्याज्जपयज्ञकम् ॥ १७ ॥**
**तस्य यज्ञफलं नास्ति तथाऽनर्थाय कल्प्यते ।**
**पीठे क्षेत्रे पुरे वापि ग्रामे च नगरे तथा ॥ १८ ॥**
**कूर्मं विशोधयेन्मन्त्री दीपज्ञानपुरःसरम् ।**
**कादिनान्तं भवेत् क्षेत्रं ग्रामः स्याद् पादिमान्तकः ॥ १९ ॥**
**यादिषान्तं पुरं सम्यक् प्रोक्तं देशिकसत्तमैः ।**
**सहान्तं नगरं प्रोक्तमेतत् क्षेत्रस्य लक्षणम् ॥ २० ॥**
**ककारादिक्षकारान्ता वर्णाः स्युर्दीपसञ्ज्ञकाः ।**
**स्वराः षोडशपीठाख्या ज्ञातव्या मन्त्रिणां वरैः ॥ २१ ॥ इति ।**

यदि ग्राम में, वास्तु में अथवा घर में यदि पुरश्चरण करना हो तो वहाँ कूर्मचक्र का विचार करना चाहिए । जो बिना कूर्मचक्र का विचार किये ही जपयज्ञ करता है उसको जप यज्ञ का फल तो दूर रहा अनर्थ का ही सामना करना पड़ता है । इसलिये पीठ, क्षेत्र, पुर, ग्राम एवं नगर में मन्त्रज्ञ साधक दीपज्ञान पुरसर कूर्मचक्र का शोधन करना ही चाहिये । क अक्षर से लेकर न अक्षर पर्यन्त नाम वाले स्थान की 'क्षेत्र' सञ्ज्ञा है । प से लेकर म पर्यन्त नाम वाले अक्षर की 'ग्राम' सञ्ज्ञा है । य अक्षर से लेकर ष पर्यन्त नाम वाले स्थान की 'पुर' सञ्ज्ञा है ऐसा आचार्यों ने कहा है । स ह ये अक्षर नाम वाले स्थान की 'नगर' सञ्ज्ञा है । ककारादि क्षकारान्त वर्णों की 'दीप' सञ्ज्ञा है । सोलह स्वरों की 'पीठ' सञ्ज्ञा है—यह मन्त्र तत्त्वज्ञों को समझना चाहिये ॥ १७-२१ ॥

**एतच्च ब्रह्मयामले—**

**पीठसञ्ज्ञा स्वराणां च दीपाः स्युर्व्यञ्जनानि हि ।**
**स्थानं दीपाक्षरं यस्मिन् कोष्ठे तिष्ठति तद् भवेत्॥ २२ ॥**
**दीपस्थानं तदेतत् स्यात् कूर्मचक्रे न संशयः ।**
**पूर्वापरायते रेखे द्वे रेखे दक्षिणोत्तरे ।**
**नवकोष्ठानि जायन्ते तत्र वर्णान् समालिखेत्॥ २३ ॥**

यही बात ब्रह्मयामल में भी बतलाई गई है—स्वरों की पीठ सञ्ज्ञा है । व्यञ्जनों की दीप सञ्ज्ञा है । दीप का अक्षर जिस कोष्ठ में पड़ता हो वह जप स्थान उपयुक्त कहा जाता है । वही दीप का स्थान कूर्मचक्र में होता है, इसमें संशय न करे । आयत बनाकर पूर्व से पश्चिम तथा उत्तर से दक्षिण दो-दो रेखा खींचे । इस प्रकार आयत में नव कोष्ठ बन जाते हैं उसी में वर्णों को लिखना चाहिए ॥ २२-२३ ॥

**तथा च ज्ञानार्णवे—**

**वर्त्तुलं रचयेद् देवि कूर्माकारं सुलोचने ।**
**तन्मध्ये नवकोष्ठानि कृत्त्वा वर्णान् समालिखेत्॥ २४ ॥**

कूर्म चक्र के विषय में ज्ञानार्णवतन्त्र में कहा है—हे देवि! हे सुलोचने! कूर्म का आकार गोला बनावे । उसमें नव संख्याक कोष्ठ की रचना कर वर्णों का लेखन करे ॥ २४ ॥

**पूर्वकोष्ठं समारभ्य स्वरयुग्मक्रमेण हि ।**
**अवर्गः कथितो देवि कवर्गादिकसप्तकम् ॥ २५ ॥**
**पूर्वादिक्रमतो देवि कुबेरान्तं लिखेत्ततः ।**
**लक्षवर्णौ शम्भुकोणे विलिखेत् कूर्मसञ्ज्ञके॥ २६ ॥**

पूर्व कोष्ठ से आरम्भ कर दो-दो स्वर के क्रम से स्वरों को लिखे । इस प्रकार अवर्ग का लेखन कहा गया । तदनन्तर क वर्गादि सात वर्ग पूर्वादि क्रम से उत्तर दिशा तक लिखे । ळ क्ष वर्ण उस कूर्मचक्र के ईशानकोण में लिखे ॥ २५-२६॥

**क्षेत्रपाला नवैतेषु दीपेशा नवकोष्ठके ।**
**अमृतो वृषभः शैलराजो वासुकिरर्थकृत् ॥ २७ ॥**
**शक्तिपूः पद्मयोनिश्च महाशङ्खश्च ते नव ।**
**च्छायाच्छत्रगणोपेतान् मध्यात् पूर्वादितो यजेत् ॥ २८ ॥**
**यस्मिन् कोष्ठे क्षेत्रनाम मुखं तद् विद्धि पार्वति।**
**ततः पार्श्वद्वये हस्तौ तदधः कुक्षिमीरितम् ॥ २९ ॥**
**ततः पादद्वयं विद्धि तदन्ते पुच्छमीश्वरि ।**
**मुखस्थो लभते सिद्धिं करस्थः क्लेशसञ्चयम्॥ ३० ॥**
**उदासीनः कुक्षिसंस्थः पादयोर्हानिमाप्नुयात् ।**
**पुच्छस्थः पीड्यते मन्त्री बन्धनोच्चाटनादिभिः ॥ ३१ ॥**
**तस्मान्मुखं समाश्रित्य सर्वकर्म समारभेत् ।**
**तदभावे करं वापि कूर्मस्यान्यं न संश्रयेत् ॥ ३२ ॥**

इन्हीं नव में क्षेत्रपाल तथा नव कोष्ठों में दीपेश का निवास है १. अमृत, २. वृषभ, ३. शैल, ४. राज, ५. वासुकि, ६. अर्थकृत्, ७. शक्तिपू, ८. पद्मयोनि और ९. महाशङ्ख—इन नव क्षेत्रपालों का मध्य से पूर्वादि क्रम से यजन करे । जिस कोष्ठ में क्षेत्र का नाम आवे, हे पार्वति! उसे मुख जानना चाहिये । उसके दोनों पार्श्व में क्षेत्रपाल का हाथ, उसके नीचे कुक्षि, तदनन्तर दोनों पाद समझना चाहिये । सबसे अन्त में, हे ईश्वरि! पुच्छ समझना चाहिये । मुख में क्षेत्र का नाम आने पर सिद्धि प्राप्त होती है और हाथ पर क्लेश-संञ्चय, कुक्षि पर उदासीनता तथा पाद पर हानि प्राप्त होती है । पुच्छ पर क्षेत्र का नाम आने से मन्त्र पीड़ित होता है अथवा उच्चाटन से बन्धन प्राप्त होता है । इसलिये मुख का आश्रय लेकर समस्त कर्म आरम्भ करे । उसके अप्राप्त होने पर हाथ का आश्रय लेकर कार्य करे । कूर्म के अन्य स्थान का आश्रय न लेवे ॥ २७-३२ ॥

### उपायान्तरकथनम्

**स्थानसाधकयोर्नाम्नोररित्वं यत्र विद्यते ।**
**तदक्षशास्त्रतो ज्ञात्वा तत्तत् स्थानं परित्यजेत् ॥ ३३ ॥**

अब अन्य उपाय कहते हैं । स्थान और साधक के नाम में जहाँ शत्रुता हो उसे अक्ष शास्त्र से जानकर उन-उन स्थानों का साधक परित्याग कर देवे ॥ ३३॥

अरित्वमद्वयस्योक्तं गकारेण परस्परम् ।
ऋद्वयस्य ठकारेण ठकारस्य च ऋद्वयम् ॥ ३४ ॥
लृद्वयस्य पकारेण पकारस्यापि लृद्वयम् ।
ओद्वयस्य षकारेण षकारस्यौयुगेन च ॥ ३५ ॥
जकारस्य टकारेण झकारस्य खकारतः ।
डकारस्य तकारेण फकारस्य धकारतः ॥ ३६ ॥
भकारस्य रकारेण यकारस्य सकारतः ।
अरित्वमेषां वर्णानामन्येषां मित्रभावना ।
कूर्मचक्रे रिपुस्थानं साधको यत्नतस्त्यजेत् ॥ ३७ ॥

दोनों अकार (अ आ) का अरित्व गकार वर्ण से हैं, दोनों ऋकार की शत्रुता ठकार से है। दोनों प्रकार की शत्रुता दोनों ऋ से है। दोनों लृकार की शत्रुता यकार से हैं। पकार की शत्रुता दोनों लकारों से है। दोनों ओंकार की शत्रुता षकार से है। षकार की शत्रुता दोनों ओंकार से है। जकार की शत्रुता टकार से है। झकार की शत्रुता खकार से हैं। डकार की शत्रुता तकार से है। फकार की शत्रुता धकार से है। झकार की रकार से एवं यकार की सकार से शत्रुता है। इस प्रकार उन-उन वर्णों की शत्रुता उन वर्णों से कही गई। अन्य वर्णों की आपस में मित्रता है। इसलिये साधक को कूर्मचक्र में रिपुस्थान यत्नपूर्वक त्याग देना चाहिए ॥ ३४-३७ ॥

अथोदाहरणं तत्रैव—

यथा गर्गस्य वैरं स्यादट्टहासं महत्पुरम् ।
गयामरेश्वरस्यैवमाकाराद्येषु योजयेत् ।
ऋजुभद्रस्य ठक्कारं लृतकस्यापि पद्मकम् ॥ ३८ ॥
ओड्डियाणं षणमुखस्य औड्रं षड्गुणकस्य च ।
जयन्ती टङ्कणस्यारिः खन्धारं झंझणस्य च ॥ ३९ ॥
डाकदेवस्य ताराख्यं धर्माख्यं फंझकस्य च ।
भद्रस्य रम्यकं सोमनगरं यज्ञशर्मणः ॥ ४० ॥
एवं क्रमेण संशोध्य वैरिस्थानं त्यजेद् बुधः ।
तेषामाद्यान्वितं वर्णं पूर्वमार्गेषु योजयेत् ॥ ४१ ॥
यदि तद् व्यञ्जनारूढं तदाद्यं पीठवर्जितम् ।
नामाक्षराणि सर्वाणि पीठयुक्तानि वर्जयेत् ॥ ४२ ॥
तदादिकानि मार्गेण तद् गृहीत्वा स्वरं त्यजेत् ।
ग्रामनामाक्षरेष्वादिमध्यान्तार्णान् विहाय च ॥ ४३ ॥

**द्वितीयमक्षरं यत्र कोष्ठे तिष्ठति तन्मुखम् । इति ।**

**अन्यत्रापि—**

**तत्तन्नामद्वितीयार्णो यत्र तिष्ठति तन्मुखम् ॥ ४४ ॥ इति ।**

**इदं तु स्वरादिनामविषयम् ।**

उसी ज्ञानार्णवतन्त्र में ही इसका उदाहरण भी दिया गया है । गर्ग का वैर स्थान अट्टहास महापुर है । गया का अमरेश्वर से वैर है । इस प्रकार दोनों अकार का ग के साथ वैर कहा गया । ऋजुभद्र का ठकार से, लृतक का पद्मक से, ओड्डियाण का षण्मुख से और औड्र का षड्गुण शत्रु है । जयन्ती टङ्कण का शत्रु है । खन्धार झंझण का शत्रु है । डाकदेव का तारा से वैर है और धर्म का फंझक शत्रु है । भद्र का रम्यक शत्रु है । यज्ञशर्मा का सोमनगर शत्रु है । इस प्रकार विचार कर बुद्धिमान् वैर स्थान का परित्याग कर देवे । नाम का आदि-वर्ण पूर्व में कहे गये कार्य में योजित करे । सभी नामाक्षर जो पीठ से युक्त हों उन्हें वर्जित करे । उसके आदि-वर्ण को परीक्षा में ग्रहण करे और उसके स्वर का परित्याग करे । ग्राम के नामाक्षरों में आदि और अन्त के वर्ण का त्याग करना चाहिए । द्वितीय अक्षर जिस कोष्ठ में हो उसी को मुख्य समझना चाहिये । यही बात अन्यत्र तन्त्रों में भी कही गई है । तत्तन्नामों में जहाँ द्वितीय वर्ण है वही मुख समझना चाहिये ॥ ३८-४४ ॥

**नामादौ संयोगाक्षरे सति विशेषमाह—**

**अक्षरत्रितयं यत्र ग्रामनामादिषु क्वचित् ।**
**स्वरो मध्याक्षरारूढो यत्र तिष्ठति तन्मुखम् ॥ ४५ ॥**

क्षेत्र नाम के आदि में संयोगाक्षर होने पर विशेष विधान कहते हैं—जहाँ ग्राम के नाम के आदि में कदाचित् संयोगयुक्त तीन अक्षर हों, वहाँ उस स्थान पर मध्याक्षर पर रहने वाले स्वर को मुख्य समझे ॥ ४५ ॥

**भवतो यदि वर्णौ द्वौ ग्रामनामादिषु स्फुटम् ।**
**आद्यस्वरो यत्र तिष्ठत्यदो वदनमिष्यते ॥ ४६ ॥**

यदि ग्रामादि के नाम के आदि में संयुक्त दो वर्ण स्पष्ट हों, तब जहाँ आदि में स्वर हो उसे ही मुख समझना चाहिये ॥ ४६ ॥

**क्षेत्रसाधकमन्त्राणामेकमेवाद्यमक्षरम् ।**
**यदि स्यात् स ध्रुवं मन्त्रः सर्वसिद्धिफलप्रदः ॥ ४७ ॥**

यदि क्षेत्र और साधक आद्य अक्षर एक ही हो, तो वहाँ जप करने से मन्त्र निश्चित रूप से सिद्धि प्रदान करता है ॥ ४७ ॥

**मोक्षार्थं वदने कुर्याद् दक्षिणे त्वभिचारकम् ।**
**श्रीकामः पश्चिमे भूत्वा उत्तरे शान्तिदो भवेत् ॥ ४८ ॥**

मोक्ष के लिये कूर्म के मुख पर जप करे । कूर्म के दक्षिण अभिचार के लिये जप करे । लक्ष्मी की कामना से पश्चिम ओर और शान्ति की कामना से उत्तराभिमुख जप करे ॥ ४८ ॥

**ईशाने शत्रुनाशः स्यादाग्नेयः शत्रुदाहकः ।**
**नैर्ऋते शत्रुभीतिः स्याद् वायव्ये तु पलायनम् ॥ ४९ ॥**

कूर्म के ईशान में जप करने से शत्रु का नाश, आग्नेय में शत्रु का दहन, नैर्ऋत्य में शत्रुभीति और वायव्य में उसका पलायन होता है ॥ ४९ ॥

**कूर्मचक्रमिदं प्रोक्तं साधकानामभीष्टदम् ।**
**कूर्ममेवं परिज्ञाय दीपस्थानसमाश्रितः ॥ ५० ॥**

साधकों के लिये अभीष्ट प्रदान करने वाला कूर्मचक्र हमने कहा । इस प्रकार साधक कूर्म का ज्ञान कर दीपस्थान पर स्थित हो जप करे ॥ ५० ॥

**पुरश्चरणे आसननिरूपणम्**

**आसनं कल्पयेन्मन्त्री यथायुक्तं विधानतः ।**
**आसनं सर्वथा कार्यमभावे मानसं चरेत् ॥ ५१ ॥**

साधक जप के लिये विधिपूर्वक यथायोग्य आसन बनवावे । जप में आसन की निश्चित रूप से आवश्यकता है । उसके अभाव में मन में कल्पित मानस आसन निर्माण करे ॥ ५१ ॥

**तदाह गौरीयामले—**

**सलिलस्थो यदा कुर्याज्जपं पूजां च साधकः ।**
**कल्पयित्वाऽऽसनं सम्यगासीनो नोत्थितश्चरेत् ॥ ५२ ॥**

इसी बात को गौरीयामल में कहते हैं—साधक जब जल में स्थित होकर जप पूजा करे । तो आसन की कल्पना कर उस पर बैठकर जप करे । खड़े होकर बिना आसन के जप न करे ॥ ५२ ॥

**रक्तासनोपविष्टस्तु लाक्षारुणगृहे स्थितः ।**
**मनःकल्पितरक्तो वा साधकः स्थिरमानसः ॥ ५३ ॥**

यदि रक्तवर्ण के आसन पर बैठकर जप करे तो मानो लाक्षा के अरुण वर्ण के घर में स्थित होकर जप कर रहा है । मन से कल्पित रक्त आसन पर बैठकर

जप करने वाले का मन स्थिर हो जाता है ॥ ५३ ॥

**तृणवल्कलवस्त्राणां सिंहव्याघ्रमृगाजिनम् ।**
**कल्पयेदासनं धीमान्न च कुर्यादनास्तृते ॥ ५४ ॥**

तृण वल्कल वस्त्रों द्वारा आसन निर्माण करे । सिंह चर्म, व्याघ्र चर्म एवं मृग चर्म का आसन बनाकर जप करे अर्थात् बिना आसन के जप न करे ॥ ५४ ॥

**विभिन्नासनप्रयोगफलकथनम्**

**कौशेयं वाथ चार्मं वा चैलं तार्णमथापि वा ।**
**शणजं पत्रजं वापि तूलं कम्बलदारुजौ ।**
**कृष्णाजिनं भवेत् तद्वत् सर्वसिद्धिप्रदायकम् ॥ ५५ ॥**

**कृष्णाजिन = गृहस्थातिरिक्तसाधकपरम् ।**

रेशम अथवा कुशा का आसन, चर्म का आसन, वस्त्र का आसन, तृण का आसन, सन का आसन, पत्र निर्मित आसन, रूई, कम्बल, लकड़ी का आसन और काले मृग के चर्म का आसन सभी सिद्धियों को प्रदान करते हैं ॥ ५५ ॥

काले मृग का चर्म गृहस्थ से अतिरिक्त यति आदि के लिये कहा गया है ।

**तथा च ब्रह्मसंहितायाम्—**

**नादीक्षितो विशेद् यत्तु कृष्णसाराजिने गृही ।**
**विशेद् यतिर्वनस्थश्च ब्रह्मचारी तथा मुने ॥ ५६ ॥**

जैसा कि ब्रह्मसंहिता में कहा है—गृहस्थ यदि अदीक्षित हो तो वह कृष्णसार मृग के आसन पर न बैठे । यति, वानप्रस्थी तथा ब्रह्मचारी ही उस पर बैठे ॥५६॥

**वस्त्रासने व्याधिनाशः कम्बले दुःखमोचनम् ।**

**यत्तु—'वस्त्रासनं जपध्यानतया हानिकरं मतम् ।' तच्च केवलं वस्त्रमात्रम् ।**

वस्त्र का आसन व्याधि नाश करता है और कम्बल के आसन से दुःख नाश होता है ॥ ५७ ॥

यह जो कहा गया है कि वस्त्रासन पर ध्यान एवं जप करने से हाँनि होती है उसे केवल वस्त्रपरक जानना चाहिए

**सर्वसिद्ध्यै व्याघ्रचर्म ज्ञानसिद्ध्यै मृगाजिनम् ॥ ५७ ॥**
**वस्त्रासनं रोगहरं वेत्रजं श्रीविवर्धनम् ।**
**कौशेयं पौष्टिकं प्रोक्तं काम्बलं दुःखमोचनम् ॥ ५८ ॥**

बाघ का चर्म सर्वसिद्धि के लिये, मृगचर्म ज्ञानसिद्धि के लिये, वस्त्रासन

रोगहारी, वेत्रासन लक्ष्मीवर्धक तथा कौशेय आसन पुष्टिकारक और कम्बलासन सभी दुःखों का मोचक कहा गया है ॥ ५७-५८ ॥

**अभिचारे कृष्णवर्णमारक्तं वश्यकर्मणि ।**
**शान्तिके धवलं प्रोक्तं चित्रकं सर्वकर्मसु ॥ ५९ ॥**
**स्तम्भने गजचर्म स्यान्मारणे माहिषं तथा ।**
**मेषीचर्म तथोच्चाटे खड्गजं वश्यकर्मणि ॥ ६० ॥**

मारण कर्म में काले वर्ण का, वश्यकर्म में लाल वर्ण का, शान्ति कर्म में धवल वर्ण का, सभी कर्मों के लिये चित्रक आसन प्रशस्त कहा गया है । स्तम्भन कर्म में हाथी के चर्म का, मारण में महिष का, उच्चाटन में भेंड़ी के चर्म का और वश्यकर्म में गैडे का आसन प्रशस्त कहा गया है ॥ ५९-६० ॥

**विद्वेषे जाम्बुकं प्रोक्तं भवेद् गोचर्मशान्तिके ।**
**वंशासने च दारिद्र्यं दौर्भाग्यं दारुकासने ॥ ६१ ॥**
**धरण्यां दुःखसम्भूतिः पाषाणे व्याधिसम्भवः ।**
**तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ।**
**इष्टिकायामथाधिः स्यादेतत् साधारणे जपे ॥ ६२ ॥**

विद्वेष में जम्बूक (सियार) का आसन, शान्ति कर्म में गोचर्म का आसन प्रशस्त है, बाँस का आसन दरिद्रता, काष्ठासन दौर्भाग्य, केवल पृथ्वी का आसन दुःखकारक और पत्थर का आसन व्याधि प्रदान करता है । तृण के आसन से यश की हानि पल्लव के आसन से चित्त चाञ्चल्य और ईंट के आसन से मानसिक तनाव होता है । यह सर्व साधारण जप में कहा गया ॥ ६१-६२ ॥

**अतश्च तन्त्रे—**

**वंशाश्मधरणीदारुतृणवल्कलनिर्मितम् ।**
**वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदम् ॥ ६३ ॥**

इसलिये तन्त्र में भी बतलाया गया है—बाँस, पत्थर, पृथ्वी, काष्ठ, तृण एवं वल्कल निर्मित आसन बुद्धिमान् सर्वदा वर्जित करे । क्योंकि वह दारिद्र्य एवं व्याधि तथा दुःख देने वाला होता है ॥ ६३ ॥

**अन्यच्च—**

**आम्रनिम्बकदम्बानामासनं सर्वनाशनम् ।**
**वकुलं किंशुकश्चैव पनसं च विभीतकम् ।**
**वर्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम् ॥ ६४ ॥**

और भी बतलाया गया है—आम, निम्ब एवं कदम्ब का आसन सर्वनाशक है । वकुल, पलाश, पनस एवं बहेड़ा का आसन मन्त्रज्ञ सर्वदा वर्जित करे क्योंकि वह दारिद्र्य, व्याधि एवं दुःखदायक होता है ॥ ६४ ॥

**शस्तं तिलकजं दार्वं रक्तचन्दनजं तथा ।**
**गामरीनिर्मितं शस्तमन्यद् दार्वं विवर्जयेत् ॥ ६५ ॥**

तिलक वृक्ष का तथा रक्त चन्दन वृक्ष का आसन प्रशस्त कहा गया है । गामरी (?) निर्मित आसन भी प्रशस्त है अन्य काष्ठासन वर्जित करे ॥ ६५ ॥

**चतुर्विंशाङ्गुलं दीर्घमेवं काष्ठासनं भवेत् ।**
**षोडशाङ्गुलविस्तीर्णमुच्छ्रायं चतुरङ्गुलम् ॥ ६६ ॥**

काष्ठ का आसन चौबीस अङ्गुल लम्बा तथा सोलह अङ्गुल चौड़ा तथा चार अङ्गुल ऊँचा होना चाहिये ॥ ६६ ॥

**काम्बलं चार्मजं शैलं महामायाप्रपूजने ।**
**प्रशस्तमासनं प्रोक्तं कामाख्यायास्तथैव च ॥ ६७ ॥**

महामाया के प्रपूजन में कम्बल तथा चर्म का आसन विहित है । इसी प्रकार कामाख्या के पूजन में भी समझना चाहिये ॥ ६७ ॥

**त्रिपुराया रक्तवस्त्रं विष्णोश्चैव कुशासनम् ।**
**शैवे व्याघ्राजिनं शस्तं रोमजं सर्वतुष्टिकृत् ॥ ६८ ॥**

त्रिपुरा की पूजा में रक्त वस्त्र का आसन तथा विष्णु पूजन में कुशासन एवं शिवपूजन में व्याघ्राजिन का आसन सभी को सन्तुष्ट करता है ॥ ६८ ॥

**कुशाजिनाम्बरेणाढ्यं चतुरस्त्रं समन्ततः ।**
**एकहस्तं द्विहस्तं वा चतुरङ्गुलमुच्छ्रितम् ॥ ६९ ॥**

कुशा, उसके ऊपर अजिन, उसके ऊपर वस्त्र का आसन चारो ओर से चौकोर बनावे । यह एक हाथ अथवा दो हाथ लम्बा तथा चार अङ्गुल ऊँचा होना चाहिये ॥ ६९ ॥

**आसनं च तथा कुर्यान्नातिनीचं न चोच्छ्रितम् ।**
**तत्र स्थित्वा जपेन्मन्त्री बद्धपद्मासनादिकः ॥ ७० ॥**

आसन इस प्रकार निर्माण करे जो अत्यन्त ऊँचा तथा अत्यन्त नीचा न हो ऐसा होना चाहिए जिस पद्मासनादि से मन्त्रज्ञ साधक बैठकर जपादि कार्य सम्पन्न कर सके ॥ ७० ॥

**पद्मासनं स्वस्तिकाख्यं भद्रं वज्रासनं तथा ।**
**वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् ॥ ७१ ॥**

पद्मासन, स्वस्तिकासन, भद्रासन, वज्रासन तथा वीरासन—ये पाँच प्रकार के आसन क्रमशः कहे गये हैं ॥ ७१ ॥

**सव्यपादमुपादाय दक्षोपरि न्यसेत्ततः ।**
**तथैव दक्षिणं सव्यस्योपरिष्टाद् विधानवित् ॥ ७२ ॥**
**पद्मासनमिति प्रोक्तं जपकर्मसु शस्यते ।**
**जानुनोरन्तरे सम्यक् कृत्त्वा पादतले उभे ॥ ७३ ॥**
**ऋजुकायो विशेन्मन्त्री स्वस्तिकं तत् प्रचक्षते ।**
**गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ॥ ७४ ॥**
**पार्श्वे पादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलम् ।**
**भद्रासनं भवेदेतत् सर्वव्याधिविनाशनम् ॥ ७५ ॥**

बाँया पैर उठाकर दाहिने पैर पर रखे । इसी प्रकार दाहिना पैर उठाकर बायें पर विधानवेत्ता रखे । इसे पद्मासन कहा जाता है जो जप कर्म में अत्यन्त प्रशस्त है । दोनों पैर के तलवे को दोनों जानु के भीतर स्थापित कर सीधे होकर बैठ जावे । इस प्रकार के आसन को स्वस्तिकासन कहा जाता है । दोनों गुल्फों को अण्डकोश के नीचे रखकर सीवनी के दोनों पार्श्व में स्थापित करे । फिर दोनों हाथों से पार्श्व में दोनों पैरों को दृढ़ता से पकड़कर निश्चल कर देवे । इसे भद्रासन कहा जाता है जो समस्त व्याधियों को विनष्ट करने वाला है ॥ ७२-७५ ॥

**मेढ्रादुपरि निक्षिप्य सव्यगुल्फं तथोपरि ।**
**गुल्फान्तरं च निक्षिप्य वज्रासनमितीरितम् ॥ ७६ ॥**

लिङ्ग के ऊपर बाँया गुल्फ स्थापित करे । उसके ऊपर दाहिना गुल्फ स्थापित करे तो उसे वज्रासन कहा जाता है ॥ ७६ ॥

**एकपादमधः कृत्त्वा विन्यस्योरौ तथेतरम् ।**
**ऋजुकायो विशेन्मन्त्री वीरासनमितीरितम् ॥ ७७ ॥**

एक पैर नीचे रखे । दूसरे पैर को ऊरू पर स्थापित करे और सीधे-सीधे बैठा रहे इसे वीरासन कहा जाता है ॥ ७७ ॥

**ऊर्ध्वपादस्थितो देवि! शिरोऽधः परिकीर्तितः ।**
**सर्वासनानां श्रेष्ठोऽयं देवैरपि सुदुष्करः ॥ ७८ ॥**

हे देवि! पैर को ऊपर रखे और शिर को नीचे रखे । हे देवि! यह आसन

सभी आसनों में श्रेष्ठ है जो देवताओं के लिये भी दुष्कर है ॥ ७८ ॥

**कर्मभेदकथनम्**

**न युक्तमन्यथा पाददर्शनं सुरपूजने ।**
**नित्यं नैमित्तिकं काम्यं त्रिविधं पूजनं स्मृतम् ॥ ७९ ॥**

इस प्रकार देव पूजन में पैर कदापि दिखाना नहीं चाहिये । नित्य, नैमित्तिक तथा काम्य भेद से पूजन के तीन प्रकार कहे गये हैं ॥ ७९ ॥

**नित्यार्चनरतो मन्त्री कुर्यान्नैमित्तिकार्चनम् ।**
**नैमित्तिकार्चने सिद्धे कुर्यात् काम्यमतन्द्रितः ॥ ८० ॥**

नित्यार्चन में निरत मन्त्रज्ञ साधक नैमित्तिक अर्चन करे और नैमित्तिकार्चन के सिद्ध होने पर साधक काम्यकर्म सावधान होकर करे ॥ ८० ॥

**यत् कुर्यादनिशं नित्यं नैमित्तिकमतः परम् ।**
**पर्वोत्सवादिकं चान्यत् काम्यं कामकृतं हि यत्॥ ८१ ॥**

जो निरन्तर किया जाय वह नित्य कर्म है । इसके अलावा नैमित्तिक कर्म वह है जिसमें पर्वोत्सवादि किया जाय । जो किसी विशेष कामना की सिद्धि के लिये किया जाता है वह काम्य कर्म है ॥ ८१ ॥

**शिवपूजा दिवा शस्ता शक्तिपूजा निशास्वपि ।**
**दिवारूपी शिवः साक्षान्निशा स्यात् शक्तिरूपिणी ॥ ८२ ॥**

**शिवेत्युपलक्षणं पुंदेवतामात्रपरम् ।**

दिन में शिव पूजा प्रशस्त है शक्ति पूजा रात में भी करनी चाहिये । क्योंकि शिव साक्षात् दिन स्वरूप है और रात्रि शक्तिस्वरूपा है ॥ ८२ ॥

यहाँ शिव शब्द उपलक्षण है और समस्त पुरुष देवता के लिये कहा गया है।

**शक्तिपूजायां विशेषो यामले—**

**रात्रौ पूजां सदा कुर्यात्तत्र सिद्धिर्न संशयः ।**
**सकला रजनीपूजा दिवापूजा च निष्कला ॥ ८३ ॥**

शक्ति पूजा में विशेष यामल में भी बतलाया गया है—शक्ति की पूजा रात्रि के समय करे । ऐसा करने से निःसन्देह सिद्धि होती है क्योंकि रजनी पूजा सकला है, दिवा पूजा निष्कला है ॥ ८३ ॥

**शक्तिमन्त्रं जपेद् रात्रौ दिवापि पूजनं शुचिः ।**
**विशेषतो निशीथे तु तत्रातिफलदो जपः ॥ ८४ ॥**

ऐसे तो दिन में भी शक्ति पूजा पुण्याधायक है किन्तु रात्रि में शक्ति मन्त्र का जप करे। विशेष कर अर्धरात्रि में जप करे। उस समय किया जप विशेष रूप से फलदायक कहा गया है ॥ ८४ ॥

**बृहत्तैतिलातन्त्रे—**

**निशायां योऽर्चयेत् कालीं तारां च भैरवीं तथा ।**
**आसमुद्रक्षितीशानां श्रेष्ठो भवति साधकः ॥ ८५ ॥**

बृहत्तैतिला तन्त्र में भी बतलाया गया है—जो साधक सम्यक् रूप से रात्रि में काली एवं तारा और भैरवी का अर्चन करता है वह समुद्र पर्यन्त समस्त क्षितीशों में सर्वश्रेष्ठ होता है ॥ ८५ ॥

**अन्यत्रापि—**

**मातङ्गीं च तथा बालां चामुण्डां छिन्नमस्तकाम्।**
**भद्रकालीं तथा दुर्गां जयदुर्गां तथैव च ॥ ८६ ॥**
**आसां जपश्च पूजा च रात्रौ चेत् क्रियते यदा।**
**भुक्त्वा भोगानशेषांस्तु सोऽवश्यं याति रुद्रताम्॥ ८७ ॥**

अन्यत्र भी इस प्रकार बतलाया गया है—जो मातङ्गी, बाला, चामुण्डा, छिन्नमस्तका, भद्रकाली, दुर्गा तथा जयदुर्गा इन देवियों का जप तथा पूजा रात्रि में करता है वह इस लोक के समस्त भोगों को भोग कर अवश्य रुद्रसायुज्य प्राप्त कर लेता है ॥ ८६-८७ ॥

**समयातन्त्रे—**

**दिवा प्रपूजनं देवि यथोक्तफलदं भवेत् ।**
**पूजनं लक्षगुणितं निशि नीरजलोचने! ॥ ८८ ॥**

समयातन्त्र में भी बतलाया गया है—हे देवि! दिन में किये गये पूजन का जितना फल कहा गया है उतना ही होता है। किन्तु हे नीरजलोचने! रात्रि में किये गये जप एवं पूजा का फल लक्षगुणित होता है ॥ ८८ ॥

**अर्धरात्रात् परं यच्च मुहूर्त्तद्वयमेव हि ।**
**सा महारात्रिरुद्दिष्टा कृत्वा तत्राक्षयो भवेत् ॥ ८९ ॥**

अर्धरात्रि के बाद दो मुहूर्त्त तक महारात्रि कही जाती है उस काल में पूजन अक्षय होता है ॥ ८९ ॥

**गते तु प्रथमे यामे तृतीयप्रहरावधि।**
**निशायां च प्रजप्तव्यं रात्रिशेषे जपेन्न हि।**

**प्रकटे शक्तिमन्त्रे तु हानिः स्यादुत्तरोत्तरम् ॥ ९० ॥**

देवी का जप महारात्रि के प्रथम याम बीत जाने पर तीन पहर पर्यन्त महारात्रि में करना चाहिये । इसके बाद शेष रात्रि में जप न करे । शक्तिमन्त्र के जप के प्रकाशित होने से उत्तरोत्तर हाँनि की सम्भावना रहती है ॥ ९० ॥

**शिवधर्मोत्तरे—**

**सर्वेषामेव यज्ञानां जपयज्ञो विशिष्यते ।**
**जपेन देवता शीघ्रं प्रत्यक्षमुपयाति हि ॥ ९१ ॥**
**प्रसन्ना विपुलान् भोगान् दद्यान्मुक्तिं च शाश्वतीम् ।**
**यक्षरक्षःपिशाचाश्च ग्रहाः सर्पाश्च भीषणाः ।**
**जापिनं नोपसर्पन्ति भयभीताः समन्ततः ॥ ९२ ॥**

शिवधर्मोत्तर में भी बतलाया गया है—सभी यज्ञों में जप यज्ञ विशिष्ट है, क्योंकि जप से देवता शीघ्र प्रसन्न हो जाते हैं और प्रसन्न हुये देवता विपुल भोग तो देते ही हैं, अन्त में मुक्ति भी प्रदान करते हैं । ग्रह, यक्ष, राक्षस, पिशाच तथा अत्यन्त भयानक सर्प जप कर्त्ता के पास नहीं जाते क्योंकि वे सर्वत्र जप कर्त्ता से भयभीत रहते हैं ॥ ९१-९२ ॥

**अन्यत्रापि—**

**यावन्तः कर्मयज्ञाः स्युः प्रदिष्टानि तपांसि च ।**
**सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ ९३ ॥**

अन्यत्र भी बतलाया गया है—जितने भी कर्म या यज्ञ तथा तप शास्त्रों में कहे गये हैं वे सभी जप एवं यज्ञ षोडशी कला की बराबरी नहीं कर सकते ॥ ९३ ॥

**जपलक्षणकथनम्**

**जपः स्यादक्षरावृत्तिर्मानसोपांशुवाचिकैः ।**
**धिया यदक्षरश्रेणीं वर्णस्वरपदात्मिकाम् ॥ ९४ ॥**
**उच्चरेदर्थमुद्दिश्य मानसः स जपः स्मृतः ।**
**जिह्वोऽष्ठौ चालयेत् किञ्चित् देवतागतमानसः ।**
**किञ्चित् श्रवणयोग्यः स्यादुपांशुः स जपः स्मृतः ॥ ९५ ॥**

अक्षरों की आवृत्ति को जप कहा जाता है । उस जप के मानसिक, उपांशु तथा वाचिक—ये तीन भेद बतलाये गये हैं । वर्ण, स्वर, पदात्मिका जिस अक्षर श्रेणी का अर्थ ज्ञानपूर्वक मात्र बुद्धि से उच्चारण किया जाता है उसे 'मानस जप' कहते हैं । मन्त्र के देवता का मन से ध्यान करते हुये जीभ और ओष्ठ प्रचालन करते हुये किञ्चित् श्रवण योग्य जो जप किया जाता है वह 'उपांशु जप' कहा

जाता है ॥ ९४-९५ ॥

**विशुद्धेश्वरे—**

**निजकर्णागोचरस्तु मानसः कथितो बुधैः ।**
**उपांशुर्निजकर्णस्य गोचरः परिकीर्तितः ॥ ९६ ॥**

विशुद्धेश्वर में भी बतलाया गया है—जो अपने कान से अपने को भी सुनाई न पड़े उसे 'मानस जप' कहते हैं और जो मात्र अपने कान से सुनाई पड़े वह 'उपांशु जप' कहा जाता है ॥ ९६ ॥

**निगदस्तु जनैर्वेद्यस्त्रिविधो जप ईरितः ।**
**वाचा समुच्चरेन्मन्त्रं वाचिकः स जपः स्मृतः ॥ ९७ ॥**
**माहात्म्यं वाचिकस्यैव जपयज्ञस्य कीर्तितम् ।**
**तस्मात् शतगुणोपांशुः सहस्रो मानसः स्मृतः ॥ ९८ ॥**

'वाचिक जप' उसे कहते हैं जिसका उच्चारण वाणी से किया जावे और जो लोगों को सुनाई पड़े उसे निगद भी कहते हैं । वाचिक जप यज्ञ का माहात्म्य हम पहले कह आये हैं । अतः उस वाचिक का सौगुना फल उपांशु जप से होता है और हजार गुना फल मानस जप का होता है ॥ ९७-९८ ॥

**मानसः सिद्धिकामानां पुष्टिकामैरुपांशुकः ।**
**वाचिको मारणे चैव प्रशस्तो जप ईरितः ॥ ९९ ॥**

सिद्धि चाहने वाले को मानस जप और पुष्टि चाहने वाले को उपांशुजप करना चाहिए । वाचिक जप मारण में प्रशस्त कहा गया है । यहाँ तक जप के विषय में कहा ॥ ९९ ॥

**जिह्वाजपः स विज्ञेयः केवलं जिह्वया बुधैः ।**
**मनः संहृत्य विषयान् मन्त्रार्थगतमानसः ॥ १०० ॥**
**मन्त्रमुच्चारयेन्मन्त्री ईषदोष्ठं प्रचालयेत् ।**
**सन्ध्यायन्नक्षरश्रेणीं वर्णात् वर्णं पदात् पदम् ॥ १०१ ॥**
**ध्यानमन्त्रसमायुक्तः शीघ्रं सिद्ध्यति साधकः ।**
**अतिह्रस्वो व्याधिहेतुरतिदीर्घो वसुक्षयः ॥ १०२ ॥**

मन को विषयों से हटा कर मन्त्रार्थ का स्मरण करते हुये कुछ ओष्ठों को चलाते हुये मन्त्रज्ञ मन्त्र का उच्चारण करे, उसे जिह्वा जप कहते हैं । अक्षर-श्रेणी का ध्यान करते हुये, एक वर्ण के बाद दूसरा वर्ण और एक पद के बाद दूसरा पद उच्चारण करे । ऐसा जप करने से साधक शीघ्र ही सिद्ध हो जाता है । मन्त्र के जप में जल्दी करने से व्याधि होती है और अत्यन्त देर में उच्चारण करने से

धन का क्षय होता है ॥ १००-१०२ ॥

**अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ।**
**शनैः शनैरविस्पष्टं न द्रुतं न विलम्बितम् ।**
**क्रमेणोच्चारयेद् वर्णानाद्यन्तक्रमयोगतः ॥ १०३ ॥**

मोती की माला की तरह अक्षर से अक्षर मिलाकर धीरे-धीरे स्पष्ट रूप से वर्णों का उच्चारण करे । बहुत जल्दी या बहुत विलम्ब न करे । इस प्रकार क्रमशः वर्णों का आदि से अन्त तक उच्चारण करे ॥ १०३ ॥

**मनसा यः पठेत् स्तोत्रं वचसा यो मनुं जपेत् ।**
**उभयं विफलं देवि भिन्नभाण्डोदकं यथा ॥ १०४ ॥**

स्तोत्र का मानसिक पाठ न करे और वाणी से उच्चारण करते हुये मन्त्र का जप न करे । ऐसे लोगों का दोनों पाठ एवं जप नष्ट हो जाता है । जैसे फूटे हुये घड़े का जल नष्ट हो जाता है ॥ १०४ ॥

**यस्य यस्य च मन्त्रस्य उद्दिष्टा या च देवता ।**
**चिन्तयित्वा तदाकारं मनसा जपमाचरेत् ।**
**भावनादक्षरश्रेण्या ब्रह्म साक्षान्न संशयः ॥ १०५ ॥**

जिस-जिस मन्त्र के जो-जो देवता शास्त्रों में कहे गये हैं, उनके स्वरूप का ध्यान करते हुये मानस जप करे । अक्षर-श्रेणी की भावना से ब्रह्म का साक्षात्कार हो जाता है इसमें सन्देह नहीं ॥ १०५ ॥

**अक्षरे दूषणं नास्ति शप्तादि कमलानने ।**
**दूषणं यत् कृतं देवि हृदये भावय प्रिये ॥ १०६ ॥**

हे कमलानने! अक्षर में शप्तादि कोई दोष नहीं होता । हे देवि! हे प्रिये! जो अपने द्वारा दोष किया गया है उसी का हृदय में चिन्तन करे ॥ १०६ ॥

**गोपनार्थं हि देवानां शिवः शप्तादिकं व्यधीत् ।**
**पामरा क्लेशयिष्यन्ति देवानर्थपरा प्रिये ॥ १०७ ॥**
**शप्तं न हि शिवे! विद्धि कीलितं न हि सुन्दरि ।**
**सन्देहं त्यज देवेशि मन्त्रमात्रे ममाज्ञया ।**
**जपात् सिद्धिर्जपात् सिद्धिर्जपात् सिद्धिर्विधानतः॥ १०८ ॥**

देवताओं के गोपन के लिये शिव ने शप्तादि दोष उत्पन्न किये हैं । उन्होंने सोचा कि पामर लोग अर्थ पर होते हैं और वे अपने स्वार्थ के लिये देवताओं को बहुत क्लेश प्रदान करेंगे । हे सुन्दरि! शिव ने न तो मन्त्रों को शप्त किया है और

न उनका उत्कीलन ही किया है। हे देवि! मेरी आज्ञा से आप मन्त्रमात्र में शाप और उत्कीलन का सन्देह अपने मन में मत करिये। विधिपूर्वक जप से ही सिद्धि होती है। जप से ही सिद्धि होती है और जप से ही सिद्धि होती है। मैं दृढ़तापूर्वक तीन बार प्रतिज्ञा कर कहता हूँ ॥ १०७-१०८ ॥

**कुलार्णवे—**

**तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः ।**
**तत्पदार्थानुसन्धानं कुर्वन्मन्त्रं जपेत् प्रिये ॥ १०९ ॥**

कुलार्णवतन्त्र में भी बतलाया गया है—साधक मन्त्र, देवता में परिनिष्ठित होकर अपनी प्राणशक्ति लगाकर तच्चित्त तथा तत्परायण होकर तत्पदार्थ के अनुसन्धानपूर्वक मन्त्र का, हे प्रिये! जप करे ॥ १०९ ॥

**रुद्रयामले—**

**कथं मन्त्राश्च सिद्ध्यन्ति मन्त्रार्थज्ञानिनां प्रिये ।**
**मन्त्रार्थं मन्त्रदेवतयोरभेदज्ञानम् ।**

रुद्रयामल में भी कहा है—हे प्रिये! मन्त्रार्थ (मन्त्र और देवता में अभेद) का ज्ञान रखने वालों को मन्त्र की सिद्धि किस प्रकार होती है इसे सुनिए ॥ ११० ॥

### मन्त्रदेवतयोरभेदज्ञानकथनम्

**तच्च यामले—**

**मन्त्रार्थं देवतारूपं चिन्तनं परमेश्वरि ।**
**मन्त्रात्मकस्य देहस्य मन्त्रवाच्येन देवता ॥ ११० ॥**
**वाच्यवाचकभावेन अभेदं मन्त्रदेवयोः ।**
**देवता वाच्य इत्युक्तो मन्त्रो हि वाचकः स्मृतः ॥ १११ ॥**

यामल में भी बतलाया गया है—हे परमेश्वरि! देवता के स्वरूप का चिन्तन 'मन्त्रार्थ' कहा जाता है और मन्त्रात्मक देह के मन्त्र वाच्य देवता हैं। जिस प्रकार वाच्य और वाचक में अभेद सम्बन्ध होता है उसी प्रकार मन्त्र और देवता में भी अभेद सम्बन्ध जानना चाहिये क्योंकि मन्त्र वाचक हैं और उसके देवता वाच्य हैं। ऐसा समझना चाहिए ॥ ११०-१११ ॥

**वाचके विधिना ज्ञाते वाच्य एव प्रसीदति ।**
**ध्यानेन परमेशानि यद्रूपं समुपस्थितम् ॥ ११२ ॥**
**तदेव विद्धि मन्त्रार्थं येन सिद्ध्यति वै मनुः ।**
**मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ॥ ११३ ॥**

**शतकोटिजपेनापि तस्य सिद्धिर्न जायते ।**
**मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः स्मृताः ॥ ११४ ॥**

जब वाचक का ज्ञान सविधि हो जाता है तब वाच्य अपने आप प्रसन्न हो जाता है, हे परमेशानि! ध्यान से जो रूप उपस्थित होता है, वही मन्त्रार्थ है । उसी से मन्त्र की सिद्धि होती है । मन्त्रार्थ, मन्त्रचैत्तन्य और योनिमुद्रा का ज्ञान जिस साधक को नही है इसे तो सौ करोड़ जप से भी सिद्धि प्राप्त नहीं होती है । चैतन्य युक्त मन्त्रार्थ ही समस्त सिद्धि कारक कहे गये हैं ॥ ११२-११४ ॥

**चैतन्यरहिता मन्त्राः केवलं वर्णरूपिणः ।**
**फलं नैव प्रयच्छन्ति कल्पकोटिशतैरपि ॥ ११५ ॥**

चैतन्यरहित मन्त्र केवल वर्ण रूप ही हैं । अतः करोड़ों कल्प तक उस मन्त्र के जप करने से फल प्राप्त नहीं होता ॥ ११५ ॥

**लुप्तबीजा भवन्मन्त्राः न दास्यन्ति फलं प्रिये ।**
**स्थानस्था वरदा मन्त्राः ध्यानस्थाश्च वरप्रदाः ॥ ११६ ॥**
**ध्यानस्थानविनिर्मुक्ताः सुसिद्धा अपि वैरिणः ।**

हे प्रिये! जिस प्रकार लुप्त बीज कोई फल नहीं देते, उसी प्रकार चैतन्यरहित मन्त्र फल देने में असमर्थ होते हैं । अपने स्थान पर रहने वाले तथा अपने ध्यान में रहने वाले मन्त्र वर देने में समर्थ होते हैं । जो मन्त्र स्थान तथा ध्यान से रहित हैं वे सुसिद्ध होते हुये भी वर प्रदान करने में अशक्त रहते हैं । वे साधक के लिए शत्रु होते हैं ॥ ११६-११७ ॥

### मन्त्रस्थानकथनम्

**मन्त्रस्थानं प्रवक्ष्यामि सावधानाऽवधारय ॥ ११७ ॥**

हे प्रिये! अब मैं आपको मन्त्रों के स्थान को बतला रहा हूँ, आप सावधान होकर सुनिए ॥ ११७ ॥

**सकलं निष्कलं सूक्ष्मं तथा सकलनिष्कलम् ।**
**कलाभिन्नं कलातीतं षोढा मन्त्रं शिवोऽब्रवीत् ॥ ११८ ॥**

१. सकल, २. निष्कल, ३. सूक्ष्म, ४. सकलनिष्कल, ५. कलाभिन्न, और ६. कलातीत—ये कुल छह प्रकार के मन्त्र होते हैं । ऐसा शिवजी ने स्वयं ही बतलाया है ॥ ११८ ॥

**सकलं ब्रह्मरन्ध्रस्थं तदधो विद्धि निष्कलम् ।**
**मानसं सूक्ष्मनामानं हृत्स्थं सकलनिष्कलम् ॥ ११९ ॥**

**बिन्दुस्थितं कलाभिन्नं कलातीतं तदूर्ध्वतः ।**
**षट्स्थानसंस्थिता मन्त्राः स्थानस्थाः परिकीर्तिताः ॥ १२० ॥**

सकल मन्त्र ब्रह्मरन्ध्र में रहता है और उसके नीचे निष्कल मन्त्र रहता है। मानस में रहने वाला सूक्ष्म मन्त्र है । हृदय में सकल एवं निष्कल दोनों रहते हैं । कला रहित बिन्दु में स्थित कलातीत उससे भी ऊपर रहता है । इन छह स्थानों में रहने वाले मन्त्र 'स्थानस्थ' कहे जाते हैं ॥ ११९-१२० ॥

**चैतन्यस्य क्रमकथनम्**

**एवं स्थानं निगदितं चैतन्यस्य क्रमं शृणु ।**
**चैतन्यरहितं मन्त्रं यो जपेत् स तु पापकृत् ॥ १२१ ॥**

यहाँ तक स्थानस्थ मन्त्र के विषय में कहा गया । अब हे प्रिये! चैतन्य के क्रम को सुनिए । जो चैतन्यरहित मन्त्र का जप करता है वह पापी है ॥ १२१ ॥

**चैतन्यं सर्वमन्त्राणां शृणुष्व कमलानने ।**
**सौषुम्णाध्वन्युच्चरिता प्रभुत्वं प्राप्नुवन्ति ते ॥ १२२ ॥**

हे कमलानने! अब सभी मन्त्रों में रहने वाले चैतन्य के विषय में सुनिए। सुषुम्णा मार्ग से उच्चरित मन्त्र प्रभुत्व प्राप्त करते हैं ॥ १२२ ॥

**मन्त्राक्षराणि चिच्छक्तौ प्रोतानि परिभावयेत् ।**
**सा चैव परमव्योम्नि परमानन्दबृंहिते ॥ १२३ ॥**

मन्त्र के प्रत्येक अक्षर चिच्छक्ति में अनुस्यूत हैं ऐसा ध्यान करे । वह चिच्छक्ति परम व्योम में और वह परमव्योम परमानन्द में अनुस्यूत है ॥ १२३ ॥

**दर्शयत्यात्मसद्भावं पूजाहोमादिभिर्विना ।**
**इत्येतत् कथितं देवि मन्त्रचैतन्यमुत्तमम् ॥ १२४ ॥**

जो पूजा एवं होम के बिना साधक पर अपना सद्भाव प्रगट करता है हे देवि! यही मन्त्र का सर्वोत्तम चैतन्य है । इसे मैंने आपसे कहा ॥ १२४ ॥

**सौरे गाणपते शैवे शक्तिमन्त्रेऽथ वैष्णवे ।**
**मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रामुपाचरेत् ॥ १२५ ॥**

सौर मन्त्र, गाणपत्य मन्त्र, शैवमन्त्र, शाक्तमन्त्र तथा वैष्णव मन्त्रों में मन्त्र चैतन्य लाने के लिये योनिमुद्रा प्रदर्शित करे ॥ १२५ ॥

**योनिमुद्राकथनम्**

**उपविश्यासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः ।**

**षट्चक्रं चिन्तयेद् देवि प्राणायामपुरःसरः ॥ १२६ ॥**

मन्त्रज्ञ उपासक आसन पर पूर्वाभिमुख अथवा उत्तराभिमुख बैठकर पहले प्राणायाम करे । फिर षट्चक्र में न्यास करे ॥ १२६ ॥

**पार्ष्णिभागात् सुसम्पीड्य योनिमार्गं तथा गुदम्।**
**अपानमूलमाकृष्य मूलबन्धं विधाय च ॥ १२७ ॥**

अपने पार्ष्णि भाग से योनि मार्ग तथा गुदा स्थान को अच्छी तरह दबाकर बैठे । अपान वायु को ऊपर उठाकर मूलबन्ध करे ॥ १२७ ॥

**चतुर्दलं स्यादाधारं स्वाधिष्ठानं तु षड्दलम् ।**
**मणिपूरं दशदलं द्वादशारमनाहतम् ॥ १२८ ॥**
**विशुद्धं षोडशदलं भ्रमध्यं द्विदलं तथा ।**
**सहस्रारं ब्रह्मरन्ध्रं सदाशिवपुरं स्मृतम् ॥ १२९ ॥**

आधार चक्र में चार कमल दल, अधिष्ठान में छह दल, मणिपुर में दशदल, अनाहत चक्र में द्वादश दल विशुद्ध में षोडशदल एवं भ्रूमध्य में दो दल हैं । फिर सहस्रार ब्रह्मरन्ध्र का जिसे सदाशिवपुर कहते हैं उसका ध्यान करे ॥१२८-१२९॥

**शिवशब्देन स्वोपास्यदेवस्थानम् ।**

**आधारकन्दमध्यस्थं त्रिकोणमतिसुन्दरम् ।**
**त्रिकोणमध्ये देवेशि कामराजं सुलक्षणम् ॥ १३० ॥**
**कामबीजोद्भवं तत्र स्वयं भूलिङ्गमुत्तमम् ।**
**तस्योपरि पुनर्ध्यायेत् चित्कलां हंसमाश्रिताम् ॥ १३१ ॥**

'सदाशिवपुरम्' में शिव शब्द का अर्थ स्वोपास्य देव का स्थान समझना चाहिये—आधारकन्द के मध्य में एक सुन्दर त्रिकोण है । हे देवि! उस त्रिकोण के मध्य में सुलक्षण कामराज हैं । वहाँ कामबीज से उत्पन्न अत्यन्त उत्तम स्वयम्भू लिङ्ग विद्यमान् है । उसके ऊपर हंस के समान 'चित्कला' को साधक पुनः ध्यान करे ॥ १३०-१३१ ॥

**ध्यायेत् कुण्डलिनीं देवीं स्वयम्भूलिङ्गवेष्टिताम्।**
**चित्कलां कुण्डलिनीं च तेजोरूपां जगन्मयीम् ॥ १३२ ॥**

उस लिङ्ग को वेष्टित करती हुई कुण्डलिनी का ध्यान करे । वह कुण्डलिनी तेजोरूपा जगन्मयी साक्षात् चित्कला ही है ॥ १३२ ॥

**मन्त्रस्वरूपिणीं सर्वदेवरूपप्रकाशिनीम् ।**
**हंसेन मनुनोत्त्थाप्य भित्त्वा चक्राणि देशिकः ॥ १३३ ॥**

**ब्रह्मरन्ध्रं नयेद् योगी सुषुम्णावर्त्मना ततः।**
**सदाशिवेन संयोज्य सामरस्यं विभावयेत् ॥ १३४ ॥**

वह कुण्डलिनी मन्त्रस्वरूपिणी है सर्वदेव रूप प्रकाशिनी है आचार्य हंस मन्त्र से उस कुण्डलिनी को उठाकर चक्र का भेदन करते हुये सुषुम्णा मार्ग से ब्रह्मरन्ध्र में ले जावे। फिर साधक सदाशिव के साथ उसे संयुक्त कर सामरस्य की कल्पना करे ॥ १३३-१३४ ॥

**ततस्तु परमेशानि अक्षमालां विचिन्तयेत्।**
**विचित्रविसतन्त्वाभा ब्रह्मनाडीगतान्तरा ॥ १३५ ॥**

इसके बाद, हे परमेशानि! अक्षमाला का ध्यान करे, जिसकी आभा अद्‌भुत विसतन्तु के समान है जो ब्रह्मनाडी के भीतर रहने वाली है ॥ १३५ ॥

**तया संग्रथितां ध्यायेत् साक्षाज्जाग्रत्स्वरूपिणीम्।**
**अनुलोमविलोमेन मन्त्रवर्णविभेदतः ॥ १३६ ॥**
**मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितान् मनून्।**
**जपेल्लयपरो धीमान् यावत् चित्तं समासते ॥ १३७ ॥**
**सामरस्यामृतं तत्र जायते जतुसन्निभम्।**
**तेनामृतेन देवेशि तर्पयेत् परदेवताम् ॥ १३८ ॥**

जो उस विसतन्तु से ग्रथित है साधक ऐसी अक्षमाला का ध्यान करे। जो साक्षात् जाग्रत्स्वरूपा है, जो अनुलोम एवं विलोम मन्त्र और वर्णों के भेद वाली है, जिसके वर्ण मन्त्र से सम्पुटित है और जिसका मन्त्र वर्ण से सम्पुटित है। धीमान् साधक को ऐसी अक्षमाला पर तब तक जप करना चाहिए, जब तक चित्त का लय नहीं हो जाता। चित्त के लय हो जाने पर जब (लाह) के समान सामरस्यामृत उत्पन्न होता है। उस 'सामरस्य अमृत' से हे देवि! साधक अपने परदेवता का तर्पण करे ॥ १३६-१३८ ॥

**षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया।**
**आनयेत् तेन मार्गेण मूलाधारं पुनः सुधीः ॥ १३९ ॥**

उसी 'सामरस्यामृत धारा' से चक्र देवताओं का तर्पण कर पुनः सुधी आचार्य कुण्डलिनी को उसी मार्ग से मूलाधार में ले आवे ॥ १३९ ॥

**योनिप्रबन्धनाद् देवि योनिमुद्रेयमीरिता।**
**तव स्नेहान्महेशानि कथिता देवदुर्लभा ॥ १४० ॥**

हे देवि! योनि के प्रबन्धन के कारण हमने यहाँ तक योनिमुद्रा कही। हे

महेशानि! मैंने आपके स्नेह से वशीभूत होकर यह देव दुर्लभ मुद्रा आपको बतलायी है ॥ १४० ॥

### मन्त्रशिखानिरूपणम्

**शृणु मन्त्रशिखां देवि मन्त्रचैतन्यरूपिणीम् ।**
**येन विज्ञानमात्रेण क्षिप्रं सिद्ध्यति मन्त्रराट् ॥ १४१ ॥**

हे देवि अब मन्त्र चैतन्य स्वरूपा 'मन्त्र शिखा' के विषय में सुनिए । जिसके जान लेने मात्र से मन्त्रराज की शीघ्र सिद्धि हो जाती है ॥ १४१ ॥

**मूलकन्दे तु या देवी भुजगाकाररूपिणी ।**
**तद्भ्रमावर्त्तवातो यः प्राण इत्युच्यते बुधैः ॥ १४२ ॥**

मूलकन्द में भुजगाकाररूपिणी जिस कुण्डलिनी का निवास है । उसके भ्रमावर्त्त से जो वात उत्पन्न होता है बुद्धिमान् लोग उसी को प्राण कहते हैं ॥ १४२ ॥

**भिल्ली चाव्यक्तमधुरा कूजन्ती सततोत्थिता ।**
**गच्छन्ती ब्रह्मरन्ध्रं सा प्रविशन्ती स्वकेतनम् ॥ १४३ ॥**
**यातायातक्रमेणैव कुर्यात्तत्र मनोलयम् ।**
**तेन मन्त्रशिखायाता सर्वमन्त्रप्रदीपिका ॥ १४४ ॥**
**तमःपूर्णगृहे यद्वन्न किञ्चित् प्रतिभासते ।**
**शिखाहीनस्तथा मन्त्रो न सिद्ध्यति कदाचन ॥ १४५ ॥**

वह अत्यन्त मधुर भाषण करने वाली, भिलनी के समान सतत जागरूक रहकर ब्रह्मरन्ध्र में जाती है । फिर वहाँ से अपने स्थान पर लौट आती है । इस प्रकार अपने मन को भी यातायात रूप से उसमें लय करे । उससे सर्व मन्त्र प्रदीपिका 'मन्त्र शिखा' उत्पन्न होती है । जिस प्रकार अन्धकार पूर्ण गृह में दीपक के बिना कुछ दिखाई नहीं पड़ता । उसी प्रकार शिखाहीन मन्त्र से कभी कोई सिद्धि नहीं होती ॥ १४३-१४५ ॥

**शिखोपदेशः सर्वत्र गोपितः परमेश्वरि।**
**तस्मात् त्वयापि गिरिजे गोपनीयः प्रयत्नतः ॥ १४६ ॥**

हे परमेश्वरि! सभी शास्त्रों में शिखा उपदेश गुप्त रखा गया है । इसलिये हे गिरिजे! आप भी प्रयत्नपूर्वक इस शिखा के उपदेश को गुप्त रखना ॥ १४५ ॥

### जपयज्ञविधौ सङ्केतदशकविधानम्

**अथो सङ्केतदशकं जपयज्ञविधौ शृणु ।**
**यमकृत्त्वा नरो देवि सिद्धिं प्राप्नोति वै जपात्॥ १४७ ॥**

अब जपयज्ञ के विधान में दश प्रकार के सङ्केतों को सुनिए। जिसके न करने से भी मनुष्य को जप की सिद्धि नहीं होती है ॥ १४७ ॥

**मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र मारुतः।**
**न सिद्ध्यति वरारोहे कल्पकोटिजपादपि ॥ १४८ ॥**

मन कहीं और है, शिव कहीं अन्यत्र हैं, शक्ति अन्यत्र है, वायु अन्यत्र है, हे वरारोहे! इस प्रकार करोड़ों कल्प तक जप किया जाय तो भी सिद्धि नहीं प्राप्त होती ॥ १४८ ॥

**सङ्केतदशकं विद्धि सूतकद्वयमोचनम् ।**
**ततश्च कुल्लुकां सेतुं महासेतुं वरानने ॥ १४९ ॥**
**निर्वाणं मन्त्रचैतन्यं मन्त्राणां च नवाङ्कदाम् ।**
**वासनाश्च मनूनां हि मन्त्रतत्त्वविमर्शनम् ॥ १५० ॥**
**सामरस्यं च मन्त्राणां सङ्केतदशकं त्विदम् ।**
**मुखशुद्धिस्तथैवात्र कीर्तितैकादशोऽपरः ॥ १५१ ॥**

अब आप उन दश सङ्केतों को सुनिए—दो सूतकों से मुक्ति, तदनन्तर कुल्लुका, फिर सेतु, महासेतु, निर्वाण, मन्त्रचैतन्य, मन्त्रों का नवाङ्कदान मन्त्रों की वासना, मन्त्रतत्त्वविमर्श और मन्त्रों का सामरस्य—ये दश संख्याक सङ्केत हैं। एक और मुखशुद्धि भी है। इस प्रकार कुल एकादश सङ्केत हुये ॥ १४९-१५१॥

**एतज्ज्ञानं विना भद्रे जपयज्ञं करोति यः ।**
**वृथा श्रमेण किं तस्य सिद्धिर्नैव च नैव च ॥ १५२ ॥**

हे भद्रे! जो इनको बिना जाने जप यज्ञ करता है उसका सारा श्रम व्यर्थ है। क्या उसको सिद्धि प्राप्त हो सकती है? नहीं-नहीं कदापि नहीं ॥ १५२ ॥

**शाक्ते सौरे तथा शैवे वैष्णवेऽन्ये तथा मनौ ।**
**सङ्केतदश संयुक्तो जपन् सिद्धिमवाप्नुयात् ॥ १५३ ॥**

चाहे शाक्त मन्त्र हो, चाहे सौर मन्त्र, चाहे शैव अथवा वैष्णव मन्त्र हो, इन दश सङ्केतों के ज्ञानपूर्वक जप करने से सिद्धि प्राप्त होती है ॥ १५३ ॥

### १. सूतकद्वयकथनम्

**तत्क्रमेणेह गिरिजे कथयामि समासतः ।**
**मन्त्रोच्चारणवेलायां सम्भवेज्जातसूतकम् ॥ १५४ ॥**
**समाप्तौ च तथा देवि सम्भवेन्मृतसूतकम् ।**
**सूतकद्वयसंयुक्तो यो मन्त्रः स न सिद्ध्यति ॥ १५५ ॥**

**१. सूतकद्वयकथन**—हे गिरिजे! अब मैं उन दशों सङ्केतों को सङ्क्षेप में क्रमश: आपसे कह रहा हूँ—मन्त्रों के उच्चारण वेला में यदि जातसूतक और समाप्ति की वेला में मृत सूतक पड़ जावे तो इस प्रकार दो सूतकों से युक्त मन्त्र का जप सिद्धि प्रदान नहीं करता ॥ १५४-१५५ ॥

**तस्मात्तु परमेशानि सूतकद्वयमोचनम् ।**
**कृत्वा जपेद् वरारोहे मन्त्रं स्वाभीष्टसिद्धये ॥ १५६ ॥**

इसलिये हे परमेशानि! दोनों सूतकों से मुक्त होकर अपनी अभीष्ट सिद्धि के लिये मन्त्र का जप करे ॥ १५६ ॥

**प्रणवान्तरितं कृत्वा सप्तवारं जपेन्मनुम् ।**
**आदावन्ते भवेद् देवि सूतकद्वयवर्जितः ॥ १५७ ॥**

प्रणव से सम्पुटित कर सात बार मन्त्र का जप आदि में और अन्त में करे तब सूतक द्वय से साधक मुक्त हो जाता है ॥ १५७ ॥

**सूतकद्वयसंत्यक्तो मन्त्रः सर्वसमृद्धिदः ।**
**चतुर्दशस्वरं पुण्यं दीर्घप्रणवमुच्यते ॥ १५८ ॥**
**तस्मात् सर्वत्र शूद्रस्तु दीर्घप्रणवयुग् जपेत् ।**
**कुल्लुकां शृणु देवेशि मन्त्रसिद्धिप्रदायिनीम् ॥ १५९ ॥**

दोनों सूतकों से संत्यक्त मन्त्र सब प्रकार की सिद्धि देता है अकार से लेकर औ पर्यन्त चौदह स्वर दीर्घ प्रणव कहा जाता है । अत: शूद्र साधक दीर्घ प्रणव के पश्चात् मन्त्र का जप करे । अब हे देवेशि! मन्त्र में सिद्धि देने वाली कुल्लुका को सुनिए ॥ १५८-१५९ ॥

### २. कुल्लुकाकथनम्

**एनां जपेन्मूर्ध्नि देशे दशधा साधकोत्तमः ।**
**वाग्भवं पूर्वमुद्धृत्य मन्मथं तदनन्तरम् ॥ १६० ॥**
**भृगुबीजं समुद्धृत्य भृगुबीजयुतं कुरु ।**
**बालात्रिपुरसुन्दर्याः कुल्लुकेयं महेश्वरि ॥ १६१ ॥**

**२. कुल्लुकाकथन**—उत्तम साधक इसे मूर्धा प्रदेश में इस मन्त्र का दश बार जप करे । पहले वाग्भव (ऐं), इसके बाद मन्मथ बीज (क्लीं), इसके बाद भृगु बीज (सं) और पुन: उसे भृगुयुक्त (सं:) करे । हे महेश्वरि! यह बाला त्रिपुरसुन्दरी का कुल्लुका है ॥ १६०-१६१ ॥

**कामधेनुं समुद्धृत्य लोकवन्द्यां ततः परम् ।**

**वामनीयकबीजं तु पुनरुद्धृत्य सुन्दरि ॥ १६२ ॥**
**इदं बीजत्रयं भद्रे भैरवीकुल्लुका मता ।**
**तारायाः कुल्लुका देवि महानीलसरस्वती ॥ १६३ ॥**

कामधेनु (?), उसके बाद लोकवन्द्या, पुनः वामनीयक बीज (?) का उद्धार करे । हे सुन्दरि! हे भद्रे! ये तीनों बीज भैरवी कुल्लुका कहे गये हैं । हे देवि! तारा की कुल्लुका महानील सरस्वती हैं ॥ १६२-१६३ ॥

**पञ्चाक्षरी कालिकायास्तदुद्धारं शृणु प्रिये ।**
**काली कूर्चं वधूमायाफडन्ता परमेश्वरि ॥ १६४ ॥**

हे प्रिये! कालिका की पञ्चाक्षरी कुल्लुका है उसका उद्धार सुनिए । काली (क्रीं), कूर्च (हूं), वधू (स्त्रीं), माया (ह्रीं), इसके बाद फट्—ये पञ्चाक्षर कालिका की कुल्लुका है ॥ १६४ ॥

**छिन्नायाश्च महेशानि कुल्लुकाष्टाक्षरी मता ।**
**वज्रवैरोचनीये च ततो वर्म प्रकीर्तितम् ॥ १६५ ॥**
**सम्पत्प्रदायाः प्रथमं भैरव्याः कुल्लुका मता ।**
**श्रीमत्त्रिपुरसुन्दर्याः कुल्लुका द्वादशाक्षरी ॥ १६६ ॥**

हे महेशानि! छिन्नमस्ता की कुल्लुका अष्टाक्षरी बतलायी गई है । वज्र (?) वैरोचनीय (?) कवचाय हुं फट् । सम्पत्प्रदान करने वाली भैरवी की प्रथम वाग्बीज (ऐं) कुल्लुका कही गई है । श्रीमत् त्रिपुरसुन्दरी की कुल्लुका द्वादशाक्षरी बतलायी गयी है ॥ १६५-१६६ ॥

**वाग्भवं प्रथमं बीजं कामराजमनन्तरम् ।**
**लज्जाबीजमथोच्चार्य त्रिपुरेति प्रकीर्तयेत् ॥ १६७ ॥**
**ततः स्याद् भगवतिपदमन्ते ठद्वयमुद्धरेत् ।**
**मायाबीजं च भुवना कुल्लुका परिकीर्तिता ॥ १६८ ॥**

प्रथम वाग्बीज (ऐं), इसके बाद कामराज (क्लीं), फिर लज्जा बीज (ह्रीं), इनके उच्चारण के बाद 'त्रिपुरे भगवति स्वाहा' । इसी प्रकार भुवनेश्वरी की मायाबीज (ह्रीं) कुल्लुका कही गई है ॥ १६७-१६८ ॥

**सरस्वत्या वाग्भवं तु आनन्दाया अनङ्गकम् ।**
**आद्यन्ते परमेशानि कूर्चबीजद्वयं कुरु ।**
**महिषघ्न्यास्तदा देवि! कुल्लुका भवति प्रिये ॥ १६९ ॥**

सरस्वती की कुल्लुका वाग्भव (ऐं), आनन्दा का अनङ्गक (?) हे परमेशानि!

आदि और अन्त में दो कूर्च बीज (हूं हूं) करने से महिषघ्नी की कुल्लुका बन जाती है ॥ १६९ ॥

**तथान्यासां तु विद्यानां सर्वासां च महेश्वरि ।**
**मायाबीजं च देवेशि कुल्लुका परिकीर्तिता ॥ १७० ॥**

हे महेश्वरि! अन्य सभी विद्याओं की कुल्लुका मायाबीज (ह्रीं) है ॥ १७० ॥

**श्रीकृष्णस्य च सम्प्रोक्ता कुल्लुका कामबीजकम्।**
**श्रीरामे हनुमन्मन्त्रो द्वादशार्णश्च कुल्लुका ॥ १७१ ॥**
**वायुसूनोश्च रामस्य मन्त्रराजः षडक्षरः ।**

श्रीकृष्ण की कुल्लुका कामबीज (क्लीं) कही गई है । श्रीराम के मन्त्र में द्वादशाक्षर-हनूमन्मन्त्र कुल्लुका कही गई है । हनुमान् और श्रीराम का षडक्षर मन्त्रराज उनकी कुल्लुका है ॥ १७१-१७२ ॥

**नमो नारायणायेति प्रणवाद्या च कुल्लुका ॥ १७२ ॥**
**विष्णुमन्त्रे द्वादशार्णो सः स्यादष्टाक्षरे मनौ ।**
**शिवे प्रासादबीजं तु मञ्जुघोषे षडक्षरम् ॥ १७३ ॥**
**शरभे तु नृसिंहस्य नृसिंहे शरभस्य च ।**
**गणेशे कुल्लुका प्रोक्ता बीजं तस्यैव भामिनि ॥ १७४ ॥**

'ॐ नमो नारायणाय' अष्टाक्षर विष्णु मन्त्र में द्वादशाक्षर कुल्लुका है । शिव मन्त्र में प्रासाद बीज (?) कुल्लुका है । मञ्जुघोष में षडक्षर कुल्लुका कही गयी है। शरभ में नृसिंह बीज (क्ष्रौं) कुल्लुका है । नृसिंह मन्त्र में शरभ बीज (?) कुल्लुका है । हे भामिनि! इसी प्रकार गणेश के मन्त्र में गणेशबीज (गं) कुल्लुका बतलायी गयी है ॥ १७२-१७४ ॥

**सावित्री सूर्यमन्त्रे तु कुल्लुका परिकीर्तिता ।**
**अपराणां च देवानां मन्त्रमात्रं प्रकीर्तितम् ॥ १७५ ॥**

सूर्य के मन्त्र में सावित्री कुल्लुका है । अन्य देवों में कुल्लुका समस्त मन्त्र कही गई है ॥ १७५ ॥

**आदावन्ते जपस्याथ कुल्लुकामनिशं शिवे।**
**मूर्घ्नि हस्तं समाधाय जपेदेनामतन्द्रितः ॥ १७६ ॥**

हे शिवे! इसलिये जप के आदि तथा अन्त में सर्वदा कुल्लुका का जप करे । इस कुल्लुका का जप सावधान होकर सिर पर हाथ रखकर करे ॥ १७६ ॥

**अज्ञात्वा कुल्लुकां देवि महामन्त्रं जपेत्तु यः ।**

**चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो धनम् ॥ १७७ ॥**

हे देवि! कुल्लुका के ज्ञान के बिना जो मन्त्रज्ञ साधक महामन्त्र का जप करता है; उसके १. आयु, २. विद्या, ३. यश और ४. धन—इन चारों का नाश हो जाता है ॥ १७७ ॥

### ३. सेतुविधानम्

**अथातः सम्प्रवक्ष्यामि तच्छृणुस्व प्रियंवदे ।**
**यस्याज्ञानेन विफलं जपस्तोत्रादिकं भवेत् ॥ १७८ ॥**

**३. सेतुविधान**—हे प्रियम्वदे! अब इसके बाद जो कहता हूँ उसे सुनिए, जिसके न जानने से जप स्तोत्रादि विफल हो जाते हैं ॥ १७८ ॥

**जपादौ च जपान्ते च दशकृत्वः सदा जपेत् ।**

जिसे जप के आदि में तथा जप के अन्त में साधक को दश बार सदा जप करना चाहिये ॥ १७९ ॥

**विप्राणां प्रणवः सेतुः क्षत्रियाणां तथैव च ।**
**वैश्यानां तु फडर्णः स्यान्मात्रा शूद्रस्य कथ्यते ॥ १७९ ॥**

ब्राह्मणों का सेतु प्रणव (ॐ) है । क्षत्रियों का भी वही है । वैश्यों का सेतु 'फट्' वर्ण है । शूद्र का सेतु 'मात्रा' (अ) है ॥ १७९ ॥

**स्रवत्यरुद्धः पूर्वं हि परस्ताच्च विशीर्यते ।**
**निःसेतुः सलिलं यद्वत् क्षणान्निम्नं प्रसर्पति ॥ १८० ॥**
**मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति जापिनम् ।**
**अजप्त्वा हृदि देवेशि यो वै मन्त्रं समुच्चरेत् ॥ १८१ ॥**

जिस प्रकार सेतुरहित जल क्षण मात्र में नीचे की ओर बह जाता है उसी प्रकार बिना सेतु का मन्त्र पहले ही चू जाता है और अन्त में जाकर नष्ट हो जाता है । हे देवेशि! सेतु का जप किये बिना जो साधक मन्त्र का जप करता है, वह मन्त्र जप करने वाले का सर्वनाश कर देता है ॥ १८०-१८१ ॥

**न तस्य जायते सिद्धिः कालेनापि महेश्वरि ।**
**आदौ जपेन्महासेतुं ततः सेतुं ततो मनुम् ॥ १८२ ॥**

हे महेश्वरि! बिना सेतु के बहुत काल तक जप किये जाने पर भी सिद्धि नहीं प्राप्त होती । साधक प्रथम महासेतु का जप करे । फिर सेतु का जप करे। तदनन्तर अपने मन्त्र का जप करे ॥ १८२ ॥

### ४. महासेतुकथनम्

**महासेतुश्च देवेशि सुन्दर्या भुवनेश्वरी ।**
**कालिकायाः स्वबीजं तु तारायाः कूर्चमुच्यते ॥ १८३ ॥**

**४. महासेतुकथन**—हे देवेशि! सुन्दरी का, भुवनेश्वरी का और कालिका का अपना-अपना बीज तथा तारा का कूर्चबीज (हूँ) महासेतु कहा जाता है ॥ १८३ ॥

**अन्यासां च वधूबीजं गोपालेऽनङ्गबीजकम् ।**
**ग्लौं बीजं गजवक्त्रे स्यान्नारसिंहे नृसिंहकम् ॥ १८४ ॥**

अन्य देवताओं का वधू (स्त्रीं) बीज महासेतु है, गोपाल में अनङ्गबीज (?) महासेतु है । गणेश के मन्त्र का महासेतु ग्लौं बीज है, नृसिंह मन्त्र में नृसिंह बीज (क्ष्रौं) महासेतु है ॥ १८४ ॥

**श्रीरामे रामबीजं च शिवे प्रासादमम्बिके ।**
**सूर्यादौ भुवनेशीति महासेतुर्वरानने ॥ १८५ ॥**

श्रीराम में राम बीज (रां) शिव में प्रासाद बीज (?) महासेतु है । हे वरानने! सूर्यादि में भुवनेशी बीज (ह्रीं) महासेतु है ॥ १८५ ॥

**महासेतुं विना देवि न जप्तव्यं कदाचन ।**
**सेतुविद्या महेशानि साक्षाद् ब्रह्मस्वरूपिणी ॥ १८६ ॥**

हे देवि! महासेतु के बिना कदापि जप न करे । हे महेशानि! सेतुविद्या साक्षात् ब्रह्मस्वरूपा है ॥ १८६ ॥

**पार्श्वयोः सेतुमादाय जपकर्म समाचरेत् ।**
**शृणु देवि प्रवक्ष्यामि सुन्दर्याः सेतुमुत्तमम् ॥ १८७ ॥**

अपने दोनों पार्श्व में सेतु रखकर जप कार्य करे । हे देवि! अब सुन्दरी का सर्वोत्तम सेतु सुनिए । मैं कह रहा हूँ ॥ १८७ ॥

**मायाबीजं समुद्धृत्य सौभाग्यं च ततः परम् ।**
**पुनर्मायां समुद्धृत्य विद्येयं त्र्यक्षरी परा ॥ १८८ ॥**
**सुन्दरीविषये सेतुः कथितः परमेश्वरि ।**
**अथ वक्ष्ये महेशानि भैरव्याः सेतुमुत्तमम् ॥ १८९ ॥**

प्रथम मायाबीज (ह्रीं) का उद्धार करे । इसके बाद सौभाग्य (?) बीज का, पुनः माया बीज (ह्रीं) का उद्धार करे । यह त्र्यक्षरी विद्या परासुन्दरी का सेतु है । हे परमेश्वरि! मैंने सुन्दरी के विषय में सेतु कह दिया अब आपको भैरवी का सेतु बतला रहा हूँ ॥ १८८-१८९ ॥

**आकाशबीजमुद्धृत्य सकारं च ततः परम् ।**
**औदर्यसंयुतं कृत्त्वा बिन्द्वर्ध संयुतं कुरु ॥ १९० ॥**

आकाश बीज (हं) का उद्धार कर सकार उसको औदर्य (औ) से संयुक्त कर अर्ध बिन्दु से संयुक्त करे ॥ १९० ॥

**इयं विद्या वरारोहे भैरव्याः सेतुरूपिणो ।**
**प्रणवं पूर्वमुच्चार्य हल्लेखां तदनन्तरम् ॥ १९१ ॥**
**एषा च द्व्यक्षरी विद्या तारायाः सेतुरुच्यते ।**
**ऐश्वर्यं बीजमुद्धृत्य बिन्द्वर्धसंयुतं कुरु ॥ १९२ ॥**
**कूर्चबीजं ततो देवि पुनरैश्वर्यमुद्धरेत् ।**
**सेतुरेषो महेशानि श्यामायाः परिकीर्तितः ॥ १९३ ॥**

हे वरारोहे! यह (ह्सौँ) विद्या भैरवी की सेतुस्वरूपा है । (ह्सौ) पहले प्रणव उच्चारण करे । तदनन्तर हल्लेखा (ह्रीं) का उच्चारण करे । यह द्वयक्षरी तारा की सेतुविद्या कही गई । ऐश्वर्यबीज (?) का उद्धार कर उसको अर्ध बिन्दु से संयुक्त करो । इसके बाद पुनः कूर्चबीज, तदनन्तर पुनः ऐश्वर्यबीज का उद्धार करे । हे महेशानि! यह श्यामा का सेतु कहा गया ॥ १९१-१९३ ॥

**भुवनायाश्च प्रणवं हल्लेखां तदनन्तरम् ।**
**ततश्च परमेशानि प्रणवद्वयमुद्धरेत् ।**
**भुवनेशीं वह्निजायां सर्वसेतौ नियोजयेत् ॥ १९४ ॥**

भुवनेश्वरी का प्रणव (ॐ), इसके बांद हल्लेखा (ह्रीं), इसके बाद दो प्रणव (ॐ ॐ) का उद्धार करे । फिर भुवनेशी 'स्वाहा' यह सभी सेतु में युक्त करना चाहिए ॥ १९४ ॥

**अथवा देवदेवीषु प्रणवं सेतुरूपिणम् ।**
**सर्वेषां शूद्रजातीनामौकारः सेतुरुच्यते ॥ १९५ ॥**

अथवा सभी देवी-देवताओं में प्रणव सेतु स्वरूप है । सभी शूद्र जातियों के लिये औकार सेतु कहा गया है ॥ १९५ ॥

**यत्र यत्र विनिर्दिष्टं सेतुमन्त्रं शुचिस्मिते ।**
**तन्मन्त्रं त्रिगुणं कृत्त्वा सेतुमन्त्रं कुरु प्रिये ॥ १९६ ॥**

हे शुचिस्मिते! हमने जहाँ-जहाँ सेतुमन्त्र का निर्देश किया है, उसमें मन्त्र को त्रिगुणित कर सेतुमन्त्र का उच्चारण करे ॥ १९६ ॥

**सेतुः स्यात् कवचादीनां मन्त्रत्वेन महेश्वरि।**

**सेतुं विना महेशानि कवचादीन् पठेच्च यः ॥ १९७ ॥**
**स भक्ष्यो जायते देवि योगिनीनां शुचिस्मिते ।**
**वैष्णवे गाणपत्ये च शैवे शाक्ते महेश्वरि ।**
**आदावन्ते महासेतुं दत्त्वा स्वकवचं पठेत् ॥ १९८ ॥**

हे महेश्वरि! कवचादि भी मन्त्र स्वरूप बतलाये गये हैं । अत: कवचादि का भी सेतु अवश्य होना चाहिये । जो मन्त्रज्ञ सेतु के बिना कवचादि का पाठ (उच्चारण) करता है, हे शुचिस्मिते! वह योगिनियों का भक्ष्य हो जाता है । अत: वैष्णव, गाणपत्य, शैव एवं शाक्त में प्रथम महासेतु पढ़कर तदनन्तर तत्तत् कवच पढ़ना चाहिए ॥ १९७-१९८ ॥

### ५. निर्वाणकथनम्

**अथ वक्ष्यामि निर्वाणं महासिद्धिकरं शिवे ।**
**प्रणवं पूर्वमुच्चार्य मातृकार्णान् समुच्चरेत् ॥ १९९ ॥**

**५. निर्वाणकथन**—हे शिवे! अब महासिद्धिकारक 'निर्वाण' कह रहा हूँ । प्रथम प्रणव का उच्चारण कर पश्चात् मातृका वर्णों का उच्चारण करे ॥ १९९ ॥

**ततो मूलं महेशानि ततो वाग्भवमुच्चरेत् ।**
**मातृकार्णान् समुच्चार्य पुनः प्रणवमुच्चरेत् ॥२००॥ इति ।**

**श्रीकुले कालीकुले तु—**

**प्रणवं मातृकां कूर्चं मायां लक्ष्मीं ततो मनुम् ।**
**प्रणवं मातृकां कूर्चं मायां लक्ष्मीं च सप्तधा ।**
**एवं पुटितमन्त्रं तु प्रजपेन्मणिपूरके ॥ २०१ ॥**

हे महेशानि! इसके बाद मूल, पुन: वाग्भव (ऐं), तदनन्तर मातृका वर्णों का उच्चारण कर पुन: प्रणव का उच्चारण करे । यह श्रीकुल में कहा गया है कालीकुल में तो प्रणव (ॐ), फिर मातृका, फिर कूर्च (हूँ), फिर माया (ह्रीं), फिर लक्ष्मी (श्रीं), तदनन्तर मन्त्र, फिर प्रणव (ॐ), फिर मातृका, फिर कूर्च (हुँ), फिर माया (ह्रीं), फिर लक्ष्मी (श्रीं)—इस प्रकार सम्पुटित मन्त्र को सात बार मणिपूर चक्र में जप करे ॥ २००-२०१ ॥

**अयं निर्वाण उदितः साक्षान्निर्वाणदायकः ।**
**चैतन्यं सम्प्रवक्ष्यामि मन्त्राणां परमेश्वरि ॥ २०२ ॥**

यह निर्वाण कहा गया जो साक्षात् निर्वाणदायक है । हे परमेश्वरि! अब मन्त्रों का चैतन्य कहता हूँ ॥ २०२ ॥

### ६. चैतन्यकथनम्

**हृदयेऽष्टदलं चिन्त्य तन्मध्ये मूलदेवताम् ।**
**ध्यानोक्तरूपां सञ्चिन्त्य मानसैः पूज्य तां नमेत् ॥ २०३ ॥**

**६. चैतन्यकथन**—हे महेश्वरि! हृदय में अष्टदल का ध्यान करे । उस अष्टदल कमल के मध्य में मूल देवता का ध्यान करे । इस प्रकार ध्यान कर मानस उपचारों से देवता का पूजन कर उनको नमस्कार करे ॥ २०३ ॥

**आज्ञामादाय देवेशि मूलाधारं ततो यजेत् ।**
**तत्रस्थां परमां देवीं कुण्डलीं मन्त्रमातरम् ॥ २०४ ॥**
**गत्वोत्त्थाप्य स्वयं गच्छेद् ब्रह्मरन्ध्रे तया सह ।**
**कुण्डलिन्या समाश्लिष्टं पूज्यपादं प्रणम्य च ॥ २०५ ॥**

हे देवेशि! उन इष्टदेवता की आज्ञा लेकर मूलाधार में इस प्रकार यजन करे । मूलाधार में सभी मन्त्रों की माता परमादेवी कुण्डली का जहाँ निवास है, वहाँ जाकर उनको जगावे । उनके साथ ब्रह्मरन्ध्र में जाकर कुण्डलिनी को आलिङ्गित करने वाले पूज्यपाद सदाशिव को प्रणाम करे ॥ २०४-२०५ ॥

**ब्रह्मरन्ध्रं समासाद्य संविशेत् साधकोत्तमः ।**
**ब्रह्मरन्ध्रगतान् ताँस्तान् मत्वा साधकसत्तमः ॥ २०६ ॥**
**ब्रह्मनिस्पन्दनिर्धूतान्यक्षराणि मनोः प्रिये ।**
**प्रक्षालितानि मत्वा तु चिच्छक्तौ ग्रथितानि वै ॥ २०७ ॥**
**सहस्रदलतो मूलं मूलादाब्रह्मरन्ध्रकम् ।**
**सुषुम्णामध्यगान्येव ध्यात्वा सप्तावृतीर्नरः ॥ २०८ ॥**

फिर ब्रह्मरन्ध्र में साधकोत्तम प्रवेश करे । फिर वही साधकसत्तम ब्रह्मरन्ध्र में स्थित रहने मन्त्रों के निस्पन्द से निर्धूत अक्षरों को देखे । उन्हें प्रक्षालित समझे और चिच्छक्ति में ग्रथित जानकर उनका ध्यान करे । मन्त्रज्ञ फिर सहस्र दल से मूल में प्रवेश करे । मूल से ब्रह्मरन्ध्र में प्रवेश करना चाहिए । इन सभी स्थानों में सुषुम्णामार्ग के मध्य से जाना होता है । साधक को इनका सात बार ध्यान करना चाहिए ॥ २०६-२०८ ॥

**जपेत् स्वस्थमना बुद्ध्या गुरुमण्डलगः सुधीः ।**
**अनेन क्रमयोगेन मन्त्रश्चैतन्यगो भवेत् ॥ २०९ ॥**

फिर सुधी साधक अपनी बुद्धि से गुरुमण्डल स्थान में पहुँच कर स्वस्थ चित्त हो अपने इष्ट मन्त्र का जप करे । ऐसा करने से मन्त्र चैतन्य होता है ॥ २०९ ॥

### ७. नवाङ्कन

**नवाङ्कनं तु मन्त्राणां सङ्केतगहनं शिवे ।**
**ज्ञेयं पूज्यमुखाम्भोजात् लिखितुं नैव शक्यते ॥ २१० ॥**

**७. नवाङ्कन**—हे शिवे! मन्त्रों का नवाङ्कन अत्यन्त सङ्केत से भी गहन है अत: साधक उसे अपने पूज्यों के मुख द्वारा ही ज्ञात करे । उसका लिखना सम्भव नहीं है ॥ २१० ॥

### ८. वासनाकथनम्

**देवताभेदतो नानामन्त्रास्तेषां तु वासना: ।**
**अर्था: श्रीनाथतो बोध्या: सर्वसाधारणं शृणु ॥ २११ ॥**

**८. वासनाकथन**—देवता के भेद से जो मन्त्रों के अनेक भेद हो जाते हैं, वही वासनायें हैं । मन्त्रों का अर्थ भगवान् श्रीनाथ की पूजा से जानना चाहिये । अब जो सर्वसाधारण है उसे सुनिए ॥ २११ ॥

**उच्यते देवदेवेशि मन्त्रतत्त्वविवेचनम् ।**
**यद् ज्ञात्वा साधकश्रेष्ठो मन्त्रतत्त्वमवाप्नुयात् ॥ २१२ ॥**

अब हे देवदेवेशि! मन्त्रतत्त्व का विवेचन कह रहा हूँ साधक श्रेष्ठ जिसे जानकर मन्त्रतत्त्व प्राप्त कर लेता है ॥ २१२ ॥

### ९. मन्त्रतत्त्वविवेचनम्

**यतोऽक्षराद् यदुत्पन्नं तत्त्वं तत्त्वनिभाक्षरम् ।**
**भूतशुद्धिविधौ प्रोक्तं तादृक् ध्येयं मनोरमे ॥ २१३ ॥**

**९. मन्त्रतत्त्वविवेचन**—जिस प्रकार अक्षर ब्रह्म से तत्त्वों की उत्पत्ति हुई है उसी प्रकार इस वर्ण रूप अक्षर से भी तत्त्वों की उत्पत्ति हुई है । हे मनोरमे! हमने यह बात भूतशुद्धि प्रकरण में कह दी है ॥ २१३ ॥

**तेजोरूपास्ततो वर्णा विभाव्यास्तदनु प्रिये ।**
**तत्तेजोभि: समुद्भूतं स्वेष्टदेवाकृतिं स्मरेत् ॥ २१४ ॥**

हे प्रिये! भूतशुद्धि के पश्चात् तेजो युक्त वर्ण का ध्यान करे । उसी तेज से उत्पन्न स्वकीय इष्ट देवता की आकृति का स्मरण करे ॥ २१४ ॥

**एवं मन्त्रं दशावृत्त्या जपादौ भावयेत् प्रिये ।**
**इति ते कथितं देवि मन्त्रतत्त्वविवेचनम् ।**
**यत् कृत्त्वा मन्त्रविद् देवि लभते मन्त्ररूपताम् ॥ २१५ ॥**

हे प्रिये! इस प्रकार मन्त्र का ध्यान दश आवृत्ति में करे। हे देवि! इस प्रकार हमने मन्त्रतत्त्व का विवेचन कहा। जिसको करने पर साधक साक्षात् मन्त्र स्वरूप हो जाता है ॥ २१५ ॥

**१०. सामरस्यकथनम्**

**अथोच्यते महेशानि सामरस्यं मनोः शिवे।**
**यद् विधाय नरा यान्ति कैवल्यपदमुत्तमम् ॥ २१६ ॥**

**१०. सामरस्यकथन**—अब हे शिवे! मन्त्र का सामरस्य कह रहा हूँ जिसके कर लेने से साधक सर्वोत्तम कैवल्य पद प्राप्त कर लेते हैं ॥ २१६ ॥

**उपास्य देवताकारं प्रथमं वर्णमम्बिके ॥ २१७ ॥**
**ध्यात्वा तेजोमयो भूत्वा विचिन्तेदग्रिमाक्षरम्।**
**द्वितीयमपि चार्वङ्गि! स्वेष्टरूपं विभावयेत् ॥ २१८ ॥**

हे अम्बिके! प्रथम वर्णों की उपासना देवता के आकार में करना चाहिए। इस प्रकार ध्यान कर साधक तेजोमय स्वरूप होकर अग्रिम अक्षर का ध्यान करे। इसी प्रकार मन्त्रज्ञ, हे चार्वङ्गि! द्वितीय अक्षर का भी अपने इष्ट देवता के रूप में ध्यान करे ॥ २१७-२१८ ॥

**तेजो भूत्वा ततो देवि प्रविशेदग्रिमाक्षरम्।**
**एवमन्त्यान्त्यमबले भाव्यं साधकसत्तमैः ॥ २१९ ॥**
**तेजो भूत्वा समग्राणां वर्णानां वरवर्णिनि!।**
**प्रविष्टं निजदेहे तदिति मत्वा विशालधीः ॥ २२० ॥**

हे देवि! तदनन्तर तेजो रूप होकर द्वितीय अक्षर से आगे (तृतीय) वाले अक्षर में प्रवेश करे। इस प्रकार ध्यान करते हुये अन्त में सबसे अन्तिम अक्षर में उत्तम साधक प्रवेश करे। हे वरवर्णिनि! फिर समग्र वर्णों का तेज अपने शरीर में प्रविष्ट होने का वह विशालधी साधक ध्यान करे ॥ २१९-२२० ॥

**चिन्तयेद् देवताबीजाकारं देवि कलेवरम्।**
**तदनन्तरतो भद्रे स्वकीयं विग्रहं पुनः ॥ २२१ ॥**
**स्वेष्टरूपसमानाभं ध्यात्वा साधकसत्तमः।**
**अनुकूलं जपेन्मन्त्रं तत्रेदं शृणु पार्वति ॥ २२२ ॥**

हे देवि! अपने शरीर को देवता बीज के आकार में चिन्तन करे। हे भद्रे! फिर अपने उस शरीर को अपने इष्ट देवता के समान तेजस्वी होने का ध्यान कर अपने अनुकूल मूल मन्त्र का जप करे। हे पार्वति! इस अवस्था में जो होता है उसे सुनिए ॥ २२१-२२२ ॥

**अनेकमिहिराभासमुच्चारानुपदं शिवे ।**
**निःसरेत् प्रथमं कान्तेऽक्षरं स्वीयमुखाम्बुजात् ॥ २२३ ॥**

हे शिवे! फिर उस साधक के मुख कमल से अपने आप उच्चारण के अनुकूल अनेक सूर्य के समान तेजस्वी प्रथम अक्षर निकलता है ॥ २२३ ॥

**एवमेव द्वितीयं च तृतीयं च चतुर्थकम् ।**
**अन्त्यावधि वरारोहे दासभावेन भामिनि ॥ २२४ ॥**

हे भामिनि! इसी प्रकार द्वितीय, तृतीय, फिर चतुर्थ, पुनः अन्त्याक्षर तक दास भावापन्न होकर निकलता है ॥ २२४ ॥

**भाव्यं जप्त्वा विशेषेण मन्त्रार्थगतचेतसा ।**
**मन्त्रास्ते स्वामिभावत्वं सामरस्यमिदं स्मृतम् ॥ २२५ ॥**

फिर चित्त से मन्त्रार्थ का ध्यान करते हुये भाव्य मन्त्र का जप करे । ऐसा करने से वे मन्त्र स्वामिभाव को प्राप्त कर लेते हैं । इसे मन्त्र का 'सामरस्य' कहा जाता है ॥ २२५ ॥

**कवचाभ्यां पुटीकृत्य मन्त्रार्थगतमानसः ।**
**मन्त्रमावर्तयेन्नित्यमचिराद् देवतामियात् ॥ २२६ ॥**

फिर मन में मन्त्रार्थ का ध्यान करते हुये कवच मन्त्र से सम्पुटित कर मन्त्र की आवृत्ति करते हुये मन्त्र का जप करे । ऐसा करने से वह मन्त्र देवता बन जाता है ॥ २२६ ॥

**इति ते कथितं देवि रहस्यातिरहस्यकम् ।**
**जननीजारवद् भद्रे! नो वक्तव्यं कदाचन ॥ २२७ ॥**

हे देवि! इस प्रकार सभी रहस्यों से परे अतिरहस्य का वर्णन हमने किया । हे भद्रे! यह रहस्यातिरहस्य जननी जार के समान गुप्त रखे । इसे किसी से प्रकाशित न करे ॥ २२७ ॥

**लोभान्मोहात् कामतश्च नाशिष्येषु विनिर्दिशेत् ।**
**देवताशापमाप्नोति दत्ते त्वनधिकारिणे ॥ २२८ ॥**

लोभ, मोह अथवा कामना वश किसी अशिष्य से न कहे । अनधिकारी से इस रहस्य को कहने से देवता का शाप प्राप्त होता है ॥ २२८ ॥

**लीनं स्यादुदके यद्वल्लवणं हि तथा गुरौ ।**
**शिष्यो लीनं भवेत् देवि सोऽधिकारी न चापरः ॥ २२९ ॥**

इसका अधिकारी वही शिष्य है जो अपने गुरु में जल में नमक के समान लीन हो जावे और कोई दूसरा अधिकारी नहीं है ॥ २२९ ॥

मुखशोधनकथनम्

**मुखशोधनकं देवि वक्ष्ये शृणु समाहिता ।**
**यदकृत्त्वा महेशानि जपयागादिकं वृथा ॥ २३० ॥**

**११. मुखशोधनकथन**—हे देवि! अब मैं उस मुखशोधन का प्रकार कहता हूँ । जिस मुखशोधन के बिना किये जप-यागादि व्यर्थ हो जाते हैं । समाहित चित्त होकर सुनिए ॥ २३० ॥

**शाक्तो वा वैष्णवो वापि गाणपः सौर एव वा ।**
**शैवो वा त्वन्यभक्तो वा मुखशोधनमाचरेत् ।**
**मुखशोधनमात्रेण जिह्वाऽमृतमयी भवेत् ॥ २३१ ॥**

चाहे शाक्त हो, चाहे वैष्णव, चाहे गणप, चाहे सौर, चाहे शैव हो अथवा किसी अन्य देव का भक्त क्यों न हो उसे अवश्य मुखशोधन करना ही चाहिये । अन्यथा मिथ्या भाषणादि से यह जिह्वा दूषित रहती है । अतः इस मुखशोधन मात्र की क्रिया से जिह्वा अमृतमयी हो जाती है ॥ २३१ ॥

**अन्यथादूषिता जिह्वा मिथ्यासम्भाषणादिभिः ।**
**भक्ष्याभक्ष्यैश्च कलहैरतः संशोधनं चरेत् ॥ २३२ ॥**

यह जिह्वा भक्ष्याभक्ष्य के कारण एवं असत्य कथन तथा कलह के कारणों से भी दूषित होती है अतः मुखशोधन क्रिया आवश्यक है ॥ २३२ ॥

**दशवारजपेनास्य जिह्वाऽमृतमयी भवेत् ।**
**लक्ष्मीं च प्रणवं चैव त्रिधोच्चार्य महेश्वरि ॥ २३३ ॥**
**इदं षडक्षरं मन्त्रं सुन्दरीविषये स्मृतम् ।**
**वाग्भवं च तथा मायां वाग्भवं त्र्यक्षरीविधौ ॥ २३४ ॥**
**प्रणवं प्रेतबीजं च पुनः प्रणवमुद्धरेत् ।**
**त्र्यक्षरोऽयं समुद्दिष्टो भैरवीमुखशोधने ॥ २३५ ॥**

इस मुखशोधन मन्त्र के दश बार जपने मात्र से जिह्वा अमृत स्वरूपा हो जाती है । लक्ष्मी (श्रीं) प्रणव (ॐ), हे महेश्वरि! इस मन्त्र का तीन बार उच्चारण करे । यह षडक्षर मन्त्र सुन्दरी के मुखशोधन के विषय में कहा गया है । त्र्यक्षरी के विषय में कहा गया वाग्भव (ऐं), माया (ह्रीं), फिर वाग्भव (ऐं), फिर प्रणव (ॐ), फिर प्रेत बीज (हसौः), फिर प्रणव (ॐ)—यह त्र्यक्षर इस प्रकार भैरवी के मुखशोधन का मन्त्र कहा गया ॥ २३३-२३५ ॥

**कुन्तीत्रयं तथा तारत्रयं कुन्तीत्रयं तथा ।**
**एषा नवाक्षरी विद्या श्यामामुखविशोधने ॥ २३६ ॥**

कुन्तीत्रय (?) तारत्रय (ॐ ॐ ॐ) फिर कुन्तीत्रय (?) यह नवाक्षरी विद्या श्यामा के मुख संशोधन के विषय में कही गई ॥ २३६ ॥

**मायात्रयं महेशानि विद्धि तारास्य शोधने ।**
**वाग्भवत्रयमीशानि भुवनामुखशोधने ॥ २३७ ॥**

हे महेशानि! तीन बार माया (ह्रीं ह्रीं ह्रीं) यह तारा के मुख का संशोधन मन्त्र कहा गया है । तीन बार वाग्भव (ऐं ऐं ऐं) यह भुवनेश्वरी के मुख का संशोधन मन्त्र है ॥ २३७ ॥

**अंकुशं च तथा वाणीमंकुशं त्र्यक्षरो मनुः ।**
**मातङ्गीप्रीतिजनकः कथितो मुखशोधनः ॥ २३८ ॥**

अङ्कुश (क्रौम्) इसके बाद वाणी (ऐं) फिर अङ्कुश (क्रौम्) यह तीन अक्षर का मन्त्र मातङ्गी को प्रसन्न करने वाला मुख शोधन कहा ॥ २३८ ॥

**वाग्भवं च तथा मायां वाग्भवं ङेयुतं तथा ।**
**दुर्गापदं वनं मायां वाग्भवद्वयमुच्चरेत् ॥ २३९ ॥**
**इयं दशाक्षरी विद्या दुर्गामुखविशोधिनी ।**

वाग्भव (ऐं), फिर माया (ह्रीं), फिर वाग्भव (ऐं), उच्चारण करे । फिर चतुर्थ्यन्त दुर्गापद (दुर्गायै), फिर वन (?), माया (ह्रीं), फिर दो बार वाग्भव (ऐं ऐं), यह दशाक्षरी विद्या दुर्गा की मुखशोधिनी है ॥ २३९-२४० ॥

**प्रणवं च तथा लक्ष्मीर्धनदामुखशोधनः ॥ २४० ॥**
**प्रणवद्वयगं धूं च प्रोक्तो धूमावतीविधौ ।**
**अन्यदेवेषु सर्वेषु देवीषु च वरानने ॥ २४१ ॥**
**दशधा प्रणवं चोक्त्वा मुखशोधनमाचरेत् ।**
**देवो यदि जपेन्मन्त्रमकृत्त्वा मुखशोधनम् ॥ २४२ ॥**
**सर्वं तस्य वृथा देवि मन्त्रसिद्धिर्न जायते ।**
**अथान्यदपि किञ्चित् ते रहस्यं कथयामि ह ॥ २४३ ॥**

प्रणव (ॐ), फिर लक्ष्मी (श्रीं) यह धनदा देवी का मुखशोधन मन्त्र है । दो प्रणव युक्त धूं (ॐ ॐ धूं) यह धूमावती के मुखशोधन का मन्त्र है । हे वरानने! अन्य देवी तथा अन्य देवताओं के लिये दश बार प्रणव उच्चारण कर मुखशोधन करे । यदि मुख शोधन किये बिना साक्षाद् देवता भी मन्त्र का जप करे तो हे

देवि! वह सब व्यर्थ है । उन्हें भी बिना मुखशोधन मन्त्र का जप किये सिद्धि प्राप्त नहीं होती । अब और कुछ रहस्य की बातें कहता हूँ ॥ २४०-२४३ ॥

**निद्रितमन्त्रः**

**जपकाले यदा मन्त्रो निद्रितो भवति प्रिये ।**
**तदा तद्बोधनं कर्म कृत्त्वा जपमथारभेत् ॥ २४४ ॥**

हे प्रिये! जिस समय मन्त्र जप करते समय साधक को निद्रा आने लगे, तब मन्त्र का उद्बोधन कर पश्चात् जप आरम्भ करे ॥ २४४ ॥

**शक्तिमन्त्रः सदा शेते दक्षनाड्यां निशासु च ।**
**पुंदेवमन्त्रो दिवसे शेते चन्द्रसमाश्रितः ॥ २४५ ॥**
**एषा ते कथिता देवि निद्राया लक्षणं प्रिये ।**
**प्रजपेद् यदि निद्रायां वृथा तस्य परिश्रमः ॥ २४६ ॥**

रात्रि के समय दक्षिण नाडी में शक्ति मन्त्र सोता रहता है । पुंदेव मन्त्र चन्द्रमा का आश्रय लेकर दिन में सोता रहता है । हे प्रिये! यह हमने निद्रा का लक्षण आपसे कहा । अतः जो साधक निद्रा में जप करता है उसका सारा श्रम व्यर्थ हो जाता है ॥ २४५-२४६ ॥

**अरण्यरोदनमिव तज्जपं हि भवेत् सति! ।**
**तस्मात् कामकलाबीजपुटं मन्त्रं तदा जपेत् ॥ २४७ ॥**

हे सति! उस साधक का सारा जप अरण्यरोदनवत् व्यर्थ होता है । इसलिये कामकला बीज (ईं) के सम्पुट से मन्त्र का जप करे ॥ २४७ ॥

**विनिद्रश्च भवेन्मन्त्रस्तत्क्षणादेव पार्वति ।**
**इयं कामकलायोनिर्नात्र कार्या विचारणा ॥ २४८ ॥**

हे पार्वति! ऐसा करने से मन्त्र जागरूक हो जाता है । यही कामकला योनि (=जननी) है अतः इसमें विचार न करे ॥ २४८ ॥

**योनिमन्त्रं मनोर्दत्त्वा आद्यन्ते परमेश्वरि ।**
**सप्तवारं जपेन्मन्त्रं दीपिनीयमुदाहृता ॥ २४९ ॥**

हे परमेश्वरि! चित्त लगाकर मन्त्र के आदि और अन्त में (सम्पुट कर) सात बार योनि मन्त्र का जप करे । इसे दीपनी भी कहा जाता है ॥ २४९ ॥

**तुर्यस्वरं बिन्दुयुतं नादेन परिपूरितम् ।**
**एतत् कामकलामन्त्रं गुह्याद् गुह्यतरं शिवे ॥ २५० ॥**

तुर्य स्वर (चौथा स्वर ई) उसे बिन्दु से युक्त कर नाद से परिपूर्ण करे (ईं) यह कामकला मन्त्र है। हे शिवे! जो गुप्त से भी गुप्त है ॥ २५० ॥

**एवं तु मन्त्रसङ्केतमज्ञात्वा यः समाचरेत् ।**
**जपयज्ञं वृथा तस्य श्रमोऽनर्थाय कल्प्यते ॥ २५१ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे पुरश्चरणविधावासनजपसङ्केत-कथनं नाम द्वादशः पटलः ॥ १२ ॥**



इस प्रकार मन्त्र सङ्केत को बिना जाने जो जप करता है उसका सारा जप व्यर्थ है और श्रम अनर्थ का कारण बन जाता है ॥ २५१ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में पुरश्चरणविधा-वासनजपसङ्केतकथन नामक द्वादश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १२ ॥**

⊷⊷❖⊷⊷

# त्रयोदशः पटलः

## अथ पुरश्चरणम्

**अगस्त्यसंहितायाम्—**

**अथ वक्ष्ये महादेवि पौरश्चरणिकं विधिम् ।**
**विना येन न सिद्धः स्यान्मन्त्रो वर्षशतैरपि ॥ १ ॥**
**तत् पुरश्चरणं नाम मन्त्रसिध्यर्थमात्मनः ।**
**यथोक्तनियमं कृत्वा स्वकल्पोक्तजपस्य हि ।**
**करणं द्विजयागान्तं प्रोक्तं देशिकसत्तमैः ॥ २ ॥ इति ।**

अब पुरश्चरण क्रिया कहते हैं—अगस्त्य संहिता में बतलाया गया है—हे महादेवि! अब पुरश्चरण की विधि कहता हूँ जिसके न करने से सैकड़ों वर्ष पर्यन्त साधक को मन्त्र सिद्ध नहीं होता । पुरश्चरण उसे कहते हैं जो साधक द्वारा अपने मन्त्र की सिद्धि के लिये शास्त्रोक्तविधि से नियमपूर्वक अपने कल्पोक्त मन्त्र का जप किया जाता है । आचार्यों ने इस पुरश्चरण का अनुष्ठान ब्राह्मण भोजनान्त तक बतलाया है ॥ १-२ ॥

**तत्रादौ भक्ष्यादिनियमः गौतमीये—**

**पुरश्चरणकृन्मन्त्री भक्ष्याभक्ष्यं विवर्जयेत् ।**
**अन्यथा भोजनाद् दोषात् सिद्धिहानिः प्रजायते ॥ ३ ॥**
**शस्तान्नं च समश्नीयान्मन्त्रसिद्धिसमीहया ।**
**तस्मात् सर्वप्रयत्नेन शस्तान्नाशी भवेन्नरः ॥ ४ ॥**

पुरश्चरण में सबसे पहले भोजन का नियम कहा है जैसा कि गौतमीयतन्त्र में उक्त है कि पुरश्चरणकर्त्ता साधक सर्वप्रथम भक्ष्याभक्ष्य का विचार करे क्योंकि निषिद्ध भोजन से उत्पन्न दोष सिद्धि के लिये हानिकारक होता है । साधक मन्त्र के सिद्धि के लिये प्रशस्त अन्न का भोजन करे । इसलिये सब प्रकार के प्रयत्न से अनुष्ठान कर्त्ता को प्रशस्त अन्न का ही भोजन करना चाहिए ॥ ३-४ ॥

**अगस्त्यसंहितायाम्—**

**दधि क्षीरं घृतं गव्यमैक्षवं गुडवर्जितम् ।**

**तिलाश्चैव सितामुद्गाः कन्दः केमुकवर्जितः ॥ ५ ॥**
**नारिकेलफलं चैव कदली लवली तथा ।**
**आम्रमामलकं चैव पनसं च हरीतकील ॥ ६ ॥**
**तिन्तिणी जीरकं चैव नागरङ्गकमेव च।**
**अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते ॥ ७ ॥**

अगस्त्य संहिता में भी बतलाया गया है—दही, दूध, घृत तथा गव्य, गुड़ रहित ऊख के विकार से बने पदार्थ, शर्करा, मिश्री आदि तिल, मिश्री, मूँग केमुक (?) को छोड़ कर समस्त कन्द, नारिकेल फल, कदली, लवली, आम, आँवला, कटहल, हरड, इमली, जीरा, नारङ्गी और बिना तेल का पकाया हुआ उपर्युक्त पदार्थ मुनियों ने हविष्यान्न कहा है ॥ ५-७ ॥

**व्रतान्तरप्रशस्तं च हविष्यं मन्यते बुधः ।**
**भुञ्जानो वा हविष्यान्नं शाकं यावकमेव वा ॥ ८ ॥**
**पयोमूलं फलं वापि यत्र यच्चोपलभ्यते ।**
**नेन्द्रियाणां यथा वृद्धिस्तथा भुञ्जीत साधकः ॥ ९ ॥**

इसके अतिरिक्त अन्य व्रतों में जिसे प्रशस्त कहा गया है उसे भी हविष्यान्न कहते हैं । शाक, यव का सत्तू, दूध, मूल या फल जो-जो प्राप्त हो जावे तथा इन्द्रियों का जिससे सम्वर्धन न हो पुरश्चरण का साधक वैसा भोजन करे ॥ ८-९॥

**अन्यत्र विहितशाकान्ने यथा—**

**कलायकं गुनीवारा वास्तुकं हिलमोचिका ।**
**हैमन्तिकं सितास्विन्नं धान्यं मुद्गयवास्तिलाः ।**
**मूलं केमुककिन्दूनां वर्जयन् विहितं परम् ॥ १० ॥**

अन्यत्र विहित शाक कह कर वहीं पर निषिद्ध शाक इस प्रकार कहा है—कलायक, गुनीवार, वास्तुक, हिलमोचिका, हेमन्त में होने वाला शाक, सिता स्विन्न, धान्य, मूँग, यव, तिल, केमुक और किन्दु का मूल विहित होने पर भी इनका वर्जन करे ॥ १० ॥

**यत्तु योगिनीतन्त्रे—**

**चिञ्चां च नालिकाशाकं कलायं लकुचं तथा ।**
**कदम्बं नारिकेलं च व्रते कूष्माण्डकं त्यजेत् ॥ ११ ॥**

**इति तूपवासरूपव्रतान्तरे बोध्यम् ।**

योगिनीतन्त्र में भी बतलाया गया है—चिञ्चा, नासिका, शाक, कलाय, लकुच, कदम्ब, नारिकेल एवं कूष्माण्ड व्रत में वर्जित कहे गये हैं ॥ ११ ॥

**अवैष्णवमसभ्यं च यत् प्रशस्तं व्रतान्तरे ।**
**त्याज्यमेवात्र तत् सर्वं यदीच्छेत् सिद्धिमात्मनः ॥ १२ ॥ इति ।**

ये उपवास रूप व्रतान्तर में निषिद्ध है—अन्य व्रतों में प्रशस्त होने पर भी अवैष्णव एवं असभ्य पदार्थ (जिसे सभ्य लोग ग्रहण नहीं करते) साधक यदि अपनी सिद्धि चाहे तो उन्हें वर्जित करे ॥ १२ ॥

**अथ वर्ज्याणि—**

**वर्जयेन्मधुकं क्षारलवणं तैलमेव च ।**
**ताम्बूलं कांस्यपात्रं च दिवा भोजनमेव च ॥ १३ ॥**
**मांसं च गृञ्जनं चापि वर्जयेन् नियमस्थितः ।**

**गृञ्जनमिति लहसुन इति प्रसिद्धः । यच्च राजनिघण्टौ-'गृञ्जनं' स्यात् रसोनक इति ।**

अब स्पष्ट रूप से वर्जित पदार्थ कहते हैं—मधु, खारा नमक, तेल, ताम्बूल, कांस्यपात्र, दिन में भोजन, मांस, गृञ्जन (=लहसुन)—इन पदार्थों को नियमकर्त्ता साधक वर्जित करे ॥ १३-१४ ॥

ऊपर गृञ्जन लहसुन के अर्थ में आया है जैसा कि राजनिघण्टु कोश में कहा गया है 'गृञ्जनं स्यात् रसोनक' इति ।

**माषाढकीमसूरांश्च कोद्रवाँश्चणकानपि ॥ १४ ॥**
**ताम्बूलं च द्विभुक्तं च दुःसंवासं प्रमत्तताम् ।**
**श्रुतिस्मृतिविरुद्धं च जपं रात्रौ च वर्जयेत् ॥ १५ ॥**
**कौटिल्यं क्षौरमभ्यङ्गमनिवेदितभोजनम् ।**
**असङ्कल्पितकृत्यं च वर्जयेन्मर्दनादिकम् ॥ १६ ॥**
**स्नायाच्च पञ्चगव्येन केवलाऽऽमलकेन वा ।**
**मन्त्रजप्तान्नपानीयैः स्नानाचमनभोजनम् ॥ १७ ॥**
**कुर्याद् यथोक्तविधिना त्रिसन्ध्यं देवतार्चनम् ।**
**अपवित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ।**
**प्रलपन् प्रजपेद् यावत् तावन्निष्फलमुच्यते ॥ १८ ॥**

अरहर, मसूर, कोदों, चना, ताम्बूल, दो बार भोजन, दुष्ट के साथ निवास, असावधानी एवं रात्रि के समय श्रुति-स्मृति विरुद्ध जप, कुटिलता, क्षौर, अभ्यङ्ग, भगवान् को बिना निवेदन किया गया अन्न, बिना सङ्कल्प का कार्य तथा तैलादि का मर्दन वर्जित करे । पञ्चगव्य से स्नान करे अथवा केवल आमलक से स्नान करे । मन्त्र से अभिमन्त्रित अन्न, पानी, स्नान, आचमन एवं भोजन करे । शास्त्र में कही गई रीति से तीनों काल में सन्ध्योपासन एवं देवार्चन करे । जब हाथ

अपवित्र हो, नग्न हो, शिर वस्त्र आदि से ढक कर, जब तक जप करे या बात करे वह सब निष्फल कहा जाता है ॥ १४-१८ ॥

**कुलार्णवे—**

**यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसञ्चयम् ।**
**अन्नदातुः फलस्यार्धं कर्तुरर्धं न संशयः ॥ १९ ॥**

कुलार्णवतन्त्र में भी बतलाया गया है—जो दूसरों के द्वारा प्रदत्त अन्न पान से पुष्ट होकर धर्म का सञ्चय करता है, उसमें अन्न देने वाले को पुण्य का आधा फल प्राप्त होता है और अनुष्ठानकर्त्ता को आधा फल प्राप्त होता है, इसमें संशय नहीं ॥ १९ ॥

**तस्मात् सर्वप्रयत्नेन परान्नं वर्जयेत् सुधीः ।**
**पुरश्चरणकाले तु सर्वकर्मसु शाम्भवि! ॥ २० ॥**
**जिह्वा दग्धा परान्नेन हस्तौ दग्धौ प्रतिग्रहात् ।**
**मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने ॥ २१ ॥**

**परान्नं भिक्षेतरपरम् ।**

इसलिये बुद्धिमान् पुरश्चरण कर्त्ता पुरश्चरण काल के सभी कर्मों में सब प्रकार के प्रयत्नों से परान्न (भिक्षा से इतर कुछ भी) वर्जित करे । यदि दूसरों के अन्न खाने से जिह्वा दग्ध है, प्रतिग्रह लेने से दोनों हाथ दग्ध हैं और दूसरों की स्त्री पर दृष्टि डालने से मन दग्ध हो गया है । तो फिर हे वरानने! सिद्धि कैसे प्राप्त हो सकती है ॥ २०-२१ ॥

**वैदिकाचारयुक्तानां शुचीनां श्रीमतां सताम् ।**
**सत्कुलस्थानजातानां भिक्षाशीलाग्रजन्मनाम् ॥ २२ ॥**

**इत्युक्ते भिक्षाया न निषेधः ।**

यहाँ परान्न का अर्थ भिक्षा से इतर है क्योंकि भिक्षा परान्न नहीं है—वह तो विहित ही है । जैसा कि आगे भी कहा गया है—'वैदिकाचार से युक्त पवित्र सज्जन, अच्छे कुल में उत्पन्न हुये श्रीमान्, मात्र भिक्षा से निर्वाह करने वाले अग्रजन्मा ब्राह्मण'—यहाँ भिक्षा का निषेध नहीं किया गया है, प्रत्युत विहित कहा गया है ॥ २२ ॥

**विहाय वह्निं न हि वस्तु किञ्चिद्**
**ग्राह्यं परेभ्यः सति सम्भवेऽपि**
**असम्भवे तीर्थबहिर्विशुद्धाद्**
**याचेत यावाङ्गुनमात्रभक्षात् ।**

**गृह्णाति रागादधिकं न सिद्धिः**
**प्रजायते कल्पशतैरमुष्य ॥ २३ ॥**

यदि सम्भव हो तो अग्नि को छोड़कर अन्य कोई भी वस्तु दूसरों से ग्रहण न करे। असम्भव होने पर तीर्थ से बाहर अत्यन्त विशुद्ध घर से जितना भोजन के लिये आवश्यक हो, उतनी ही भिक्षा ग्रहण करे। जो रागादिवशात् अधिक भिक्षा ग्रहण करता है उसे सैकड़ों कल्प तक सिद्धि नहीं प्राप्त होती ॥ २३ ॥

**सकृदुच्चरिते शब्दे प्रणवं समुदीरयेत् ।**
**प्रोक्ते पामरशब्देऽपि प्राणायामं सकृच्चरेत् ॥ २४ ॥**
**बहुप्रलापे चावश्यं न्यस्याङ्गानि ततो जपेत् ।**
**क्षुतेऽप्येवं तथास्पृश्यस्थानानां स्पर्शने तथा ॥ २५ ॥**

पुरश्चरण कालावधि में एक बार शब्द के उच्चारण कर लेने पर प्रणव (ॐ) उच्चारण करे। किसी पामर शब्द (नीच, अश्लील, अशुद्ध, अभद्र, गाली-गलौज) के उच्चारण करने पर एक बार प्राणायाम करे। बहुत अधिक प्रलाप करने पर अङ्गन्यास कर पुनः जप करे। छींक आने पर अथवा अस्पृश्य स्थान के स्पर्श कर लेने पर भी यही प्रायश्चित्त करे ॥ २४-२५ ॥

**एवमादींश्च नियमान् पुरश्चरणकृच्चरेत् ।**
**विण्मूत्रोत्सर्गशङ्कादियुक्तः कर्म करोति यः ॥ २६ ॥**
**जपार्चनादिकं सर्वमपवित्रं भवेत् प्रिये ।**
**मलिनाम्बरकेशादि मुखदौर्गन्ध्यसंयुतः ॥ २७ ॥**
**यो जपेत् तं दहत्याशु देवता गुप्तसंस्थिता ।**
**मार्जारं कुक्कुटं क्रौञ्चं श्वानं शूद्रं कपिं खरम् ॥ २८ ॥**
**दृष्ट्वाऽऽचम्य जपेत् शेषं स्पृष्ट्वा स्नानं विधीयते ।**

हे प्रिये! इस प्रकार के और भी नियमों का पालन पुरश्चरण कर्त्ता करे। विण्मूत्रोत्सर्ग की शङ्का होने पर उसे बिना किये जो कर्म करता है, हे प्रिये! उसका जप अर्चनादि समस्त कार्य अपवित्र हो जाता है। जो मलिन अम्बर धारण कर, मलिन केश युक्त होकर, दुर्गन्धयुक्त मुख से जप करता है उसे गुप्त रूप से स्थित रहने वाले देवता शीघ्र जला देते हैं। बिल्ली, मुर्गा, क्रौञ्च, कुत्ता, शूद्र, वानर एवं गदहा को देख लेने पर आचमन कर जप करे। किन्तु इनका स्पर्श होने पर स्नान करे ॥ २६-२९ ॥

**आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ॥ २९ ॥**
**नीचाङ्गस्पर्शनं कोपमधोवायुं विवर्जयेत् ।**
**जपकाले भवेद् दैवादाचम्य प्राणसंयमम् ॥ ३० ॥**

षडङ्गं प्रविधायाशु पुनर्जपमुपारभेत् ।
एवमुक्तविधानेन विलम्बं त्वरितं विना ॥ ३१ ॥
उक्तसंख्यं जपं कुर्यात् पुरश्चरणसिद्धये ।

आलस्य, जँभाई, निद्रा, छींक, थूक आना, भय, नीच अङ्ग का स्पर्श, क्रोध एवं अधोवायु निस्सारण जप काल में वर्जित करे । यदि दैववश ऐसा हो जावे तब आचमन करे, प्राणायाम करे एवं षडङ्गन्यास करे तदनन्तर जप पुनः प्रारम्भ करे । इस प्रकार कहे गये विधानों से विलम्ब होने पर भी जल्दीबाजी बिना किये पुरश्चरण की सिद्धि के निर्दिष्ट संख्या में जप पूर्ण करे ॥ २९-३२ ॥

देवतागुरुमन्त्राणामैक्यं सम्भावयन् धिया ॥ ३२ ॥
जपेदेकमनाः प्रातःकालान्मध्यं दिनावधि ।
यत्संख्यया समारब्धं तत् कर्त्तव्यं दिने दिने ॥ ३३ ॥
यदि न्यूनाधिकं कुर्याद् व्रतभ्रष्टो भवेन्नरः ।
न्यूनाधिकं न कर्त्तव्यमासमाप्तिं सदा जपेत् ॥ ३४ ॥
न्यूनातिरिक्तकर्माणि न फलन्ति कदाचन ।
यथाविधि कृतान्येव तत्कर्माणि फलन्ति हि ॥ ३५ ॥

जप के समय देवता गुरु और मन्त्रों की एकता का ध्यान करते हुए जप करना चाहिए। एकाग्रचित्त होकर मध्याह्न कालपर्यन्त जितनी संख्या में जप का आरम्भ किया गया है उतनी संख्या तक नित्य प्रतिदिन जप करे । यदि न्यून या अधिक जप किया गया तब साधक व्रत भ्रष्ट हो जाता है । अतः न्यूनाधिक जप न करे अपितु समाप्तिपर्यन्त समान संख्या में जप करे । न्यूनाधिक रूप में किया गया कर्म कदापि फलवान् नहीं होता । यथा विधि किया गया कर्म ही फलवान् होता है ॥ ३२-३५ ॥

कृते जपस्तु कल्पोक्तस्त्रेतायां द्विगुणो जपः ।
द्वापरे त्रिगुणः प्रोक्तश्चतुर्गुणजपः कलौ ॥ ३६ ॥
मन्त्रं साधयमानस्तु त्रिसन्ध्यं देवमर्चयेत् ।
द्विकालमेककालं वा न मन्त्रं केवलं जपेत् ॥ ३७ ॥
भूशय्या ब्रह्मचारित्वं मौनचर्यानसूयता ।
नित्यं त्रिषवणस्नानं क्षुद्रकर्मविवर्जनम् ॥ ३८ ॥
नैमित्तिकार्चनं चैव विश्वासो गुरुदेवयोः ।
नित्यपूजा नित्यदानं देवतास्तुतिकीर्तनम् ॥ ३९ ॥
सत्येनापि न भाषेत जपहोमार्चनादिषु ।
असद्भाषणमत्यर्थं वर्जयेदन्यपूजनम् ।

**वाङ्मनःकर्मभिर्नित्यं निस्पृहो वनितादिषु ॥ ४० ॥**
**मैथुनं तत् कथालापस्तद्गोष्ठीः परिवर्जयेत् ।**
**अन्यथानुष्ठितं सर्वं भवत्येव निरर्थकम् ॥ ४१ ॥**
**पुरश्चरणकाले तु यदि स्यान्मृतसूतकम् ।**
**तथापि कृतसङ्कल्पो जपं नैव परित्यजेत् ॥ ४२ ॥**

सतयुग में कल्पोक्त संख्या में जप करे । त्रेता में उसका द्विगुणित, द्वापर में त्रिगुणित और कलियुग में उसके चौगुने जप का विधान है । मन्त्र की साधना चाहने वाला तीनों सन्ध्या में देवार्चन करे, अथवा दो काल, अथवा एक काल में देवार्चन करे । मात्र मन्त्र का ही केवल जप न करे । भूशय्या, ब्रह्मचर्य, मौनचर्या, अनसूयता एवं नित्य तीनों कालों में स्नान करे । क्षुद्र कर्मों से दूर रहे । नैमित्तिक अर्चन सर्वदा करते रहे और गुरु देवता में विश्वास रखे । नित्य पूजा करे । नित्य दान करे । नित्य देवस्तुति एवं नित्य देव कीर्त्तन करे । जप, होम एवं अर्चन में सत्य बात भी न बोले मौन रहे । असद्भाषण सब प्रकार से वर्जित करे । अन्य देवता पूजन भी वर्जित करे । वाणी, मन तथा कर्म से स्त्री आदि में निःस्पृह रहे, स्त्री से मैथुन, स्त्री विषयक चर्चा, स्त्री से आलाप एवं स्त्री विषयक गोष्ठी वर्जित करे । यदि इसके विपरीत कुछ किया गया तो सब निरर्थक है । यदि पुरश्चरण काल में मरणाशौच या जननाशौच पड़ जावे तब भी कृत-सङ्कल्प होने के कारण जप का परित्याग न करे ॥ ३६-४२ ॥

**योगिनीहृदयेऽपि—**

**शयीत कुशशय्यायां शुचिव्रतधरः सदा ।**
**प्रत्यहं क्षालयेत् शय्यामेकाकी निर्भयः स्वपेत् ॥ ४३ ॥**

योगिनीहृदय में भी बतलाया गया है—पवित्रात्मा एवं व्रत धारण करने वाला साधक कुशशय्या पर शयन करे और अकेले निर्भय होकर शयन करे । कुश शय्या का नित्य प्रक्षालन करे ॥ ४३ ॥

**असत्यभाषणं वाचं कुटिलानां विवर्जयेत् ।**
**वर्जयेत् गीतवाद्यादिश्रवणं नृत्यदर्शनम् ॥ ४४ ॥**

असत्य भाषण तथा कुटिलों के साथ भाषण वर्जित करे । गीत तथा वाद्य का श्रवण तथा नाच देखना वर्जित करे ॥ ४४ ॥

**अभ्यङ्गं गन्धलेपं च पुष्पधारणमेव च ।**
**त्यजेदुष्णोदकस्नानं सुगन्धाऽऽमलकादिकम् ॥ ४५ ॥**

मालिश, गन्ध लेप, पुष्प माला धारण, उष्णोदक स्नान एवं सुगन्धित आँवला का तेल वर्जित करे ॥ ४५ ॥

**शिरोङ्गं पञ्चगव्येन पावयेद् बहिरन्तरम् ।**
**नैकवासा जपेन्मन्त्रं बहुवस्त्राकुलोऽपि वा ॥ ४६ ॥**

शिर तथा समस्त अङ्ग का बाहरी भीतरी भाग सदा पञ्चगव्य से पवित्र रखे । एक वस्त्र से मन्त्र का जप न करे, अथवा बहुत वस्त्र से आकुल होकर भी मन्त्र का जप न करे ॥ ४६ ॥

**उपर्यधोविपर्यासे वस्त्रे विघ्ना भवन्ति हि ।**
**मनःसंहरणं शौचं मौनं मन्त्रार्थचिन्तनम् ॥ ४७ ॥**
**अव्यग्रत्वमनिर्वेदो जपसम्पत्तिहेतवः ।**
**प्रारम्भो विहिते कालेऽविहितं परिवर्जयन् ॥ ४८ ॥**

ऊपर का वस्त्र नीचे और नीचे का वस्त्र ऊपर इस प्रकार वस्त्र का विपर्यास करने से साधक को विघ्न होता है अतः ऐसा न करे । मन की एकाग्रता, पवित्रता, मौन, मन्त्रार्थ का चिन्तन, अव्यग्रता तथा अनिर्वेद जप की सम्पत्ति (=सिद्धि) के हेतु हैं । विहित काल में मन्त्र के जप का प्रारम्भ करे तथा अविहित काल वर्जित करे ॥ ४७-४८ ॥

**चन्द्रतारानुकूले च शुक्लपक्षे शुभेऽहनि ।**
**आरभेन्मकरादौ च हरौ सुप्ते न चाचरेत् ॥ ४९ ॥**
**कार्तिकाश्विनवैशाखमाघेषु मार्गशीर्षके ।**
**फाल्गुने श्रावणे चैव पुरश्चर्या प्रशस्यते ॥ ५० ॥**

जब चन्द्रमा और नक्षत्र अपने अनुकूल हों, शुक्ल पक्ष हो एवं शुभ दिन हो तब करादि पर जप प्रारम्भ करे । विष्णु के शयन काल में जप प्रारम्भ न करे । कार्त्तिक, आश्विन, वैशाख, माघ, मार्गशीर्ष, फाल्गुन, श्रावण मास पुरश्चरण के प्रारम्भ के लिये प्रशस्त कहे गये हैं ॥ ४९-५० ॥

**ग्रहणे च महातीर्थे न कालमवधारयेत् ।**
**ज्येष्ठाषाढौ भाद्रपदं पौषं तु मलमासकम् ॥ ५१ ॥**
**अङ्गारं शनिवारं च व्यतीपातं च वैधृतिम् ।**
**अष्टमीं नवमीं षष्ठीं चतुर्थीं च त्रयोदशीम् ॥ ५२ ॥**
**चतुर्दशीममावास्यां प्रदोषं च तथा निशि ।**
**यमाग्निरुद्रसर्पेन्द्रवसुश्रवणजन्मभम् ॥ ५३ ॥**
**मेषकर्कतुलाकुम्भान् मकरालिकलग्नकम् ।**
**सर्वाण्येतानि वर्ज्याणि पुरश्चरणकर्मणि ॥ ५४ ॥**

ग्रहण काल तथा महातीर्थ में जप काल के विषय में विचार न करे । ज्येष्ठ,

आषाढ़, भाद्रपद एवं मलमास महीना तथा मङ्गल अथवा शनिवार दिन, व्यतीपात, वैधृति योग, अष्टमी, नवमी, षष्ठी, चतुर्थी, त्रयोदशी, चतुर्दशी, अमावस्या एवं प्रदोष तिथियाँ तथा रात्रिकाल, भरणी, कृत्तिका, आर्द्रा, आश्लेषा, ज्येष्ठा, घनिष्ठा, श्रवण, जन्म नक्षत्र, मेष, कर्क, तुला और कुम्भ का सूर्य तथा मकर कुम्भ लग्न में सभी पुरश्चरण कर्म वर्जित है ॥ ५१-५४ ॥

**शस्तान्यन्यानि सततं जपयज्ञे निरन्तरम् ।**
**आरम्भात् प्राक् चतुर्थेऽह्नि कृत्त्वा क्षौरादिकं सुधीः ॥ ५५ ॥**

इसके अतिरिक्त अन्य सभी मास तिथियों नक्षत्र लग्न और दिन पुरश्चरण कर्म के लिये प्रशस्त हैं; पुरश्चरण आरम्भ करने से चार दिन पहले सुधी साधक क्षौरादि कर्म करे ॥ ५५ ॥

**निरामिषमेकवारं भुक्त्वा रात्रौ यथाविधि ।**
**हस्तौ पादौ च प्रक्षाल्याचम्य प्राणसंयमम् ॥ ५६ ॥**

पुरश्चरण कर्म में साधक रात्रि के समय मांस रहित एक बार भोजन करे । तदनन्तर हाथ पैर का प्रक्षालन कर प्राणायाम करे ॥ ५६ ॥

**कृत्त्वा शयीत शय्यायां कुशमय्यां जपन्मनुम् ।**
**ॐ भगवन् देव देवेश शूलभृद् वृषवाहन ।**
**इष्टानिष्टे समाचक्ष्व मम सुप्तस्य शाश्वत ॥ ५७ ॥**
**तारो हिलिद्वयं शूलपाणये द्विठ ईरितः ।**
**स्वप्नमाणवमन्त्रोऽयं शम्भुना परिकीर्तितः ॥ ५८ ॥**
**नमोऽजाय त्रिनेत्राय पिङ्गलाय महात्मने ।**
**वामाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ ५९ ॥**
**स्वप्ने कथय मे तथ्यं सर्वकार्येष्वशेषतः ।**
**क्रियासिद्धिं विधास्यामि त्वत्प्रसादान्महेश्वर! ॥ ६० ॥**

इतना कर कुश शय्या पर मन्त्र का जप करते हुये शयन करे । सोते समय 'भगवन् देव देवेश......सुप्तस्य शाश्वत'—इस प्रकार प्रार्थना करे । फिर तार (ॐ) इसके बाद दो बार हिलि (हिलि हिलि), फिर शूलपाणये स्वाहा, यही स्वप्नमाणव मन्त्र है जिसे साक्षात् सदाशिव ने कहा है । फिर 'नमोऽजाय.....स्वप्नाधिपतये नमः'— इस प्रकार मन्त्र पढ़कर शिव को नमस्कार करे और प्रार्थना करे कि—हे भगवन्! मुझे क्या-क्या करना चाहिए? वह सब सत्य-सत्य आप मुझसे स्वप्न में कह देवें । हे महेश्वर! आपके प्रसन्न हो जाने पर मैं उस क्रिया द्वारा सिद्धि प्राप्त करूँगा ॥ ५७-६० ॥

**मन्त्रतन्त्रप्रकाशे—**

**ॐ हृत्सकललोकाय विष्णवे प्रभविष्णवे ।**
**विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ।**
**स्वप्नमाणवमन्त्रोऽयं कथितो नारदादिभिः ॥ ६१ ॥**

मन्त्र-तन्त्रप्रकाश में भी बतलाया गया है—हृत्सकल..........नमः पर्यन्त मन्त्र स्वप्नमाणव मन्त्र कहा गया है जिसे नारदादि महर्षियों ने कहा है ॥ ६१ ॥

**नारदीये—**

**परब्रह्मस्वरूपस्त्वमन्तश्चरसि विश्वधृक् ।**
**शुभाशुभगतिं देव! स्वप्ने मे विनिवेदय ॥ ६२ ॥**

नारदीयसंहिता में भी कहा गया है—'परब्रह्म................विनिवेदय' पर्यन्त स्वप्नमाणव मन्त्र कहा गया है ॥ ६२ ॥

**अन्यत्रापि—**

**देवि दुर्गे नमस्तुभ्यं सर्वकार्यप्रदर्शिनि ।**
**सिद्धिं कार्यस्य वासिद्धिं सत्यं स्वप्ने प्रदर्शय ।**
**मायाद्यः स्वप्नमन्त्रोऽयमभीष्टस्य प्रकाशकः ॥ ६३ ॥**

अन्यत्र भी कहा गया है—'देवि दुर्गे.......स्वप्ने प्रदर्शय' मन्त्र पढ़ने के पश्चात् माया (ह्रीं), फिर आद्य (ॐ) का उच्चारण करे । यह मन्त्र अभीष्ट का प्रकाशक कहा गया है ॥ ६३ ॥

**योगिनीतन्त्रे—**

**यज्जाग्रतो दूरमुदेति दैवं**
**ऋचं जपेद् यः प्रयतो निशायाम् ।**
**लब्ध्वैकभुग् दक्षिणपार्श्वशायी**
**स्वप्नं परीक्षेत तथा निशान्ते ॥ ६४ ॥**

**एषु कश्चिन्मन्त्रो यथोपदेशेन साध्यः ।**

योगिनीतन्त्र में कहा गया है कि—साधक रात्रि को सोते समय चित्त एकाग्र कर 'यज्जाग्रतो दूरमुदैति देवं'—इस ऋचा का जप करते हुये अथोचित अन्न का भोजन कर दक्षिण पार्श्व होकर सोते हुये प्रातःकाल में स्वप्न की परीक्षा करे ॥ ६४॥

उन कहे गये मन्त्रों में से कोई एक मन्त्र को साधक शुभ स्वप्न हेतु कहे ।

**मन्त्रं जप्त्वा नमस्कुर्याज्जानुभ्यामवनीं गतः ।**
**प्रसन्नो वाग्यतस्तस्मिन् शयीतेष्टं विचिन्तयन् ॥ ६५ ॥**

**त्रिविधं दर्शनं तस्य यथार्थमयथार्थकम् ।**
**अपाकजं यत् स्वस्थानां संयतानां हि दर्शनम् ॥ ६६ ॥**
**यथार्थमयथार्थं तदस्वस्थानां विकारजम् ।**
**अपाकजं मानसं च यथार्थफलमुच्यते ॥ ६७ ॥**

उपर्युक्त मन्त्रों में कोई एक मन्त्र का जप कर साधक अपने दोनों जानुओं के बल पृथ्वी पर लोट कर इष्ट देवता को नमस्कार करे । तदनन्तर प्रसन्न हो चुपचाप इष्ट देवता का ध्यान कर सो जावे । ऐसी अवस्था में उसे तीन प्रकार के स्वप्नों का दर्शन होगा । १. यथार्थ, २. अयथार्थ, ३. अपाकज । इसमें अपाकज स्वप्न का दर्शन स्वस्थ और संयमशील साधकों को ही होता है । यथार्थ और अयथार्थ स्वप्न अस्वस्थ तथा विकार के कारण दिखाई पड़ते हैं । अपाकज स्वप्न मानस होता है, जो यथार्थ फल कहने वाला है ॥ ६५-६७ ॥

**फलमागमसिद्धान्ते—**

**आद्ये वर्षात् वत्सरार्धाद् द्वितीये**
**यामे पाको यो हि दृष्टस्तृतीये ।**
**मासैः रामैश्चैकतस्तुर्ययामे**
**सद्यः पाको यो विसर्गेषु दृष्टः ॥ ६८ ॥**

आगम सिद्धान्त में स्वप्नों का फल इस प्रकार कहा गया है—प्रथम याम में जो स्वप्न दिखाई पड़ता है उसका फल एक वर्ष में, द्वितीय याम में जो स्वप्न दिखाई पड़ता है उसका फल आधे वर्ष में, तृतीय याम में जो स्वप्न दिखाई पड़ता है वह पाक कहा जाता है उसका फल तीन मास में होता है । चौथे याम में देखे गए स्वप्न का फल एक मास में अथवा तीन मास में होता है । रात्रि बीत जाने के पश्चात् जो स्वप्न दिखाई देता है उसका फल सद्यः कहा गया है ॥ ६८॥

**स्वप्नं दृष्टं निशि प्रातर्गुरवे तन्निवेदयेत् ।**
**तमन्तरेण मन्त्रज्ञः स्वयं स्वप्नं विचारयेत् ॥ ६९ ॥**

शिष्य को जो स्वप्न रात्रि में दिखाई पड़े उसे अपने गुरु से निवेदन करे । मन्त्रज्ञ साधक स्वयं भी उस स्वप्न पर विचार करे ॥ ६९ ॥

**स्वप्ने पश्यति देवेशं निजेष्टं सर्वतोमुखम् ।**
**गुरुं प्रसादसुमुखं निर्मलं चन्द्रमण्डलम् ॥ ७० ॥**
**गङ्गां भागीरथीं भानुं लिङ्गिनं लिङ्गमैश्वरम् ।**
**प्राप्तां तत्र विजानीयात् सिद्धिं स्वप्ननिदर्शने ॥ ७१ ॥**

यदि स्वप्न में अपने व्यापक इष्टदेवता का दर्शन हो या प्रसन्न मुख गुरु का

दर्शन हो अथवा निर्मल चन्द्रमण्डल का दर्शन हो । गङ्गा, भागीरथी, सूर्य नारायण, ब्रह्मचारी एवं शिवलिङ्ग का दर्शन हो तब ऐसे स्वप्नदर्शन से सिद्धि की प्राप्ति निश्चित समझे ॥ ७०-७१ ॥

**क्षितिलाभं च क्षतजाब्धितरणं चाग्निपूजनम् ।**
**होमश्च ज्वलिते वह्नौ संग्रामविजयस्तथा ।**
**हंसकाकमयूराणां रथारोहणमेहने ॥ ७२ ॥**

रक्त का समुद्र पार करना तथा अग्नि पूजन देखे तब पृथ्वी का लाभ होता है। जलती हुई अग्नि में होम देखे तब संग्राम में विजय प्राप्त होती है । यही फल हंस, काक एवं मयूरों के दर्शन से तथा रथारोहण एवं मेहन में भी प्राप्त होता है ॥ ७२ ॥

**नारदपञ्चरात्रेऽपि—**

**कन्यां छत्रं रथं दीपं प्रासादं कमलं नदीम् ।**
**कुञ्जरं वृषभं माल्यं समुद्रं फलिनं द्रुमम् ॥ ७३ ॥**
**पर्वतं च हयं मेध्यमाममांसं सुरासवम् ।**
**एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥ ७४ ॥**

नारदपञ्चरात्र में भी बतलाया गया है—कन्या, छत्र, रथ, दीपक, प्रासाद, कमल, नदी, हाथी, साँड़, माला, समुद्र, फल से लदा हुआ वृक्ष, पर्वत, सुवर्ण, मेध्य, कच्चा मांस, सुरा एवं आसव—इस प्रकार के अन्य स्वप्नों के दिखाई पड़ने पर साधक को सिद्धि प्राप्त होती है ॥ ७३-७४ ॥

**यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।**
**समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ॥ ७५ ॥**

जब काम्य कर्म करते समय स्वप्न में स्त्री दिखाई पड़े तब ऐसे स्वप्न दर्शन से अपनी समृद्धि समझे ॥ ७५ ॥

**नदीसमुद्रतरणमाकाशगमनं तथा ।**
**भास्करोदयनं चैव प्रज्वलन्तं हुताशनम् ॥ ७६ ॥**
**ग्रहनक्षत्रताराणां चन्द्रमण्डलदर्शनम् ।**
**हर्म्यस्यारोहणं चैव प्रासादशिरसोऽपि वा ॥ ७७ ॥**
**नागाश्ववृषभेन्द्राणां तरुशैलाग्ररोहणम् ।**
**विमानगमनं चैव सिद्धमन्त्रस्य दर्शनम् ॥ ७८ ॥**

नदी समुद्र का पार करना, आकाश में उड़ना, सूर्योदय, जलती हुई अग्नि, ग्रह, नक्षत्र, तारा तथा चन्द्रमा का दर्शन, ऊँची अटालिकाओं पर चढ़ना, मन्दिर

के शिरो भाग का दर्शन, हाथी, साँड़, घोड़ा का दर्शन, वृक्ष एवं पर्वत के अग्रभाग पर आरोहण तथा विमान गमन इन सभी स्वप्नों का दिखाई पड़ना सिद्ध मन्त्र का लक्षण है ॥ ७६-७८ ॥

स्वप्ने तु मदिरापानमाममांसस्य भोजनम् ।
कृमिविष्ठानुलेपं च रुधिरेणाभिषेचनम् ॥ ७९ ॥
भोजनं दधिभक्तस्य श्वेतवस्त्रानुलेपनम् ।
सिंहासनं रथं यानं ध्वजं राज्याभिषेचनम् ।
रत्नान्याभरणादीनि दृष्ट्वा स्वप्ने प्रसीदति ॥ ८० ॥

स्वप्न में मदिरा पान, कच्चे मांस का भक्षण, कृमि विष्टा का अनुलेप, रुधिर में स्नान, दही भात का भोजन, श्वेत वस्त्र से अनुलेप, सिंहासन, रथ, यान, ध्वज, राज्याभिषेक, रत्न एवं आभरणों का स्वप्न में दर्शन होने पर मनुष्य को प्रसन्नता प्राप्त होती है ॥ ७९-८० ॥

नारदपञ्चरात्रे—

गुरुर्देवो द्विजः कन्या गोगजाश्वाश्च केसरी ।
दर्पणं शङ्खभेर्यौ च तन्त्रीवाद्यं च रोचनाम् ॥ ८१ ॥
ताम्बूलभक्षणं चैव तथा दध्यभिवन्दनम् ।
सिद्धान्नमाममांसश्च मद्यस्त्रीमदिरारसाः ।
छत्रं यानं सितं वस्त्रं तथान्यत् श्वेतचन्दनम् ॥ ८२ ॥
माल्यं मुक्ताफलैर्हारः पूर्णः समुदितः शशी ।
प्रचण्डकिरणः सूर्यो निम्नगाऽथ महोदधिः ॥ ८३ ॥
प्रफुल्लपादपः शालिरोचनाकुंकुमं मधु ।
लाजाः सिद्धार्थकाबीजं नवभाण्डं च पायसम् ॥ ८४ ॥
उपसन्नोऽथवाचार्यो गायत्रीवरसंयुता ।
सर्वे स्वप्नाः शुभाः प्रोक्ताः सिद्धिमोक्षफलप्रदाः ॥ ८५ ॥

नारदीयपञ्चरात्र में भी बतलाया गया है—गुरु, देवता, ब्राह्मण, कन्या, गौ, हाथी, घोड़ा, सिंह, दर्पण, शङ्ख, भेरी, वीणा वाद्य, रोचना, ताम्बूल भक्षण, दधि का अभिवन्दन, सिद्धान्न, आममास, मद्य, स्त्री, मदिरा, रस, छत्र, यान, श्वेत वस्त्र तथा अन्य श्वेत चन्दन, माला, मोती, हार, पूर्णमासी का उदीयमान चन्द्रमा, प्रचण्ड किरण सूर्य, नदी, समुद्र, प्रफुल्लित वृक्ष, शालीं धान, रोचना, कुङ्कुम, मधु, लावा श्वेत सर्षप, नवभाण्ड, पायस समीप स्थित आचार्य, वर देने के लिए उपस्थित गायत्री—ये सभी स्वप्न शुभावह कहे गये हैं और सभी मोक्ष फल प्रदान करने वाले हैं ॥ ८१-८५ ॥

नारदीये—

गहनं तु पुरन्ध्रीणामगम्यागमनं तथा ।
दंशनं श्वेतनागेन बन्धनं शृङ्खलादिभिः ॥ ८६ ॥
रोदनं ताडनं चैव धावनं चाङ्गघातनम् ।
मृल्लोहत्रपुकांस्यस्य सीसकस्याप्यकुत्सितात् ॥ ८७ ॥
धातोर्लाभस्तथा पुष्पफलरत्नभुवामपि ।
व्यजनं स्वयमन्येन धमनं च विभावसोः ॥ ८८ ॥
एवमादीनि चान्यानि शुभान्याहुर्मनीषिणः ।
एवमादीनि सर्वाणि दृष्ट्वा सिद्धिमवाप्नुयात् ॥ ८९ ॥

नारदीयसंहिता में भी बतलाया गया है—स्त्रियों का समूह, अगम्यागमन, श्वेतनाग द्वारा काटा जाना, शृङ्खलाओं द्वारा बाँधा जाना, रोना, ताडन करना, दौड़ना, अङ्ग में ताडित होना, मट्टी, लोहा, कांस्य, सीसा तथा अन्य कुत्सारहित धातुओं की प्राप्ति, इसी तरह पुष्प, फल और पृथ्वी की प्राप्ति, पङ्खा, स्वयं तथा अन्यों के द्वारा अग्नि का प्रज्वलित करना, इसो प्रकार के अन्य भी पदार्थों को मनीषियों ने स्वप्न में कल्याणकारी माना है । इन सभी पदार्थों के स्वप्न में दर्शन से साधक को सिद्धि प्राप्त होती है ॥ ८६-८९ ॥

अथाशुभाः—

अतोऽन्ये विपरीता ये मनसः खेदकारकाः ।
गर्हिता लोकविद्विष्टाः स्वप्नास्ते ह्यशुभा मताः ॥ ९० ॥

अब अशुभ स्वप्न कहते हैं—अब इन शुभ स्वप्नों के विपरीत जो मन को खेद उत्पन्न करने वाले गर्हित लोक विद्विष्ट अशुभ स्वप्न हैं उन्हें कहता हूँ ॥९०॥

चाण्डालं करभं काकं गर्त्तं शून्यममङ्गलम् ।
तैलाभ्यङ्गं नरं नग्नं शुष्कवृक्षं सकण्टकम् ॥ ९१ ॥
प्रासादमतुलं दृष्ट्वा नरो रोगमवाप्नुयात् ।
भक्षणं मधुमांसस्य कर्णनासादिकर्त्तनम् ॥ ९२ ॥
वेष्टनं कृष्णसर्पेण रक्तमाल्येन वेष्टनम् ।
आलिङ्गनं च कुस्त्रीणां हसनं नर्तनं तथा ।
खरोष्ट्रमहिषाणां च दर्शनाऽऽरोहणं तथा ॥ ९३ ॥
यातनावेशनाभ्यङ्गं दक्षिणाशागमं तथा ।
वमनं रुधिरादीनां लाभस्तेषां तथैव च ॥ ९४ ॥
अङ्गभङ्गोऽथ निद्रा च यमकिङ्करदर्शनम् ।
दिव्यभौमान्तरिक्षाणामुत्पातानां च दर्शनम् ॥ ९५ ॥

**नृपगोगुरुविप्राणां भर्त्सनं विषभक्षणम् ।**
**दर्शनं भीमसर्पाणां पुंसि मैथुनमेव च ॥ ९६ ॥**
**एवमादीनि स्वप्नानि गर्हितानि विदुर्बुधाः ।**
**दृष्ट्वा दुःस्वप्नकं चैव होमात् सिद्धिमवाप्नुयात् ॥ ९७ ॥**

चाण्डाल, ऊँट, काक, गड्ढा एवं शून्य स्थान अमङ्गल हैं । तैलाभ्यङ्ग, नग्न नर, शुष्क वृक्ष, सकण्टकवृक्ष और बहुत बड़ा प्रासाद स्वप्न में देखने पर मनुष्य को रोग की प्राप्ति होती है । मधु मांस का भक्षण, कान नाक का कटना, काले साँप से वेष्टित होना, रक्त माला से वेष्टित होना, कुत्सित स्त्री द्वारा आलिङ्गित होना, हँसना, नाचना, गदहा, ऊँट, भैसा का दर्शन और उन पर आरोहण, विपत्तियों से घिरा जाना, मालिश, दक्षिण दिशा में जाना, रुधिरादि का वमन, उसी प्रकार रुधिरादि का प्राप्त करना, अङ्ग-भङ्ग, निद्रा, यमराज के दूतों का दर्शन, दिव्य ब्राह्मणों को भौम अन्तरिक्ष में उत्पातों का दिखाई पड़ना, राजा, गौ, गुरु, भर्त्सन (धमकाना), पृथ्वी पर सर्पों का दिखाई पड़ना, पुं मैथुन—इस प्रकार के अन्य स्वप्नों का दर्शन बुद्धिमानों ने गर्हित कहा है । ऐसे अशुभ स्वप्नों को देख कर होम करने पर सिद्धि प्राप्त होती है ॥ ९१-९७ ॥

**पिङ्गलामते—**

**शुभे शुभं भवेत् तस्य हुतात् स्यादशुभे शुभम् ।**
**एवं समाचरेद् होमं दन्तकाष्ठोदिते मुने ।**
**केवलेनाथवाऽऽज्येन सिंहमन्त्रेण शान्तये ॥ ९८ ॥**

पिङ्गलामत में भी बतलाया गया है—शुभ स्वप्न के दिखाई पड़ने पर स्वप्न द्रष्टा का शुभ होता है । किन्तु अशुभ स्वप्न देखे जाने पर होम करने पर ही शुभ होता है । हे मुने! इस प्रकार दुःस्वप्न में शान्ति के लिये दन्त काष्ठों से होम करे अथवा केवल घी से होम करे अथवा सिंह मन्त्र से होम करे ॥ ९८ ॥

**सिंहमन्त्रस्तु निबन्धे—**

**वेदादिर्वज्रनखतः पदं दंष्ट्रायुधाय च ।**
**सिंहाय वर्म चास्त्रान्ते हृदयं समुदीरयेत् ॥ ९९ ॥**
**सिंहमन्त्रोऽयमाख्यातो होममेतेन कारयेत् ।**
**शतं सहस्त्रं जुहुयादष्टोत्तरमनन्यधीः ॥ १०० ॥**

निबन्धों में सिंहमन्त्र इस प्रकार दिया गया है—'वेदादि (ॐ) वज्रनख दंष्ट्रायुधाय सिंहाय कवचाय हुं फट् नमः'—यह सिंह मन्त्र कहा गया है । इससे होम करावे । यह होम चाहे एक-सौ आठ की संख्या में, चाहे सहस्र (१००८) की संख्या में होना चाहिए ॥ ९९-१०० ॥

**गुरुस्तत्प्रतिकाराय सहस्त्रं प्रजपेन्मनुम् ।**
**तिलैः सहस्त्रं जुहुयादतः शान्तिर्भवेद् ध्रुवम् ॥ १०१ ॥**

गुरु उस दुःस्पत्र के प्रतीकार के लिये एक सहस्त्र की संख्या में मन्त्र का जप करे । फिर एक सहस्त्र की संख्या में तिल से होम करे । ऐसा करने से शान्ति निश्चित है ॥ १०१ ॥

**तदग्रिमदिने स्नात्वा सन्ध्याकर्म विधाय च ।**
**भूमेः परिग्रहं कुर्यात् परिमाणं विधाय च ॥ १०२ ॥**
**ग्रामे क्रोशमितं स्थानं नद्यादौ स्वेच्छया मितम् ।**
**नगरादावपि क्रोशं क्रोशयुग्ममथापि वा ॥ १०३ ॥**
**आहारादिविहारार्थं तावतीं भूमिमाक्रमेत् ।**
**आदावमुकमन्त्रस्य पुरश्चरणसिद्धये ॥ १०४ ॥**
**मयेयं गृह्यते भूमिर्मन्त्रो मे सिद्ध्यतामिति ।**
**भूमेः परिग्रहं कृत्त्वा परिमाणं च सर्वशः ॥ १०५ ॥**
**दीपस्थानं समाश्रित्य वातातपसहां कुटीम् ।**
**निर्माय विधिवत् तत्र जपयज्ञं समाचरेत् ॥ १०६ ॥**

उसके बाद अग्रिम दिन स्नान सन्ध्यादि कर्म कर लेने के पश्चात् भूमि का परिमाण समझकर उसका परिग्रह करे । पुरश्चरण के लिये गाँव से एक क्रोश दूर स्थान, नदी आदि से स्वेच्छया स्थान, नगरादि से भी एक कोश दूर, अथवा दो कोश दूर स्थान का वरण करे । आहार-विहार के लिये भी उतनी ही जमीन अपने अधिकार में करे । सर्वप्रथम 'अमुक मन्त्रस्य पुरश्चरण सिद्धये मया इयं भूमिः गृह्यते मे मन्त्र सिद्धयताम्'—इस प्रकार का सङ्कल्प करे । भूमि का परिमाणपूर्वक परिग्रह कर लेने के पश्चात् जहाँ दीपस्थान हो, वहाँ वात आतप सहन करने वाली कुटी का निर्माण करे । तदनन्तर पुरश्चरण हेतु जप यज्ञ प्रारम्भ करे ॥ १०२-१०६ ॥

**कुटीलक्षणं हठयोगे—**

**अल्पद्वारमरन्ध्रगर्त्तपिठरं नात्युच्चनीचायितं**
**सम्यग् गोमयसान्द्रलिप्तविमलं निःशेषजन्तूज्झितम् ।**
**बाह्ये मण्डपवप्रकूपसहितं प्राकारसंवेष्टितं**
**प्रोक्तं योगमठस्य लक्षणमिदं सिद्धैर्हठाभ्यासिभिः ॥ १०७ ॥**

कुटीलक्षण हठयोग में भी बतलाया गया है—जिसका द्वार छोटा हो छिद्र गड्ढा पिठर न हो, अत्यन्त ऊँचा अथवा अत्यन्त नीचा भी न हो, अच्छी प्रकार गोमय के गाढ़े लेप से विमल हो, सभी प्रकार के जन्तुओं से रहित हो, उसके बाहर मण्डप और कूप हो, चारों ओर प्राकार परिवेष्टित हो, हठयोग से सिद्धि

प्राप्त करने वाले योगियों के लिये उन्हें योग साधन करने के लिये इस प्रकार के मठ के लक्षण होना चाहिए ॥ १०७ ॥

**प्रातः स्नानादिकं कृत्त्वा कीलानादाय साधकः।**
**कुटीनिकटमागत्य कुर्यात् तन्त्रोदितां क्रियाम् ॥ १०८ ॥**
**क्षीरवृक्षोद्भवान् कीलानस्त्रमन्त्राभिमन्त्रितान्।**
**निखनेद् दशदिग्भागे तेष्वस्त्रं च प्रपूजयेत् ॥ १०९ ॥**

**अस्त्रमन्त्रस्तु तत्तदङ्गभूतः, न केवलफट्काररूप इति सम्प्रदायविदः।**

फिर साधक प्रातःकाल स्नानादि क्रिया कर कील लेकर कुटी के निकट आकर तन्त्र में कही गई क्रियाओं को करे। वे कील क्षीरी वृक्षों के होनी चाहिए और अस्त्र मन्त्र से अभिमन्त्रित भी हो। कुटी के दस दिशाओं में कीली गाड़कर अस्त्र मन्त्र से उसकी पूजा करे ॥ १०८-१०९ ॥

'अस्त्राय हुं फट्' यह अस्त्र मन्त्र है। यहाँ यह प्रयुक्त नहीं होगा। किन्तु दश देवताओं का अङ्गभूत अस्त्र मन्त्र यहाँ विवक्षित है।

**क्षेत्रे तु कीलिते मन्त्री न विघ्नैः परिभूयते।**
**अश्वत्थोदुम्बरप्लक्षवटाश्च क्षीरशाखिनः।**
**क्षेत्रपालं पूजयित्वा बलिं दद्याद् विधानतः ॥ ११० ॥**

क्षेत्र के कीलित कर देने से पुरश्चरण कर्त्ता को किसी प्रकार का भय नहीं होता। अश्वत्थ, गूलर, पाकड़ और वट—ये क्षीरी वृक्ष हैं। कील गाड़ने के बाद विधिपूर्वक क्षेत्रपालों को बलि देनी चाहिए ॥ ११० ॥

**अत्र विशेषस्तु प्रयोगसारे—**

**भेदा एकोनपञ्चाशत् क्षेत्रपालस्य कीर्तिताः।**
**मातृकाबीजभेदेन सम्भिन्ना नामभेदतः ॥ १११ ॥**

**क्षेत्रपालस्य भेदकथनम्**

**अजरश्चापकुम्भश्च इन्द्रसूतिस्ततोऽपरः।**
**ईडाचारश्चोक्लसञ्ज्ञ ऊष्माद ऋषिसूदनः।**
**ॠमुक्तो लृप्तकेशश्च लृपकश्चैकदंष्ट्रकः ॥ ११२ ॥**
**ऐरावतश्चौव्वबन्धुरौषधिघ्नस्तथैव च।**
**अञ्जनश्चास्त्रबाहुश्च कंवलः खरखानलः ॥ ११३ ॥**
**गौमुखश्चैव घण्टादो ङणनश्चण्डचारणः।**
**छटाटोपो जटालाख्यो झङ्कारोऽथ ञठश्चरः ॥ ११४ ॥**
**टङ्कपाणिस्तथा चान्यष्ठाणबन्धुश्च डामरः।**

**ढङ्कारवोणकर्णश्च तडिद्दाहः स्थिरस्तथा ॥ ११५ ॥**
**दन्तुरो धनदश्चाथ नतिक्रान्तः प्रचण्डकः ।**
**फट्कारो वीरसन्धश्च भृङ्गाख्यो मेघभासुरः ॥ ११६ ॥**
**युगान्तो रौरवश्चाथ लम्बोष्ठो वसवस्तथा ।**
**शुकनन्दः षडालाख्यः सुनामा हन्थ्रकस्तथा॥ ११७ ॥**
**एते भेदाः समाख्याता मातृकाक्षरयोनिजाः ।**
**नामपद्यस्य वर्णानां यो वर्णो मातृकान्तरे ॥ ११८ ॥**
**दृश्यते प्रथमं यत्र तत्रायं क्षेत्रपालकः ।**
**यत्र तत्र विशिष्टाश्च भेदैरेतैर्व्यवस्थिताः ॥ ११९ ॥**

इस विषय में प्रयोगसार में कुछ विशेष कथन इस प्रकार है—क्षेत्रपाल के ४९ भेद कहे गये हैं । नाम भेद होने के कारण ये मातृका बीज के भेद से भिन्न-भिन्न हो गये हैं । क्षेत्रपालों के नाम इस प्रकार हैं—अजर, आपकुम्भ, इन्द्रसूति, ईडाचार, अक्ल, ऊष्माद, ऋषिसूदन, ऋमुक्त, लृपाकेश, लुपक (१०), एकदंष्ट्र, ऐरावत, ओव्व, वन्धुर, औपघिघ्न, अञ्जन, अस्त्रावाहु, कंवल, खरखानल, गोमुख (२०), घण्टाद, ङणन, चण्डचारण, छटाटोप, जटाल, झङ्कार, अठश्चर, टङ्कपाणि, अन्यष्ठ, अणवन्धु (३०), डामर, ढङ्कारव, उणकर्ण, वडिद्, दाह, स्थिर, दन्तुर, धनद, नतिक्रान्त, प्रचण्डक (४०), फट्कार, वीरसन्ध, भृङ्ग, मेघमासुर, युगान्तरौरव, लम्बोष्ठ, वसव, शुकनन्द, षडाल, सुनामा और हंघ्रक—ये क्षेत्रपालों के ४९ भेद कहे गये जो मत्तृकाक्षर की योनियों से उत्पन्न हुये हैं । नाम पद्य के वर्णों में जो वर्णमातृकाओं में मातृकान्तर में दिखाई पड़े उसमें प्रथम वर्ण क्षेत्रपाल हैं । जहाँ-तहाँ भेदों से विशिष्ट होने के कारण ये व्यवस्थित है ॥ १११-११९ ॥

### क्षेत्रपालपूजननिरूपणम्

**ततो विशिष्टो यष्टव्यः क्षेत्रपालस्तु सर्वतः ।**
**क्षेत्रपालमसम्पूज्य यः कर्म कुरुते क्वचित् ॥ १२० ॥**
**तस्य कर्मफलं हन्ति क्षेत्रपालो न संशयः ।**

इसलिये मातृकाओं की अपेक्षा ये क्षेत्रपाल विशेष रूप से यष्टव्य हैं । साधक क्षेत्रपालों की पूजा बिना किये जहाँ कही जो कर्म करते हैं उसके कर्मफल को ये क्षेत्रपाल हर लेते हैं । इसमें संशय नहीं ॥ १२०-१२१ ॥

**वर्णान्त्यमौ विन्दुयुक्तं क्षेत्रपालाय हृन्मनुः ॥ १२१ ॥**
**ताराद्यो वसुवर्णोऽयं क्षेत्रपालस्य कीर्तितः ।**
**ऋषिर्ब्रह्मा भवेदस्य गायत्रं छन्द ईरितम् ॥ १२२ ॥**

**क्षेत्रपालो देवता स्यात् क्षौं बीजं लायशक्तिकम् ।**
**सर्वविघ्नविनाशार्थे रक्षार्थे विनियोगकः ॥ १२३ ॥**

वर्ण का अन्त्य (क्ष) उस पर औ की मात्रा और विन्द्र इस प्रकार 'क्षौम्' बीज है । फिर नमः, तार (ओं) से युक्त 'क्षौं क्षेत्रपालय नमः'—यह आठ अक्षरों का क्षेत्रपाल का मन्त्र है । इस मन्त्र के ऋषि ब्रह्मा हैं, गायत्री छन्द है, क्षेत्रपाल देवता हैं, क्षौं बीज है, क्षेत्रपालय यह शक्ति है, सभी विघ्नों के विनाश के लिये स्वयं अपनी रक्षा के लिये इस मन्त्र का विनियोग है ॥ १२१-१२३ ॥

**ऋष्यादींश्च यथास्थाने न्यस्याङ्गान्यस्य विन्यसेत् ।**
**षड्दीर्घभाजा बीजेन देवं ध्यायेत् समाहितः ॥ १२४ ॥**

तत्तत्स्थानों पर ऋष्यादि अङ्गन्यास करे । फिर षड्दीर्घ युक्त (आं ईं ऊँ ऐं औं अः) बीज (क्षौं) मन्त्र पढ़कर समाहित चित्त हो हृदयादि न्यास करे । तदनन्तर इस प्रकार ध्यान करे ॥ १२४ ॥

**क्षेत्रपालध्यानकथनम्**

**नीलाञ्जनाद्रिनिभमूर्ध्वपिसङ्गकेशं**
**वृत्तोग्रलोचनमुपात्तगदाकपालम् ।**
**आशाम्बरं भुजगभूषणमुग्रदंष्ट्रं**
**क्षेत्रेशमद्भुततनुं प्रणमामि देवम् ॥ १२५ ॥**

जिनके शरीर की कान्ति नीले पर्वत के समान काली है । ऊपर की ओर खड़े-खड़े पीत वर्ण के केश हैं, गोलाकार किन्तु भयावह नेत्र हैं, हाथ में गदा और कपाल धारण किये हुये हैं, नग्न शरीर है, सर्पों का भूषण धारण किये हुये हैं । जिनके दाँत अत्यन्त भयानक है ऐसे अद्भुत शरीर वाले क्षेत्रपाल देवता को मैं प्रणाम करता हूँ ॥ १२५ ॥

**एवं ध्यात्वा जपेन्मन्त्रं भक्त्या सम्पूज्य मानसैः ।**
**ततो जपं समर्प्यास्मै बाह्यपूजामथारभेत् ॥ १२६ ॥**

इस प्रकार क्षेत्रपाल का ध्यान कर भक्तिपूर्वक मानसपूजा कर मन्त्र का जप करे । तदनन्तर उन्हें जप समर्पण कर बाह्य पूजा आरम्भ करे ॥ १२६ ॥

**भूमावष्टदलं पद्मं भूपुरैकं लिखेदथ ।**
**मण्डूकादीन् यजेत् तत्र परतत्त्वान्तमीरितान् ॥ १२७ ॥**

पृथ्वी पर अष्टदल कमल उसके बाद एक भूपुर लिखे । फिर उस पर मण्डूकादि यजन से पूर्व में कहे गये परतत्त्वान्त देवों का पूजन करे ॥ १२७ ॥

शैवे पीठे यजेद् देवं क्षेत्रपालं समाहितः ।
वामा ज्येष्ठा तथा रौद्री काली कलपदादिका ॥ १२८ ॥
विकिरिण्याह्वया प्रोक्ता बलाद्या विकिरिण्यपि ।
बलप्रमथनी पश्चात् सर्वभूतदमन्यथ ॥ १२९ ॥
मनोन्मनीति सम्प्रोक्ताः शैवपीठस्य शक्तयः ।
नमो भगवते पश्चात् सकलादि वदेत् पुनः ॥ १३० ॥
गुणात्मशक्तियुक्ताय ततोऽनन्ताय तत्परम् ।
योगपीठात्मने भूयो नमस्तारादिको मनुः ॥ १३१ ॥
अनेन मनुना दद्यादासनं क्षेत्रस्वामिनः ।
मूर्त्तिं सङ्कल्प्य मूलेन यजेद् रक्तोपचारकैः ॥ १३२ ॥

साधक समाहित चित्त होकर शैव पीठ पर क्षेत्रपाल का पूजन करे । वामा, ज्येष्ठा, रौद्री, काली, कलपदा, विकिरिणी, वलाद्या विकिरिणी, बलप्रमथिनी, पश्चात् सर्वदमनी और मनोन्मनी ये पीठ की शक्तियाँ कही गई हैं । 'नमो भगवते सकल गुणात्मशक्तियुक्ताय अनन्ताय योगपीठात्मने नमः'—यह मन्त्र है । उसके आदि में तारा (प्रणव) लगावे । इस मन्त्र से क्षेत्रपाल को आसन देवे । फिर पूजा का सङ्कल्प कर रक्त वर्ण के उपचारों से क्षेत्रपाल का पूजन करे ॥ १२८-१३२ ॥

अङ्गानि परितोऽभ्यर्च्य ततः पत्रे क्रमाद् यजेत् ।
अनलाख्यमग्निकेशं करालं तदनन्तरम् ॥ १३३ ॥
घण्टारवं महाकोपं पिशिताशनसञ्ज्ञकम् ।
पिङ्गलाक्षमूर्ध्वकेशं पत्रेषु परितो यजेत् ॥ १३४ ॥

सर्वप्रथम यन्त्र के चारों ओर अङ्गों का पूजन करे । फिर पत्र पर क्रमशः अनल, अग्निकेश, कराल, घण्टारव, महाकोप, पिशिताशन, पिङ्गलाक्ष एवं ऊर्ध्वकेश का क्रमशः चारो ओर यजन करे ॥ १३३-१३४ ॥

प्रधानमूर्त्तिप्रतिमान् नानालङ्कारवन्धुरान् ।
लोकपालान् तदस्त्राणि यथापूर्वं च भूपुरे ॥ १३५ ॥

नानालङ्कारों से युक्त प्रधानमूर्त्ति की प्रतिमाओं का, लोकपालों का और उनके अस्त्रों का पूर्व-पूर्व क्रम से भूपुर में यजन करे ॥ १३५ ॥

एवं पूज्य बलिं तत्र माषभक्तं दिशेत् ततः ।
तस्मै सपरिवाराय मनुनानेन साधकः ॥ १३६ ॥
पूर्वमेहिद्वयं पश्चाद् द्विषःपुरं पुरं द्वयम् ।
भञ्जयद्वितयं भूयो नर्तयद्वितयं पुनः ॥ १३७ ॥

ततो विघ्नपदद्वन्द्वं महाभैरवतत्परम् ।
क्षेत्रपालबलिं गृह्णद्वयं पावकसुन्दरी ॥ १३८ ॥
बलिमन्त्रोऽयमाख्यातः सर्वकामफलप्रदः ।
सोपदंशं बृहत्पिण्डं कृत्त्वा रात्रिषु साधकः ॥ १३९ ॥
स्मृत्वा यथोक्तं क्षेत्रेशं तत् करस्थे कपालके ।
दद्यादनेन सन्तुष्टः क्षेत्रपालः प्रयच्छति ॥ १४० ॥
कान्तिमेधाबलारोग्यतेजःपुष्टियशःश्रियः ।
बलिं दत्त्वा प्रार्थयेत् तंबद्धाञ्जलिरुदारधीः ॥ १४१ ॥
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ १४२ ॥

इस प्रकार पूजन करने के पश्चात् माष भक्त की बलि देवे (यहाँ विद्विषः पुरं पुरं भञ्जय भञ्जय—इस प्रकार का पाठ ठीक मालूम पड़ता है) पहले दो एहि (एहि एहि) पश्चात् विद्विषः, फिर दो बार पुरु (पुरु पुरु), फिर दो बार भञ्जय (भञ्जय भञ्जय), फिर दो बार नर्तय (नर्तय नर्तय), फिर दो बार विघ्न पद (विघ्न विघ्न), उसके बाद महाभैरव पद, फिर क्षेत्रपाल बलिं गृह्ण गृह्ण स्वाहा—यह बलि का मन्त्र है जो सभी कामनाओं को पूर्ण करता है। साधक रात्रि के समय एक-एक टुकड़े कर बहुत बड़ा पिण्ड बनाकर क्षेत्रेश के हाथ में स्थित कपाल में देवे । इससे सन्तुष्ट हुये क्षेत्रपाल कान्ति, मेधा, बल, आरोग्य, तेज, पुष्टि, यश एवं श्री प्रदान करते हैं । इस प्रकार बलि प्रदान करने के अनन्तर हाथ जोड़कर उदारतापूर्वक प्रार्थना करे 'हे तीक्ष्णदंष्ट्र! हे महाकाय! हे कल्पान्तदहनोपम महाभैरव! आप को नमस्कार करता हूँ। हमको पुरश्चरण की आज्ञा प्रदान करे ॥ १३६-१४२ ॥

इत्यनुज्ञामुपादाय दिक्पतीन् कीलकस्थले ।
माषभक्तबलिं दद्यात् पूज्य लब्धोपचारकैः ॥ १४३ ॥
वास्त्वीशं पूर्ववन्मध्ये पूज्य तस्मै समर्प्य च ।
बलिं सम्प्रार्थयेन्मन्त्रैस्तत्रस्थान् देवतागणान् ॥ १४४ ॥

क्षेत्रपालप्रार्थना

ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
मातरोऽप्युग्ररूपाश्च गणानामधिपाश्च ये ॥ १४५ ॥
विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिताः ।
सर्वे ते प्रीतिमनसः प्रतिगृह्णन्त्विमं बलिम् ॥ १४६ ॥
भूतानि यानीह वसन्ति भूमौ
बलिं गृहीत्वा विधिवत्प्रयुक्तम् ।

**अन्यत्र वासं परिकल्पयन्तु**
**क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः ॥ १४७ ॥**

इस प्रकार महाभैरव क्षेत्रपाल की आज्ञा लेकर जहाँ कीलक गाड़ा गया है वहाँ पर दिक्पालों को बलि प्रदान करे। प्रथम लब्धोपचार से पूजन करे। पूर्ववत् मध्य में वास्त्वीश का पूजन कर बलि देवे। फिर वहाँ पर स्थित देवताओं से इस प्रकार प्रार्थना करे—'जो रौद्र कर्म करने वाले, रौद्र स्थान में निवास करने वाले, उग्ररूपा मातृकायें और जो गणों के अधिपति हैं, इसके अतिरिक्त दिशाओं में एवं विदिशाओं विघ्न करने वाले अन्य जितने पिशाचादि हैं, वे सभी प्रसन्न होकर मेरे द्वारा दी गई इस बलि को ग्रहण करे। इतना ही नहीं यहाँ की पृथ्वी पर निवास करने वाले जितने भूत हैं, वे मेरे द्वारा विधिवत् दी गई इस बलि को ग्रहण करें और अन्यत्र अपना वास स्थान निर्माण करें। मेरा अपराध क्षमा करें। आप सभी लोगों को हमारा नमस्कार है' ॥ १४३-१४७ ॥

**प्रणवाद्या इमे मन्त्राः कीर्तिता बलिप्रार्थने ।**
**ततोच्चरेदिमं मन्त्रं दशदिक्षु स्फुटाक्षरैः ॥ १४८ ॥**

बलि और प्रार्थना के इन दोनों मन्त्रों के आदि में प्रणव लगाना चाहिए। तदनन्तर स्पष्ट अक्षरों में दशो दिशाओं में इस मन्त्र का उच्चारण करे ॥ १४८ ॥

**क्षेत्रपालापसर्पणमन्त्रः**

**ये चात्र विघ्नकर्तारो दिवि भुव्यन्तरिक्षगाः ।**
**विघ्नभूतास्तथा चान्ये मम मन्त्रस्य सिद्धिषु ॥ १४९ ॥**
**मयैतत् कीलितं क्षेत्रं परित्यज्य विदूरतः ।**
**अपसर्पन्तु ते सर्वे निर्विघ्ना सिद्धिरस्तु मे ॥ १५० ॥**

स्पष्ट उच्चारण किये जाने वाले मन्त्र का अर्थ इस प्रकार है—दिव, भूमि तथा अन्तरिक्ष में विघ्न करने वाले स्वयं मेरे मन्त्र की सिद्धि में विघ्नभूत हैं वे सभी इस स्थान को छोड़कर यहाँ से दूर भाग जावें। मैंने इस स्थान को कीलित किया है। मेरे इस अनुष्ठान की निर्विघ्न सिद्धि हो ॥ १४९-१५० ॥

**एवं प्रार्थ्य शुभे स्थाने निशायां शयनं चरेत् ।**
**ततो निशान्ते सम्बुद्ध्य प्रातःकृत्यादिकं तथा ॥ १५१ ॥**

इस प्रकार प्रार्थना कर रात्रि में पवित्र स्थान पर साधक शयन करे। फिर प्रात:काल उठकर प्रात:काल की समस्त क्रिया सम्पादन करे ॥ १५१ ॥

**स्नानसन्ध्यादिकं कर्म कृत्त्वा वेदोक्तवर्त्मना ।**
**ज्ञाताज्ञातस्य पापस्य क्षयार्थं प्रथमं ततः ॥ १५२ ॥**

**सावित्रीं प्रजपेद् विद्वानयुतं वा तदर्धकम् ।**
**त्रिसहस्रं सहस्रं वा जपेदष्टोत्तरं सुधीः ॥ १५३ ॥**

वेदोक्त विधि के अनुसार स्नान एवं सन्ध्यादि कर्म कर ज्ञाताज्ञात पाप के क्षय के लिये गायत्री का जप दश हजार अथवा उसका आधा करे, अथवा तीन सहस्र अथवा एक सौ आठ बार करे ॥ १५२-१५३ ॥

**तद्दशांशं प्रजुहुयात् तिलैर्गोघृतसंप्लुतैः ।**
**विप्रान् सम्भोजयेत् पश्चात् परमान्नैश्च दक्षिणाम् ॥ १५४ ॥**

उसका दशांश तिल एवं गोघृत को मिलाकर हवन करे । इसके बाद ब्राह्मणों को पायस भोजन करा कर दक्षिणा प्रदान करे ॥ १५४ ॥

**दत्त्वा विसर्जयेत् तांस्तु गुरुं सम्प्रीणयेत् ततः ।**
**स्वयं हविष्यं भुञ्जीत ध्यायन् देवमनाकुलः ॥ १५५ ॥**
**निशां व्यतीय मतिमान् प्रातर्बुद्ध्वा समाप्य तत् ।**
**क्रियां च कृतशौचादिः स्नात्वा तीर्थे विधानतः ॥ १५६ ॥**
**सन्ध्यादिकं समाप्याथ गृहीत्वा जलकुम्भकम् ।**
**यागभूमिमथागत्य धौतपादादिकः सुधीः ॥ १५७ ॥**
**दिक्पालांश्च प्रणम्यादौ सामान्यार्घं विधाय च ।**
**गणेशं पूजयेदादौ सर्वविघ्नविनाशनम् ॥ १५८ ॥**

दक्षिणा देकर ब्राह्मणों के विसर्जन के पश्चात् साधक अपने गुरु को प्रसन्न करे और स्वयं हविष्य भोजन कर प्रसन्नतापूर्वक देव का ध्यान करे । इस प्रकार रात्रि बिताने के पश्चात् मतिमान् साधक प्रातःकाल उठकर अपना नित्य कर्म शौचादि समाप्त कर, तीर्थ में विधिपूर्वक स्नान कर, सन्ध्यादि समाप्त कर, जल कलश लेकर याग भूमि में पधारे । फिर साधक को पाद प्रक्षालनादि क्रिया समाप्त कर दिक्पालों को प्रणाम कर सामान्यार्घ बनाकर सर्वप्रथम विघ्नविनाशक श्रीगणेश का पूजन करना चाहिए ॥ १५५-१५८ ॥

**ततो यजेद् द्वारपांश्च जपस्थानं प्रविश्य तु ।**
**वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ॥ १५९ ॥**
**तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणं ततः ।**
**कुर्यात् प्रतिज्ञां मतिमान् यथावदभिधीयते ॥ १६० ॥**

फिर जप स्थान में प्रवेश कर द्वारपालों का पूजन करे । मूल मन्त्र से वीक्षण करे, शर से प्रोक्षण करे, पुनः दर्भ से ताडन करे और कवच से अभ्युक्षण करे । इसके बाद प्रतिज्ञा सङ्कल्प जिस प्रकार से किया जाता है उसे उसी रूप में कह

रहा हूँ ॥ १५९-१६० ॥

### प्रतिज्ञासङ्कल्पकथनम्

**ततः कुशाक्षतजलान्यादाय प्रागुदङ्मुखः ।**
**प्रणवं तत्सदद्येति मासपक्षतिथीरपि ।**
**अमुकोऽमुकगोत्रोऽहं मूलमुच्चार्य तत्परम् ॥ १६१ ॥**
**सिद्धिकामोऽस्य मन्त्रस्य इयत्संख्याजपस्ततः ।**
**दशांशं हवनं होमात् दशांशं तर्पणं ततः ।**
**दशांशं मार्जनं तस्मात् दशांशं विप्रभोजनम् ॥ १६२ ॥**
**पुरश्चरणमेवं हि करिष्ये प्रागुदङ्मुखः ।**
**गुरून् गणेशं नत्वादौ स्वकल्पोक्तविधानतः ॥ १६३ ॥**
**भूतशुद्धिं विधायाथ प्राणायामं समाचरेत् ।**
**ऋष्यादिकं ततः कृत्वा कल्पोक्तन्यासमाचरेत् ॥ १६४ ॥**

साधक उत्तराभिमुख बैठकर हाथ में कुशा, अक्षत एवं जल लेकर ॐ तत्सदद्य के उच्चारण के पश्चात् मास, पक्ष, तिथि का उच्चारण करे । अमुक गोत्रोऽमुकोऽहम् फिर मूल का उच्चारण कर 'अस्य मन्त्रस्य सिद्धिकामः इयत्संख्याक जपं तद् दशांशं हवनम् होमाद् दशांशं तर्पणम् तद् दशांशं मार्जनं तद् दशांशं ब्राह्मण भोजनम् एवं पुरश्चरणं करिष्ये ।' फिर पूर्वाभिमुख अथवा उत्तराभिमुख होकर प्रथम 'गुरु एवं श्रीगणेश को नमन करे । फिर स्वकल्पोक्त विधि से भूतशुद्धि कर प्राणायाम करे । तदनन्तर ऋष्यादि द्वारा विनियोग कर कल्पोक्त-न्यास करे ॥ १६१-१६४ ॥

**ततः सङ्क्षेपविधिना सम्पूज्य निजदैवतम् ।**
**मुखशुद्धिं विधायाथ चिन्त्य सेतुं च कुल्लुकाम् ॥ १६५ ॥**
**महासेतुं च निर्वाणं कामबीजं ततो मनुम् ।**
**जपेन्मालां च सम्पूज्य ध्यानस्थोऽनन्यभावनः ॥ १६६ ॥**
**शनैः शनैरविस्पष्टं न द्रुतं न विलम्बितम् ।**
**क्रमेणोच्चारयेद् वर्णानाद्यन्तक्रमयोगतः ॥ १६७ ॥**

फिर सङ्क्षेप में अपने इष्टदेव का पूजन कर मुखशुद्धि करे । फिर सेतु, कुल्लुका, महासेतु, निर्वाण, कामबीज, फिर मन्त्र और जपमाला की पूजा कर अनन्य भावनायुक्त ध्यान में स्थित होकर धीरे-धीरे अविस्पष्ट न जल्दीबाजी में, न विलम्ब से, क्रमशः आघन्त क्रम से धीरे-धीरे मन्त्र के वर्णों का उच्चारण करना चाहिए ॥ १६५-१६७ ॥

**देवतां चित्तगां कृत्वा तथा च हृदयं स्थिरम् ।**

**आमध्याह्नं जपं कुर्यादुपांशुर्वाथ मानसम् ॥ १६८ ॥**

देवता को अपने हृदय में रखे और हृदय को एकाग्र तथा स्थिर रखे । मध्याह्न पर्यन्त पुरश्चरण मन्त्र का उपांशु अथवा मानस जप करे ॥ १६८ ॥

**यामले—**

**गणनाविधिमुल्लंघ्य यो जपेत्तु जपं यतः ।**
**गृह्णन्ति राक्षसास्तेन गणयेत् सर्वथा बुधः ॥ १६९ ॥**

यामल में भी बतलाया गया है—जो गणना विधि का उल्लङ्घन कर जप करता है उसे राक्षस ग्रहण कर लेते हैं । इसलिये बुद्धिमान् साधक जप की गणना सब प्रकार से करे ॥ १६९ ॥

**नाक्षतैर्हस्तपर्वैर्वा न धान्यैर्न च पुष्पकैः ।**
**न चन्दनैर्मृत्तिकया जपसंख्यां तु कारयेत् ॥ १७० ॥**
**लाक्षां कुशीतं सिन्दूरं गोमयं च करीषकम् ।**
**एभिर्विलोड्य गुटिकां कृत्वा संख्यां तु कारयेत्॥ १७१ ॥**

**कुशीतं = रक्तचन्दनम् ।**

अक्षत से, हाथ के पर्व से, धान्य से, पुष्प से, चन्दन से अथवा मिट्टी से जप की गणना नहीं करना चाहिए । लाक्षा, कुशीत, सिन्दूर, गोमय और करसी इन सभी को अच्छी तरह एक में सानकर और गुटिका बनाकर उसी से गणना करनी चाहिये ॥ १७०-१७१ ॥

कुशीत का अर्थ रक्तचन्दन है ।

**आसनं प्रोक्षयेन्नित्यं जपादुत्थाय साधकः ।**

साधक जप से उठकर सर्वदा आसन का प्रोक्षण करे ॥ १७२ ॥

**यच्च तन्त्रान्तरे—**

**अप्रोक्षिते जपस्थाने शुको हरति तज्जपम् ।**
**व्याहृत्या च विलोमेन तिलकं प्रोक्ष्य कारयेत् ॥ १७२ ॥**

जो तन्त्रान्तर में भी बतलाया गया है—यदि जप के स्थान का प्रोक्षण न करे तो उस जप को शुक हर लेता है । आसन के प्रोक्षण के बाद व्याहृति का विलोम कर तिलक लगावे ॥ १७२ ॥

**हविष्यं निशि भुञ्जीत त्रिःस्नाय्यभ्यङ्गवर्जितः ।**
**व्यग्रताऽऽलस्यनिष्ठीवक्रोधपादप्रसारणम् ॥ १७३ ॥**
**अन्यभाषां त्यजेत् क्षुच्च जपकाले सदा सुधीः ।**

**स्त्रीशूद्रभाषणं निन्दां ताम्बूलं शयनं दिवा ॥ १७४ ॥**
**प्रतिग्रहं नृत्यगीते कौटिल्यं वर्जयेत् सदा ।**

सुधी साधक जपकाल में तीन बार स्नान करे और रात्रि में नित्य हविष्य का ही भोजन करे । अभ्यङ्ग (मालिश) न करे । व्यग्रता, आलस्य, ष्ठीवन (थूक), क्रोध, पाद-प्रसारण तथा अन्य भाषा का प्रयोग न करे । स्त्री एवं शूद्र से भाषण न करे । ताम्बूल भक्षण तथा दिन में शयन न करे । प्रतिग्रह, नृत्यगीत एवं कुटिलता सर्वदा वर्जित करे ॥ १७३-१७५ ॥

**भूशय्यां ब्रह्मचर्यं च त्रिकालं देवतार्चनम् ॥ १७५ ॥**
**नैमित्तिकार्चनं देवस्तुतिं विश्वासमाश्रयेत् ।**
**प्रत्यहं प्रत्यहं तावन्नैव न्यूनाधिकं चरेत् ।**
**एवं जपं समाप्यान्ते दशांशं हवनं चरेत् ॥ १७६ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे पुरश्चर्याविधिर्नाम त्रयोदशः पटलः ॥ १३ ॥**

...❧❀❧...

भूशय्या, ब्रह्मचर्य व्रत का पालन, त्रिकाल देवार्चन, नैमित्तिकार्चन एवं देवस्तुति तथा देवता में विश्वास बनाये रखे और प्रतिदिन-प्रतिदिन जप की संख्या में कमी अथवा अधिकता न करे । इस प्रकार जप समाप्त करने के पश्चात् साधक जप का दशांश होम करे ॥ १७५-१७६ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में पुरश्चर्याविधि नामक त्रयोदश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १३ ॥**



# चतुर्दशः पटलः

## होमादिविधानकथनम्

**अथो होमविधिं वक्ष्ये सर्वतन्त्रानुसारतः ।**

**यदकरणे व्यङ्गतोक्ता पिङ्गलामते—**

**नाध्यातो नार्चितो मन्त्रः सुसिद्धोऽपि प्रसीदति ॥ १ ॥**
**नाजप्तः सिद्धिदानेच्छुर्नाहुतः फलदो भवेत् ।**
**पूजां ध्यानं जपं होमं तस्मात् कर्मचतुष्टयम् ।**
**प्रत्यहं साधकः कुर्यात् स्वयं चेत्सिद्धिमिच्छति ॥ २ ॥ इति ।**

अब सभी तन्त्रों के अनुसार होम विधि कहता हूँ—जिसके न करने से अनुष्ठान पूर्ण नहीं होता । पिङ्गलामततन्त्र के अनुसार बिना ध्यान किये, बिना जप किये सुसिद्ध भी मन्त्र फलवान् नहीं होते, बिना जप किये मन्त्र सिद्धि-प्रदान की इच्छा नहीं रखते और न फल प्रदान करते हैं । इसलिये मन्त्र का पूजा, ध्यान, जप एवं होम—ये चार कर्म अवश्य करना चाहिये । यदि साधक स्वयं सिद्धि की इच्छा रखता हो तो उसे निरन्तर उपर्युक्त चार कर्म अवश्य करना चाहिये ॥ १-२ ॥

**तच्च चिदम्बरे—**

**कुण्डे वा स्थण्डिले वापि यथोक्तविधिना चरेत् ।**
**तत्तत्कल्पोदितैर्द्रव्यैस्तद्विधानमुदीर्यते ॥ ३ ॥**

चिदम्बरसंहितातन्त्र में भी बतलाया गया है—कुण्ड में अथवा स्थण्डिल पर उन-उन कल्पों में कहे गये द्रव्यों से यथोक्त विधि से होम करे । अब होम का विधान कहते हैं ॥ ३ ॥

**प्राणायामं षडङ्गं च कृत्त्वा मूलेन मन्त्रवित् ।**
**कुण्डे वा स्थण्डिले कुर्यात् संस्काराणां चतुष्टयम् ॥ ४ ॥**

मन्त्रवेत्ता प्राणायाम कर के षडङ्गन्यास करे । फिर मूल मन्त्र से कुण्ड अथवा स्थण्डिल का चार संस्कार करे ॥ ४ ॥

**मूलेनेक्षणमस्त्रेण प्रोक्षणं ताडनं कुशैः ।**
**वर्मणा मुष्टिनासिंच्य लिखेद् यन्त्रं तदन्तरे ॥ ५ ॥**

मूल मन्त्र से ईक्षण, अस्त्र मन्त्र से प्रोक्षण, कुशों से ताडन, वर्म से मुष्टि द्वारा ताडन कर कुण्ड के भीतर यन्त्र निर्माण करे ॥ ५ ॥

**वह्निकोणषडस्राष्टदलभूमन्दिरात्मकम् ।**
**मध्ये तारपुटां मायां लिखित्वा पीठमर्चयेत् ।**
**मण्डूकश्चाथ कालाग्निरुद्र आधारशक्तियुक् ॥ ६ ॥**
**कूर्मो धरा सुधासिन्धुश्वेतद्वीपसुराङ्घ्रिपाः ।**
**मणिहर्म्यं हेमपीठं धर्मो ज्ञानं विरागता ॥ ७ ॥**
**ऐश्वर्यं धर्मपूर्वास्तु चत्वारस्ते नञादिकाः ।**
**धर्मादयः स्मृताः पादाः पीठगात्राणि चेतरे ॥ ८ ॥**

प्रथम त्रिकोण बनावे, फिर षट्कोण, फिर अष्टदल, फिर भूपुर लिखे । कुण्ड के मध्य में प्रणव सम्पुटित माया (ह्रीं) लिख कर पीठ की अर्चना करे । मण्डूक और कालाग्नि रुद्र आधार शक्ति हैं । कूर्म, धरा, सुधा, सिन्धु, श्वेतद्वीप, कल्पवृक्ष, मणिद्वीप, हेमपीठ, धर्म, ज्ञान, वैराग्य एवं ऐश्वर्य तथा अधर्म, अज्ञान, अनैश्वर्य एवं अवैराग्य—ये चार पीठ के पाद हैं । शेष-पीठ के गात्र हैं ॥ ६-८ ॥

**मध्येऽनन्तं तत्त्वपद्ममानन्दमयकन्दकम् ।**
**सम्विन्नालं ततः प्रोक्ता विकारमयकेसराः ॥ ९ ॥**

मध्य में अनन्त नामक तत्त्व पद्म है, जिसका कन्द आनन्दमय है, संवित् (ज्ञान) उसका नाल है और उसके केसर विकारमय हैं ॥ ९ ॥

**प्रकृत्यात्मकपत्राणि पञ्चाशद्वर्णकर्णिकाः ।**
**सूर्यस्येन्दोः पावकस्य मण्डलत्रितयं ततः ॥ १० ॥**

प्रकृत्यात्मक उसके पत्र हैं । पचास वर्ण उस कमल की कर्णिकायें हैं । सूर्य चन्द्रमा तथा अग्नि ये तीन उसके मण्डल हैं ॥ १० ॥

**सत्त्वं रजस्तमः पश्चादात्मायुक्तोऽन्तरात्मना ।**
**परमात्माऽथ ज्ञानात्मा तत्त्वे मायाकलादिके ॥ ११ ॥**

सत्त्व, रज, तम, इसके बाद आत्मा, अनारात्मा, परमात्मा, ज्ञानात्मा, मायातत्त्व, कलातत्त्व, विद्यातत्त्व एवं परतत्त्व हैं ॥ ११ ॥

**विद्यातत्त्वं परं तत्त्वं पीठशक्तीर्जयादिकाः ।**
**जयाख्या विजया पश्चादजिता चापराजिता ।**

**नित्या विलासिनी दोग्ध्री अघोरा मङ्गलान्तिमा ॥ १२ ॥**

जया, विजया, अजिता, अपराजिता, नित्या, विलासिनी, दोग्ध्री, अघोरा और अन्तिम मङ्गला—ये पीठ शक्तियाँ हैं ॥ १२ ॥

**वागीशीवागीश्वरयोर्योगपीठात्मने नमः ।**
**मायादिकः पीठमन्त्रस्तयोस्तेनासनं दिशेत् ॥ १३ ॥**

माया '(ॐ) योग पीठात्मने नमः'—यह पीठ मन्त्र है । इस पीठ मन्त्र से वागीशी वागीश्वर को आसन प्रदान करे ॥ १३ ॥

**यजेत् तौ तारमायाभ्यां गन्धाद्यैरुपचारकैः ।**
**लक्ष्मीनारायणावर्चेद् वैष्णवे होमकर्मणि ॥ १४ ॥**
**सूर्यकान्तादरणितः श्रोत्रियागारतोऽपि वा ।**
**पात्रेण पिहितं पात्रे वह्निमादापयेत् ततः ॥ १५ ॥**
**अस्त्रेणादाय तत्पात्रं वर्मणोद्घाटयेच्च तम् ।**
**अस्त्रमन्त्रेण नैर्ऋत्ये क्रव्यादांशं ततस्त्यजेत् ॥ १६ ॥**

तार (ॐ) माया (ह्रीं) इस मन्त्र से गन्धादि उपचारों द्वारा उन दोनों का अर्चन करे । वैष्णव होम कर्म में लक्ष्मीनारायण की अर्चना करे । सूर्यकान्तमणि से अथवा अरणि से अथवा श्रोत्रिय के घर से पात्र में अग्नि लेकर पुनः पात्र से उसे बन्द करे । स्वयं न लाकर किसी व्यक्ति से मँगवाये । साधक अस्त्र मन्त्र से उस अग्नि को लेकर कवच मन्त्र से उसका उद्घाटन करे ॥ १४-१६ ॥

**मूलेन पुरतो धृत्वा संस्कारान् चतुरश्चरेत् ।**
**वीक्षणाद्यान् पुरा प्रोक्तानल्पं प्रोक्षणमाचरेत् ॥ १७ ॥**

मूल मन्त्र से अपने आगे रखकर उसके चारो संस्कारों को करे । वीक्षणादि चारो संस्कार पहले कह आये हैं (द्र० १४.५) फिर अल्प प्रोक्षण करे ॥ १७ ॥

### अग्निस्थापनप्रयोगकथनम्

**परमात्मनाऽनलेनाथ जाठरेणापि वह्निना ।**
**स्मरन्नैक्यं वह्निजीवाच्चैतन्यं योजयेत् ततः ॥ १८ ॥**
**तारेण चाभिमन्त्र्याग्निं सुधया धेनुमुद्रया ।**
**अमृतीकृत्य संरक्षेदस्त्रमन्त्रेण मन्त्रवित् ॥ १९ ॥**
**मुद्रया त्ववगुण्ठिन्या कवचेनावगुण्ठयेत् ।**
**कुण्डोपरि ततो वह्निं भ्रामयेत् त्रिर्ध्रुवं पठन् ॥ २० ॥**
**शय्यागतां ऋतुस्नातां नीलेन्दीवरधारिणीम् ।**

**देवेन भुज्यमानां तां स्मृत्वा तद्योनिमण्डले ॥ २१ ॥**
**ईशरेतोधिया वह्निं स्थापयेदात्मसम्मुखम् ।**
**मूलं नवार्णं च पठन् जानुस्पृष्टधरातलः ॥ २२ ॥**

नवार्णमन्त्रोद्धारः

**रेफार्घीशेन्दुसंयुक्तं गगनं वह्निचै ततः ।**
**तन्याय हृदयान्तोऽयं नवार्णोऽग्निनिधापने ॥ २३ ॥**

परमात्मा अनल तथा जाठराग्नि में रहने वाला अनल दोनों की एकता का ध्यान कर वह्नि जीव से उसमें चैतन्य को संयुक्त करे । तार (ॐ) से अग्नि का अभिमन्त्रण करे । सुधा (वं) से तथा धेनुमुद्रा से उसका अमृतीकरण करे । कवच मन्त्र पढ़कर अवगुण्ठिनी मुद्रा से उसे अवगुण्ठित करे । फिर ॐकार मन्त्र पढ़ते हुये तीन बार कुण्ड के ऊपर अग्नि को घुमावे । ऋतुस्नाता नील कमल धारण की हुई शय्या पर स्थित अग्नि के द्वारा सम्भोग की जाती हुई इस प्रकार अग्नि की स्त्री (स्वाहा) का योनि मण्डल में ध्यान करते हुये और अग्नि का ईश्वर के रेत (वीर्य) रूप में ध्यान करते हुये अग्नि को अपने सामने स्थापित करे । पृथ्वी पर दोनों जानु स्थापित कर मूल मन्त्र एवं नवार्ण का जप करते हुये रेफ अर्घीश, ॐकार इन्द्र (अनुस्वार युक्त गगन हूं) फिर वह्नि चैतन्याय नमः यह नव अक्षरों वाला अग्नि स्थापन का नवार्ण मन्त्र है ॥ १८-२३ ॥

**विश्राण्याचमनं देवीदेवयोर्ज्वालयेद् वसुम् ।**
**चतुर्विंशतिवर्णेन घृतेन श्रयणादिभिः ।**
**चित् पिङ्गल हनद्वन्द्वं दहयुग्मं पचद्वयम् ॥ २४ ॥**
**सर्वज्ञाज्ञापयस्वाहा मन्त्रो वेदभुजाक्षरः ।**
**प्रदर्श्य ज्वालिनीं मुद्रामुत्त्थाय विहिताञ्जलिः ॥ २५ ॥**
**श्लोकरूपेण मन्त्रेण उपतिष्ठेद् हुताशनम् ।**
**अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ २६ ॥**
**सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ।**
**अथाग्निमन्त्रं विन्यस्येत् तद्विधानमुदीर्यते ॥ २७ ॥**

आचमन कर देवी एवं देव के लिये चौबीस वर्ण के मन्त्र से घृत और समिधाओं द्वारा अग्नि प्रज्वलित करे । 'चित् पिङ्गले हन-हन-दह-दह पच पच सर्वज्ञाप्य स्वाहा'—यह चौबीस अक्षर का मन्त्र अग्नि को प्रज्वलित करने के लिये कहा गया है । तदनन्तर साधक प्रज्वालिनी मुद्रा प्रदर्शित कर हाथ जोड़कर वहाँ से उठकर इस श्लोक को पढ़कर अग्नि का उपस्थान करे । 'अग्निं प्रज्वलितं वन्दे ..........विश्वतोमुखम्' पर्यन्त यह अग्नि के उपस्थान का मन्त्र है । इसके

बाद अग्नि मन्त्र का साधक अपने शरीर पर न्यास करे । अब आगे उसका विधान कहते हैं ॥ २४-२७ ॥

अग्निमन्त्रोद्धारः

**वैश्वानरान्ते जातेति वेदान्ते स्यादिहावह ।**
**लोहिताक्षपदात् सर्वकर्माण्यन्ते तु साधय ॥ २८ ॥**
**वह्निप्रियान्तो मन्त्रोऽयं षड्विंशत्यक्षरान्वितः ।**
**ऋषिश्छन्दो देवतास्य भृगुगायत्रिपावकाः ॥ २९ ॥**
**रं बीजं ठद्वयं शक्तिर्हवने विनियोजनम् ।**
**लिङ्गे पायौ मूर्ध्नि वक्त्रे नसिनेत्रेऽखिलाङ्गके ।**
**वह्नेर्जिह्वा स्वबीजाद्या न्यसेत् ङेन्ता नमोऽन्विताः ॥ ३० ॥**
**दीपिकानलवायुस्थाः साद्या वर्णा विलोमतः ।**
**सेन्दवः सप्तजिह्वानां क्रमाद् वै बीजतां गताः ॥ ३१ ॥**

'वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा' यह छब्बीस अक्षरों का मन्त्र है । इस मन्त्र के भृगु ऋषि हैं, गायत्री छन्द है, अग्नि देवता हैं, 'रं' बीज है, स्वाहा शक्ति है, हवन कार्य में इसका विनियोग है । लिङ्ग, पायु, शिर, मुख, नासिका, नेत्र तथा सम्पूर्ण शरीर में आदि में स्व स्व बीज, फिर चतुर्थ्यन्त सप्तवह्निजिह्वायै' अन्त में नमः से न्यास करे । विलोमपूर्वक दीपिका, अनल और वायु, इसके बाद सप्त जिह्वा का आदि वर्ण जो सविन्दुक हो वह सप्त जिह्वाओं का बीज है ॥ २८-३१ ॥

**जिह्वास्तास्त्रिविधाः प्रोक्ता गुणभेदेन कर्मसु ।**
**हिरण्या गगना रक्ता कृष्णान्या सुप्रभा मता ।**
**बहुरूपातिरक्ता च सात्विक्यो यागकर्मसु ॥ ३२ ॥**

ये अग्नि की सात जिह्वायें कर्म में गुणभेद के कारण तीन प्रकार की कही गई हैं । हिरण्या, गगना, रक्ता, कृष्णा, सुप्रभा, बहुरूपा एवं अतिरिक्ता—ये सात अग्नि की सात्विकी जिह्वाये हैं ॥ ३२ ॥

**पद्मरागा सुवर्णान्या तृतीया भद्रलोहिता ॥ ३३ ॥**
**लोहिता च तथा श्वेता धूमिनी च करालिका ।**
**राजस्यो रसना वह्नेर्विहिता काम्यकर्मसु ॥ ३४ ॥**
**विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ।**
**लोहितान्या करालाख्या कालीतामस्य ईरिताः ॥ ३५ ॥**
**एताः सप्त नियुज्यन्ते क्रूरकर्मसु देशिकैः ।**

**स्वस्वनामसमानाः स्युर्जिह्वाः कल्याणरेतसः ॥ ३६ ॥**

पद्मरागा, सुवर्णा, भद्रलोहिता, लोहिता, श्वेता, धूमिनी एवं करालिका—ये सात अग्नि की राजसी जिह्वायें हैं जो काम्य कर्म में विहित हैं । विश्वमूर्त्ति, स्फुलिङ्गिनी, धूम्रवर्णा, मनोजवा, लोहिता, कराला और काली—ये तामसी जिह्वायें हैं । आचार्य लोग इन सातों तामसी जिह्वाओं का क्रूरकर्म में उपयोग करते हैं । ये अग्नि की प्रत्येक जिह्वायें अपने-अपने नाम के समान गुण वाली हैं ॥ ३३-३६॥

**गीर्वाणपितृगन्धर्वयक्षनागपिशाचकाः ।**
**राक्षसश्चेति जिह्वानां देवतास्तत्स्थले न्यसेत् ॥ ३७ ॥**
**न्यासेऽर्चने व्युत्क्रमः स्यात् बहुरूपातिरक्तयोः ।**
**नेत्रेऽतिरक्ता न्यस्तव्या सर्वाङ्गे बहुरूपिका ॥ ३८ ॥**

देवता, पितर, गन्धर्व, यक्ष, नाग, पिशाच और राक्षस—ये सात उन सात जिह्वाओं के देवता बतलाये गए हैं । अतः इनका तत्तत् स्थलों में न्यास करना चाहिए । न्यास और अर्चन कार्य में बहुरूपा और अतिरिक्ता में व्युत्क्रम करे अर्थात् नेत्र में पहले अतिरिक्ता का न्यास करे । तदनन्तर सर्वाङ्ग में बहुरूपिका से न्यास करे ॥ ३७-३८ ॥

**वह्नेरङ्गमनून् न्यस्येत् तनावुक्तेन वर्त्मना ।**
**सप्तार्चिषेति हृदयं स्वस्तिपूर्णाय मस्तकम् ॥ ३९ ॥**
**उत्तिष्ठ पुरुषायेति शिखामन्त्रोऽयमीरितः ।**
**धूमान्ते व्यापिने वर्म सप्तजिह्वाय नेत्रकम् ॥ ४० ॥**
**अस्त्रं धनुर्धरायेति जात्याङ्गानि समाचरेत् ।**
**मूर्ध्नि वामांसके पार्श्वे कटौ लिङ्गे कटौ पुनः ॥ ४१ ॥**
**दक्षपार्श्वांसके न्यस्येन् मूर्तीरष्टौ विभावसोः ।**
**तारागनये पदाद्यास्तु चतुर्थी हृदयान्तिकाः ॥ ४२ ॥**
**जातवेदाः सप्तजिह्वो हव्यवाहन इत्यपि ।**
**अश्वोदरजसञ्ज्ञोऽन्यस्तथा वैश्वानराह्वयः ॥ ४३ ॥**
**कौमारतेजाः स्याद् विश्वमुखदेवमुखावपि ।**
**ततो न्यसेन्निजे देहे पीठं हाटकरेतसः ॥ ४४ ॥**
**वह्निमण्डलपर्यन्तं मण्डूकादि यथोदितम् ।**
**पीता श्वेतारुणाकृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ॥ ४५ ॥**
**रुचिरा ज्वालिनी चेति कृशानोः पीठशक्तयः ।**
**रं वह्न्यासनायेति हृदन्तः पीठमन्त्रकः ।**
**एवं विन्यस्य पीठान्तं पावकं चिन्तयेत् तनौ ॥ ४६ ॥**

त्रिनेत्रमारक्ततनुं सुशुक्ल-
वस्त्रं सुवर्णस्त्रजमग्निमीडे ।
वराभयं स्वस्तिकशक्तिहस्तं
पद्मस्थमाकल्पसमूहयुक्तम् ॥ ४७ ॥
एवं ध्यात्वार्चनं कुर्यान् मानसं विधिवद् वसोः ।
परिषिञ्चेत् ततस्तोयैः कुण्डं स्थण्डिलमेव वा ॥ ४८ ॥

अग्नि के अङ्गमन्त्रों को ऊपर कही गई विधि के अनुसार शरीर में इस प्रकार न्यास करे । सप्तार्चिषे नमः से हृदय में, स्वस्तिपूर्णाय नमः से मस्तक में, उत्तिष्ठ पुरुषाय नमः से शिखा में न्यास करे । धूमव्यापिने नमः कवचाय हु, सप्तजिह्वाय नमः, नेत्राभ्यां वौषट्, धनुर्धराय नमः अस्त्राय फट्, वाम इस प्रकार जात्यङ्ग न्यास करे । शिर, बाये कन्धे, दोनों पार्श्व, कटि, लिङ्ग, पुनः दक्षिण कटि, दक्षिण कन्धा इन स्थानों में अग्नि की आठ मूर्त्तियों से न्यास करे । तार (ॐ), फिर अग्नये आदि में और अन्त में हृदय (नमः) कहे । ॐ अग्नये नमः, ॐ जातवेदसे नमः, ॐ सप्तजिह्वाय नमः, ॐ हव्यवाहनाय नमः, ॐ अश्वोदरजाय नमः, ॐ वैश्वानराय नमः, ॐ कौमारतेजसे नमः, ॐ विश्वमुखाय नमः, ॐ देवमुखाय नमः—इन नामों से अपने शरीर में न्यास करे । फिर अग्नि के मण्डूक से लेकर वह्नि मण्डल पर्यन्त पीठ पर न्यास करे । पीता, श्वेता, अरुणा, कृष्णा, धूम्रा, तीव्रा, स्फुलिङ्गिनी, रुचिरा एवं ज्वालिनी—ये अग्नि की ९ पीठ शक्तियाँ हैं । 'रं वह्न्यासनाय नमः'—यह पीठ का मन्त्र है । इस प्रकार पीठ न्यास कर लेने के पश्चात् साधक अपने शरीर में अग्नि का ध्यान करे । तीन नेत्रों वाले, रक्त वर्ण के शरीर वाले, सुवर्ण की माला धारण किये हुये उन अग्नि देव का मैं ध्यान करता हूँ । जिनके हाथ में वर, अभय, स्वास्तिक और शक्ति है । वह कमल पर स्थित हैं जो कितने कल्प समूहों से युक्त हैं । इस प्रकार ध्यान कर साधक अग्निदेव का विधिवत् मानस अर्चन करे । अर्चना के अनन्तर कुण्ड को अथवा स्थण्डिल को जल से अभिषिञ्चित करे ॥ ३९-४८ ॥

दर्भैः परिस्तरेदग्निं प्रागग्रैरुदगग्रकैः ।
प्रत्यग्दक्षिणसौम्यासु न्यसेत् त्रीन् परिधीन् क्रमात् ॥ ४९ ॥
पालाशबिल्वखदिरांस(तेषु) ब्रह्मविष्णुशिवान् यजेत् ।
वह्नौ तत् पीठमभ्यर्च्याऽऽवाहयेत् स्वहृदोऽनलम् ॥ ५० ॥
गन्धादिभिः समभ्यर्च्य पूजयेत् पावकावृतीः ।
षट्सु कोणेषु मध्ये च जिह्वास्तद्देवताः यजेत् ॥ ५१ ॥
ईशानादिषु वाय्वन्तकोणेषु षट् समर्चयेत् ।
हिरण्याद्यतिरिक्ता ता मध्ये तु बहुरूपिणीम् ॥ ५२ ॥

**केसरेष्वङ्गपूजा स्याद् दलेष्वष्टसु मूर्तयः ।**
**मातरोऽष्टौ दलान्तेषु भैरवाः स्युस्तदग्रतः ॥ ५३ ॥**
**धरापुरे तु शक्राद्या वज्राद्यायुधसंयुताः ।**
**एवमावरणैर्युक्तं सप्तभिः पावकं यजेत् ॥ ५४ ॥**
**असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसञ्ज्ञकः ।**
**कपाली भीषणश्चैव संहारश्चाष्टभैरवाः ॥ ५५ ॥**

पूर्वाग्र एवं उत्तराग्र कुशों से अग्नि का परिस्तरण करे । फिर पश्चिम दक्षिण और उत्तर में तीन परिधि स्थापित करे । वहाँ पलाश, बिल्व और खैर की समिधाओं पर ब्रह्मा, विष्णु और शिव का पूजन करे । फिर अग्नि में उनके पीठ की अर्चना कर अपने हृदय से अग्नि का आवाहन करे । उन दोनों अग्नियों का गन्धादि से अर्चन करे । अग्नि के छह कोणों पर उनकी जिह्वा का तथा उन जिह्वा के देवताओं का, ईशान कोण से आरम्भ वर वायव्यन्त कोण तक, हिरण्या से लेकर अतिरिक्ता पर्यन्त एवं मध्य में बहुरूपिणी का पूजन करे । (द्र. १४.३२) केशरों पर अङ्गपूजा करे और पत्रों पर अष्टमूर्त्तियों का पूजन करे तथा पत्रों के अन्त में अष्टमातृकाओं का एवं पत्र के अग्रभाग में अष्ट भैरवों का पूजन करे। इसके बाद भूपुर में वज्रादि अपने-अपने आयुधों से युक्त इन्द्रादि देवगणों का पूजन करे । इस प्रकार सात आवरणों से युक्त अग्निदेव का पूजन करे। असिताङ्ग, रुरु, चण्ड, क्रोध, उन्मत्त, कपाली, भीषण और संहार—ये आठ भैरवों के नाम हैं ॥ ४९-५५ ॥

**वामे कुशानथास्तीर्य तत्र वस्तूनि निःक्षिपेत् ।**
**प्रणीताप्रोक्षणीपात्रे आज्यस्थालीं स्रुचं स्रुवम् ॥ ५६ ॥**
**अधोमुखानि चैतानि होमद्रव्यं घृतं कुशान् ।**
**समिधः पञ्चपालाशीरन्यदप्युपयोगि यत् ॥ ५७ ॥**

फिर बाईं ओर कुशा फैलाकर उस पर हवनीय वस्तुयें स्थापित करे । प्रणीतापात्र, प्रोक्षणीपात्र, आज्यस्थाली एवं स्रुचास्रुवा—इनको अधोमुख स्थापित करे तदनन्तर होमद्रव्य घृत, कुशा, समिधायें, पञ्च पालाशी, इसके अतिरिक्त अन्य उपयोगी वस्तुयें स्थापित करे ॥ ५६-५७ ॥

**कृत्त्वा पवित्रे मूलेन प्रोक्षेत् तानि शुभाम्भसा ।**
**उत्तानानि विधायाथ प्रणीतां पूरयेज्जलैः ॥ ५८ ॥**

फिर पवित्री धारण कर मन्त्रज्ञ साधक मूल मन्त्र से पवित्र जल द्वारा उन वस्तुओं का प्रोक्षण करे । फिर उन वस्तुओं को उतान करे । तदनन्तर जल से प्रणीता पात्र पूर्ण करे ॥ ५८ ॥

तीर्थमन्त्रेण तीर्थानि श्रृण्या तत्राह्वयेत् सुधीः ।
पवित्रेष्वक्षताँस्तत्र निःक्षिप्योत्पवनं चरेत् ॥ ५९ ॥
अथोदीच्यां निधायैतां प्रोक्षिण्यां तज्जलं क्षिपेत् ।
हवनीयं द्रव्यजातमुक्षेत् तोयैः पवित्रगैः ॥ ६० ॥

फिर सुधी साधक श्रृणी के द्वारा उस प्रणीता के जल में आवाहन करे । जल के पवित्र कर लेने पर उसमें अक्षत छोड़े । फिर उस जल का उत्पवन करे । फिर उसे कुण्ड के उत्तर में रखे । प्रणीता के जल को प्रोक्षणी में डाले और पवित्री धारण कर प्रोक्षणी के जल से समस्त हवनीय द्रव्यजात प्रोक्षित करे ॥ ५९-६० ॥

मूलेन मूलगायत्र्या यद्वा हृदयमन्त्रतः ।
दक्षिणे पीठमासाद्य तत्र ब्रह्माणमाह्वयेत् ॥ ६१ ॥

मूल मन्त्र से, अथवा मूल गायत्री से, अथवा हृदय मन्त्र से कुण्ड से दक्षिण ओर कुशा के पीठ पर ब्रह्मदेव का आवाहन करे ॥ ६१ ॥

अणिमाद्याः सिद्धयोऽष्टौ ब्रह्मणः पीठदेवताः ।
तारहृत्पूर्वको ङेन्तो ब्रह्मामन्त्रोऽस्य पूजने ।

स्रुक्स्रुचासंस्कारकथनम्

हस्ताभ्यां स्रुक्स्रुवौ धृत्वा तापयेत् त्रिरधोमुखौ ॥ ६२ ॥
वामहस्तेन तौ धृत्वा दर्भैर्दक्षेण मार्जयेत् ।
सम्प्रोक्ष्य प्रोक्षणीतोयैः प्रताप्य पूर्ववत् पुनः ॥ ६३ ॥
न्यस्याग्नौ मार्जनान् दर्भांस्तयोः शक्तित्रयं न्यसेत् ।
इच्छाज्ञानक्रियासञ्ज्ञं चतुर्थी नमसान्वितम् ॥ ६४ ॥
दीर्घत्रयेन्दुयुग्व्योमपूर्वकं स्थानकत्रये ।
हृदा स्रुचि न्यसेत् शक्तिं स्रुवे शम्भुं ततस्तु तौ ॥ ६५ ॥
सूत्रत्रयेण संवेष्ट्य सम्पूज्य कुसुमादिभिः ।
कुशोपरि न्यसेद् दक्षे तयोः संस्कार ईरितः ॥ ६६ ॥

आठ अणिमादि सिद्धियाँ ब्रह्मदेव के पीठ की देवता हैं । तार (ॐ) हृत् (नमः) ब्रह्म शब्द की चतुर्थी (ॐ ब्रह्मणे नमः) यह ब्रह्मा के पूजन का मन्त्र है । तदनन्तर हाथ में स्रुक् स्रुचा लेकर अधोमुख उनको अग्नि पर तीन बार तपावे । फिर उन्हें बायें हाथ में लेकर दाहिने हाथ के कुशों से मार्जन करे और प्रोक्षणी के जल से प्रोक्षण कर पूर्ववत् पुनः उन्हें प्रतप्त करे । मार्जन कुशों को अग्नि में डाल कर देवी मन्त्र से फिर उन स्रुच और स्रुवा में 'इच्छायै नमः, ज्ञानाय नमः, क्रियायै नमः' मन्त्र से इन तीन शक्तियों का न्यास करे । फिर तीन दीर्घत्रय जो

इन्दु से संयुक्त हो (आं ईं ऊँ) पूर्वक व्योम (हं) नमः मन्त्र से क्रमशः तीन स्थानों पर स्रुचि में शक्तिन्यास करे और तीन स्थानों में स्रुव में शम्भु का न्यास करे। फिर उसमें तीन बार सूत्र लपेट कर पुष्पादि से पूजन करे और अपनी दाहिनी ओर कुशा रख कर उन्हें स्थापित करे। इस प्रकार स्रुचा और स्रुवा का संस्कार हमने कहा ॥ ६२-६६ ॥

### अभिद्योतनादिसंस्कारकथनम्

अस्त्रोक्षितायामाज्यस्य स्थाल्यामाज्यं विनिःक्षिपेत्।
वीक्षणादिकसंस्कारसंस्कृतं मूलमन्त्रतः ॥ ६७ ॥
गोमुद्रयामृतीकृत्य षट्संस्काराँस्ततश्चरेत्।
कुण्डोद्धृते वायुकोणस्थितेऽगारे विनिःक्षिपेत् ॥ ६८ ॥
हृदेति तापनं प्रोक्तं दर्भयुग्मं प्रदीपितम्।
आज्यं क्षिप्त्वा हृदा वह्नौ पवित्रीकरणं त्विदम् ॥ ६९ ॥
आज्यं नीराजयेद् दीप्तदर्भयुग्मेन वर्मणा।
अभिद्योतनमुक्तं तद्दीप्तं दर्भत्रयं घृते ॥ ७० ॥
दर्शयेदस्त्रेणोद्योतो गृहीत्वा घृतपात्रकम्।
संयोज्याग्नौ तदङ्गारं सलिलं संस्पृशेत् सुधीः ॥ ७१ ॥
अङ्गुष्ठानामिकाभ्यां तु दर्भानादाय निःक्षिपेत्।
त्रिरग्निसम्मुखं त्वाज्यमस्त्रेणोत्पवनं चरेत् ॥ ७२ ॥
हृदात्मसम्मुखं तद्वदाज्याक्षेपस्तु संप्लवम्।
नीराजनादिसंस्कारेष्वग्नौ दर्भान् विनिःक्षिपेत् ॥ ७३ ॥

फिर अस्त्राभिमन्त्रित आज्यस्थाली में आज्य डाले एवं उसमें मूलमन्त्र से वीक्षणादि संस्कार करे। फिर गोमुद्रा से अमृतीकरण कर उसका षट् संस्कार करे। कुण्ड से निकाल कर उसे वायुकोण में स्थापित कर अङ्गार पर आज्यस्थाली रखे। हृन्मन्त्र (नमः) से तापित करे और दो दर्भ से प्रदीप्त करे तथा नमः मन्त्र से अग्नि में आज्य डालकर पवित्रीकरण करे। फिर जलते हुये कुशों से वर्म मन्त्र पढ़कर आज्य की आरती करना चाहिए। यह अभिद्योतन कहा गया। उसके बाद तीन दर्भ जलावे, यह दीपन संस्कार हुआ। अस्त्र मन्त्र से घृत पात्र लेकर उसे दिखावे, यह उद्योतन संस्कार हुआ। फिर उस अङ्गार को कुण्ड में डाल देवे फिर जल स्पर्श करे। अँगूठे और अनामिका अङ्गुली से दर्भ लेकर फेंक देवे। अस्त्र मन्त्र पढ़कर मन्त्रज्ञ साधक आज्य को तीन बार अग्नि के सम्मुख दिखावे यह उत्पवन कहा गया। उसी प्रकार नमः मन्त्र से आज्य को अपने सामने उत्क्षिप्त करना यह संप्लव है। नीराजनादि संस्कारो में उपयोग किये गये कुशों का अग्नि में प्रक्षेप करे ॥ ६७-७३ ॥

दर्भद्वयं ग्रन्थियुतं घृतमध्ये विनिःक्षिपेत् ।
वामदक्षिणयोः पक्षौ स्मृत्वा नाडीत्रयं स्मरेत् ।
दक्षिणाद् वामतो मध्याद् हृदादाय घृतं सुधीः ॥ ७४ ॥
अग्नयेऽग्निप्रिया सोमाय स्वाहेत्यग्निनेत्रयोः ।
जुहुयादग्निसोमाभ्यां स्वाहेत्यक्षिण तृतीयके ॥ ७५ ॥
पातयेदाहुतेः शेषमाहुतिग्रहणस्थले ।
भूयो हृदा दक्षभागादादायाज्यं मुखं यजेत् ॥ ७६ ॥
अग्नये स्विष्टकृते तदास्यस्योद्घाटनं मतम् ।
नरसिंह विना विष्णुमन्त्रे नेत्रद्वयं यजेत् ॥ ७७ ॥
नरसिंहादिदेवेषु वह्नेर्नेत्रत्रयं स्मृतम् ।
महाव्याहृतिभिर्व्यस्तसमस्ताभिश्चतुष्टयम् ॥ ७८ ॥
आहुतीनां त्रयं वह्निमन्त्रेण च ततश्चरेत् ।
घृताहुतिभिरष्टाभिरेकैकां संस्कृतिं चरेत् ॥ ७९ ॥
ओमस्याग्ने अमुं संस्कारं करोम्यनलवल्लभा ।
इत्थं मनुं जपेद् गर्भाधानं पुंसवनं ततः ॥ ८० ॥
सीमन्तोन्नयने जातकर्म कृत्त्वा ततश्चरेत् ।
वह्नौ पञ्चसमिद् होमान्नालापनयनं वसोः ॥ ८१ ॥
कुर्याद् देवाभिधानेन पूर्ववन्नामशुष्मणः ।
नामानन्तरमेतस्य पितरौ स्वेऽर्पयेद् हृदि ।

गाँठ लगाकर दो दर्भो को घृत के मध्य में डाल देवे । फिर बायी ओर और दक्षिण ओर के दोनों पक्षों का स्मरण कर तीन नाडियों का स्मरण करे । फिर हृन्मन्त्र (नमः) से सुधी साधक दक्षिण और वाम के मध्य में घृत स्थापित रखे। 'अग्नये स्वाहा, सोमाय स्वाहा' इन दो मन्त्रों से अग्नि के दोनों नेत्र स्थान में और फिर 'अग्निसोमाभ्यां स्वाहा' इस मन्त्र से अग्नि के तीसरे नेत्र में आहुती देवे । आहुति का शेष आहुति ग्रहण स्थल में डाले । फिर हृन्मन्त्र (नमः) से दक्ष भाग से घृत लेकर मुख में आहुति देवे । 'अग्नये स्विष्टकृते स्वाहा' यह मुखोद्घाटन का मन्त्र कहा गया है । नृसिंह को छोड़कर सभी विष्णु मन्त्र में केवल दो नेत्रों में ही आहुति देवे । नारसिंहादि देवों में तीन नेत्र कहा गया है । फिर व्यस्त (उलटे) महा व्याहृतियों से तथा समस्त महाव्याहृतियों से चार आहुतियाँ तथा अग्निमन्त्र से तीन आहुतियाँ देवे । तदनन्तर आठ बार घृत की आहुतियों से क्रमशः एक-एक संस्कार करे । 'ॐ' कहकर 'अस्य अग्ने अमुं संस्कारं करोमि स्वाहा'—इस प्रकार के मन्त्र का जप करे । इस प्रकार गर्भाधान, पुंसवन, सीमन्तोन्नयन एवं जातकर्म करने के पश्चात् अग्नि में पाँच समिधाओं से होम करे । तदनन्तर

नालकर्त्तन करे । फिर अग्नि का अग्निदेव के अन्य नामों में किसी एक नाम से नामकरण संस्कार करे । फिर अपने हृदय में उन अग्नि स्वरूप शिशु को उसके पिता को समर्पित करे ॥ ७४-८२ ॥

**अन्नप्राशं तथा चौलोपनयौ दारयोजनम् ॥ ८२ ॥**
**संस्काराः स्युर्विवाहान्ताः मृत्व्यन्ताः क्रूरकर्मणि ।**
**एकैकामाहुतिं कुर्याद् वह्नेर्जिह्वाङ्गमूर्त्तिभिः ॥ ८३ ॥**
**इन्द्रादिभिश्च वज्राद्यैर्द्विठान्तैर्जुहुयात् ततः ।**
**स्रुवेणाज्यं चतुर्वारं निधाय स्रुचि तं सुधीः ॥ ८४ ॥**
**अपिधाय स्रुवेणैव गृह्णीयात् करयुग्मतः ।**
**तिष्ठन् मूलं तयोर्नाभौ कृत्त्वाग्नौ निःक्षिपेत् समम् ॥ ८५ ॥**
**वामस्तनान्तं तन्मूलं कृत्त्वाग्निमनुना सुधीः ।**
**जुहुयाद् वौषडन्तेन सम्पत्त्यर्थमतन्द्रितः ॥ ८६ ॥**

फिर अन्नप्राशन चौल उपनयन तथा दारयोजन (विवाह) करे । इस प्रकार विवाहाना संस्कार को अग्नि का माङ्गलिक कामों में विवाहान्त ही संस्कार करे । क्रूर कर्म में मृत्यु पर्यन्त संस्कार करने का विधान है । इसके बाद वह्नि जिह्वा, वह्नि के अङ्ग तथा वह्नि की मूर्त्तियों से एक-एक आहुति प्रदान करे । तदनन्तर वज्रादि अस्त्रों से युक्त इन्द्रादि नामों के अन्त में स्वाहा लगा कर आहुति प्रदान करे । फिर स्रुचा में स्रुवा से चार बार घृत डालकर, उसे स्रुवा से ढक कर, दोनों हाथों से ग्रहण कर, खड़े होकर उसके मूल को नाभि में रख कर, अग्नि में आज्य की आहुति प्रक्षिप्त करे । फिर उसके गूल को वाम स्तन के अन्त में लगाकर अग्नि के मन्त्र के अन्त में वौषट् लगाकर सावधानी से सम्पत्ति के लिये हवन करे ॥ ८२-८६ ॥

**महागणेशमन्त्रेण व्यस्तेन दशधा ततः ।**
**जुहुयाच्च समस्तेन चतुर्वारं घृताहुतीः ॥ ८७ ॥**

तदनन्तर व्यस्त महागणेश के मन्त्र से दश बार हवन करे और समस्त से चार बार घृत की आहुती प्रदान करे ॥ ८७ ॥

**पूर्वपूर्वयुतं बीजषट्कं बाणाश्च सायकाः ।**
**मुनयो मार्गणाश्चेति विभागस्तन्मनोः स्मृतः ॥ ८८ ॥**

पूर्व-पूर्व से युक्त छह बीज, बाण, सायक, मुनि और मार्गण—ये गणेश के मन्त्र के विभाग कहे गये हैं ॥ ८८ ॥

**तारो लक्ष्मीर्गिरिसुता कामो भूर्गणनायकः ।**
**चतुर्थ्यन्तो गणपतिर्वरान्ते वरदेति च ॥ ८९ ॥**

**सर्वान्ते जनमित्युक्त्वा मेवशान्ते तु मानय ।**
**स्वाहान्तो वसुयुग्मार्णो महागणपतेर्मनुः ॥ ९० ॥**

तार (ॐ) लक्ष्मी (श्रीं) गिरिसुता (ह्रीं) काम (क्लीं) भू (लं) गणनायक (गं) इसके बाद चतुर्थ्यन्त 'गणपति वर वरद सर्वजन' इतना कहने के बाद मे वश के अन्त में 'मानय स्वाहा' यह कहे । 'ॐ श्रीं ह्रीं क्लीं लं गं गणपतये वर वरद सर्वजन मे वशमानय स्वाहा'—यह २८ अक्षरों का महागणपति का मन्त्र बतलाया गया है ॥ ८९-९० ॥

**एवं कृत्त्वाग्निसंस्कारं पीठं देवस्य योजयेत् ।**
**तत्रेष्टदेवमावाह्य मुद्रा आवाहनादिकाः ॥ ९१ ॥**
**प्रदर्श्य वह्निरूपस्य देवस्य वदने पुनः ।**
**मूलेन जुहुयात् पञ्चनेत्रसंख्या घृताहुतीः ॥ ९२ ॥**
**इष्टदेवस्यावृतीनामेकैकाहुतिमाचरेत् ।**
**ततस्तु मूलमन्त्रेण दशधा जुहुयाद् घृतम् ॥ ९३ ॥**

इस प्रकार अग्नि का संस्कार कर उन्हें देव पीठ पर स्थापित करे । वहाँ इष्टदेव का आवाहन करे । फिर आवाहनादि मुद्रा प्रदर्शित करे । फिर अग्निरूप देव के मुख में मूल मन्त्र से १० (=पञ्च नेत्र) संख्या में घृत की आहुती देवे । इष्टदेव के परिवारों को एक-एक आहुती देवे । फिर मूल मन्त्र से दशबार घृत की आहुति देवे ॥ ९१-९३ ॥

**ततः कल्पोक्तद्रव्येण दशाङ्गं जुहुयाज्जपात् ।**
**होमं समाप्य विधिवत् कुर्यात् पूर्णाहुतिं सुधीः ॥ ९४ ॥**

फिर कल्पोक्त द्रव्यों से जप का दशांश होम करे । फिर सुधी साधक विधिवत् होम समाप्त कर पूर्णाहुति करे ॥ ९४ ॥

**होमावशिष्टेनाज्येन पूरयित्वा स्रुचं सुधीः ।**
**फलं पुष्पं निधायाग्रे स्रुवेणाच्छाद्य तं पुनः ॥ ९५ ॥**
**उत्थितो वौषडन्तेन मूलेन जुहुयाद् वसौ ।**
**तद्द्रव्येणावृतीनां च जुहुयादाहुतिं पृथक् ॥ ९६ ॥**

फिर होमावशिष्ट आज्य से स्रुचि को पूर्ण करे । उसके आगे फल पुष्प स्थापित करे । तदनन्तर स्रुवा से उसे आच्छादित करे । फिर खड़ा होकर मूल मन्त्र के आगे वौषट् लगाकर अग्नि में होम करे । उसके शेष द्रव्यों से परिवार वालों को आहुति प्रदान करे ॥ ९५-९६ ॥

**देवं विसृज्य स्वहृदि वह्नेर्जिह्वाङ्गमूर्त्तिभिः ।**

**जुहुयाद् व्याहृतीर्हुत्वा प्रोक्षेत् तं प्रोक्षणीजलैः ॥ ९७ ॥**
**सम्प्रार्थ्यानेन मनुना नत्वा तं विसृजेद् हृदि ।**
**भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक ॥ ९८ ॥**
**कर्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सादरम् ।**
**वह्नौ पवित्रे निःक्षिप्य प्रणीताम्बु भुवि क्षिपेत् ॥ ९९ ॥**

अपने हृदय में देवता का विसर्जन करे । फिर व्याहृति से हवन कर अग्नि के अङ्गभूत जिह्वा से होम करे । फिर प्रोक्षणी जल से प्रोक्षण करे । तदनन्तर 'भो भो वह्ने........सान्निध्यं कुरु सादरम्'—प्रार्थना मन्त्र पढ़कर अपने हृदय में अग्निदेव का विसर्जन करे । पवित्री को अग्नि में डाल देवे और प्रणीता के जल को पृथ्वी पर छोड़ देवे ॥ ९७-९९ ॥

**विधिं विसृज्य सकुशान् परिधीन् विन्यसेद् वसौ ।**
**एवं होमं समाप्यान्ते तर्पयेद् देवतां जलैः ॥ १०० ॥**

कुशा सहित ब्रह्मदेव का विसर्जन करे और समिधाओं को अग्नि में छोड़ देवे । इस प्रकार होम समाप्त कर जल से देवताओं का तर्पण करे ॥ १०० ॥

**अथवा हेमपात्रादौ यन्त्रं कृत्त्वा ततः परम् ।**
**पूजयित्वा स्वेष्टदेवं परिवारगणान्वितम् ॥ १०१ ॥**
**तर्पयेत् तं परं देवं तत्प्रकारमिहोच्यते ।**
**तर्पयित्वा गुरूनादौ मूलदेवं च तर्पयेत् ॥ १०२ ॥**
**मूलान्ते नाम चोच्चार्य तर्पयामि ततः परम् ।**
**स्वाहान्तं तर्पयेन्मन्त्री होमसंख्यादशांशतः ॥ १०३ ॥**

अथवा सुवर्णपात्र में यन्त्र स्थापित कर, परिवारगणों के सहित इष्टदेव का पूजन कर, उन परदेवता का तर्पण करे । उसका प्रकार कहता हूँ । सर्वप्रथम गुरु का तर्पण करे । फिर मूल देवता का तर्पण करे । मूल मन्त्र पढ़कर देवता का द्वितीयान्त नाम लेकर तदनन्तर 'तर्पयामि स्वाहा' (यथा विष्णुं तर्पयामि स्वाहा) इस प्रकार होम संख्या के दशांश संख्या में तर्पण करे ॥ १०१-१०३ ॥

**योगिनीहृदयेतर्पणम्—**

**तर्पणं च प्रकुर्वीत द्वितीयान्तमथोच्चरन् ।**
**एकैकमञ्जलिं कृत्त्वा सन्तर्प्य रश्मिवृन्दकम् ॥ १०४ ॥**

योगिनीहृदय में भी बतलाया गया है—साधक नाम के द्वितीयान्त उच्चारण करते हुये एक-एक अञ्जलि जल देवे । इस प्रकार देव तर्पण करे ॥ १०४ ॥

**तर्पणद्रव्यं विशुद्धेश्वरे, कुलार्णवे च—**

जले देवं समावाह्य पाद्याद्यैरुदकात्मकैः ।
सम्पूज्य विधिवद् भक्त्या परिवारसमन्वितम् ॥ १०५ ॥
एकैकमञ्जलिं तोयं परिवारान् प्रतर्पयेत् ।
ततो होमदशांशेन तर्पयेत् परदैवतम् ॥ १०६ ॥

तर्पणद्रव्य विशुद्धेश्वर और कुलार्णवतन्त्र में भी कहा गया है—जल में देवता का आवाहन कर परिवार समन्वित भक्तिपूर्वक विधिवद पद्यादि से पूजन करे । फिर एक-एक अञ्जलि जल से परिवार देवों का तर्पण करे । तदनन्तर होम के दशांश से परदेवता का तर्पण करे ॥ १०५-१०६ ॥

तर्पणं चेन्दुमत् तोयैस्तीर्थतोयैस्तथा पुनः ।
गुरूपदिष्टविधिना मधुना वाऽथ तर्पयेत् ॥ १०७ ॥

यह तर्पण कर्पूर युक्त जल से करे, अथवा तीर्थ के जल से करे, अथवा गुरूपदिष्ट विधि से, अथवा मधु से करे ॥ १०७ ॥

तन्त्रान्तरे—

तीर्थतोयेन दुग्धेन सर्पिषा मधुनापि वा ।
गन्धोदकेन वा कुर्यात् सर्वत्र साधकोत्तमः ॥ १०८ ॥

अन्य तन्त्रों में भी बतलाया गया है—तीर्थजल, दूध, घृत, मधु या गन्धोदक में से किसी एक पदार्थ से साधकोत्तम तर्पण करे ॥ १०८ ॥

तर्पणद्रव्यफलश्रुतिविधानम्

कालागरुद्रवोपेतैर्वशयेज्जगदादिकम् ।
सचन्दनेन तोयेन सौभाग्यं लभते नरः ॥ १०९ ॥
तोयैः कुंकुममिश्रैश्च स्तम्भयेदखिलं जगत् ।
सितामिश्रिततोयेन बृहस्पतिसमो भवेत् ॥ ११० ॥
कर्पूराक्तजलेनैव सर्वानाकर्षयेद् ध्रुवम् ।
रोचनायुक्ततोयेन मुच्यते सर्वदुर्ग्रहात् ॥ १११ ॥
ध्यात्वा देवं मुखे तस्य तर्पणं च समाचरेत् ।
सर्वशास्त्रेषु कथितं तर्पणं शुभदायकम् ॥ ११२ ॥

साधक कालागुरु मिश्रित जल द्वारा तर्पण से समस्त जगत् को वश में कर लेता है । चन्दन युक्त जल के तर्पण से मन्त्रज्ञ को सौभाग्य प्राप्त होता है । कुङ्कुम मिश्रित जल तर्पण से सारे जगत् को स्तम्भित कर लेता है । मिश्री मिश्रित जल तर्पण से बृहस्पति के समान होता है और कर्पूर मिश्रित जल तर्पण से निश्चय सभी का आकर्षण कर लेता है । गोरोचन युक्त जल के तर्पण से सभी विपत्तियों

एवं दुराग्रहों से मुक्त हो जाता है। देवता के मुख का ध्यान करते हुये उनके मुख में तर्पण करे। इस प्रकार सभी शास्त्रों में तर्पण कहा गया है जो अत्यन्त कल्याणकारी है ॥ १०९-११२ ॥

### अभिषेकविधानम्

**एवं तु तर्पणं कृत्त्वाभिषेकं तद्दशांशतः।**
**आत्मानं देवता बुद्ध्या सम्पूज्य तन्मयः सुधीः ॥ ११३ ॥**
**नमोऽन्तं मूलमुच्चार्य तदन्ते देवताभिधाम्।**
**द्वितीयान्तमहं पश्चादभिषिञ्चाम्यनेन तु।**
**अभिषिञ्चेत् स्वमूर्धानं तोयैः कुम्भाख्यमुद्रया ॥ ११४ ॥**

साधक इस प्रकार तर्पण कर उसका दशांश अभिषेक करे। सुधी साधक अपने मन में देवता का ध्यान कर पूजा कर तन्मय हो जावे और पहले मूल मन्त्र का उच्चारण करे उसके बाद अन्त में 'नमः' कहे। फिर द्वितीयान्त देवता का नामोच्चरण करे। पश्चात् 'अहं अभिषिञ्चामि' कहे। इस प्रकार तर्पण कर लेने के पश्चात् कुम्भ मुद्रा प्रदर्शित करते हुये जल से मन्त्रज्ञ साधक को अपने मूर्धा का अभिषेक करना चाहिए ॥ ११३-११४ ॥

**शक्तिविषये—**

**मूलविद्यां समुच्चार्य तदन्ते देवताभिधाम्।**
**तदन्ते चाभिषिञ्चामि नमोऽन्तमभिषेचनम् ॥ ११५ ॥**
**तर्पणे मार्जनेऽपि स्यात् नमसोऽन्ते पुनर्नमः।**

**इति शक्तिसङ्गमवचनात् नमोऽन्तेषु मन्त्रेषु पुनर्नम इति योजनीयम्।**

अब शक्ति के अभिषेक के विषय में कहते हैं—साधक पहले मूलविद्या का उच्चारण करे। फिर उसके बाद द्वितीयान्त देवता का नामोच्चारण करे। इसके बाद अभिषिञ्चामि एवं अन्त में नमः कहे। तर्पण और मार्जन में नमः के अन्त में पुनः नमः (नमो नमः) कहना चाहिये ॥ ११५-११६ ॥

यहाँ शक्तिसङ्गमतन्त्र के वचनानुसार 'नमः' के अन्त में पुनः 'नमः' की योजना करे।

**स्वमूर्ध्नीत्थं चिन्तयित्वा यन्त्रमध्यगतां पराम् ॥ ११६ ॥**
**तर्पणस्य दशांशेनाभिषिञ्चेच्च जगन्मयीम्।**
**ततो नानाविधैरन्नैस्तर्पयेद् द्विजसत्तमान् ॥ ११७ ॥**
**इष्टरूपान् समाराध्य तेभ्यो दद्याच्च दक्षिणाम्।**
**न्यूनं सम्पूर्णतामेतिब्राह्मणाराधनान् नृणाम्।**

**देवताश्च प्रसीदन्ति सम्पद्यन्ते मनोरथाः ॥ ११८ ॥**

साधक अपने शिरःस्थान में यन्त्र में रहने वाली परा देवता का ध्यान करे और तर्पण के दशांश से जगन्मयी का अभिषेक करे । अभिषेक के अनन्तर साधक अनेक प्रकार के अन्नों से ब्राह्मणों को सन्तुष्ट करे । अपने प्रेमी ब्राह्मणों की पूजा कर उन्हें दक्षिणा देवे । ब्राह्मणों की आराधना से यज्ञ में होने वाली न्यूनता पूर्णता को प्राप्त हो जाती है, इतना ही नहीं देवता भी प्रसन्न हो जाते हैं और यजमान का मनोरथ भी पूर्ण हो जाता है ॥ ११६-११८ ॥

**यामले—**

**ब्राह्मणान् भोजयेद् देवि तथा चैव कुमारिकाः ।**
**साधकः पशुतामेति कुमारीभोजनादृते ॥ ११९ ॥**

हे देवि! यज्ञान्त में ब्राह्मणों को तथा कुमारिकाओं को भोजन करावे । यदि यज्ञ में साधक कुमारी भोजन न करावे तो वह पशुत्व प्राप्त करता है ॥ ११९ ॥

**तत्तन्मन्त्रयुतान् विप्रान् भोजयेद् देवताधिया ।**
**ततः सम्पूजयेद् भक्त्या सद्भावैर्विविधैर्गुरुम्॥ १२० ॥**
**दक्षिणां गुरवे दद्याद् यथाविभवविस्तरैः ।**
**सिद्धमन्त्रो भवेन्मन्त्री नात्र कार्या विचारणा ॥ १२१ ॥**

तत्तन्मन्त्रों को जानने वाले ब्राह्मणों को देवता बुद्धि से भोजन करावे । इसके बाद अनेक प्रकार की सद्भावनाओं से युक्त हो कर गुरु की पूजा करे । अपने विभव विस्तार के साथ गुरु को दक्षिणा प्रदान करे । ऐसा करने से मन्त्रज्ञ साधक सिद्ध हो जाता है इसमें सन्देह नहीं ॥ १२०-१२१ ॥

**विभवे सति यो मोहात् न कुर्याद् विधिविस्तरम् ।**
**नैतत् फलमवाप्नोति देवद्रोही स उच्यते ॥ १२२ ॥**

जो सम्पत्ति के रहते हुये मोहवश यज्ञविधि को सङ्कुचित करता है, विस्तार नहीं करता, वह यज्ञ फल प्राप्त नहीं करता और देवद्रोही कहा जाता है ॥१२२॥

**मुण्डमालायाम्**

**यद्यदङ्गं विहीयेत तत् तस्य द्विगुणो जपः ।**
**कर्त्तव्यः साङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः ॥ १२३ ॥**

मुण्डमाला में भी बतलाया गया है—यज्ञ के जिस अङ्ग में द्विगुणता आई हो उसकी साङ्गता सिद्धि के लिये अशक्त होने पर साधक भक्तिपूर्वक उसका द्विगुणित जप करे ॥ १२३ ॥

होमकर्मण्यशक्तानां जपविधानम्—

**होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः ।**
**इतरेषां तु वर्णानां त्रिगुणादि समीरितः ॥ १२४ ॥**

होम कर्म में अशक्त ब्राह्मण द्विगुणित जप करे और इतर वर्णों के लिये त्रिगुणित जप की विधि कही गई है ॥ १२४ ॥

वैष्णवविषये गौतमीये—

**होमाभावे जपः कार्यो होमसंख्या चतुर्गुणा ।**
**विप्राणां क्षत्रियाणां च रससंख्याभिधीयते ॥ १२५ ॥**

वैष्णव गौतमीय में भी बतलाया गया है—होम करने में अशक्त होने पर होम संख्या का चतुर्गुणित जप करे । ब्राह्मण और क्षत्रिय के लिये षड्गुणित (=रस) जप का विधान है ॥ १२५ ॥

**वैश्यानां वसुसंख्याकमेषां स्त्रीणामयं विधिः ।**
**तावत्संख्या जपेनैव ब्राह्मणाराधनेन च ।**
**अव्याहता भवेत् सिद्धिर्नात्र कार्या विचारणा ॥ १२६ ॥**

वैश्यों के लिये अष्टगुणित जप का विधान है । ब्राह्मण, क्षत्रिय तथा वैश्या स्त्रियों के लिये होम संख्या मात्र जप तथा ब्राह्मणाराधन विहित है । ऐसा करने से निर्विघ्न सिद्धि हो जाती है । इसमें संशय न करे ॥ १२६ ॥

अन्यच्च संहितायाम् शिववाक्यम्—

**न गृही ज्ञानमात्रेण परत्रेह च मङ्गलम् ।**
**प्राप्नोति चन्द्रवदने दानहोमादिभिर्विना ॥ १२७ ॥**
**गृहस्थो यदि दानादि दद्यान् न जुहुयादपि ।**
**पूजयेद् विधिना नैव कः कुर्यादितदन्वहम् ॥ १२८ ॥**

अन्यत्र संहिता में शिव का वाक्य—गृहस्थ दान होम के बिना, हे चन्द्रवदने ! केवल ज्ञान मात्र से इस लोक में तथा परलोक में अपना कल्याण प्राप्त नहीं कर सकता । यदि गृहस्थ दानादि न करे, अथवा प्रतिदिन होमादि कर्म न करे, अथवा पूजनादि कर्म न करे तो वह कर्म और कौन करेगा? ॥ १२७-१२८ ॥

**न ब्रह्मचारिणो दातुमधिकारोऽस्ति भामिनि ।**
**गुरुभ्योऽपि च सर्वेभ्यः को वा दास्यत्यपेक्षितम् ॥ १२९ ॥**

हे भामिनि! ब्रह्मचारी को दान देने का अधिकार नहीं है तो बताओ गुरुजनों को अथवा अन्य जनों को उनके अपेक्षित दान कौन करेगा ॥ १२९ ॥

**नारण्यवासिनां शक्तिर्न ते सन्ति कलौ युगे ।**
**परिव्राट् ज्ञानमात्रेण दानहोमादिभिर्विना ॥ १३० ॥**
**सर्वदुःखपिशाचेभ्यो मुक्तो भवति नान्यथा ।**
**परिव्राडविरक्तश्च विरक्तश्च गृही तथा ॥ १३१ ॥**
**कुम्भीपाकेषु सज्जेते द्वावुभौ कमलानने ।**

अरण्यवासी वानप्रस्थी जनों में दान देने की शक्ति ही कहाँ हैं और वे इस कलियुग में हैं भी नहीं । सन्यासी विना दान होम के केवल ज्ञान मात्र से दुःख रूप पिशाच से मुक्त हो जाते हैं, अतः वे दान होम क्यों करेंगे । विरागरहित सन्यासी तथा विरागयुक्त गृहस्थ, हे कमलानने! ये दोनों ही कुम्भीपाक नरक में सजा पाते हैं ॥ १३०-१३२ ॥

**पुरा याः स्त्रियो गृहस्थाश्च मङ्गलैर्मङ्गलार्थिनः ॥ १३२ ॥**
**पूजोपकरणैः कुर्युर्दद्युर्दानानि चार्हणाम् ।**
**वानप्रस्थाश्च यतयो यद्येवं कुर्युरन्वहम् ॥ १३३ ॥**
**संसारान्न निवर्तन्ते विध्यन्ति क्रमदोषतः ।**
**आरूढपतिता ह्येते भवेयुर्दुःखभाजनम् ॥१३४॥ इति ।**

प्राचीनकाल में मङ्गल कामना वाली स्त्रियाँ और गृहस्थ अपने माङ्गलिक पूजोपकरण के साथ-साथ योग्य सुपात्रों को दान कर अपना मङ्गल करते थे । यदि यही काम वानप्रस्थ और सन्यासी भी करने लगे तो वे क्रम दोष से विद्ध हो जावेंगे और संसार से उनकी निवृत्ति नहीं होगी । इस प्रकार वे आरूढ़ पतित हो जावेंगे और दुःख के भागी होंगे ॥ १३२-१३४ ॥

### वह्निचक्रविधानम्

**अथ वक्ष्ये महादेवि होमकर्मसु सिद्धिदम् ।**
**अग्निचक्रं वरारोहे सर्वतन्त्रेषु गोपितम् ॥ १३५ ॥**
**नित्ये नैमित्तिके दुर्गाहोमादौ न विचारयेत् ।**
**नवग्रहमयो वह्निस्ते च वह्निमया ग्रहाः ॥ १३६ ॥**
**अतस्तेषां स्थितिं ज्ञात्वा वह्नौ होमं समाचरेत् ।**
**शान्तिके पौष्टिके वृद्धौ क्रूरेष्वपि च कर्मसु ॥ १३७ ॥**
**तेषां स्थितिक्रमं वक्ष्ये नक्षत्रेषु यथाविधि ।**
**सूर्यो बुधो भृगुश्चैव शनिश्चन्द्रो महीसुतः ॥ १३८ ॥**
**जीवो राहुश्च केतुश्च नवैते देवि खेचराः ।**
**त्रीणि त्रीणि च ऋक्षाणि क्रमात् तेषु निधापयेत् ॥ १३९ ॥**

अब हे महादेवि! होमकर्म में सिद्धि प्रदान करने वाले अग्निचक्र को कह रहा

हूँ । हे वरारोहे! यह सभी तन्त्रों में गुप्त रहा है । नित्य एवं नैमित्तिक दुर्गा होमादि में अग्नि चक्र का विचार न करे । यत: अग्नि नवग्रहमय है और ग्रह अग्निमय हैं इसलिये ग्रहों की स्थिति का विचार कर अग्नि में होम करे । शान्तिक कर्म, पौष्टिक कर्म एवं वृद्धि (आभ्युदयिक) तथा क्रूर कर्म में नक्षत्र में ग्रह की स्थिति का क्रम जान कर होम करे । १. सूर्य, २. बुध, ३. भृगु, ४. शनि, ५. चन्द्रमा, ६. मङ्गल, ७. बृहस्पति, ८. राहु और ९. केतु, हे देवि! ये ९ ग्रह हैं । उनमें इस क्रम के अनुसार तीन तीन नक्षत्र स्थापित करे ॥ १३५-१३९ ॥

**सूर्यभाच्चन्द्रभं यावद् गणयेच्च महेश्वरि ।**
**आदित्ये च भवेत् शोको बुधे चैव धनागमः ॥ १४० ॥**
**शुक्रे लाभं विजानीयात् शनौ पीडा न संशयः ।**
**चन्द्रे लाभः कुजे बन्धो गुरौ धनसमागमः ।**
**राहौ हानिस्तथा केतौ मृत्युरेवं फलं भवेत् ॥ १४१ ॥**

तदनन्तर सूर्य नक्षत्र से चन्द्र नक्षत्र यावत्, हे महेश्वरि! गणना करे । आदित्य नक्षत्र में होम से शोक, बुध नक्षत्र में धनागम, शुक्र में लाभ और शनि नक्षत्र में होम करने से पीड़ा होती है, इसमें संशय नहीं । चन्द्र नक्षत्रों में होम करने से लाभ, भौम नक्षत्र में बन्धन, बृहस्पति के नक्षत्र में धन प्राप्ति, राहु में हानि और केतु नक्षत्र में होम करने से मृत्यु रूप फल बतलाया गया है ॥ १४०-१४१ ॥

**सौम्यग्रहमुखे सौम्यं होमं क्रूरेऽथ क्रूरकम् ।**
**कुर्यादेवं महेशानि काम्यहोमं समाहितः ॥ १४२ ॥**
**अन्यथा क्रियमाणे तु नैष्फल्यं चात्मनाशनम् ।**

सौम्य ग्रह के मुख में होम करने से सौम्य फल तथा क्रूर ग्रह के मुख में होम करने से क्रूर फल होता है । अत: हे महेश्वरि! ऐसा विचार कर काम्य होम करना चाहिए । इसके विपरीत होम करने से निष्फलता तो प्राप्त होती ही है आत्मनाश भी होता है ॥ १४२-१४३ ॥

**त्रयं त्रयं च गणयेत् सूर्यर्क्षाद् दिनभावधि ।**

| सू. | बु. | शु. | श. | चं. | भौ. | गु. | रा. | के. |
|---|---|---|---|---|---|---|---|---|
| अ. | रो. | पुन. | म. | ह. | वि. | मू. | श्र. | पू. |
| भ. | मृ. | पु. | पू. | चि. | अ. | पू. | ध. | उ. |
| कृ. | आ. | श्ले. | उ. | स्वा. | ज्ये. | उ. | श. | रे. |

**अथापरः प्रकारो गणेशविमर्शिन्याम्—**

**नवकोष्ठं समालिख्य क्रमादीशानरक्षसोः ।**

वारुण्यैन्द्र्योर्वायुवन्ह्योर्दक्षिणोत्तरयोर्न्यसेत् ॥ १४३ ॥
सूर्यादीन् मध्यकोष्ठे तु केतुं न्यस्य फलं दिशेत् ।
आदित्ये च भवेत् शोको बुधे धनसमागमः ॥ १४४ ॥
शुक्रस्थानेऽर्थलाभः स्यात् शनिर्हानिकरो भवेत्।
चन्द्रे लाभं विजानीयाद् भौमे च वधबन्धनम् ॥ १४५ ॥
गुरावर्थस्य लाभः स्याद् राहुर्हानिकरो मतः ।
केतुना मृत्युमाप्नोति वह्निचक्रेष्वयं क्रमः ॥ १४६ ॥

एक दूसरा प्रकार गणेशविमर्शिनी में भी बतलाया गया है—नव कोष्ठ लिख कर क्रमशः ईशान और नैर्ऋत्यकोण में, पश्चिम से पूर्व में वायव्य से आग्नेय, फिर दक्षिण से उत्तर ग्रहों को स्थापित करे । मध्य कोष्ठ में सूर्यादि केतु को स्थापित करे, फिर फल देखे । आदित्य ग्रह में होम से शोक, बुध ग्रह में होम से धन समागम, शुक्र स्थान में होम से अर्थ लाभ, शनि में होम से हानि, चन्द्रमा में होम से लाभ, भौम में वध-बन्धन, बृहस्पति में अर्थ लाभ और राहु हानिकारक माना गया है। केतु से मृत्यु प्राप्त होती है इस प्रकार वह्नि चक्र में यही विधि कही गयी है ॥ १४३-१४६ ॥

पू०

| | | | | |
|---|---|---|---|---|
| ई० | रवि<br>अ०भ०कृ० | बुध<br>म०पू०उ० | शुक्र<br>वि०अनु०ज्ये० | अ० |
| उ० | राहु<br>श्र०ध०श० | केतु<br>पू०उ०रे० | शनि<br>मू०पू०उ० | द० |
| वा० | गुरु<br>ह०चि०स्वा० | भौम<br>पुन०पु०श्ले० | चन्द्र<br>रो०मृ०आ० | नै० |

प०

### काम्यहोमसु वह्निस्थिति

त्रयं त्रयं च गणयेत् सूर्यर्क्षाद् दिनभावधि ।
अथ वह्निस्थितिं वक्ष्ये काम्यहोमसु सिद्धये ॥ १४७ ॥
स्वर्गलोके च पाताले भूमौ तिष्ठति हव्यवाट् ।
तत्प्रकारमहं वक्ष्ये साधकानां शुभावहम् ॥ १४८ ॥

अब सिद्धि प्राप्ति के लिये काम्य होम में अग्नि की स्थिति कहता हूँ । स्वर्गलोक याताल एवं भूलोक में अग्नि का स्थान कहा गया है । अब मैं साधकों

के लिये सुखदायक वह्नि स्थिति का प्रकार कहता हूँ ॥ १४७-१४८ ॥

**सधृतिस्तिथिवारांश्च तथाष्टाविंशतिर्भवेत् ।**
**संपिण्ड्य त्रिर्हरेद् भागमेकशेषे च स्वर्गके ॥ १४९ ॥**
**द्विके पातालगो वह्निः शून्ये भूमध्यगो भवेत् ।**
**उत्पातः स्वर्गलोकस्थे पातालस्थे धनक्षतिः ॥ १५० ॥**
**मर्त्यलोकस्थितो वह्निर्होमेऽभीष्टफलप्रदः ।**
**इत्थं विज्ञायं मन्त्रज्ञो होमकर्म समाचरेत् ॥ १५१ ॥**

धृति, तिथि, वार तथा २८ नक्षत्रों को एक में जोड़ देवे । फिर तीन से भाग देवे । यदि एक शेष बचे तब अग्नि स्वर्ग में है और यदि दो शेष रहे तब पाताल में और शून्य शेष रहे तब अग्नि भूलोक में रहती है । अग्नि के स्वर्गलोकस्थ काल में होम करने पर उत्पात, पातालस्थ होने पर होम करने से धनक्षय और मर्त्यलोक में जब अग्नि हो उस समय होम करने से अभिष्ट फल की प्राप्ति होती है । मन्त्रज्ञ इस प्रकार अग्नि की स्थिति जानकर होम कर्म करे ॥ १४९-१५१ ॥

**वह्नेर्जिह्वासु देवानां तत् तत् कार्यसमाप्तये ।**
**जुहुयाद् वाञ्छितां सिद्धिं दद्युस्ता देवता मताः ॥ १५२ ॥**

मन्त्रज्ञ साधक तत् तत् कार्यों की समाप्ति के लिये अग्नि की जिह्वाओं पर उन उन देवताओं का होम करे । ऐसा करने से वे देवता साधक को वाञ्छित फल प्रदान करते हैं ॥ १५२ ॥

**रुद्रेन्द्रवह्निमांसादवरुणानिलमध्यके ।**
**हिरण्याद्या स्थिता वह्ने रसनाः सप्त कीर्तिताः ॥ १५३ ॥**
**त्रिशिखा मध्यमा जिह्वा बहुरूपा समाह्वया ।**
**फलं तु कामनाभेदे क्रमादासामुदीर्यते ॥ १५४ ॥**

रुद्र, इन्द्र, अग्नि, नैर्ऋत्य, वरुण और आग्नेय के मध्य में पूर्व में कथित अग्नि की हिरण्यादि सातो जिह्वाओं का निवास है । मध्यम जिह्वा में तीन शिखा है जिसे बहुरूपा भी कहते हैं । अब कामना भेद से इन जिह्वाओं का फल क्रमशः कह रहा हूँ ॥ १५३-१५४ ॥

### कामनाभेदेन अग्निजिह्वाफलकथनम्

**वश्याकर्षणयोराद्या गगना स्तम्भने मता ।**
**विद्वेषमोहयो रक्ता कृष्णा मारणकर्मणि ॥ १५५ ॥**
**सुप्रभा शान्तिके पुष्टौ सुरक्तोच्चाटने मता ।**
**एकैव बहुरूपा तु सर्वकामफलप्रदा ॥ १५६ ॥**

पहली हिरण्या जिह्वा वश्य कर्म में और आकर्षण में फलप्रद है । गगना जिह्वा स्तम्भन में, विद्वेषण एवं मोहन में रक्ता जिह्वा, मारण कर्म में कृष्णा, शान्ति एवं पुष्टि में सुप्रभा, उच्चाटन में सुरक्ता तथा केवल एक बहुरूपा जिह्वा सर्वकाम फलप्रदा है ॥ १५५-१५६ ॥

**एधांसि च हिरण्यायां गगनायां चरुं घृतम् ।**
**सिद्धार्थं बहुरूपायां रक्तायां तु यवास्तथा ॥ १५७ ॥**
**कृष्णायां तु हुनेल्लाजा सुप्रभायां तु सक्तुभिः ।**
**तिलांश्चैवातिरक्तायां कनकायां तु सर्वदा ।**
**सर्वद्रव्याणि जुहुयात् साधकः सर्वकर्मसु ॥ १५८ ॥**

हिरण्या में समिधा का, गगना में चरु घृत का, बहुरूपा में श्वेत सर्षप का, रक्ता में यव का, कृष्णा जिह्वा में लाजा का, सुप्रभा में सक्तु का, अतिरिक्ता में तिलों का और कनका जिह्वा में मन्त्रज्ञ साधक सर्वदा सभी कर्मों में सभी द्रव्यों का हवन करे ॥ १५७-१५८ ॥

**अग्निज्वालने विशेषः, मन्त्रतन्त्रप्रकाशे—**

**जुहूषुश्च हुताग्निश्च पाणिशूर्पस्त्रु वादिभिः ।**
**न कुर्यादग्निधमनं न कुर्याद् व्यजनादिना ॥ १५९ ॥**
**मुखेनैव धमेद् वह्निं मुखादेषो ह्यजायत ।**
**नाग्निं मुखेनेति तु यत् लौकिके योजयेत्तु तत् ॥ १६० ॥**

अग्नि प्रज्वलित करने में विशेष विचार मन्त्रतन्त्रप्रकाश में भी बतलाया गया है—अग्नि में हवन करने की इच्छा करने वाला होता हाथ, सूप, स्त्रुवादि तथा व्यजनादि से अग्निधमन न करे । केवल मुख से धमन कर अग्नि प्रज्वलित करे क्योंकि अग्नि मुख से ही उत्पन्न हुये हैं । जो यह कहा है कि अग्नि मुख से प्रज्वलित न करे इसे लोक कार्य में समझे ॥ १५९-१६० ॥

**अथ द्रव्याणि फेत्कारिणीतन्त्रे—**

**अथ द्रव्याणि वक्ष्यामि तत्तत्कर्मानुरूपतः ।**
**शान्तिके तु पयः सर्पिस्तिलाः क्षीरद्रुमेधिकाः ॥ १६१ ॥**
**अमृताख्या लता चैव पायसं तत्र कीर्तितम् ।**
**पौष्टिके विल्वपत्रैश्च जातिपुष्पैर्नृपो भवेत् ॥ १६२ ॥**
**कन्यार्थी जुहुयाल्लाजैः श्रीकामः कमलैस्तथा ।**
**दध्ना च श्रियमाप्नोति अन्नैरन्नं घृतप्लुतैः ॥ १६३ ॥**

फेत्कारिणीतन्त्र में हवनीय द्रव्य—अब मैं तत्तत्कर्मों के अनुरूप हवनीय द्रव्यों

को कहता हूँ। शान्ति कार्य में दूध-घृत, तिल तथा क्षीरी वृक्ष की समिधा अमृता नाम की लता और पायस का होम कहा गया है। पौष्टिक कार्य में विल्वपत्र एवं जाति पुष्प के हवन से साधक राजा बन जाता है। कन्या चाहने वाला लाजा का होम करे। लक्ष्मी चाहने वाला कमलों से होम करे। दही के होम से साधक को लक्ष्मी की प्राप्ति होती है और घृत में डुबोये गये अन्न के होम से अन्न की प्राप्ति होती है ॥ १६१-१६३ ॥

**क्षीरेण सर्पिषा वापि कमलैर्मधुरप्लुतैः ।**
**समृद्धौ जुहुयान् मन्त्री महानैर्धन्यशान्तये ॥ १६४ ॥**
**लक्षहोमाल्लभेत् शान्तिं घृतैर्विल्वदलैर्निधिम् ।**
**आकर्षणे तु लवणं प्रियङ्गुं विल्वजं फलम् ॥ १६५ ॥**

मन्त्रज्ञ साधक दूध और घी अथवा मधु में डुबोये गये कमल के होम से समृद्ध अग्नि में होम करे। ऐसा करने से महान् निर्धनता की शान्ति होती है। एक लाख होम से शान्ति प्राप्त होती है। घी और विल्वपत्र के होम से निधि प्राप्त होती है। आकर्षण कर्म में नमक एवं प्रियङ्गु (काँक) तथा विल्वफल का होम करे ॥ १६४-१६५ ॥

**जातीपलाशकुसुमैः सर्वैरेकैकमेव वा ।**
**राजीलवणकैर्वश्यं पौष्टिकं वश्यकोदितैः ॥ १६६ ॥**

जाती पुष्प, पलाश पुष्प, राजी (राई) और लवण इन्हें एक में मिलाकर अथवा एक-एक के द्वारा होम से वश्यता एवं पौष्टिकता प्राप्त होती है ॥ १६६ ॥

**वश्यार्थी जातिकुसुमैराकृष्टौ करवीरजैः ।**
**कार्पासबीजैस्तक्राक्तैर्नरकेशैरथापि वा ॥ १६७ ॥**
**एकीकृत्य हुनेन्मन्त्री शत्रुमारणकाङ्क्षया ।**
**जुहुयात् सार्षपैस्तैलैरथवा शत्रुमारणे ॥ १६८ ॥**

वशीकार चाहने वाला जातीपुष्प से, आकर्षण चाहने वाला करवीर (कनैल) के पुष्प से, मट्ठा में डुबोये गये कार्पास बीज अथवा मनुष्य के केश को एक में मिलाकर मन्त्रज्ञ मारण कर्म करने की इच्छा से हवन करे अथवा शत्रु मारण में सरसों के तेल से होम करे ॥ १६७-१६८ ॥

**रोहीबीजैस्तिलोपेतैरुत्सादे जुहुयान् नरः ।**
**मुखकण्टकसंयुक्तैर्बीजैः कार्पासिकैरपि ॥ १६९ ॥**
**सर्षपैस्तिलसंमिश्रैर्हुनेत् सर्वाभिचारके ।**
**काकोलूकच्छदैः क्रूरैः कारस्करविभीतकैः ॥ १७० ॥**

**मारिचैः सर्षपैः शुद्धैरर्कक्षीरैः कटुत्रयैः ।**
**कटुतैलैः स्नुहीक्षीरैः कुर्यान्मारणकर्मणि ॥ १७१ ॥**

उच्चाटन करने की इच्छा से मनुष्य तिल युक्त रोही के बीज से होम करे । मुख के काँटे तथा कार्पास बीज एवं सरसों का तेल इनको एक में मिलाकर अभिचार कर्म में होम करे । कौआ एवं उलूक का पङ्ख, कुचिला, बहेड़ा, मरीच, सरसों, शुद्ध मदार का दूध, तीनों कटु, कडुवा तेल तथा स्नुही का दूध का हवन मारण कर्म में प्रशस्त कहा गया है ॥ १६९-१७१ ॥

**वनदुर्गाकल्पे—**

**आयुष्कामो घृततिलैर्दूर्वाभिश्चाम्रपल्लवैः ।**
**पयोक्तैराम्रपत्रैश्च ज्वरं सद्यो विनाशयेत् ॥ १७२ ॥**

वनदुर्गा कल्प में भी बतलाया गया है—आयु चाहने वाला साधक घृत, तिल, दूर्वा, आम्रपल्लव एवं दूध में भिगोये गये आम के पत्ते से होम करे तो सद्य: ज्वर विनष्ट हो जाता है ॥ १७२ ॥

**गुडूची मृत्युञ्जयने तथा शान्तौ गजाश्वयोः ।**
**गौरैस्तु सर्षपैर्हुत्वा सद्यो रोगं हरेज्ज्वरो ॥ १७३ ॥**
**पुष्टिकामो तु वेतसीसमिद्भिः पत्रकैस्तथा ।**
**हुत्वा पुष्टिमवाप्नोति पुत्रजीवैस्तु पुत्रकम् ॥ १७४ ॥**

गुडूची मृत्यु पर विजय प्राप्त करती है तथा गज एवं अश्वगन्धा शान्ति देती है । गौर एवं सर्षप के होम से सद्य: ज्वररोग को दूर कर देता है । पुष्टि चाहने वाला साधक वेतस की समिधा एवं वेतस का पत्र हवन करने से पुष्टि प्राप्त करता है और पुत्रजीव के होम से पुत्र प्राप्ति होती है ॥ १७३-१७४ ॥

**घृतगुग्गुलुहोमेन वाक्पतित्वं प्रजायते ।**
**मल्लिकाजातिकुसुमैर्नागपुन्नागसम्भवैः ॥ १७५ ॥**

घृत एवं गुग्गुल के होम से वाक्पतित्व प्राप्त होता है । मल्लिका एवं जाती के पुष्पों से तथा नाग एवं पुन्नाग के पुष्पों से सरस्वती सिद्ध होती है और सभी मनोरथ पूर्ण हो जाते हैं ॥ १७५ ॥

**पुष्पैः सरस्वतीसिद्धिस्तथा सर्वार्थसाधनम् ।**
**पयसा लवणैर्वापि हुनेद् वृष्टिनिवारणे ॥ १७६ ॥**
**रक्तपुष्पैरपामार्गैरङ्कोलैश्च सुभद्रकैः ।**
**त्रिभिर्मधुरसंयुक्तैर्मन्त्रो कुर्याच्च वश्यकम् ॥ १७७ ॥**

वृष्टि रोकने के लिये साधक दूध अथवा लवण से होम करे । मन्त्रज्ञ साधक

वशीकरण के लिये रक्तपुष्प, अपामार्ग, अङ्कोल, सभद्रक में त्रिमधुर (दूध-मधु-घी) मिलाकर हवन करे ॥ १७६-१७७ ॥

**वातोद्धूतैः शुष्कपत्रैः काष्ठैरशनिपातितैः ।**
**उष्ट्रास्थ्ना च वचाङ्गारैः शत्रोरुच्चाटनं भवेत् ॥ १७८ ॥**

वायु से उड़ाये गये शुष्क पत्र एवं बिजली के द्वारा गिराये गये काष्ठ तथा ऊँट की हड्डी और वचा का अङ्गार—इनसे होम करे तो शत्रु का उच्चाटन हो जाता है ॥ १७८ ॥

**दूर्वागुडूचीद्रव्येण सर्पिषा तिलतण्डुलैः ।**
**अन्नैः समिद्भिः पालाशैः शान्तिं कुर्याद् विचक्षणः ॥ १७९ ॥**

दूब, गुरुच, घी, तिल, चावल, अन्न एवं पलाश की समिधा से होम कर विचक्षण साधक शान्ति करे ॥ १७९ ॥

**गणेशविमर्शिण्याम्—**

**घृतहोमे धनावाप्तिः सिद्धार्थैः कीर्तिरुत्तमा ।**
**किंशुकैः सर्वकामाप्तिः फलहोमे सुखं भवेत् ।**

गणेशविमर्शिनी में भी बतलाया गया है—घी के होम से धन की प्राप्ति, श्वेत सर्षप के होम से उत्तम कीर्त्ति की प्राप्ति, पलाश के होम से सर्वकामावाप्ति तथा फल होम से सुख प्राप्त होता है ॥ १८० ॥

**गुडेन प्रियता प्रोक्ता चम्पकैः पाटलै रमा ॥ १८० ॥**
**पुत्रजीवे सुतावाप्तिः करवीरैः स्त्रियो वशाः ।**
**आयुःकरी भवेद् दूर्वा गुडूची रोगशान्तिदा ।**
**तिला अपि तथा प्रोक्ता सौभाग्यं गन्धहोमतः ॥ १८१ ॥**

गुड़ के होम से सर्वप्रियता, चम्पक पाटल के होम से लक्ष्मी की प्राप्ति, पुत्रजीव के होम से पुत्र प्राप्ति, करवीर (कनैल) के होम करने से स्त्रियाँ वश में हो जाती हैं। दूर्वा का होम आयु को बढ़ाता है, गुरुच का होम शान्ति प्रदान करता है। उसी प्रकार तिल का होम भी शान्ति प्रदान करता है एवं गन्ध के होम से सौभाग्य बढ़ता है ॥ १८०-१८१ ॥

**श्रीफलैर्विल्वपत्रैश्च तथा जलरुहैरपि ।**
**भ्रष्टराज्यस्य राज्याप्तिर्मल्लिका कीर्तिदा मता ॥ १८२ ॥**

श्रीफल, बिल्व, कमल के होम से भ्रष्ट राजा को राज्य प्राप्त होता है, मल्लिका द्वारा होम कीर्त्ति प्रदान करता है ॥ १८२ ॥

**कर्णिकारैः किंशुकैश्च भवेयुर्विबुधा वशाः ।**
**काशमर्दैर्नृपा वश्याः कृतमालैर्विशो वशाः ॥ १८३ ॥**

कर्णिकार एवं पलाश के होम से देवता वश में हो जाते हैं, काशमर्द के होम से राजा तथा कृतमाल के होम से वैश्य वश में हो जाते हैं ॥ १८३ ॥

**शूद्राः स्युः पाटलैर्वश्याः नीलपद्मैर्भवेद् रमा ।**
**जातिपुष्पैर्भवेद् वाणी मधुरैरिष्टसम्पदः ॥ १८४ ॥**

पाटल के होम से शूद्र वश में हो जाते हैं, नीलपद्म के होम से लक्ष्मी की प्राप्ति होती है, जातीपुष्प के होम से सरस्वती प्राप्त होती है तथा त्रिमधुर के होम से मनचाही सम्पत्ति प्राप्त होती है ॥ १८४ ॥

**अश्वत्थोदुम्बरप्लक्षसमिद्भिर्वाञ्छिताप्तयः ।**
**विशीर्णा द्विदला ह्रस्वा वक्राः स्थूलाः कृशास्तथा ॥ १८५ ॥**
**कृमिदष्टाश्च दीर्घाश्च वित्वचो दुःखकारकाः ।**

अश्वत्थ, गूलर एवं पाकड़ की समिधा से होम करने पर वाञ्छित फल प्राप्त होता है । विशीर्ण, दो पत्ते वाले, ह्रस्व, टेढ़े-मेढ़े, अत्यन्त स्थूल, अत्यन्त पतले, कृमिदष्ट, दीर्घ, त्वचाहीन—ऐसी समिधायें दुःखकारक होती है ॥ १८५-१८६ ॥

**सक्षीरा नाधिका न्यूनाः समिधः सर्वकामदाः ॥ १८६ ॥**
**आर्द्रत्वचं समच्छेदां तर्जन्यङ्गुलिवर्त्तुलाम् ।**
**ईदृशीं होमयेत् प्राज्ञः प्राप्नोति विपुलां श्रियम् ॥ १८७ ॥**

दूध युक्त, बहुत लम्बी न हों, न बहुत छोटी हो ऐसी समिधायें सभी कामनायें पूर्ण करती हैं । जिसकी त्वचा आर्द्र हो, समान-समान टुकड़ों वाली, तर्जनी अङ्गुली के समान गोल—ऐसी समिधाओं से होम करने पर प्राज्ञ साधक पर्याप्त लक्ष्मी प्राप्त करता है ॥ १८६-१८७ ॥

**श्रौते स्मार्ते च तन्त्रोक्ते समिधः परिकीर्तिताः ।**
**श्लेष्मान्तकपिशाचोत्थं त्यक्त्वान्येभ्यः समाहरेत् ॥ १८८ ॥**

श्रौत, स्मार्त तथा तन्त्र ग्रन्थ में श्लेष्मान्तक और बहेड़ा की लकड़ियों को छोड़कर अन्य सभी समिधायें ग्राह्य हैं ॥ १८८ ॥

**इष्टद्रव्यैर्भवेदिष्टं यवैश्च व्रीहिभिस्तथा ।**
**माषैररीणां मूकत्वं कोद्रवैर्व्याधिसम्भवः ॥ १८९ ॥**

इष्टद्रव्यों के होम से इष्ट प्राप्ति होती हैं, इसी प्रकार यव और व्रीहि के होम से भी अभीष्ट की प्राप्ति होती है । माष के होम से शत्रु मूक होता है और कोदों

के होम से रोग होता है ॥ १८९ ॥

**कलायहोमतोऽरीणां भीतिः स्यान्महती ध्रुवम् ।**
**विभीतकसमिद्भिः स्यादुन्मत्तं द्विषतां कुलम् ।**
**शाल्मलीसमिधा शत्रुपक्षनाशो भवेद् ध्रुवम् ॥ १९० ॥**

कलाय (मटर) के होम से शत्रुओं को बहुत बड़ा भय होता है यह कथन निश्चित है । बहेड़ा के होम से शत्रुओं का कुल उन्मत्त होता है । शाल्मली (सेमर) की समिधा का होम शत्रुपक्ष का निश्चित ही नाश करता है ॥ १९० ॥

### होमद्रव्याणां प्रमाणविधानम्

**अथात्र होमद्रव्याणां प्रमाणमभिधीयते ।**
**कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ॥ १९१ ॥**

अब इसके बाद हवनीय पदार्थों का प्रमाण कहता हूँ । होम में घी का प्रमाण कर्षमात्र और दूध का प्रमाण एक शुक्ति कहा गया है ॥ १९१ ॥

**उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः ।**
**तत् समं मधुदुग्धान्नमक्षमात्रमुदाहृतम् ॥ १९२ ॥**

पञ्चगव्य का जो प्रमाण पहले कहा गया है, उतना ही प्रमाण मनीषियों ने होम के विषय में भी कहा है उतना ही प्रमाण मधु, दूध, अन्न तथा अक्ष का होना चाहिये ॥ १९२ ॥

**दधिप्रसृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसम्मिताः ।**
**पृथुकास्तत्प्रमाणाः स्युः सक्तवोऽपि तथा मताः ॥ १९३ ॥**

दही की मात्रा होम में एक पसर, लाजा की मात्रा एक मुट्ठी, चिउड़ा भी उसी प्रमाण में और सक्तु का भी उतना ही प्रमाण होना चाहिए ॥ १९३ ॥

**गुडं पलार्धमानं स्यात् शर्करापि तथा मता ।**
**ग्रासार्धं चरुमानं स्यादिक्षुः पर्वावधिर्मतः ॥ १९४ ॥**

गुड़ का मान आधा पल, शर्करा की भी उतनी ही मात्रा, चरु का मान आधा कवल और इक्षु का मान एक पर्व (गाँठ) कहा गया है ॥ १९४ ॥

**एकैकं पत्रपुष्पाणि तथापूपानि कल्पयेत् ।**
**कदलीफलनारङ्गफलान्येकैकशो विदुः ॥ १९५ ॥**

पत्र, पुष्प तथा अपूप एक-एक संख्या में होम करे और केला एवं नारङ्गी फल भी एक-एक की संख्या में होम करे ॥ १९५ ॥

**मातुलुङ्गं चतुःखण्डं पनसं दशधा कृतम् ।**
**अष्टधा नारिकेलानि द्विधा तालं विदुर्बुधाः ॥ १९६ ॥**

मातुलुङ्ग (बड़ा नीबू) का चार खण्ड तथा पनस का दश खण्ड, नारिकेल का ८ खण्ड तथा ताल का दो खण्ड कर हवन करे ॥ १९६ ॥

**त्रिधाकृतं फलं वैल्वं कपित्थं खण्डितं त्रिधा ।**
**उर्वारुकफलं होमे चोदितं खण्डितं त्रिधा ॥ १९७ ॥**

बेल का तीन खण्ड कर होम करे । कपित्थ का भी तीनों खण्ड कर होम करे । इसी प्रकार ककड़ी के फल का भी तीन खण्ड कर होम करे ॥ १९७ ॥

**फलान्यन्यान्यखण्डानि समिधः स्युर्दशाङ्गुलाः ।**
**दूर्वात्रयं समुद्दिष्टं गुडूची चतुरङ्गुला ॥ १९८ ॥**

अन्य-अन्य फल भी तीन खण्ड कर होम करना चाहिए । होम में समिधा दश अङ्गुल की होनी चाहिये । तीन अङ्गुल की दूर्वा तथा गुरुच चार अङ्गुल विहित है ॥ १९८ ॥

**खण्डत्रयं तु मूलानां सूक्ष्माणि पञ्च होमयेत् ।**
**कन्दानामष्टमं भागं लतानामङ्गुलद्वयम् ॥ १९९ ॥**
**व्रीहयो मुष्टिमात्राः स्युर्मुद्गा माषा यवा अपि ।**
**तण्डुलाः स्युस्तदर्द्धांशाः कोद्रवा मुष्टिसम्मिताः ॥ २०० ॥**
**गोधूमा रक्तकलमा विहिता मुष्टिमानतः ।**
**तिलाश्चुलकमात्राः स्युः सर्षपास्तत्प्रमाणकाः ॥ २०१ ॥**

मूल वाले पदार्थों का तीन खण्ड कर होम करे । सूक्ष्म पदार्थों का पाँच संख्या में होम करे । कन्द का आठवाँ भाग हवन में प्रयुक्त होता है तथा लता दो अङ्गुल की होनी चाहिये । व्रीहि का प्रमाण एक मुट्ठी होता है । इसी प्रकार मूँग और उर्द का भी प्रमाण है । चावल आधा मुट्ठी तथा कोदों की एक मुट्ठी मात्रा कही गई है । गेहूँ एवं लाल चावल की मात्रा एक मुट्ठी कही गई है । तिल्ली एक चुल्लू एवं सरसों का भी उतना ही प्रमाण कहा गया है ॥ १९९-२०१ ॥

**शुक्तिप्रमाणं लवणं मरिचान्येकविंशतिः ।**
**पुरं बदरमानं स्यात् रामठं तत्समं स्मृतम् ॥ २०२ ॥**

लवण की मात्रा एक शुक्ति और मरीच संख्या में इक्कीस बतलायी गई है । वैर का मान एक पुर (=अञ्जलि) और हींग का भी उसी के बराबर मात्रा कहा गया है ॥ २०२ ॥

**चन्दनागरुकर्पूरकस्तूरीकुंकुमानि च ।**
**तिन्तिणी बीजमानानि समुद्दिष्टानि देशिकैः ॥ २०३ ॥**

चन्दन, अगरु, कस्तूरी, कर्पूर, कुङ्कुम तथा इमली का मान उनकी बीज मात्रा में कहा गया है ॥ २०३ ॥

**मानलक्षणं तन्त्रान्तरे—**

**गुञ्जाभिर्दशभिर्माषः शाणो माषचतुष्टयम् ।**
**द्वौ शाणौ घटकः कोलो वदरं द्रङ्क्षणश्च यः ॥ २०४ ॥**

अब तन्त्रान्तरों में मान बतला रहे हैं—दश गुञ्जा का एक माष, चार माष का एक शाण, दो शाण का एक घटक, जिसको कोल वदर और द्रङ्क्षण भी कहा जाता है ॥ २०४ ॥

**तौ द्वौ पाणितलं कर्षं सुवर्णं कवलग्रहः ।**
**पिचुर्विडालपदकं तिन्दुकोऽक्षश्च तद् द्वयम् ॥ २०५ ॥**

दो शाण का पाणितल, कर्ष, सुवर्ण, कवलग्रह, पिचु, विडाल पदक एवं तिन्दुक कहा जाता है। उसका दूना अक्ष कहा जाता है ॥ २०५ ॥

**शुक्तिरष्टमिका ते द्वे पलं विल्वं चतुर्थिका ।**
**मुष्टिमात्रं प्रकुञ्चोऽथ द्वे पले प्रसृतिस्तथा ॥ २०६ ॥**

आठ की एक शुक्ति, दो शुक्ति का एक पल, चार पल का विल्व, एक मुट्ठी की मात्रा को प्रकुञ्च और दो पल का एक पसर कहा जाता है ॥ २०६ ॥

**वैश्वानरं स्थितं ध्यायेत् समिद्होमेषु देशिकः ।**
**शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥ २०७ ॥**

आचार्य जहाँ समिधा द्वारा होम हो वहाँ वैश्वानर को खड़ा देखे। घृत द्वारा होम में होता हुआ तथा शेष वस्तु के होम में बैठा हुआ ध्यान करे ॥ २०७ ॥

**आस्यान्तर्जुहुयादग्नेर्विपश्चित् सर्वकर्मसु ।**
**यत्र काष्ठं तत्र श्रोत्रे यत्र धूमस्तु नासिके ॥ २०८ ॥**
**यत्राल्पज्वलनं नेत्रं यत्र भस्म तु तत् शिरः ।**
**यत्रैव ज्वलितो वह्निस्तत्र जिह्वा प्रकीर्तिता ॥ २०९ ॥**

विद्वान् जहाँ अग्नि का मुख हो वहीं होम करे। जहाँ काष्ठ हो वहाँ अग्नि का श्रोत्र स्थान समझे। जहाँ धूम हो वहाँ नासिका और जहाँ स्वल्प ज्वलन हो वहाँ नेत्र, जहाँ भस्म हो वहाँ शिर तथा जहाँ अग्नि जलती हो वहाँ अग्नि की जिह्वा समझनी चाहिये ॥ २०८-२०९ ॥

**सर्वकार्यप्रसिध्यर्थं जिह्वायां तत्र होमयेत् ।**
**कर्णहोमे भवेद् व्याधिर्नेत्रेऽन्धत्वमुदीरितम् ॥ २१० ॥**
**नासिकायां मनःपीडा मस्तके धनसङ्क्षयः ।**
**शत्रुनाशकहोमे तु यदङ्गे जुहुयान् नरः ॥ २११ ॥**
**तदङ्गं नाशयेत् क्षिप्रमिति शास्त्रस्य निश्चयः ।**
**स्वर्णसिन्दूरबालार्ककुंकुमक्षौद्रसन्निभः ॥ २१२ ॥**
**सुवर्णरेतसो वर्णः शोभनः परिकीर्तितः ।**
**भेरीवारिद-हस्तीन्द्रध्वनिर्वह्नेः शुभावहः ॥ २१३ ॥**

अपनी समस्त कामनाओं की सिद्धि के लिये अग्नि के जिह्वास्थान में ही होम करे । कर्णस्थान में होम करने से व्याधि होती है, नेत्रस्थान में अन्धापन, नासिकास्थान में मानसिक क्लेश और मस्तकस्थान में होम करने से धन का विनाश होता है । जब शत्रु के नाश के लिये होम किया जावे तो जिस अङ्ग में मनुष्य होम करता है, निश्चय उस अङ्ग का शीघ्र विनाश होता है । स्वर्ण, सिन्दूर, बाल सूर्य, कुङ्कुम तथा क्षौद्र के समान अग्नि का वर्ण दिखाई पड़े तो वह शुभावह समझना चाहिये । भेरी, मेघ एवं हस्तीन्द्र के समान अग्नि की ध्वनि शुभावह मानी गई है ॥ २१०-२१३ ॥

**नागचम्पकपुंनाग-पाटलायूथिकानिभः ।**
**पद्मेन्दीवरकह्लार-सर्पिर्गुग्गुलुसन्निभः ॥ २१४ ॥**
**पावकस्य शुभो गन्ध इत्युक्तस्तन्त्रवेदिभिः ।**
**प्रदक्षिणास्त्यक्तकम्पाः छत्राभाः शिखिनः शिखाः ।**
**शुभदा यजमानस्य राज्यस्यापि विशेषतः ॥ २१५ ॥**
**कुन्देन्दुधवलो धूमो वह्नेः प्रोक्तः शुभावहः ।**
**कृष्णः कृष्णगतेर्वर्णो यजमानं विनाशयेत् ॥ २१६ ॥**

नाग, चम्पक, पुंनाग (सोपारी), पाटल, यूथिका, पद्म, इन्दीवर, कह्लार, घृत एवं गुग्गुल के समान अग्नि का गन्ध कल्याणकारी होता है ऐसा तन्त्रवेत्ताओं ने बतलाया है । प्रदक्षिण कम्परहित छाता के समान अग्नि की शिखा दिखलाई पड़े तो यजमान के लिये यह शुभकारक तो होती ही है विशेषकर राज्य के लिये भी कल्याणकारक होती है । कुन्द चन्द्रमा के समान अग्नि का धूम दिखलाई पड़ना शुभावह कहा गया है । जब अग्नि का धूम काले वर्ण का दिखलाई पड़े तब यजमान का विनाश होता है ॥ २१४-२१६ ॥

**श्वेतो राष्ट्रं निहन्त्याशु वायसस्वरसन्निभः ।**
**खरश्वरसमो वह्नेर्ध्वनिः सर्वविनाशकृत् ॥ २१७ ॥**

श्वेत वर्ण का धूम राष्ट्र का विनाशक है । कौआ के स्वर के समान, गदहा एवं कुत्ता के समान अग्नि की ध्वनि सर्वविनाशक है ॥ २१७ ॥

**पूतिगन्धो हुतभुजो होतुर्दुःखप्रदो भवेत् ।**
**छिन्नावर्ता शिखा कुर्यान् मृत्युं धनपरिक्षयम् ॥ २१८ ॥**

अग्नि से जब दुर्गन्ध निकले तो वह होता को दुःख देता है । जब शिखा का आवर्त्त कटता दिखाई पड़े तब मृत्यु (अर्थात् मृत्यु तुल्य कष्ट) और धन का विनाशक समझना चाहिये ॥ २१८ ॥

**शुकपक्षनिभो धूमः पारावतसमप्रभः ।**
**हानिं तुरगजातीनां गवां च कुरुतेऽचिरात् ॥ २१९ ॥**

सुग्गे के पङ्के के समान, कबूतर के समान, अग्नि का धूम घोड़ों की जाति के लिये तथा गोओं की शीघ्रातिशीघ्र हानि करता है ॥ २१९ ॥

**एवंविधेषु दोषेषु प्रायश्चित्ताय देशिकः ।**
**मूलेनाज्येन जुहुयात् पञ्चविंशतिमाहुतीः ॥ २२० ॥**

इस प्रकार अग्नि में उत्पन्न दोषों के होने पर आचार्य अग्नि के मूल मन्त्र से २५ आहुती और देवे ॥ २२० ॥

**अत्र स्रुवधारणनियमस्तन्त्रान्तरे—**

**अग्निः सोमस्तथा सूर्यो रुद्रश्चैव प्रजापतिः ।**
**षष्ठश्चैव यमो देवः स्रुवे तिष्ठति सर्वदा ॥ २२१ ॥**
**स्रुवाग्रे वसते वह्निर्विभागश्चतुरङ्गुलैः ।**
**अग्निस्थानेऽग्निसन्तापः सोमे क्लेश उदाहृतः ॥ २२२ ॥**
**सूर्ये पशुविनाशः स्याद् रौद्रे भयमवाप्नुयात् ।**
**प्रजापतौ प्रजावृद्धिर्यमे मृत्युर्भवेद् ध्रुवम् ॥ २२३ ॥**
**यमभागं त्यजेन् मूलं षोडशाङ्गुलमग्रतः ।**
**प्रजाभागे स्रुवं धार्यं सर्वकर्मसमृद्धये ॥२२४॥ इति ।**

अब स्रुवा के हाथ में धारण का नियम जो तन्त्रान्तर में कहा गया है उसे कहते हैं—अग्नि, सोम, सूर्य, रुद्र, प्रजापति और छठे यम—ये देवता स्रुव में निवास करते हैं । स्रुवा के अग्रभाग में अग्नि का निवास है । उनका विभाग चार अङ्गुल है । अग्नि स्थान में स्रुवा धारण करने से अग्नि सन्ताप होता है, सोम स्थान में क्लेश, सूर्य स्थान में पशुविनाश रौद्र स्थान में भय, प्रजापति स्थान में प्रजावृद्धि, यम स्थान में निश्चित मृत्यु होती है । आगे से यम का चार अङ्गुल भाग तथा मूल से षोडश अङ्गुल भाग त्याग देवे । पूजा भाग में सर्वकर्म समृद्धि के

लिये स्रुवा धारण करे ॥ २२१-२२४ ॥

**होमे मुद्रात्रयं प्रोक्तं मृगी हंसी च शूकरी ।**
**शूकरी हस्तसङ्कोची मृगी मुक्तकनिष्ठिका ॥ २२५ ॥**
**हंसी स्यात् तर्जनीमुक्ता त्रिधा मुद्रा प्रकीर्तिता।**
**शान्तिके च मृगी ज्ञेया हंसी पौष्टिककर्मणि ।**
**अभिचारे शूकरी स्याद् विद्वेषोच्चाटनादिषु ॥ २२६ ॥**

होम में तीन मुद्रायें मृगी, हंसी और सूकरी कही गई हैं । हाथ को संकुचित करने से सूकरी मुद्रा और कनिष्ठा को छोड़कर शेष का सङ्कोच करने से मृगी मुद्रा तथा तर्जनी को छोड़कर शेष हाथ संकुचित करने से हंसी मुद्रा बनती है । इस प्रकार मुद्रा के तीन प्रकार कहे गये । शान्तिक होम में मृगी मुद्रा, पौष्टिक कर्म में हंसी मुद्रा, अभिचार (मारण) विद्वेष और उच्चाटनादि में सूकरी मुद्रा का प्रयोग करना चाहिए ॥ २२५-२२६ ॥

**आकर्षणं वश्यवत् स्यात् शुभं शान्तिवदीरितम् ।**
**उग्रं मारणवद् ज्ञेयं कर्म सर्वत्र साधकैः ॥ २२७ ॥**

आकर्षण एवं वश्य के समान शुभ शान्तिवत् कहा गया है और उग्र कर्म मारणवत् समझे ॥ २२७ ॥

**नमोऽन्ते च नमो दद्यात् स्वाहान्ते द्विठमेव च ।**
**पूजायामाहुतौ चापि सर्वत्रायं विधिः स्मृतः ॥ २२८ ॥**

पूजा में और आहुति में, सर्वत्र जहाँ अन्त में नमः है, वहाँ नमः शब्द से, जहाँ स्वाहा कहा गया है । वहाँ स्वाहा शब्द से आहुती प्रदान करे ॥ २२८ ॥

**एतदेव शक्तिसङ्गमे—**

**मन्त्रान्ते वह्निजाया या सा तु मन्त्रस्वरूपिणी ।**
**तदन्तेऽन्यां प्रयुञ्जीत सा होमाङ्गतया मता ॥२२९॥ इति ।**

**स्वाहान्तमन्त्रे स्वाहान्तरयोजनं नास्तीति प्राचीनानां लेखो निर्मूलत्वादनादेयः ।**
**स्रुक्स्रुवौ वायवीयसंहितायाम्—**

यही बात शक्तिसङ्गम तन्त्र में कही गई है—मन्त्र के अन्त में जहाँ वह्निजाया शब्द है वह भी मन्त्रस्वरूपा ही है । इसलिये मन्त्र के अन्त में होमाङ्ग होने के कारण उसका होम में प्रयोग करे ॥ २२९ ॥

जहाँ मन्त्र स्वाहान्त कहा गया है । वहाँ अन्य स्वाहा का प्रयोग न करे । प्राचीनों का लेख अनादरणीय है । अतः उसको न माने । अब स्रुक् स्रुवा का लक्षण जैसा वायवीय संहिता में कहा गया है उसे कहते हैं—

आगम सम्मत है ॥ २३७-२४४ ॥

**आज्यस्थाली, प्रणीताप्रोक्षण्योः यथा लिङ्गपुराणे—**

**आज्यस्थाली प्रोक्षणी च प्रणीता तिस्त्र एव च।**
**सौवर्णी राजती वापि ताम्री वा मृण्मयी तु वा ॥ २४५ ॥**

आज्यस्थाली, प्रणीता एवं प्रोक्षणी का लक्षण लिङ्ग पुराण के अनुसार कहते हैं—आज्यस्थाली, प्रोक्षणी और प्रणीता ये तीन सुवर्ण निर्मित अथवा रजत निर्मित अथवा ताम्र निर्मित अथवा मृणमयी होनी चाहिये ॥ २४५ ॥

**अन्यथा नैव कर्त्तव्यं शान्तिके पौष्टिके शुभे।**
**आयसी त्वभिचारे तु शान्तिके मृण्मयी तु वा ॥ २४६ ॥**

शान्ति तथा पौष्टिक कर्म में यही शुभ हैं अन्य धातु का निर्माण ही न करे। मारण कर्म में लोहे का तथा शान्ति कर्म में मिट्टी से उक्त पात्रों का निर्माण करना चाहिए ॥ २४६ ॥

**षडङ्गुलं सुविस्तीर्णं पात्राणां मुखमुच्यते ।**
**प्रोक्षणी द्व्यङ्गुलोत्सेधा प्रणीता द्व्यङ्गुलाधिका ।**
**आज्यस्थाली ततस्तस्या उत्सेधा द्व्यङ्गुलाधिका ॥ २४७ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे होमादिविधानकथनं**
**नाम चतुर्दशः पटलः ॥ १४ ॥**

...~❀~...

उक्त पात्रों के मुख का विस्तार छह अङ्गुल होना चाहिये। प्रोक्षणी की ऊँचाई दो अङ्गुल और प्रणीता की ऊँचाई उससे दो अङ्गुल अधिक तथा आज्यस्थाली की ऊँचाई उससे भी दो अङ्गुल अधिक होनी चाहिये ॥ २४७ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में होमादिविधान-कथन नामक चतुर्दश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १४ ॥**



# पञ्चदशः पटलः

## दमनकपवित्रार्चाकथनम्

**वक्ष्येऽथ सर्वदेवानां पवित्रदमनार्पणे ।**
**पवित्रैः श्रावणे पूजा चैत्रे दमनकैरपि ॥ १ ॥**

अब मैं सभी देवताओं के लिये पवित्रा और दमनक के अर्पण की विधि कहता हूँ । श्रावण मास में पवित्रा से तथा चैत्र मास में दमनक से देवपूजा करनी चाहिये ॥ १ ॥

### दमनकपूजायाःकालविधानम्

**प्रत्यब्दं विधिवत् कुर्याद् वर्षाच्चर्चा फलसिद्धये ।**
**चैत्रो दमनपूजायाः मुख्यकालः प्रकीर्तितः ॥ २ ॥**
**मध्यमो माधवो ज्येष्ठः शुचिस्त्वधम उच्यते ।**

वर्ष भर की अर्चा का फल प्राप्त करने के लिये साधक प्रतिवर्ष विधिवत् पवित्रा तथा दमनक का अर्पण देवताओं को करे । दमनक पूजा का मुख्य काल चैत्र महीना कहा गया है । वैशाख महीना मध्यम काल तथा ज्येष्ठ और आषाढ़ अधम काल कहे गये हैं ॥ २-३ ॥

**चातुर्मास्ये प्रविष्टे तु यः कुर्याद् दामनं विधिम् ॥ ३ ॥**
**न तस्य दुर्मतेः सिद्धिर्विपरीतं च जायते ।**
**प्रतिसम्वत्सरे चैव यो न कुर्वीत साधकः ॥ ४ ॥**
**तस्य वर्षकृता पूजा व्यर्थीभवति मानिनि ।**
**कृतामपि विलुम्पन्ति भूतप्रेतादयो गणाः ॥ ५ ॥**

चातुर्मास्य के प्रवेश में जो देवों को दमनक अर्पण करता है उस दुर्मति साधक को सिद्धि प्राप्त नहीं होती और उससे विपरीत फल होता है, जो मनुष्य प्रत्येक वर्ष दमनकार्पण नहीं करता है तो हे मानिनि! उसकी वर्ष भर की पूजा व्यर्थ हो जाती है । किं बहुना, भूत-प्रेतादि गण उसके पूर्व में किये गये पुण्य को भी नष्ट कर देते हैं ॥ ३-५ ॥

**चैत्रशुक्लचतुर्दश्यां दमनैः पूजयेद् हरम् ।**
**नारायणं तु द्वादश्यामष्टम्यां गिरिनन्दिनीम् ॥ ६ ॥**
**सप्तम्यां भास्करं देवं चतुर्थ्यां गणनायकम् ।**
**एवं तत्तिथौ तं तं पवित्रं श्रावणेऽर्चयेत् ॥ ७ ॥**

चैत्रशुक्ल चतुर्दशी के दिन शङ्कर की पूजा दमनकार्पण से करे । नारायण को द्वादशी में और पार्वती को अष्टमी में दमनकार्पण करे । सप्तमी को भगवान् सूर्य को तथा चतुर्थी को श्रीगणेश को दमनकार्पण करे । इसी प्रकार श्रावण के महीने में भी उन-उन तिथियों में पवित्रा द्वारा तत्तद् देवताओं का पूजन करे ॥ ६-७ ॥

**पूर्वाह्ने दमनार्चाहात् कृत्त्वा नित्यार्चनं विभोः ।**
**गत्वा दमनकारामं गृहीयात् तं क्रयार्पणात् ॥ ८ ॥**

दमनक अर्पण के पहले दिन परमात्मा का नित्यार्चन करे । फिर उद्यान में जाकर उसका मूल्य देकर दमनक खरीदे ॥ ८ ॥

**उपविश्य शुचौ देशो मनुनानेन चार्थयेत् ।**
**अशोकाय नमस्तुभ्यं कामस्त्रीशोकनाशन ।**
**शोकार्त्तिहर मे नित्यं आनन्दं जनयस्व मे ॥ ९ ॥**
**इति सम्प्रार्थ्य तत्रार्च्चेद्रतिकामौ स्वमन्त्रतः ।**

काममन्त्रो रतिमन्त्रश्च

**कामदेवाय कामादिहृदन्तोष्टाक्षरो मनुः ॥ १० ॥**
**कामस्य माया रत्यैहृत् पञ्चार्णस्तु रतेर्मनु ।**
**इष्टदेवस्य पूजार्थं नेष्यामि त्वामिमं ब्रुवन् ॥ ११ ॥**
**उत्पाट्य पञ्चगव्येनाभिषिंच्य क्षालयेज्जलैः ।**
**गन्धादिभिर्हृदाभ्यर्च्य छादयेत् सितवाससा ॥ १२ ॥**

फिर किसी पवित्र स्थान में बैठकर इस मन्त्र से दमनक की पूजा करनी चाहिए । दमनक पूजा का 'अशोकाय नमस्तुभ्यम्.........आनन्दं जनयस्व मे' यह मन्त्र है । इस प्रकार प्रार्थना करनेके पश्चात् रति एवं काम की पूजा करे । 'ॐ क्लीं कामदेवाय नमः' कामदेव के पूजन का यह अष्टाक्षर मन्त्र है । 'ॐ ह्रीं रत्यै नमः' यह पञ्चाक्षर मन्त्र रतिपूजन का है । फिर 'इष्टदेवस्य पूजार्थं त्वां नेष्यामि' यह कहते हुये दमनक को उखाड़ना चाहिए । पञ्चगव्य से अभिषेचन करे और जल से प्रक्षालन करे । नमः मन्त्र से गन्धादि द्वारा अर्चन कर श्वेत वस्त्र से उसे आच्छादित करे ॥ ९-१२ ॥

**निधाय वंशपात्रे तं गीतवादित्रनिस्वनैः ।**

गृहमानीय सद्देशे स्थापयेद्देवतां स्मरन् ॥ १३ ॥
ततो देवस्य पुरतः कृत्त्वाष्टादलमम्बुजम् ।
सितकृष्णरक्तपीतवर्णैः सम्पूरयेत् ततः ॥ १४ ॥

फिर गाजे-बाजे के साथ उसे बाँस के पात्र में स्थापित करे । फिर घर ले आकर देवता का स्मरण करते हुये किसी अच्छे स्थान पर उसे स्थापित करे । तदनन्तर देवता के आगे अष्टदल कमल निर्माण कर श्वेत, कृष्ण, रक्त एवं पीत वर्णों से उसको पूर्ण करे ॥ १३-१४ ॥

भूपुरं तद्बहिः कृत्त्वा पीतवर्णेन पूरयेत् ।
सितरक्तपीतवर्णं तद्बहिर्वर्तुलत्रयम् ॥ १५ ॥
रक्तवर्णेन तद्बाह्ये विदध्यात् चतुरस्त्रकम् ।
एवं विरचितं रम्ये मण्डले सर्वकामिके ॥ १६ ॥
यदि वा सर्वतोभद्रे मुञ्चेद् दमनभाजनम् ।
सायङ्कालीनपूजान्ते कुर्यात् तस्याधिवासनम् ॥ १७ ॥
ताराद्याभ्यां कामरतिमन्त्राभ्यां तत्र तौ यजेत् ।
दलेष्वष्टसु रत्याद्यानष्टौ कामान् पृथग्दले ॥ १८ ॥
कामो भस्मशरीरश्च ततोऽनङ्गश्च मन्मथः ।
वसन्तसखसञ्ज्ञश्च स्मर इक्षुधनुर्धरः ॥ १९ ॥
पुष्पबाण इमे कामास्तान् यजेन्नामभिर्निजैः ।
प्रणवानङ्गबीजाद्यैश्चतुर्थीहृदयान्वितैः ॥ २० ॥
कर्पूररोचनान्यंकुनाभिजागरुकुंकुमैः ।
धात्रीफलैश्चन्दनेन पुष्पैः कामान् यजेत् क्रमात्॥ २१ ॥

उस कमल के बाहर भूपुर बनाकर उसे पीतवर्ण से पूर्ण करे । उसके बाहर लाल वर्ण से चौकोर चतुष्कोण निर्माण करे । इस प्रकार समस्त कामनाओं को देने वाले सुरम्य स्वनिर्मित मण्डल में अथवा निर्मित सर्वतोभद्रमण्डल में दमनक युक्त पात्र स्थापित करे । सायङ्कालिक पूजा करने के पश्चात् उसका अधिवासन करे। दो तार (ॐ) युक्त काम रति के मन्त्रों से काम एवं रति का पूजन करे और आठ दलों पर आठ रत्यादिकों की तथा उससे पृथक् दलों पर काम, भस्मशरीर, अनङ्ग, मन्मथ, वसन्तसख, स्मर, इक्षुधनुर्धर एवं पुष्पबाण—इन आठों के आदि में प्रणव तथा कामबीज लगावे । नाम को चतुर्थ्यन्त कर उसके बाद नमः लगाकर कर्पूर, गोरोचन, कस्तूरी, अगरु, कुङ्कुम, आँवला, चन्दन एवं पुष्पों से अष्टकामों की क्रमशः पूजा करे ॥ १५-२१ ॥

दमनं गन्धपुष्पाद्यैरभिपूज्याभिमन्त्रयेत् ।

अष्टोत्तरशतं कामगायत्र्या मन्त्रवित्तमः ॥ २२ ॥

कामगायत्रीकथनम्

कामदेवाय वर्णान्ते विद्महे पदमुच्चरेत् ।
पुष्पबाणाय च पदं धीमहीति ततो वदेत् ॥ २३ ॥
तन्नोऽनङ्गः प्रचोवर्णा दयादिति मनोभुवः ।
गायत्र्येषा बुधैरुक्ता जप्ता जनविमोहिनी ॥ २४ ॥
हृदा पुष्पाञ्जलिं दत्त्वा मनुनाऽनेन तं नमेत् ।
ॐ नमोऽस्तु पुष्पबाणाय जगदानन्दकारिणे ॥ २५ ॥
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रदायिने ।
ततो निमन्त्रयेद् देवमनेन मनुना सुधीः ॥ २६ ॥
आमन्त्रितोऽसि देवेश प्रातःकाले मया विभो! ।
कर्त्तव्यं तु यथालाभं पूर्णं पर्व तवाज्ञया ॥ २७ ॥
देवे पुष्पाञ्जलिं दत्त्वा दण्डवत् प्रणिपत्य च ।
दमने वर्मणास्त्रेण विदध्यादवगुण्ठनम् ॥ २८ ॥

इसी प्रकार गन्धपुष्पादि से दमनक की पूजा करे। फिर 'कामदेवाय विद्महे पुष्पबाणाय धीमहि। तन्नोऽनङ्गः प्रचोदयात्'—इस कामगायत्री के जप से मन्त्रवेत्ता दमनक को अभिमन्त्रित करे। उक्त कामगायत्री बुद्धिमानों ने कही है जो समस्त जनों को मोहित करने वाली है। फिर नमः से पुष्पाञ्जलि देकर 'ॐ नमोऽस्तु... ........रतिप्रीतिप्रदायिने' पर्यन्त श्लोक मन्त्र से कामदेव को नमस्कार करे। फिर सुधी साधक 'आमन्त्रितोऽसि..........पूर्णं पर्व तवाज्ञया' पर्यन्त श्लोक मन्त्र पढ़कर देवाधिदेव का आमन्त्रण करे। उन्हें पुष्पाञ्जलि अर्पित करे और दण्डवत् प्रणाम करे फिर कवच तथा अस्त्र मन्त्र (कवचाय हुं फट् स्वाहा) से दमनक को अवगुण्ठित करे ॥ २२-२८ ॥

रक्षणं च क्रमादेतदधिवासनमीरितम् ।
ततो जागरणं कुर्याद् देवं गायन् स्तुवन् जपन् ॥ २९ ॥
सद्योऽधिवासने वापि कुर्यात् तत्र न जागरम् ।
प्रातःस्नानादि निर्वर्त्त्य कृत्वा नित्यार्चनं विभोः ॥ ३० ॥
सङ्कल्पं दमनार्चाया विदध्याद् देवताज्ञया ।
गृहीत्वा दमनस्याऽथ हस्ताभ्यां मञ्जरीं शुभाम् ॥ ३१ ॥
हृदाभिमन्त्रयेन्मन्त्री ततः श्लोकमिदं पठेत् ।
सर्वरत्नमयीं दिव्यां सर्वगन्धमयीं शुभाम् ॥ ३२ ॥
गृहाण मञ्जरीं देव नमस्तेऽस्तु कृपानिधे! ।

मूलमन्त्रेण घण्टादिघोषैर्देवस्य मस्तके ॥ ३३ ॥
समर्प्य तां ततः कुर्यान्मालां दमननिर्मिताम् ।
हृदाभिमन्त्र्य चानेन श्लोकेनाप्यभिमन्त्रयेत् ॥ ३४ ॥
सर्वरत्नमयीं नाथ दामनीं वनमालिकाम् ।
गृहाण देवपूजार्थं सर्वगन्धमयीं विभो! ॥ ३५ ॥
मूलमन्त्रं जपन् देवमुकुटे तां समर्पयेत् ।
दमनेनेष्टदेवस्य परिवारान् समर्चयेत् ॥ ३६ ॥
ततो नैवेद्यताम्बूले दत्त्वा नत्वा च दण्डवत् ।
दमनार्चा कृतां तस्मै श्लोकेन विनिवेदयेत् ॥ ३७ ॥
देवदेव! जगन्नाथ! वाञ्छितार्थप्रदायक ।
कृत्स्नान् पूरय मे नाथ कामान् कामेश्वरीप्रिय ॥ ३८ ॥
जप्त्वा मूलमनुं वह्निं हुत्वा देवं विसृज्य च ।
गुरुं गत्वा दमनकैर्यजेत् तं तोषयेद् धनैः ॥ ३९ ॥

'रक्षा करे', यहाँ तक दमनक का अधिवासन कहा गया है । साधक उस रात्रि में देवता विषयक जप, गीत तथा स्तुति करते हुये जागरण करे । सद्यः अधिवासन में जागरण न करे । फिर प्रातःकाल स्नानादि क्रिया करने के पश्चात् देवाधिदेव का नित्य अर्चन करे । फिर देवता की आज्ञा लेकर दमनक अर्पण का सङ्कल्प करे । फिर अपने दोनों हाथों से दमनक की मञ्जरी लेकर 'नमः' मन्त्र से उसे अभिमन्त्रित करे और 'सर्वरत्नमयीं दिव्यां......से लेकर नमस्तेऽस्तु कृपानिधे! पर्यन्त श्लोक मन्त्र पढ़े फिर मूलमन्त्र का जप करते हुए घण्टा आदि बजाते हुए देवता के मस्तक पर दमनक निर्मित माला समर्पित करे । इस माला को हृत मन्त्र नमः से और निम्न श्लोक मन्त्र से भी अभिमन्त्रित करे । फिर 'सर्वरत्नमयीं नाथ.....से लेकर सर्वगन्धमयी विभो' पर्यन्त श्लोक मन्त्र पढ़े । फिर मूल मन्त्र का जप करते हुये दमनक को भगवान् के मुकुट पर समर्पित करे । इसी प्रकार दमनक से इष्ट देवता के परिवार की भी पूजा करे । तदनन्तर नैवेद्य और ताम्बूल समर्पण कर, दण्डवत् नमस्कार कर, इस श्लोक से भगवान् को अपने द्वारा की गई दमनार्चा समर्पित करनी चाहिये । 'देवदेव जगन्नाथ.....कामेश्वरीप्रिय' यह दमनार्चा समर्पण का मन्त्र है । फिर मूल मन्त्र का जप कर अग्नि में हवन कर देवाधिदेव का विसर्जन करे । तदनन्तर गुरु के पास जाकर दमनक से पूजा करे और धन देकर उन्हें सन्तुष्ट करे ॥ २९-३९ ॥

विप्रान् सम्भोज्य भुञ्जीत स्वदेवाय निवेदितम् ।
एवं कृते कृतार्थः स्याद् वर्षार्च्चाफलभाङ्नरः ॥ ४० ॥
कथिता दमनार्च्चैषा पवित्रयजनं ब्रुवे ।

तदनन्तर ब्राह्मणों को भोजन करा कर भगवान् को निवेदत अन्न स्वयं भोजन करे। ऐसा करने से साधक धन्य हो जाता है और उसे वर्ष भर की अर्चा का फल प्राप्त हो जाता है। यहाँ तक हमने दमनार्चा कहा। अब पवित्रा से यजन की विधि कहता हूँ ॥ ४०-४१ ॥

**पवित्रार्चाकथनम्**

**आषाढ उत्तमो मासः श्रावणो मध्यमः स्मृतः ॥ ४१ ॥**
**हीनो भाद्रपदो मासः पक्षौ सितसितेतरौ ।**
**प्रशस्तः शुक्लपक्षस्तु तदभावे सितेतरः ॥ ४२ ॥**

पवित्रा से यजन के लिये आषाढ़ उत्तम मास कहा गया है। श्रावण मास मध्यम है और भाद्रपद मास हीन कहा गया है। शुक्ल कृष्ण दोनों पक्ष ग्राह्य हैं। ऐसे शुक्ल पक्ष ही श्रेष्ठ है उसके अभाव में कृष्णपक्ष ग्राह्य है ॥ ४१-४२ ॥

**स्वेषु स्वेष्वेव तिथिषु पवित्रार्पणमुत्तमम् ।**
**पवित्र यजनाहात्तु पूर्वस्मिन् वासरे सुधीः ॥ ४३ ॥**
**विदध्यान्नित्यपूजान्ते पवित्राणि यथाविधि ।**
**हेमदुर्वर्णताम्रोत्थतन्तुभिः पट्टसूत्रतः ॥ ४४ ॥**
**यद्वा कार्पाससूत्रैस्तु निर्मितैर्विप्रभार्यया ।**
**अन्यया वा सधवया सदाचारप्रसक्तया ॥ ४५ ॥**
**कीर्तितैस्तानि कुर्वीत न पुंश्चल्यादिनिर्मितैः ।**

देवताओं को उनकी अपनी-अपनी तिथि में पवित्रारोपण करना प्रशस्त है। सुधी साधक को पवित्रा यजन से पहले दिन नित्य पूजा के पश्चात् पवित्रा निर्माण करनी चाहिये। वह पवित्रा सोने की, चाँदी की तथा ताम्र की अथवा पट्ट के सूत्र से निर्माण करनी चाहिये, अथवा कपास के सूत्र द्वारा निर्माण करे। उसका सूत्र ब्राह्मणी द्वारा निर्मित होना चाहिये, अथवा अन्य वर्ण जो सधवा हो, अथवा सदाचारिणी हो उससे निर्मित सूत्र होना चाहिये। इस प्रकार उनके द्वारा काते गये सूत्र से पवित्रा निर्माण करे पुंश्चल्यादि (व्यभिचारिणी) द्वारा काता गया सूत पवित्रा कर्म में उपयोग नहीं होता ॥ ४३-४६ ॥

**त्रिगुणं त्रिगुणीकृत्य निर्माय नवसूत्रकम् ॥ ४६ ॥**
**सम्प्रोक्ष्य पञ्चगव्येन क्षालयेदुष्णवारिणा ।**
**प्रणवेनाभिषिञ्चेत मूलेनाष्टोत्तरं शतम् ।**
**मन्त्रयेन्मूलगायत्र्या तावदेव ततः सुधीः ॥ ४७ ॥**
**रचयेन्नवसूत्रीभिरष्टोत्तरशतेन च ।**
**तदर्धेन तदर्धेन जानूरूनाभिमानतः ॥ ४८ ॥**

देवेशस्य पवित्राणि शुचौ देशे प्रसन्नधीः ।
ज्येष्ठमध्यकनिष्ठानि तेषु ग्रन्थीन् ददीत च ॥ ४९ ॥
षट्त्रिंशत्तत्त्वमार्तण्डमितां ज्येष्ठादिषु क्रमात्।
अष्टोत्तरसहस्रेण नवसूत्रविनिर्मितम् ॥ ५० ॥
अष्टोत्तरशतग्रन्थि वनमालापवित्रकम् ।
कृत्त्वा तान् रञ्जयेद् ग्रन्थीन् रोचनाकुंकुमादिभिः ॥ ५१ ॥
वैणवे पटले तानि संछाद्य सितवाससा ।

पहले सूत्र को तिगुना करे, फिर उसको भी तिगुना करे इस प्रकार सूत्र नवगुणित करे । पञ्चगव्य से सम्प्रोक्षण करे और गर्म जल से प्रक्षालन करे तथा प्रणव से अभिषिक्त करे । अष्टोत्तर शत (१०८) मूल मन्त्र पढ़ कर उसे अभिमन्त्रित करे । इसी प्रकार मूलगायत्री से भी (१०८) बार अभिमन्त्रित करे । तदनन्तर एक-सौ आठ बार मन्त्र का जप करते हुये पवित्रा निर्माण करे । पहले उस सूत्र का आधा करे । फिर उसका भी आधा करे । इस प्रकार जानु तक, ऊरू तक तथा नाभि तक मान में ग्रन्थि बनावे । इस प्रकार भगवान् की पवित्री में ज्येष्ठ, मध्य और कनिष्ठ निर्माण करे । फिर किसी पवित्र स्थान में उस पवित्रा में गाँठ देवे । ज्येष्ठा पवित्री में ३६ गाँठ, मध्यमा में २५ गाँठ तथा कनिष्ठ में बारह गाँठ देवे । जब एक हजार आठ से बने, तब सूत्री में एक-सौ आठ गाँठ देवे तब वह पवित्री वनमाला पवित्री बन जाती है । इस प्रकार पवित्रा निर्माण कर उसे गोरोचन एवं कुङ्कुम आदि से रङ्ग देवे । फिर किसी बाँस के पात्र में उसे स्थापित कर श्वेत वस्त्र से आच्छादित करे ॥ ४६-५२ ॥

स्थापयित्वा विनिर्मीयादन्यान्यावरणार्चने ॥ ५२ ॥
सप्तविंशत्यष्टरविनवसूत्रीमितानि च ।
अद्रिनेत्रमिताभिस्तु कुर्याद् गुरुपवित्रकम् ॥ ५३ ॥
तावतीभिः कृशानोस्तत् षड्विंशत्या तदात्मनः ।
तत्र ग्रन्थि यथाशोभं दत्त्वा संरञ्जयेदपि ।
तानि पात्रान्तरे न्यस्य कुर्याद् गन्धपवित्रकम् ॥ ५४ ॥
द्वादशग्रन्थि तिग्मांशोर्नवसूत्रीविनिर्मितम् ।
निर्मायैवं पवित्राणि कुर्यात् पूजार्थमण्डलम् ॥ ५५ ॥

इस प्रकार पवित्रा स्थापित कर आवरणार्चन के लिये अन्य प्रकार की पवित्रा निर्माण करे । २७ अथवा २८ ग्रन्थि की नवनिर्मित पवित्रा निर्माण करे । गुरु के लिये २७ ग्रन्थि की पवित्रा बनावे । अग्नि के लिये भी उतने ही गाँठ की तथा अपने लिये २६ ग्रन्थि की नवसूत्री निर्माण करना चाहिए । उस ग्रन्थि को शोभानुसार निर्माण करे । फिर किसी अन्य पात्र में स्थापित कर उसे सुगन्धित

करना चाहिए ॥ ५२-५५ ॥

पङ्कजं षोडशदलं पूरयेदष्टवर्णकैः ।
नीलहारिद्रशोणाभमांजिष्ठश्वेतसञ्ज्ञकैः ॥ ५६ ॥
सिन्दूरधूम्रकृष्णाख्यैस्तद्वहिर्मण्डलत्रयम् ।
सूर्यसोमाग्निसञ्ज्ञं तु सितपीतारुणं क्रमात् ॥ ५७ ॥
तद्बाह्येऽष्टदलं कुर्यादरुणं यदि वा सितम् ।
एवं मण्डलमारच्य पूजयेत् कुसुमादिभिः ।
तस्योपरि निबध्नीयाद् वितानं समलङ्कृतम् ॥ ५८ ॥
मण्डले स्थापयेद् देवं प्रतिमां यदि वा घटम् ।
तत्रेष्टदेवं सम्पूज्य पायसं विनिवेदयेत् ॥ ५९ ॥
देवताग्रे पवित्राणां पात्रं न्यस्याधिवासयेत् ।
उक्तसंख्यस्य सूत्रस्यालाभे तानि यथारुचि ॥ ६० ॥
ज्येष्ठादीनि पवित्राणि विदध्यात् सर्वदा सुधीः ।
तत्र द्वाविंशतीदेवानाहूय प्रतिपूजयेत् ॥ ६१ ॥

पवित्री पूजन के लिये षोडशदल का कमल बनाकर उसे आठ वर्णों के रङ्ग से रञ्जित करे । नील, हरिद्रा, लाल, माञ्जिष्ठ, श्वेत, सिन्दूर, धूम्र और कृष्ण—ये आठ वर्ण के रङ्ग कहे गये हैं । सित पीत और लाल की क्रमशः सूर्य, सोम और अग्नि सञ्ज्ञा कही गई है । उस सोलह दलकमल के बाद लाल अथवा श्वेत वर्ण का अष्टदल कमल निर्माण करे । इस प्रकार का मण्डल बनाकर पुष्पादि से उसका पूजन करे । उस पर अलङ्कृत चँदवा स्थापित करे । मण्डल पर देवता अथवा घट स्थापित करे और वहाँ इष्टदेव की पूजा कर पायस का नैवेद्य निवेदित करे । फिर देवता के आगे सपवित्र पात्र स्थापित कर अधिवासन करे । यदि उक्त संख्या में सूत्र अप्राप्त हो तो यथारुचि पवित्रा बनावे । ऐसे सुधी साधक को नित्य ज्येष्ठा, मध्यमा तथा कनिष्ठा नामक पवित्रा निर्माण करनी चाहिये । उस पवित्रा पर ३२ देवताओं का आवाहन कर पूजन करे ॥ ५६-६१ ॥

ब्रह्मविष्णुमहेशानास्त्रिसूत्र्या देवताः स्मृताः ।
ओंकारचन्द्रमावह्निब्रह्मनागशिखिध्वजाः ॥ ६२ ॥
सूर्यः सदाशिवो विश्वे नवसूत्राधिदेवताः ।
क्रिया च पौरुषी वीरा चतुर्थी त्वपराजिता ॥ ६३ ॥
विजया जयया युक्ता मुक्तिदा च सदाशिवा ।
मनोन्मनी तु नवमी दशमी सर्वतोमुखी ॥ ६४ ॥
एताः पवित्रग्रन्थीनां देवताः परिकीर्तिताः ।

**आवाहन्यादिनवभिर्मुद्राभिः साधकोत्तमः ॥ ६५ ॥**

ब्रह्मा, विष्णु और महेश ये त्रिसूत्री के देवता हैं । ॐकार, चन्द्रमा, अग्नि, ब्रह्मा, नाग, शिखिध्वज, सूर्य, सदाशिव और विश्वेदेव—ये नवसूत्री के देवता हैं । क्रिया, पौरुषी, वीरा, अपराजिता, जया, विजया, मुक्तिदा, सदाशिवा, मनोन्मनी और सर्वतोमुखी—ये दश पवित्र ग्रन्थि के देवता है । उत्तम साधक आवाहनी इत्यादि नव मुद्रा इन्हें प्रदर्शित करे ॥ ६२-६५ ॥

**तदाह्वानादिकं तत्र कृत्वाऽर्चेच्चन्दनादिभिः ।**
**एवं पवित्राण्यभ्यर्च्य दद्याद् गन्धपवित्रकम् ॥ ६६ ॥**
**तद् धूपयित्वा तारेण हृदयेनाभिमन्त्रयेत् ।**
**प्रणम्य प्रार्थयेद्देवं श्लोकयुग्ममिमं पठन् ॥ ६७ ॥**

पवित्रा पर इन देवताओं का आवाहन कर चन्दनादि से उन देवताओं का पूजन करे । पवित्राओं का अर्चन कर गन्ध पवित्रा देवे । ॐ मन्त्र से धूप देवे और नमः मन्त्र से उसे अभिमन्त्रित करे । देव को इन दोनों श्लोकों को पढ़ते हुये प्रणाम करे ॥ ६६-६७ ॥

**आमन्त्रितोऽसि देवेश! सार्धं देव्या गणेश्वरैः ।**
**मन्त्रेशैर्लोकपालैश्च सहितः परिचारकैः ॥ ६८ ॥**
**आगच्छ भगवन्नीश विधिसम्पूर्तिकारक! ।**
**प्रीतस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव! ॥ ६९ ॥**
**ततो गन्धपवित्रं तत् पादयोर्विन्यसेत् प्रभोः ।**
**केशवेतिपदस्थाने कार्य ऊहोऽन्यदैवते ॥ ७० ॥**

आमन्त्रितोऽसि देवेश........परिचारकैः ॥ (१) आगच्छ.................केशव ॥ (२) प्रार्थना के ये २ श्लोक हैं । फिर देवाधिदेव के चरणों में गन्ध पवित्रा समर्पण करे । यदि अन्य देवता को समर्पित करना है तो केशव के स्थान पर ऊहापोह कर उस देवता नाम ग्रहण करे ॥ ६८-७० ॥

**भगवत्या पदेष्वत्र लिङ्गोहो मन्त्रवित्तमैः ।**
**अधिवासं विधायैवं निशि जागरणं चरेत् ॥ ७१ ॥**
**देवस्य स्तुतिनामानि वदेद् गायंश्च तद्गुणान् ।**

इसी प्रकार भगवती के चरणों में लिङ्ग का ऊहापोह कर मन्त्रवेत्ता पवित्रा का अधिवासन करे और रात्रि के समय जागरण करे तथा देवता की स्तुति एवं उनके नाम और गुणों का गान करे ॥ ७१-७२ ॥

**प्रातर्नित्यार्चनं कृत्वा मूलेनाष्टोत्तरं शतम् ॥ ७२ ॥**

**कनिष्ठाख्यं पवित्रं तद् गृहीत्वा चाभिमन्त्रयेत् ।**
**घण्टावादित्रवेदानां कारयेद् घोषमुत्तमम् ॥ ७३ ॥**

प्रातःकाल होने पर नित्यार्चन कर मूलमन्त्र का एक-सौ आठ बार जप करे । फिर कनिष्ठा नाम की पवित्रा लेकर उसे अभिमन्त्रित करे । घण्टा रव के साथ ऊँचे स्वर में वेदघोष करे ॥ ७२-७३ ॥

**जयशब्दश्च देवस्य कण्ठे मूलेन चार्पयेत् ।**
**एवमेवार्पयेदन्ये पवित्रे मध्यमोत्तमे ॥ ७४ ॥**

मूल मन्त्र पढ़ते हुये जय जयकार शब्द से देवाधिदेव के गले में पवित्रा समर्पित करे । इसी प्रकार अन्य दो मध्यम और ज्येष्ठ पवित्राओं को भी समर्पित करना चाहिए ॥ ७४ ॥

**श्वेतं रक्तं क्रमात् पीतं ध्यायेद्देवं तदर्पणे ।**
**वनमालापवित्रं तु तावन्मूलेन मन्त्रितम् ॥ ७५ ॥**
**अर्पयेदिष्टदेवस्य मुकुटे मूलमुच्चरन् ।**
**ततः सुवर्णकुसुमं पुष्पैः शतमितैः सह ॥ ७६ ॥**

पवित्रार्पण करते समय साधक देवता का ध्यान श्वेत, रक्त और पीत वर्णों में करे । यदि वनमाला नामक पवित्रा हो, तब मूल मन्त्र से अभिमन्त्रित कर मूल मन्त्र को ही पढ़ते हुये देवता के मुकुट में पहनावे । इसके बाद सुवर्ण वर्ण पुष्प का सैकड़ों संख्या में अर्पित करे ॥ ७५-७६ ॥

**मूलाभिमन्त्रितं देवमूर्ध्नि मूलेन चार्पयेत् ।**
**हृदान्यपटलस्थानि पवित्राण्यभिमन्त्र्य च ॥ ७७ ॥**
**तत्तन्नाम्ना नमोऽन्तेन परिवारसुरान् यजेत् ।**
**एवं पवित्रैः सम्पूज्य धूपादीनि प्रकल्पयेत् ॥ ७८ ॥**

इस प्रकार मूलाभिमन्त्रित पवित्रक मूल मन्त्र से देवता के शिर में भी पहनावे । अन्यों के लिये निर्मित अन्य पवित्रों को 'नमः' मन्त्र से अभिमन्त्रित कर उन-उन देवताओं के नाम में चतुर्थ्यन्त, फिर नमः लगाकर पवित्रा पहना देवे । आवरण देवताओं की भी पवित्रा से पूजा कर धूपादि देवे ॥ ७७-७८ ॥

**पावके देवमावाह्य नित्यहोमं विधाय च ।**
**मूलेनाग्निपवित्रं तदर्पयेद् देवतां स्मरन् ॥ ७९ ॥**

अग्नि में देवता का आवाहन कर नित्य होम करे । फिर अग्नि देव का स्मरणकर मूल मन्त्र से उन्हें पवित्रार्पण करे ॥ ७९ ॥

मूर्तौ देवं समुद्वास्य वह्निं संयोज्य चात्मनि ।
पुष्पाञ्जलिं विधायेशे कर्मनिन निवेदयेत् ॥ ८० ॥

मूर्त्ति में देवता का विसर्जन करे । अग्नि को हृदय में स्थापित करे । फिर भगवान् को पुष्पाञ्जलि प्रदान कर पवित्राकर्म ईश्वर को समर्पित करे ॥ ८० ॥

मन्त्रहीनं क्रियाहीनं भक्तिहीनं कृपानिधे ।
पूजनं पूर्णतामेतु पवित्रेणार्पितेन मे ॥ ८१ ॥
इति सम्प्रार्थ्य देवेशं योजयेद् हृदये निजे ।
गुर्वन्तिकं ततो गत्वा दत्त्वा पुष्पाञ्जलिं गुरौ ॥ ८२ ॥
स्वाङ्गे षडङ्गं विन्यस्य गुरुदेहेऽपि विन्यसेत् ।
पाद्यं दत्त्वा तथैवार्घं वस्त्रालङ्कारचन्दनम् ॥ ८३ ॥
पुष्पैः सम्पूज्य मूलेन पवित्रं तद्गलेऽर्पयेत् ।
स्वशक्त्या दक्षिणां दत्त्वा दण्डवत् प्रणमेद् गुरुम्॥ ८४ ॥
अन्येभ्यः शिष्टवृद्धेभ्यः पवित्राणि ददीत च ।
सर्वथैव गुरोः पूजा कर्त्तव्या मन्त्रिणा सदा ॥ ८५ ॥
अपूजिते गुरौ सर्वा पूजा भवति निष्फला ।
गुरोरभावे तत्पुत्रं तदभावे तदात्मजम् ॥ ८६ ॥
दौहित्रं तदभावेऽन्यं पूजयेद् गुरुगोत्रजम् ।
ततो धृत्वा पवित्रं स्वं भोजयित्वा द्विजोत्तमान्॥ ८७ ॥
भुञ्जीत तदनुज्ञातो बन्धुभिस्तनयैः सह ।
यथाकथञ्चित् कुर्वीत पवित्राणि सुरार्चने ॥ ८८ ॥

फिर 'मन्त्रहीनं.........पवित्रेणार्पितेन मे'—इस मन्त्र से प्रार्थना कर देवेश को अपने हृदय में स्थापित करे । तदनन्तर गुरु के पास जावे । फिर उन्हें पुष्पाञ्जलि प्रदान कर अपने देह में षडङ्गन्यास करे । तदनन्तर गुरु के शरीर में भी षडङ्गन्यास करे । फिर पाद्य, अर्घ, वस्त्र, अलङ्कार, चन्दन एवं पुष्प से पूजा कर मूल मन्त्र से गुरु के गले में भी पवित्रा पहनावे । अपनी शक्ति के अनुसार उन्हें दक्षिणा देवे और दण्डवत् प्रणिपात करे । इसी प्रकार अन्य शिष्ट एवं वृद्धजनों को पवित्रा पहनावे । मन्त्रज्ञ आराधक को सर्वथा गुरु का पूजन करना ही चाहिये । यदि गुरु पूजा नहीं हुई तो सारी पूजा निष्फल हो जाती है । यदि गुरु न हो, तब गुरु-पुत्र की पूजा करे और गुरु-पुत्र न हों तब गुरु-पुत्र के पुत्र की पूजा करे । उनके अभाव में गुरु के दौहित्र की पूजा करे । यदि वह भी न हो तो गुरु के गोत्रज किसी अन्य की पूजा करना चाहिए । इसके बाद अपनी पवित्री धारण कर उत्तमोत्तम ब्राह्मणों को भोजन करावे और उनकी आज्ञा लेकर बन्धु-बान्धवों एवं

अपने पुत्रों के साथ भोजन करे। इस प्रकार पवित्रा और सुरार्चन जैसे भी हो सके वैसे करना चाहिए ॥ ८१-८८ ॥

**विधेरुक्तस्य चाशक्त्या पूजासम्पूर्त्तिहेतवे ।**
**यस्यां कस्यां तिथौ कुर्यात् तिथावुक्ते कृतं न चेत् ॥ ८९ ॥**

यदि विधानतः इन कर्मों के करने में असमर्थता हो और यदि उक्त तिथि पर यह कार्य सम्पादित नहीं किया गया है तब पूजा की सम्पूर्त्ति के लिये जिस किसी भी दिन यह कार्य करे ॥ ८९ ॥

**सर्वथा श्रावणे चैकमपि तन्तुं निवेदयेत् ।**
**प्रत्यब्दं साधको यस्तु पूजां कुर्वीत दैवते ॥ ९० ॥**
**ऐश्वर्यारोग्यसंयुक्तोऽनेकवर्षाणि जीवति ।**
**सम्पूर्णे हायने पूजा देवतानां कृता तु या ॥ ९१ ॥**
**सर्वा सम्पूर्णतामेति पवित्रदमनार्पणात् ।**
**अन्येष्वप्युपरागार्धोदयसौम्यायनादिषु ॥ ९२ ॥**
**कुर्यादलभ्ययोगेषु विशेषाद् देवतार्चनम् ।**
**यथायथेष्टदेवेषु नृणां भक्तिः समेधते ॥ ९३ ॥**
**प्राप्यते तदयत्नेन मनोऽभीष्टं तथा तथा ।**
**शुचौ तत्तत् तिथौ कुर्यद्देवप्रस्वापनोत्सवम् ।**
**ऊर्जे तथैव देवानामुत्थापनविधिं सुधीः ॥ ९४ ॥**

श्रावण मास में सब प्रकार से प्रयत्न करके एक भी सूत्र-तन्तु भगवान् को समर्पित करना चाहिये। जो साधक प्रतिवर्ष पवित्रा द्वारा देवपूजन करता है वह ऐश्वर्य एवं आरोग्य से युक्त होकर अनेक वर्ष तक जीवित रहता है। सम्पूर्ण दिन देवता की जो पूजा की जाती है वह पवित्रा एवं दमनक के अर्पण से सम्पूर्ण हो जाती है। सूर्य चन्द्रोपराग, अर्धोदीयमान सूर्य, सौम्यायनादि काल तथा अलभ्य योग में विशेष रूप से देवार्चन करे। जैसे-जैसे मनुष्यों की भक्ति अपने इष्टदेवता में बढ़ती जाती है वैसे-वैसे उसे अपने अभीष्ट की प्राप्ति बिना प्रयत्न के होती रहती है। आषाढ़ मास की तत्तत् तिथियों में मन्त्रज्ञ साधक तत् तत् देवों का प्रस्वापनोत्सव करे और इसी प्रकार कार्त्तिक मास में देवोत्थापन विधि का भी उत्सव करे ॥ ९०-९४ ॥

**माघकृष्णचतुर्दश्यां विशेषात् शिवपूजनम् ।**
**आश्विनोत्त्थनवाहेषु दुर्गा पूज्या यथाविधि ॥ ९५ ॥**

माघ कृष्ण चतुर्दशी को विशेष रूप से शिवपूजन करे। आश्विन मास के शुक्लपक्ष के नव रात्रियों में यथाविधि दुर्गा पूजा करे ॥ ९५ ॥

**गोपालं पूजयेद् विद्वान् नभःकृष्णाष्टमीदिने ।**
**रामं चैत्रे सिते पक्षे नवम्यामर्चयेत् सुधीः ॥ ९६ ॥**

विद्वान् साधक भाद्रपद की कृष्णाष्टमी के दिन गोपाल श्रीकृष्णकी पूजा करे। चैत्र शुक्ल पक्ष की नवमी में सुधीसाधक श्रीराम का पूजन करे ॥ ९६ ॥

**वैशाखादिचतुर्दश्यां नरसिंहं प्रपूजयेत् ।**
**यजेत् शुक्लचतुर्थ्यां तु गणेशं भाद्रमाघयोः ॥ ९७ ॥**
**महालक्ष्मीं यजेद् विद्वान् भाद्रकृष्णाष्टमीदिने ।**
**माघस्य शुक्लसप्तम्यां विशेषाद्दिननायकम् ॥ ९८ ॥**
**या काचित् सप्तमी शुक्ला रविवारयुता यदि ।**
**तस्यां दिनेशं सम्पूज्य दद्यादर्घं यथोदितम् ॥ ९९ ॥**

वैशाख की कृष्णपक्ष की चतुर्दशी में नृसिंह भगवान् की पूजा करे । भादों एवं माघमास की शुक्ल चतुर्थी तिथि में गणेश पूजन करे । विद्वान् साधक भाद्र कृष्ण अष्टमी के दिन महालक्ष्मी का और माघ मास के शुक्लपक्ष की सप्तमी को विशेष रूप से भगवान् सूर्य का पूजन करे अथवा जिस किसी महीने की शुक्ला सप्तमी को यदि रविवार से युक्त हो तो उसमें विशेष रूप से सूर्य का पूजन कर शास्त्रीय रीति से अर्घ प्रदान करे ॥ ९७-९९ ॥

**तत्तत्कल्पोदितानन्यान् देवताप्रीतिवर्धनान् ।**
**विशेषनियमान् ज्ञात्वा भजेद्देवमनन्यधीः ॥ १०० ॥**

इसी प्रकार देवता में प्रीति विवर्धन के लिये तत्तत्कल्पों में कहे गये अन्य नियमों को जानकर साधक अनन्यधीः हो देव पूजन करे ॥ १०० ॥

**आषाढ़ी कार्तिकी मध्ये किञ्चिन्नियममाचरेत्।**
**देवसम्प्रीतये विद्वान् जपपूजापरायणः ॥ १०१ ॥**

आषाढ़ी पूर्णिमा से कार्त्तिकी पूर्णिमा के मध्य तक विद्वान् साधक देवता की प्रीति के लिये जप एवं पूजा में परायण रहकर कुछ न कुछ नियमों का अवश्य ही आचरण करे ॥ १०१ ॥

**यो विना नियमं मर्त्यो व्रतं वा जपमेव वा ।**
**चातुर्मास्यं नयेन्मूढो जीवन्नपि मृतो हि सः ॥ १०२ ॥**

जो मूर्ख बिना नियम के और बिना जप के एवं बिना व्रत के चातुर्मास्य व्यतीत करता है वह जीते हुये भी मृत के समान है ॥ १०२ ॥

**एवं यो भजते विष्णुं रुद्रं दुर्गां गणाधिपम् ।**

**भास्करं श्रद्धया नित्यं स कदाचिन्न सीदति ॥ १०३ ॥**

इस प्रकार जो मनुष्य विष्णु, रुद्र, दुर्गा एवं गणेश तथा भास्कर का श्रद्धापूर्वक नित्य यजन करता है उसे कदापि दुःख नहीं प्राप्त होता ॥ १०३ ॥

**स्वधर्ममाचरन् नित्यं देवपूजापरायणः ।**
**जितेन्द्रियोऽखिलान् भोगान् प्राप्येहानन्ततां व्रजेत् ॥ १०४ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे दमनकपवित्रार्चाकथनं नाम पञ्चदशः पटलः ॥ १५ ॥**

...❧❀❧...

जो मन्त्रज्ञ साधक जितेन्द्रिय होकर अपने धर्म का आचरण करता हुआ देव पूजा परायण रहता है वह इस लोक में सभी भोगों को भोग कर अन्त में अनन्त में लीन हो जाता है ॥ १०४ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में दमनक-पवित्रार्चाकथन नामक पञ्चदश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १५ ॥**



# षोडशः पटलः

## कुमारीपूजनविधानम्

अथो कुमारीयजनं वक्ष्येऽभीष्टप्रदं नृणाम् ।
सर्वे देवा न तुष्यन्ति कुमारीभोजनादृते ॥ १ ॥

अब मैं कुमारी यजन की विधि कहता हूँ जो मनुष्यों की सारी कामनाओं को पूर्ण करने वाला है । यदि कुमारी भोजन नहीं कराया गया तो सभी देवता सन्तुष्ट नहीं होते ॥ १ ॥

**यामलेऽपि—**

कुमारी योगिनी साक्षात् कुमारी परदेवता ।
असुराश्च तथा नागा ये ये दुष्टग्रहा अपि ॥ २ ॥
भूतवेतालगन्धर्वा डाकिनी यक्षराक्षसाः ।
याश्चान्या देवताः सर्वा भूर्भुवः स्वश्च भैरवाः ॥ ३ ॥
पृथिव्यादीनि सर्वाणि ब्रह्माण्डं सचराचरम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ ४ ॥
ते तुष्टाः सर्वतुष्टाश्च कुमारीपूजनात् शिव! ।
कुमारिका ह्यहं नाथ सदा त्वं च कुमारिका ॥ ५ ॥
अष्टोत्तरशतं वापि एकां वापि प्रपूजयेत् ।
पूजिताः प्रतिपूज्यन्ते निर्दहत्यवमानिताः ॥ ६ ॥

यामल में भी बतलाया गया है—कुमारी साक्षात् योगिनी है और कुमारी परदेवता है । हे शिव! असुर, नाग, किं बहुना, समीर, दुष्ट ग्रह भी भूत वेताल, गन्धर्व, डाकिनी, यक्ष, राक्षस इनके अतिरिक्त अन्य भी देवता भू-लोक, अन्तरिक्ष लोक, स्वर्ग लोक, समस्त भैरव पृथिव्यादि समस्त पञ्चमहाभूत, चराचर सहित समस्त ब्रह्माण्ड, ब्रह्मा, विष्णु, ईश्वर, रुद्र, सदाशिव कुमारी पूजन से तो सन्तुष्ट होते ही हैं सभी देवता सन्तुष्ट हो जाते हैं । हे नाथ! मैं सदा कुमारिका हूँ । आप भी सदा कुमारिका हो, इन कुमारिकाओं का पूजन एक-सौ आठ की संख्या में करे अथवा अभाव में एक की भी पूजा करनी चाहिये । इनके पूजन से सभी पूजित हो

जाते हैं । अपमान किये जाने पर ये जला देती है ॥ २-६ ॥

**न तथा तुष्यते देवो बलिहोमस्तुतीरणैः ।**
**कुमारीपूजनेनात्र यथा सद्यः प्रसीदति ॥ ७ ॥**

बलि से, होम से एवं स्तुती से देवी उतनी प्रसन्न नहीं होती जितनी प्रसन्नता उन्हें कुमारी पूजन से होती है । कुमारी पूजन से वे सद्यः प्रसन्न हो जाती है ॥ ७॥

**न केवलं पूजयेच्च भोजयेच्चापि यत्नतः ।**
**व्यङ्गता चाप्यकरणात् पूजायाः परिकीर्तिता ॥ ८ ॥**

केवल कुमारी पूजन ही न करे प्रत्युत उन्हें प्रयत्नपूर्वक भोजन भी करावे । यदि कुमारी भोजन न कराया गया तब तो पूजन में वैगुण्यता आ जाती है ॥ ८ ॥

**करणात् साङ्गतापि स्यादन्यस्मिन् न कृतेऽपि हि ।**
**स्मार्त्तानां निशि पूजोक्ता श्रौतानामपराह्निकी ॥ ९ ॥**

कुमारी पूजन और भोजन कराने से कर्म की साङ्गता होती है । भले ही अन्य कार्य न किया गया हो । स्मार्त्तों के लिये कुमारी पूजन का समय रात्रि है और श्रौत्रियों के लिये अपराह्न है ॥ ९ ॥

**नित्या तु शारद्यर्चायां काम्या नैमित्तिकी परा ।**
**महापर्वसु सर्वेषु विशेषाच्च पवित्रके ॥ १० ॥**

शारदीय अर्चा में कुमारी पूजन नित्या है और सभी महापर्वों में विशेष कर पवित्रा समर्पण में कुमारी पूजन काम्या और नैमित्तिकी होती है ॥ १० ॥

**पूजयेद् भक्तिभावेन यदीच्छेत् सिद्धिमात्मनः ।**
**द्विवर्षाद्या दशाब्दान्ताः कुमारीः परिपूजयेत् ॥ ११ ॥**

साधक यदि अपने कर्म की सिद्धि चाहता है तो उसे भक्तिभाव से कुमारी पूजन करना चाहिये । दो वर्ष से लेकर दश वर्ष तक की कुमारियों का पूजन करना चाहिये ॥ ११ ॥

**अभावे षोडशाब्दान्ता विना पुष्पं कुमारिका ।**
**नाधिकाङ्गीं न हीनाङ्गीं कुष्ठिनीं च व्रणाङ्किताम् ॥ १२ ॥**
**अन्धां काणां केकरां च कुरूपां रोमयुक्तनुम् ।**
**दासीजां दन्तुरां रुग्णां दुष्टां कन्यां न पूजयेत् ।**
**पितृमातृमतीं दिव्यां मनोनयननन्दिनीम् ॥ १३ ॥**
**विप्रां सर्वेष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम् ।**
**वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत् ॥ १४ ॥**

अप्राप्त होने पर षोडशाद्बान्त, किन्तु पुष्परहिता कुमारी का पूजन किया जा सकता है। अधिकाङ्गी, हीनाङ्गी, कुष्ठिनी, व्रण चिन्ह वाली, अन्धी, कान्ति केकरा, कुरूपा, रोगी शरीर वाली, दासी से उत्पन्न, निकले हुये दाँत वाली, रोगिणी एवं दुष्टा कुमारी का पूजन न करे। जो कन्या पिता माता वाली हो, सुन्दर हो, जिसके देखने से नेत्र प्रसन्न हो जावे, ऐसी कन्या का पूजन करना चाहिये। सर्वेष्टसिद्धि के लिये ब्राह्मणकन्या, यशः प्राप्ति के लिये क्षत्रियकन्या, धनलाभ के लिये वैश्यकन्या तथा पुत्रप्राप्ति के लिये शूद्र कन्या का पूजन करना चाहिये ॥ १२-१४ ॥

**सन्ध्यैकवर्षा सम्प्रोक्ता द्विवर्षा च सरस्वती।**
**त्रिधा मूर्तिस्त्रिवर्षा च चतुरब्दा तु कालिका ॥ १५ ॥**
**सुभगा पञ्चवर्षा तु षड्वर्षा च उमा स्मृता।**
**मालिनी सप्तवर्षा च अष्टवर्षा तु कुब्जिका ॥ १६ ॥**
**नवाब्दा कालसङ्कर्षा दशवर्षाऽपराजिता।**
**एकादशाब्दा रुद्राणी द्वादशाब्दा तु भैरवी ॥ १७ ॥**
**तत्परा स्यान्महालक्ष्मीस्तत्परा पीठनायिका।**
**क्षेत्रज्ञा तत्परा प्रोक्ता षोडशाब्दा च चण्डिका॥ १८ ॥**
**एवं पूज्या क्रमेणैव पूजाक्रममिहोच्यते।**

एक वर्ष की कन्या सन्ध्या, दो वर्ष की कन्या सरस्वती, त्रिवर्षाकन्या त्रिधा मूर्त्ति, चार वर्ष की कन्या कालिका, पञ्चवर्षा कन्या सुभगा और षट्वर्षा कन्या उमा कही जाती है। सप्तवर्षीय कन्या मालिनी, अष्टवर्षा कुब्जिका, नववर्ष वाली कन्या कालसङ्कर्षा, दश वर्ष वाली कन्या अपराजिता, एकदश वर्ष वाली कन्या रुद्राणी, द्वादशाब्दा भैरवी, उसके बाद महालक्ष्मी, उसके भी बाद पीठनायिका, उसके बाद तत्परा, उसके बाद क्षेत्रज्ञा, तदनन्तर षोडशवर्षीया कन्या का नाम 'चण्डिका' है। साधक को इनका पूजन क्रम से करना चाहिये। अब मैं आपको इनके पूजा का क्रम बतलाता हूँ ॥ १५-१९ ॥

### कुमारीपूजाक्रमकथनम्

**गीतवादित्रनिर्घोषैरानन्दादरपूर्वकम् ॥ १९ ॥**
**पूजागृहद्वारि नीत्वा कुमारीं हृष्टमानसः।**
**नित्यकृत्यं समाप्याथ कल्पितार्चनसम्भृतिः ॥ २० ॥**

साधक प्रसन्न चित्त होकर गाजे-बाजे के साथ आनन्दपूर्वक कन्याओं को पूजागृह के द्वार तक प्रसन्न चित्त होकर लावे। फिर अपना नित्यकर्म समाप्त कर कुमारी पूजन की समस्त सामग्री एकत्रित करे ॥ १९-२० ॥

**प्राणायामं विधायाथ गुरुं वामे गणेश्वरम् ।**
**दक्षे मध्ये कुमारीं च नत्वा दिग्बन्धनं चरेत् ॥ २१ ॥**

फिर प्राणायाम कर गुरु को बायें तथा गणेश को अपनी दाहिनी ओर स्थापित करे और मध्य में कुमारियों को नमस्कार करे । फिर तीन चुटकी बजा कर दिग्बन्धन करे ॥ २१ ॥

**तालत्रयैश्छोटिकाभिस्ततस्तां स्वेष्टरूपिणीम् ।**
**ध्यायन् पादौ च प्रक्षाल्य तज्जलं शिरसि क्षिपेत्॥ २२ ॥**

फिर उन कन्याओं में अपने इष्टदेवता के रूप में ध्यान करते हुये पाद प्रक्षालन करे और पाद-शेष जल से अपने शिर पर मार्जन करे ॥ २२ ॥

**स्वोत्तरीयांशुकेनास्याः पादौ संशोध्य हृष्टधीः ।**
**भूतापसारणं कुर्यात् ततस्तालत्रयेण च ॥ २३ ॥**

फिर अपने उत्तरीय के वस्त्र से प्रसन्नचित्त हो पैर पोंछे । फिर तीन चार ताली बजाकर भूतापसारण करे ॥ २३ ॥

**प्रणवं च तथा पाशं मायां कूर्चं तथास्त्रकम् ।**
**भूतानि प्रवदेत् तद्वदपसारय शब्दतः ॥ २४ ॥**
**विघ्नान् नाशय हृत्स्वाहा मन्त्रमेनं समुच्चरन् ।**
**अक्षतान् प्रक्षिपेत् पश्चात् कुमारी दक्षिणं करम् ।**
**गृहीत्वा वामहस्तेन दक्षपादपुरस्सरम् ॥ २५ ॥**
**शनैः शनैर्नमन्मौलिः पूजागृहमथानयेत् ।**
**ध्यायन् देवं पठन् मन्त्रं स्वपृष्ठेन प्रवेशयन् ॥ २६ ॥**
**त्वमम्ब जगतामाद्ये जगदाधाररूपिणि ।**
**कुमारीरूपमास्थाय प्रविशेदं गृहं मम ॥ २७ ॥**
**भवत्याः कीदृशं रूपं जाने मातरहं नहि ।**
**कुमारीरूपमेवेदं पश्यामि नरचक्षुषा ॥ २८ ॥**
**भक्तिं मदीयां विज्ञाय त्वत्पादाम्बुजयोः शिवे ।**
**त्वया प्रकटितं रूपमीदृशं सर्वसिद्धये ॥ २९ ॥**
**दृष्टिः कार्या न मे पापेऽसञ्चारे नासतः पथि ।**
**दृढायां केवलं भक्तौ दातव्या सुरवन्दिते॥ ३० ॥**
**शिवाद्यास्तव रूपं हि कीदृशं नेति जानते ।**
**ज्ञास्यामि को वराकोऽहं पाञ्चभौतिकविग्रहः ॥ ३१ ॥**
**एवं पठन् पञ्चमन्त्रानासने सूपवेश्य च ।**

**कुमारी दक्षिणे भागे बलिं दद्यान्मनुं पठन् ॥ ३२ ॥**

'ॐ आं ह्रीं ह्रूं अस्त्राय फट्', इसके बाद 'भूतानि अपसारय' शब्द कहकर 'विघ्नान् नाशय नमः स्वाहा'—इस मन्त्र का उच्चारण करते हुये दशो दिशाओं अक्षत छोड़े। इस प्रकार भूतापसारण कर कुमारी का दाहिना हाथ अपने बायें हाथ से पकड़ कर दाहिना पैर पूजा गृह में रखते हुये, अपने शिर को झुकाये हुये, उन्हें पूजा गृह में ले आवे। इष्ट देवता का ध्यान करते हुये, मन्त्र का पाठ करते हुये, अपने पीछे कन्याओं को रखकर पूजा गृह में ले आवे। 'त्वमम्ब............ ज्ञास्यामि को वराकोऽहं पाञ्चभौतिकविग्रहः' (२७-३१) पर्यन्त श्लोक मन्त्रों का पाठ करते हुये, उन कुमारियों को आसन पर बैठावे। फिर कुमारियों के दक्षिण भाग में निम्न मन्त्र का पाठ करते हुये बलि देवे ॥ २४-३२ ॥

**प्रणवं देवयोनिभ्यो नम अष्टाक्षरो मनुः ।**
**त्रिकोणमण्डले भूमौ दत्त्वान्नेन बलिं ततः ॥ ३३ ॥**

'ॐ देवयोनिभ्यो नमः' यह आठ अक्षरों का बलि मन्त्र है। तदनन्तर त्रिकोण मण्डल पर भूमि में अन्न की बलि देवे ॥ ३३ ॥

**न्यासं कुर्यात् कुमार्यङ्गेष्वक्षतैर्भावयन् धिया ।**
**चण्डयोगेश्वरीं के च महापूर्वां प्रविन्यसेत् ॥ ३४ ॥**
**मुखे सिद्धिकरालीं च नेत्रयोर्विकरालिकाम् ।**
**महापूर्वां कर्णयोश्च महामारीं प्रविन्यसेत् ॥ ३५ ॥**
**नसोर्न्यसेत् साधकेन्द्रस्तथा वज्रकपालिनीम् ।**
**कपोलयोर्मुण्डमालामोष्ठयोश्चाट्टहासिनीम् ॥ ३६ ॥**
**दन्तपङ्क्त्योश्चण्डकालीं कालचक्रेश्वरीं ततः ।**
**स्कन्धयोर्हृदये गुह्यकालीं कात्यायनीं तथा ।**
**बाह्वोस्तथा च कामाक्षीं जठरे पृष्ठदेशके ॥ ३७ ॥**

फिर ध्यान करते हुये कुमारियों के अङ्ग में अक्षत से इस प्रकार न्यास करे। 'महाचण्डेश्वर्यै नमः' इस मन्त्र से शिर पर, फिर 'सिद्धकराल्यै नमः' से मुख में, फिर 'विकरालिकायै नमः' से दोनों नेत्रों में, फिर 'महामहामार्यै नमः' से दोनों कानों में, फिर साधकेन्द्र 'वज्रकपालिन्यै नमः' इस मन्त्र से दोनों नासिकाओं में, 'मुण्डमालायै नमः' से दोनों कपोलों में, 'अट्टहासिन्यै नमः' से दोनों ओष्ठो में, 'चण्डकाल्यै नमः' से तथा 'कालचक्रेश्वर्यै नमः' से दोनों दन्तपङ्क्तियों में, तदनन्तर 'गुह्यकाल्यै नमः' से दोनों कन्धों में, 'कात्यायन्यै नमः' से हृदय में, कामाक्ष्यै नमः से दोनों बाहु, पेट तथा पृष्ठदेश में न्यास करे ॥ ३४-३७ ॥

**चामुण्डां सिद्धिलक्ष्मीं च न्यसेदूर्वोश्च कुब्जिकाम् ।**

जान्वोश्च जङ्घयोस्तद्वन्मातङ्गीं पादयोस्तथा ॥ ३८ ॥
चण्डेश्वरीं च सर्वाङ्गे कुमारीं विन्यसेद् बुधः ।
ङेऽन्तां नमोऽन्तां विन्यस्य पञ्चाङ्गानि न्यसेत् ततः ॥ ३९ ॥

'चामुण्डायै नमः', 'सिद्धलक्ष्म्यै नमः' से दोनों ऊरुओं में 'कुब्जिकायै नमः' से दोनों जानुओ एवं दोनों जङ्घाओं में, फिर 'मातङ्ग्यै नमः' से दोनों पादों में न्यास करना चाहिए। 'चण्डेश्वर्यै नमः' से सर्वाङ्ग में न्यास करे। इस प्रकार चतुर्थ्यन्त नमोऽन्त कुमारी न्यास बुद्धिमान् साधक करे। तदनन्तर पञ्चाङ्ग न्यास करना चाहिए ॥ ३८-३९ ॥

पञ्चाङ्गन्यासकथनम्

मुद्रया भावयन् देवीं कुमार्यङ्गे विचक्षणः ।
सम्बुध्यन्ता जातियुक्ता तथा कुलकुमारिका ॥ ४० ॥
हृदये शिरसि प्रोक्ता तथैव कुलनायिका ।
शिखायां कुलशब्दाद्या भैरवी परिकीर्तिता ॥ ४१ ॥
कुलवागीश्वरी तद्वद् वर्मणि प्रथिता सदा ।
कुलपालिकास्त्रे सम्प्रोक्ता ततो वक्त्राणि विन्यसेत् ॥ ४२ ॥

विचक्षण साधक कुमारी के अङ्ग में मुद्रा की भावना करे। फिर सम्बुध्यन्त जातियुक्त कुल कुमारिका न्यास इस प्रकार करे—हृदय में एवं शिर में कुलनायिका का न्यास करे। शिखा में कुल भैरवी से न्यास करे। इसी प्रकार कवच में कुलवागीश्वरी का न्यास करे। अस्त्र मन्त्र से कुलपालिका का न्यास करे। इसके बाद वक्त्र (मुख) में इस प्रकार न्यास करे ॥ ४०-४२ ॥

वामावर्त्तेन पूर्वादि दक्षिणान्तं तदीयके ।
बीजपूर्वाणि शिरसि बीजानि तु क्रमाद् ब्रुवे ।
वाग्भवं भुवनेशानीं श्रियं त्रींकूर्चशक्तिकैः ॥ ४३ ॥

वामावर्त्त से मुख के पूर्व, फिर उत्तर, फिर पश्चिम, अन्त में दक्षिण में बीज-पूर्वक न्यास करे। अब उन बीजों को क्रमशः कहता हूँ। वाग्भव (ऐं), भुवनेशानी (ह्रीं), श्रियं (श्रीं), फिर तीन कूर्चशक्तियाँ (हूं हूं हूं) बीज कही गई हैं ॥ ४३ ॥

**बीजानां फलं भैरवतन्त्रे—**

वाग्भवे तु परक्षोभं मायाबीजे गुणाष्टकम् ।
श्रीबीजेन श्रियो लाभं त्रींबीजेनाधिसङ्क्षयः ॥ ४४ ॥

अब बीजों का फल भैरवतन्त्र के अनुसार कहते हैं—वाग्भव (ऐं) का फल शत्रु को क्षोभ, माया बीज (ह्रीं) का अष्ट गुणित फल, श्रीबीज से श्रीलाभ, स्त्रीं

बीज से आधि (मानसिक रोग) का क्षय कहा गया है ॥ ४४ ॥

**कूर्चेनैव तु बीजेन खगत्वमुपजायते ।**
**शक्तिबीजेन शक्तित्वं सर्वशक्तिप्रदायकम् ॥ ४५ ॥**
**बीजषट्कं सिद्धिजये पूर्ववक्त्राय हृत् ततः ।**
**जये चोत्तरवक्त्राय हृदयं कुब्जिके ततः ॥ ४६ ॥**
**वदेत् पश्चिमवक्त्राय नमः स्यादथ कालिके ।**
**दक्षवक्त्राय हृदयं प्रत्येकं बीजपूर्वकम् ॥ ४७ ॥**

कूर्चबीज (हूँ) से आकाशगामित्व शक्ति बीज (ह्रीं) सर्वशक्तित्व प्रदान करता है । पहले छह बीज कहकर 'जये उत्तरवक्त्राय नमः' से मुख के उत्तरभाग में, फिर छह बीज कहकर 'कुब्जिके पश्चिमवक्त्राय नमः' से मुख के पश्चिमभाग में, फिर छह बीज कहकर 'कालिके दक्षवक्त्राय नमः' से मुख के दक्षिणभाग में न्यास करे । (यथा—ऐं ह्रीं श्रीं हूँ हूँ हूँ जये उत्तरवक्त्राय नमः) ॥ ४५-४७ ॥

**इत्थं विन्यस्य तद्देहे कल्पोक्तं न्यासजालकम् ।**
**स्वीये शरीरे विन्यस्य तथार्घं स्थाप्य शोध्य च ।**
**पूजोपकरणं सर्वं कुमारीपश्चिमे ततः ॥ ४८ ॥**
**पूजयेदक्षतैः पुष्पै रक्तचन्दनमिश्रितैः ।**
**विशुद्धां बालिकां चैव ललितां मालिनीं ततः ॥ ४९ ॥**
**वसुन्धरां पञ्चमीं च षष्ठीं चैव सरस्वतीम् ।**
**रमां गौरीं तथा दुर्गां नवशक्तीः क्रमादिमाः ॥ ५० ॥**
**वाङ्मायाश्रीत्रिबीजाद्या ङेऽन्ताश्चैव नमोऽन्तिकाः ।**
**तद्दक्षे च गणेशानं नववर्षमितं बटुम् ॥ ५१ ॥**
**यजेच्च वटुकं तद्वत् पञ्चवर्षमितं शिशुम् ।**
**एवं पूज्य वरारोहे कुमारीं पूजयेत् ततः ॥ ५२ ॥**

इसी प्रकार उक्त न्यास समूहों का अपने शरीर में न्यास कर अर्घ स्थापित करे । उसका संशोधन कर समस्त पूजा की सामग्री कुमारी की बाईं ओर स्थापित करे और रक्त चन्दन मिश्रित अक्षत से तथा पुष्पों से विशुद्धा, बालिका, ललिता, मालिनी, वसुन्धरा, सरस्वती, रमा, गौरी तथा दुर्गा—इन नव शक्तियों का क्रमशः पूजन करे । आदि में ऐ ह्रीं श्रीं इन बीजों का, फिर नाम में चतुर्थी लगाकर अन्त में नमः कहकर इस मन्त्र से पूजन करे । यथा—'ऐं ह्रीं श्रीं विशुद्धायै नमः' इत्यादि । उन कुमारियों की दाहिने ओर नववर्ष के शिशु गणेश का तथा पाँच वर्ष के शिशु बटुक भैरव का उसी प्रकार पूजन करे । इस प्रकार प्रथम गणेश तथा बटुक भैरव के पूजन के बाद कुमारी पूजन करे ॥ ४८-५२ ॥

तत्तद्वर्षविभेदेन तत्तन्नाम्ना यथाविधि ।
चतुर्थ्यन्तं नमोऽन्तं च नाममन्त्रमुदीरितम् ॥ ५३ ॥
आसनं वाग्भवाद्येन पाद्यं मायादिकेन च ।
श्रीबीजाद्येन चार्घं स्यात् त्रीमाद्यं गन्धदानके ॥ ५४ ॥
कूर्चाद्येन तथा पुष्पमालां तस्यै निवेदयेत् ।
धूपं दीपं च नैवेद्यं वस्त्राण्याभरणानि च ॥ ५५ ॥
वस्तूनि सुमनोज्ञानि यावच्छक्यानि प्रीतये ।
शक्तिबीजेन वै दद्यात् सुप्रसन्नां विभाव्य च ॥ ५६ ॥
पूजयेदथ पञ्चाशच्छक्तीः तस्याः कलेवरे ।
पुष्पाक्षतैर्गन्धयुतैश्चतुर्थीनमसान्वितैः ॥ ५७ ॥
प्रणवाद्यैर्नाममन्त्रैः क्रमात् साधकसत्तमः ।

अब कुमारी पूजन का प्रकार कहते हैं—तत्तत् वर्षों के भेद से एक वर्षा (द्विवर्षा, त्रिवर्षामित्यादि) तत्तत् नामों से (साध्या, सरस्वती) यथाविधि चतुर्थ्यन्त कर अन्त में नमः शब्द कह कर पूजन करे। यहाँ तक नाम मन्त्र कहा गया। (यथा—एक वर्षायै साध्यायै नमः)। आदि में वाग्भव (ऐं) से लगा कर आसन देव आदि में (ह्रीं) लगाकर पाद्य देवे। आदि में श्रीं लगाकर अर्घ प्रदान करे। ऐं ह्रीं श्रीं तीन मन्त्रों को आदि में कहकर गन्ध प्रदान करें। फिर धूप, दीप, नैवेद्य, वस्त्र, आभूषण और अपनी शक्ति के अनुसार जितनी भी मनोहर वस्तुयें हैं कुमारियों की प्रसन्नता के लिये शक्तिबीज (ह्रीं) से देवे। फिर उन्हें सुप्रसन्न जानकर उनके शरीर में ५० शक्तियों की पूजा करे। पुष्प, अक्षत, गन्धादि से आदि में प्रणव (ॐ) लगाकर चतुर्थ्यन्त नाम के अन्त में नमः शब्द से इस प्रकार नाम मन्त्र से पूजा करे। (यथा—ॐ जयायै नमः इत्यादि) अब पचास शक्तियों का नाम कहते हैं ॥ ५३-५८ ॥

तास्त्वाद्या च जया चैव विजया ऋद्धिदा तथा।
माया कला सिद्धिदा च सूक्ष्मा चैव प्रभा तथा॥ ५८ ॥
सुप्रभा विद्युता तद्वद् विशुद्धा नन्दिनी पुनः ।
ज्ञेया विभूतिरपराजिता च ललिता तथा ।
लक्ष्मी गौरी तथा मेधा गायत्री च ततः परम् ॥ ५९ ॥
सावित्री च स्वधा स्वाहा तथेच्छा च क्रिया स्मृता।
विद्या प्रज्ञा तथा दीप्ता चेतना भद्रिणी ततः ॥ ६० ॥
ज्येष्ठाऽथोमा शिवा तद्वन्मुदिता च क्षमा ततः ।
शुद्धाख्या विमला चैव कौमुदी विशदा ततः ॥ ६१ ॥
अशोका ज्ञानदा चैव बलदा राज्यदा ततः ।

**मैत्री तथा च रुद्राणी भवानी च मृडान्यपि ॥ ६२ ॥**
**सर्वज्ञा चण्डिका चैव कुमार्यन्ताः प्रकीर्तिताः ।**
**प्रपूज्य चैतास्तद्देहे तथैवान्या क्रमाद् यजेत् ॥ ६३ ॥**

जया, विजया, ऋद्धिदा, माया, कला, सिद्धिदा, सूक्ष्मा, प्रभा, सुप्रभा, विद्युता (१०), विशुद्धा, नन्दिनी, विभूति, अपराजिता, ललिता, लक्ष्मी, गौरी, मेधा, गायत्री, सावित्री (२०), स्वधा, स्वाहा, इच्छा, क्रिया, स्मृता, विद्या, प्रज्ञा, दीप्ता, चेतना, भद्रिणी (३०), ज्येष्ठा, उमा, शिवा, मुदिता, क्षमा, शुद्धा, विमला, कौमुदी, विशदा, अशोका (४०), ज्ञानदा, बलदा, राज्यदा, मैत्री, रुद्राणी, भवानी, मृडानी, सर्वज्ञा, चण्डिका और अन्त में कुमारी (५०)—ये शक्तियाँ कही गई हैं इन शक्तियों का कुमारी के देह में पूजन कर उसी प्रकार अन्यों के शरीर में भी क्रमशः पूजन करे ॥ ५८-६३ ॥

**भैरवाष्टसमाख्याता भैरव्यश्चाष्ट तत्समाः ।**
**पूज्याः पुष्पाक्षतैर्देहे तस्या विघ्नविनाशकाः ॥ ६४ ॥**
**वटुकः क्षेत्रपालश्च योगिन्यो भूतनायकाः ।**
**प्रेता यक्षाश्च डाकिन्यः पूज्यास्तद्वच्च शक्तयः ॥ ६५ ॥**

फिर उनके शरीर में विघ्न का विनाश करने वाले आठ भैरवों का तथा आठ भैरवियों का जो भैरवों के ही समान हैं उनका भी पुष्पाक्षतों से पूजन करे । इसी प्रकार बटुक, क्षेत्रपाल, योगिनियाँ, भूतनायक, प्रेत, यक्ष एवं डाकिनियों का पूजन करना चाहिए ॥ ६४-६५ ॥

**महामाया कालरात्रिस्ततश्च सर्वमङ्गला ।**
**पूज्या डमरुका तद्वद् राजराजेश्वरी तथा ॥ ६६ ॥**
**सम्पत्प्रदा भगवती कुमारी स्यादतः परम् ।**
**तत्रिकोणे तथा पूज्या वामावर्त्तेन शक्तयः ॥ ६७ ॥**
**कामेशी चैव वज्रेशी तथा च भगमालिनी ।**
**द्वन्द्वशश्च पुनः पूज्यास्तत्रैव शक्तयश्च षट् ॥ ६८ ॥**
**अनङ्गाद्यास्तथा सर्वाः कुसुमा मन्मथा तथा ।**
**मदना कुसुमाद्या स्यात् तुरा च मदनातुरा ॥ ६९ ॥**
**शिशिरेति च विज्ञेया प्रणवाद्या नमोऽन्तिकाः ।**
**एवं पूजां विधायाथ कुमारी पुरतो बुधः ॥ ७० ॥**
**वर्तुलं मण्डलं कृत्त्वा मध्ये कामकलां लिखेत् ।**
**ध्रुवादि शुभदायै हृन्मन्त्रेण कुसुमाक्षतैः ॥ ७१ ॥**

उसी प्रकार महामाया, कालरात्रि, सर्वमङ्गला, डमरुका, राजराजेश्वरी,

सम्पत्प्रदा, भगवती एवं कुमारी—इन अष्ट शक्तियों का पूजन करे । फिर त्रिकोण में वामावर्त्त से कामेशी, वज्रेशी तथा भगमालिनी की पूजा करे । पुनः त्रिकोण में ही दो-दो के क्रम से अनङ्गकुसुमा, अनङ्गमन्मथा, अनङ्गमदना, कुसुमातुरा, मदनातुरा तथा शिशिरा—इन छह अनङ्गादि देवियों का प्रणवादि चतुर्थ्यन्त नमः से पूजन करे (यथा—ॐ अनङ्गकुसुमायै नमः) इत्यादि । इस प्रकार पूजा कर लेने के पश्चात् बुद्धिमान् साधक कुमारी के आगे गोलाकार मण्डल बनावे और मध्य में कामकला (ईं) लिखे । फिर 'ॐ शुभदायै नमः' इस मन्त्र से कुसुमाक्षत से पूजन करना चाहिए ॥ ६६-७१ ॥

पूज्य तत्र यथालाभं पात्रस्थान्नं चतुर्विधम् ।
निधाप्य च ततो मन्त्री कुमारीदक्षिणं करम् ॥ ७२ ॥
गृहीत्वोत्तानकं तत्र स्थापयेच्छक्तिमुच्चरन् ।
निवेदयेत् तं नैवेद्यं भावयन् हृदि देवताम् ॥ ७३ ॥
इदमन्नं तथा नाम चतुर्थ्यन्तं नमं पदम् ।
उच्चार्य भुङ्क्ष्व देवीति ब्रूयादर्घजलं क्षिपन् ॥ ७४ ॥
भक्षयन्त्यां च तत्सूक्तैस्तुवीत च कृताञ्जलिः ।

जयकालिस्तुतिकथनम्

जयकालि महाभीमे भीमरावे भयापहे ॥ ७५ ॥
संसारदावाग्निशिखे वृजिनार्णवतारिणि ।
ब्रह्मेन्द्रोपेन्द्रभूतेशप्रभृत्यमरवन्दिते ॥ ७६ ॥
सर्गपालनसंहारकारिण्यहितमारिणि ।
गुह्यकालि परानन्दरसपूरितविग्रहे ॥ ७७ ॥
परब्रह्मरसास्वादकैवल्यानन्ददायिनि ।
गुणातीतेऽपि सगुणे महाकल्पान्तनर्तकि ॥ ७८ ॥
कुमारीरूपमास्थाय विज्ञाप्याज्ञास्वरूपिणि ।
आगतासि ममागारं शारद्यर्चासमाप्तये ॥ ७९ ॥
सांवत्सरिककल्याणसूचनाय तथैव च ।
धन्योऽस्मि कृतकृत्योऽस्मि सफलं जीवितं मम ॥ ८० ॥
यस्मात् त्वमीदृशं कृत्त्वा कौमारं रूपमुत्तमम् ।
गुह्यकालि समायाताब्दिकपूजाजिघृक्षया ॥ ८१ ॥
त्वमेवैतेन रूपेण देवेभ्यः प्रार्थिता पुरा ।
दत्तवत्यसि साम्राज्यं वरानपि समीहितान् ॥ ८२ ॥
मह्यमप्यद्य देवेशि वरं देहि सुपूजिता ।
ब्रह्मणे सृष्टिसामर्थ्यं त्वं पुरा दत्तवत्यसि ॥ ८३ ॥

विष्णवे च त्वमेवादौ तथा पालनशक्तिताम् ।
महारुद्राय संहारकर्तृत्वमददः शिवे ॥ ८४ ॥
देवेभ्यश्चापि दैत्यानां नाशनं दक्षतामपि ।
अन्तर्यामिन्यसीशानि त्रिलोकीवासिनामपि ॥ ८५ ॥
निवेदयामि किं तेऽहं सर्वकर्मैकसाक्षिणि ।
शत्रुनाशं राज्यलाभं शरीरारोग्यमेव च ॥ ८६ ॥
त्वत्पादाम्बुजयोर्भक्तिं याचेऽहं चतुरो वरान् ।
नमस्ते भगवत्यम्ब नमस्ते भक्तवत्सले ॥ ८७ ॥
नमस्ते जगदाधाररूपिणि त्राहि मां सदा ।
मातर्न वेद्मि रूपं ते न शरीरं न वा गुणम् ॥ ८८ ॥
भक्त्या हृत्स्थितया पूजां तव जानाम्यनन्यधीः ।
त्वं माता त्वं पिता बन्धुस्त्वमेव जगदीश्वरि ॥ ८९ ॥
त्वं गतिः शरणं त्वं च स्वर्गस्त्वं मोक्ष एव च ।
विहाय त्वां जगन्मातर्नान्यां पश्यामि देवताम् ॥ ९० ॥
नमस्तेऽस्तु नमस्तेऽस्तु नमस्तेऽस्तु नमो नमः ।

यथालाभ चार प्रकार का अन्न पात्र में स्थापित कर कुमारी का दाहिना हाथ पकड़ कर उसे उतान कर शक्ति मन्त्र का उच्चारण करते हुये अन्न पर रखे । फिर हृदय में देवता का स्मरण करते हुये उस नैवेद्य को समर्पित करे । पहले 'इदमन्नं' कहे । फिर नाम का चतुर्थ्यन्त कहकर नमः का उच्चारण करते हुये अर्घ का जल छिड़कते हुये 'देवि भुङ्क्ष्व' ऐसा कहे । फिर जब वे अन्न भोजन करने लगें, तब हाथ जोड़ कर 'जयकालि महाभीमे................नमस्तेऽस्तु नमो नमः' (७५-९१) पर्यन्त श्लोकों से उनकी स्तुति करे ॥ ७२-९१ ॥

एवं स्तुत्वा भोजनान्ते दद्यादाचमनीयकम् ॥ ९१ ॥
ताम्बूलं विनिवेद्याथ कृत्त्वा चैव प्रदक्षिणाम् ।
वारत्रयं ददेत् तस्यै दक्षिणां भक्तिनिर्भरः ॥ ९२ ॥
स्वर्णं वा रजतं वापि यथाशक्त्या प्रणम्य ताम् ।

इस प्रकार स्तुति कर लेने के पश्चात् भोजन के बाद उन्हें आचमन करावे । ताम्बूल प्रदान करे और तीन बार प्रदक्षिणा करे । फिर भक्तियुक्त होकर अपनी शक्ति के अनुसार सुवर्ण या चाँदी की दक्षिणा देवे ॥ ९१-९३ ॥

विसृज्य सफलां पूजां भावयेत् साधकोत्तमः ॥ ९३ ॥

फिर प्रणाम कर उनका विसर्जन करे । ऐसा कर लेने के पश्चात् साधकोत्तम अपनी पूजा सफल माने ॥ ९३ ॥

विवाहयेत् स्वयं कन्यां स्वेष्टदेवस्य प्रीतये ।
कन्यादानेन यत्पुण्यं तद्वक्तुं नैव शक्यते ॥ ९४ ॥

अपने इष्टदेवता को प्रसन्न करने के लिये स्वयं कन्या का विवाह करे । कन्यादान का जितना पुण्य होता है वह अकथनीय है । उस पुण्य को कहा नहीं जा सकता ॥ ९४ ॥

यथेष्टं लोकमाप्नोति कन्यादानानुभावतः ।
सर्वतीर्थेषु यत्पुण्यं सर्वयज्ञेषु यत्फलम् ।
तत्फलं समवाप्नोति कन्यादानेन शङ्कर ॥ ९५ ॥

साधक कन्यादान के पुण्य से वाञ्छित लोक प्राप्त कर लेता है । सभी तीर्थों के करने से जितना फल प्राप्त होता है, सभी यज्ञों के करने से जो फल प्राप्त होता है, हे शङ्कर! मात्र केवल कन्यादान से ही साधक को उतना पुण्य प्राप्त हो जाता है ॥ ९५ ॥

**अथ शिवाबलिः, तच्च कुलचूडामणौ—**

राजादिभयमापन्ने देशान्तरभयादिके ।
शुभाशुभानि कर्माणि विचिन्त्य बलिमाहरेत् ॥ ९६ ॥

अब शिवाबलि कहते हैं, जैसा कुलचूडामणि तन्त्र में कहा गया है—राजादि द्वारा भय प्राप्त होने पर, देश के भीतर भयादि से उपद्रव होने पर, इस प्रकार शुभ एवं अशुभ कर्मों को विचार कर शिवाबलि देवे ॥ ९६ ॥

कार्याकार्यविचारे च स्वेष्टतुष्ट्यै शिवाबलिम्।
पर्वण्यभीष्टवारे वा दद्यात् साधकसत्तमः ॥ ९७ ॥

कार्या कार्य का विचार कर लेने पर अपने इष्टदेवता की सन्तुष्टि के लिये उत्तम साधक पर्व पर अथवा इष्ट दिन में शिवाबलि देवे ॥ ९७ ॥

**यामले—**

अवश्यमन्त्रदानेन नियतं तोषयेत् शिवाम् ।
नित्यश्राद्धं यथा सन्ध्यावन्दनं पितृतर्पणम् ॥ ९८ ॥
तथेयं देवदेवीनां प्रीतये नित्यता स्मृता ।
पशुरूपां शिवां देवी यो नार्चयति निर्जने ॥ ९९ ॥
शिवारावेण तस्याशु सर्वं नश्यति निश्चितम् ।
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ॥ १०० ॥
गृहीत्वा च तथा शापं दत्त्वा रोदति निर्जने ।
नरशक्तिः पशुशक्तिः पक्षिशक्तिस्तथैव च ॥ १०१ ॥

आसां प्रपूजनाद्देवि शक्तिमान् साधको भवेत् ।
बिल्वमूले नदीतीरे श्मशाने वापि साधकः ॥ १०२ ॥
मांसप्रधानं नैवेद्यं गृहीत्वा च निशामुखे ।
गत्वोत्तरमुखो भूत्वा प्राणायामं षडङ्गकम् ॥ १०३ ॥

यामल में भी बतलाया गया है—निश्चय ही भय एवं उत्पात होने पर साधक अन्नदान से शिवा (श्रृगालिन) को सन्तुष्ट करे । जिस प्रकार श्राद्ध, सन्ध्यावदन तथा पितृतर्पण नित्य किया जाता है उसी प्रकार देव-देवियों की प्रीति के लिये शिवावलि नित्य कही गई है । जो मनुष्य निर्जन, एकान्त स्थान में पशुरूपा महाकाली शिरा का अर्चन नहीं करता, उसका श्रृगालिन के शब्द से निश्चय ही सब कुछ नष्ट हो जाता है । उस पुरुष के द्वारा किये गये समस्त जप, पूजन, कर्म तथा पुण्य को शिवा ले लेती है और शाप देकर निर्जन वन में रोती है । हे देवि! इन शिवाओं के पूजन से मनुष्यों में, पशुओं में एवं पक्षियों में शक्ति आती है । साधक भी शक्तिमान् होता है साधक बिल्वमूल में, नदी तट पर अथवा श्मशान में मांसप्रधान नैवेद्य लेकर सायङ्काल के समय जावे और वहाँ उत्तराभिमुख होकर प्राणायाम करे तथा षडङ्गन्यास करे ॥ ९८-१०३ ॥

विधायार्घं च संस्थाप्य मुक्तकेशः समुत्थितः ।
कालि कालीति संरावैराह्वयेदुच्चमुच्चरन् ॥ १०४ ॥
परिवारैः सहायाति तत्रोमा पशुरूपिणी ।
बलिं पात्रे च संस्थाप्य मनुनानेन निर्दिशेत् ॥ १०५ ॥
ॐगृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ।
शुभाशुभफलव्यक्तिं ब्रूहि गृह्ण बलिं तव ॥ १०६ ॥
अर्घोदकेन चोत्सृज्य कियद्दूरं ततो बुधः ।
अपसृत्य च वै दद्याद् बल्यष्टकमुदारधीः ॥ १०७ ॥
प्रणवादिनमोऽन्तेभ्यो देवेभ्यो हृष्टमानसः ।
संहारभैरवश्चैव बटुकोऽथ विनायकः ॥ १०८ ॥
मातरः क्षेत्रपालाश्च योगिन्यो डाकिनीगणाः ।
शिवदूत्यश्च विज्ञेयाः शिवानुबलिभागिनः ॥ १०९ ॥
एभ्यो दत्त्वा मुक्तकेशो मीलिताक्षो दिगम्बरः ।
गन्धपुष्पाञ्जलिर्धीरः स्तवेनोत्थाय तोषयेत् ॥ ११० ॥

भगवतीप्रसादनस्तोत्र

ॐशिवारूपधरे देवि गुह्यकालि नमोऽस्तु ते ।
उल्कामुखि ललज्जिह्वे घोररावे श्रृगालिनि ॥ १११ ॥

**श्मशानवासिनि प्रेते शवमांसप्रियेऽनघे ।**
**अरण्यचारिण्यनघे शिवे जम्बुकरूपिणि ॥ ११२ ॥**
**नमोऽस्तु ते महामाये जगत्तारिणि कालिके ।**
**मातङ्गि कुक्कुटे रौद्रि महाकालि नमोऽस्तु ते ॥ ११३ ॥**
**सर्वसिद्धिप्रदे भीमे भयङ्करि भयापहे ।**
**प्रसन्ना भव देवेशि मम भक्तस्य चण्डिके ॥ ११४ ॥**
**संसारतारणतरि जय सर्वशुभङ्करि ।**
**विध्वस्तचिकुरे चण्डि चामुण्डे मुण्डमालिनि ॥ ११५ ॥**
**संहारकारिणि क्रुद्धे सर्वसिद्धिं प्रयच्छ मे ।**
**दुर्गे किरातशवरि प्रेतासनगतेऽभये ॥ ११६ ॥**
**अनुग्रहं कुरु सदा कृपया मां विलोकय ।**
**राज्यं प्रयच्छ विकटे वित्तमायुः सुतान् स्त्रियम् ॥ ११७ ॥**
**शिवाबलिप्रदानेन त्वं प्रसन्ना भवेश्वरि! ।**
**नमस्तेऽस्तु नमस्तेऽस्तु नमस्तेऽस्तु नमोऽस्तु ते ॥ ११८ ॥**
**एवं स्तुत्वा ततो देवि शेषमन्नं सभाजनम् ।**
**भूमौ निखन्येष्टदेवं स्थानमागत्य पूजयेत् ॥ ११९ ॥**

पात्र में अर्घ स्थापित करे । फिर मन्त्रज्ञ शिखा खोल कर खड़ा होकर ऊँचे स्वर में चिल्ला-चिल्ला कर 'कालि कालि' घोषित करते हुये शिवा का आवाहन करे । ऐसा करने से पशुरूप धारण कर उमा स्वयं अपने परिवारों के साथ आ जाती हैं । तब साधक बलि को पात्र में रखकर 'ॐ गृह्ण देवि.............गृह्ण बलिं तव' (श्लो. १०६) पर्यन्त श्लोक मन्त्र पढ़कर कुछ दूर जाकर अर्घ्योदक के साथ बल्यष्टक त्याग करे । फिर प्रसन्नचित्त हो वहाँ से हटकर आदि में प्रणव (ॐ), फिर 'देवेभ्यो नमः' यह मन्त्र पढ़े । (यहाँ देवेभ्यः यह बहुवचन प्रयोग किया गया है क्योंकि) संहार भैरव, बटुक, विनायक, मातृकायें, क्षेत्रपाल, योगिनियाँ, डाकिनीगण और शिवदूती—ये सब देवता भी शिवा के बलि के उच्छिष्ट भागी हैं । इस प्रकार इन सभी को देने के पश्चात् साधक नग्न होकर केश खोलकर नेत्र बन्द कर उठकर गन्ध पुष्पाञ्जलि देवे और 'ॐ शिवरूपधरे...................नमस्तेऽस्तु नमोऽस्तुते' (श्लो. १११-११८) पर्यन्त श्लोक पढ़कर शिवा भगवती को सन्तुष्ट करे । इस प्रकार स्तुति कर लेने के पश्चात् बलि-शेष अन्न पात्र सहित पृथ्वी में गड्ढा खोद कर गाड़ देवे । फिर मन्त्रज्ञ साधक अपने इष्टदेव के स्थान पर उनकी पूजा करे ॥ १०४-११९ ॥

**एकापि भुज्यते तत्र साधकार्थप्रकाशिनी ।**
**तदैव सर्वशक्तीनां प्रीतिः परमदुर्लभा ।**

**भुक्त्वा रौति यदैशान्यां मुखमुत्तोल्य सुस्वरम् ॥ १२० ॥**
**तदैव मङ्गलं तस्य नान्यथा भवति ध्रुवम् ।**
**यदि नो गृह्यते नूनं तदा नैव शुभं भवेत् ॥ १२१ ॥**

यदि साधक के इष्ट को पूर्ण करने के लिये एक भी शिवा आकर बलि का अन्न खा लेवे । तब उसी समय साधक को समस्त शक्तियों द्वारा प्राप्त होने वाली परमदुर्लभा प्रीति प्राप्त हो जाती है । यदि वह बलि खा लेने के पश्चात् ईशानकोण में मुख उठा कर सुस्वर में रोने लगे तो उसी समय उसका मङ्गल हो जाता है । यह बात अन्यथा नहीं है; निश्चित और सत्य है । यदि बलि ग्रहण न करे तो निश्चय ही कल्याण नहीं होता ॥ १२०-१२१ ॥

**शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।**
**यदंशं भुज्यतेऽन्नं च तदंशं कार्यनिश्चयः ।**
**एवं ज्ञात्वा महेशानि शान्तिं स्वस्त्ययनं चरेत् ॥ १२२ ॥**

**इति शिवाबलिः ।**

यदि वह सारा बलि पदार्थ भोजन कर लेवे तो शुभ हो जाता है, अथवा जितना बलि का अंश खा लेवे उतने ही अंश में कार्य सिद्धि होती है ऐसा समझना चाहिए । इस प्रकार शिवा के बलि के विषय में जाकर शान्ति पाठ एवं स्वस्त्ययन करे ॥ १२२ ॥

### कर्मसाङ्गतासिद्ध्यर्थं बलिविधानम्

**अथो बलिविधिं वक्ष्ये कर्मसाङ्गत्वसिद्धये ।**
**यज्ञकर्म विना येन न पूर्त्तिमुपयाति हि ॥ १२३ ॥**

यहाँ तक शिवाबलि की विधि कही गई । अब कर्म की साङ्गता के लिये अन्य प्रकार की बलि विधि कहता हूँ । जिसके न करने से यज्ञकर्म की पूर्ति नहीं होती ॥ १२३ ॥

**तच्च प्रकृतिखण्डे—**

**त्रिविधो बलिराख्यातः सात्विको राजसस्ततः ।**
**तामसश्चैव विज्ञेयस्तेषां भेदमथो शृणु ॥ १२४ ॥**

प्रकृति खण्ड में बलिविधान इस प्रकार कहा गया है—बलि सात्त्विक, राजस और तामस भेद से तीन प्रकार की बतलायी गई है । अब आप उनके भेदों को हमसे सुनिए ॥ १२४ ॥

### निवृत्तिमार्गनिष्ठानां बलिविधानम्

**सात्विकः फलपुष्पादिः प्राणी तु राजसः स्मृतः ।**

स्वीयदेहोद्भवो यश्च तामसः परिकीर्तितः ।
निवृत्तिमार्गनिष्ठानां सात्विको बलिरीरितः ॥ १२५ ॥

फल पुष्पादि सात्त्विक बलि है । प्राणी की बलि है राजस बलि है और अपने शरीर से निकले हुये रक्तादि की बलि तामस बलि कही गई है । निवृत्ति मार्ग में आस्था रखने वालों के लिये सात्त्विक बलि का विधान कहा गया है ॥ १२५ ॥

तथा च महाकालसंहितायाम्—

सात्त्विको जीवहत्यां हि कदाचिदपि नो चरेत् ।
इक्षुदण्डं तु कूष्माण्डं तथा वन्यफलादिकम् ॥ १२६ ॥
क्षीरपिण्डैः शालिचूर्णैः पशुं कृत्त्वा चरेद् बलिम् ।
तत्तत्फलविशेषेण तत्तत्पशुमुपानयेत् ॥ १२७ ॥
कूष्माण्डं महिषत्वेन छागलत्वेन कर्कटीम् ।
वृन्ताकं कुक्कुटत्वेन मेषत्वेन च तुम्बिकाम् ॥ १२८ ॥
रम्भापुष्पं बीजपूरं पिण्डवाजिबलौ भवेत् ।
मानुष्यत्वेन पनसं मत्स्यत्वेनेक्षुदण्डकम् ॥ १२९ ॥

जैसा कि महाकालसंहिता में भी बतलाया गया है—सात्त्विक पुरुष कदापि जीवहत्या न करे । इक्षुदण्ड, कूष्माण्ड तथा वन्य फलादिक, दुग्धपिण्ड (खोवा), शालिचूर्ण का पशु बनाकर बलिदान करे । तत्तत्फल विशेष की इच्छा से तत्तत् पदार्थों से बलि पशु का निर्माण करे । महिष की बलि देनी हो तब कूष्माण्ड पशु, छागल (बकरा) की बलि देनी हो तब कर्कटी का पशु, कुक्कुट की बलि के लिये वृन्ताक का पशु, भेंड़ा की बलि के लिये तुम्बिका का पशु, घोड़े की बलि में केला अथवा बीजपूर नींबू का पशु बनाकर अर्थात् भावना करके बलिदान करे । मनुष्य की बलि में कटहल का और मत्स्य की बलि में इक्षुदण्ड की भावना कर बलिदान करे ॥ १२६-१२९ ॥

शूरणत्वेन शलकं तथा कोशातकीं मृगे ।
पटोलं शूकरत्वेन शर्करा वालुषा तथा ॥ १३० ॥
माषाः सर्वबलित्वेन सर्वेषां कृशरान्नतः ।
दद्याद् यथोक्तमार्गेण यथेष्टफलसिद्धये ॥ १३१ ॥

साही की बलि में सूरन का, मृग की बलि में कौशीतकि का, शूकर की बलि में पटोल शर्करा अथवा वालुषा (=मिठाई) की बलि देवे । सब प्रकार की बलि में माष (=उर्द) की बलि, अथवा सभी के लिये कृसरान्न (तिलमिश्रित मूँग) की बलि देवे । इस प्रकार यथेष्ट फल की सिद्धि के लिये शास्त्रविहित मार्ग से बलि प्रदान करना चाहिए ॥ १३०-१३१ ॥

प्रवृत्तिमार्गनिष्ठानां बलिविधानम्

प्रवृत्तिमार्गनिष्ठानां राजसी बलिरीरितः ।
कृष्णसारं तथा छागं मृगान्नानाविधानपि ॥ १३२ ॥
मेषं च महिषं घृष्टिं तथा पञ्चनखानपि ।
कपोतं टिट्टिभं हंसं चक्रवाकं च लावकम् ॥ १३३ ॥
शरालिं तित्तिरं मत्स्यान् कलविङ्कं चकोरकम् ।
अनुक्तं नैव दातव्यं द्विजवर्गान् कदाचन ॥ १३४ ॥
सिंहं व्याघ्रं नरं तद्वत् क्षत्रियः परिकल्पयेत् ।
विहाय कृष्णसारं च क्षत्रियादेर्भवेद् बलिः ॥ १३५ ॥

प्रवृत्ति मार्ग में आस्था रखने वालों के लिये राजसी बलि का विधान है। कृष्णसार, छाग, नाना प्रकार के मृग, मेष, महिष, घृष्टि तथा गोधा एवं शल्लकी आदि पञ्च नखों का तथा कपोत, टिट्टिभ, चक्रवाक, लावक, शरालि, तित्तिर, मत्स्य, कलविङ्क एवं चकोर आदि का बलिदान करे । यहाँ जो नहीं कहा गया है ऐसे अनुक्त पक्षियों का बलिदान न करे । क्षत्रिय साधक कृष्णसार को छोड़कर अन्य सिंह, बाघ और मनुष्य की बलि देवे ॥ १३२-१३५ ॥

सिंहं व्याघ्रं नरं हत्वा ब्राह्मणो ब्रह्महा भवेत् ।
मूषं मार्जारकं चाषं शूद्रो दत्त्वा पतत्यधः ॥ १३६ ॥

ब्राह्मण बलि के लिये सिंह, बाघ तथा मनुष्य का वधकर ब्रहहा हो जाता है । शूद्र मूस, बिल्ली एवं नीलकण्ठ की बलि देने से पतित हो जाता है ॥ १३६ ॥

चन्द्रहासेन खड्गेन हन्यादेकप्रहारतः ।
उत्थाय हननं कुर्यान्नोपविश्य कदाचन ॥ १३७ ॥

बलि को खड्ग से एक बार के प्रहार से हनन करना चाहिये । खड़े होकर ही पशु का हनन करना चाहिये, बैठकर कदापि वध न करे ॥ १३७ ॥

स्वहस्तेन पशुं हत्वा पशुयोनिमवाप्नुयात् ।
किञ्च त्रिपक्षतो न्यूनं महिषादीन् त्रिवर्षतः ॥ १३८ ॥
अन्यत् त्रिमासतो न्यूनं वर्षोनाववि मेषकौ ।
न दद्यात् फलमेतेषां लक्षणानि ब्रवीम्यहम् ॥ १३९ ॥
वृद्धं वा विकृताङ्गं वा न कुर्याद् बलिकर्मणि।
हीनाङ्गमधिकाङ्गं वा शिशुं चापि विवर्जयेत् ॥ १४० ॥
स्वगात्ररुधिरं चैव स्वोत्तमाङ्गार्पणं तथा ।
तापसं कथितं सद्भिर्देवप्रीतिकरं नहि ।

**विधिवद् बलिदानेन चतुर्वर्गफलं लभेत् ॥ १४१ ॥**

स्वयं अपने हाथ से पशुवध करने पर पशुयोनि प्राप्त होती है जहाँ तक हो सके बलि पशु तीन पक्ष से कम अवस्था के होने चाहिये । महिषादि तीन वर्ष तक का, अन्य पशु बलि के लिये तीन महीने से कम अवस्था का होना चाहिये । भेड़ा और बकरा एक वर्ष से कम अवस्था का होना चाहिये । अब जिन अवस्थाओं में वध करने से फल नहीं होता, उनका लक्षण कहता हूँ । वृद्ध, विकृत अङ्ग के पशुओं की बलि न देवे । हीन अङ्गवाले, अधिक अङ्गवाले, अथवा शिशु पशुओं की बलि न देवे । अपने शरीर का रुधिर तथा अपने उत्तमाङ्ग (शिर) का अर्पण तापप्रद होता है । अत: सज्जनों ने उसे देव प्रीतिकारक नहीं कहा है । मन्त्रज्ञ साधक विधि के अनुसार बलि देने से धर्म, अर्थ, काम और मोक्ष—चारो पुरुषार्थ प्राप्त करता है ॥ १३८-१४१ ॥

**अविधाने दोषमाह कुलार्णवे—**

**अविधानेन यो हन्यादात्मार्थं प्राणिनं प्रिये ।**
**निवसेन्नरके घोरे दिनानि पशुरोमभिः ॥ १४२ ॥**
**स मृतोऽपि दुराचारस्तिर्यग् योनिषु जायते ।**

विधिरहित वध करने से पाप होता है । जैसा कुलार्णवतन्त्र (२.१३१-१३३) में कहा गया है—हे प्रिये! जो अपने स्वार्थ के लिये विधिरहित प्राणियों का वध करता है वह पशु के शरीर में जितने रोम हैं उतने वर्ष तक घोर नरक में निवास करता है और मरने पर वह दुराचारी तिर्यग् योनि में जन्म लेता है ॥ १४२ ॥

**अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ॥ १४३ ॥**
**संस्कर्त्ता चोपहर्त्ता च खादिताष्टौ च घातकाः ।**
**धनेन क्रयिको हन्ति खादिता चोपभोगतः ।**
**घातको वधबन्धाभ्यामित्येवं त्रिविधो वधः ॥ १४४ ॥**

१. पशु वध के लिए अपनी सम्मति देने वाला, २. पशु को काटने वाला, ३. पशु को मारने वाला, ४. पशु खरीदने वाला, ५. पशु बेचने वाला, ६. मांस का संस्कार करने वाला, ७. वध के लिए पशु लाने वाला और ८. पशु मांस खाने वाला—ये आठ प्रकार के हत्यारे कहे जाते हैं । धन से खरीदने वाला, उपभोग कर मांस खाने वाला एवं बन्धे हुए पशु का वध करना—इस प्रकार तीन प्रकार का वध कहा गया है ॥ १४३-१४४ ॥

**यामले—**

**पितृदैवतयज्ञेषु वेदे हिंसा विधीयते ।**
**अहिंसा परमो धर्मो नास्त्यहिंसा परं सुखम् ॥ १४५ ॥**

यामल में भी बतलाया गया है—वेद में पितर, देवता और यज्ञ में हिंसा का विधान कहा है। किन्तु यज्ञेतर में अहिंसा ही परम धर्म कहा गया है। अहिंसा से बढ़कर कोई सुख नहीं है ॥ १४५ ॥

**विधिना या भवेद् हिंसा सा त्वहिंसा प्रकीर्तिता।**
**वृथा न हिंसा कर्त्तव्या क्वापि देवि! मनीषिभिः ॥ १४६ ॥**

वेद विहित जो हिंसा की जाती है वह 'अहिंसा' ही कही जाती है। हे देवि! अतः मनीषी साधक कदापि हिंसा न करे ॥ १४६ ॥

**बलिदानं बिना हिंसा वर्जनीया सदा शिवे।**
**चेत् पापजनिका हिंसा तत् कथं स्वर्गसाधनम्।**
**अश्वमेधादियज्ञेषु वाजिहत्यां कथं चरेत् ॥ १४७ ॥**

हे शिवे! बलिदान से अतिरिक्त कार्यों में हिंसा सदैव वर्जित रखे। हिंसा पाप जनक है तो वह स्वर्ग का साधन किस प्रकार हो सकती है और यदि यज्ञादि कार्यों में की गई हिंसा अहिंसा न होती तो कोई अश्वमेधादि यज्ञों में किस प्रकार अश्व का वध करता है ॥ १४७ ॥

**दृष्टान्तस्तत्रैव—**

**येनैव विषखण्डेन म्रियन्ते सर्वजन्तवः।**
**तेनैव विषखण्डेन भेषजो नाशयेद् विषम् ॥ १४८ ॥**
**यथाविधि मतो दद्याद् बलिं स्वोपास्यप्रीतये।**
**सर्वावयवसम्पन्नं बलिं तत्र सुशोभनम् ॥ १४९ ॥**
**तरुणं सुन्दरं कृष्णं क्षतादिदोषवर्जितम्।**
**स्नापयित्वा बलिं तत्र भूषयेत् पुष्पचन्दनैः ॥ १५० ॥**
**भूषयेद् रक्तमाल्येन सिन्दूरेण विशेषतः।**
**उत्तराभिमुखो भूत्वा बलिं पूर्वमुखं तथा ॥ १५१ ॥**
**समानीय स्ववामे च मूलेन प्रोक्षणं चरेत्।**
**अर्घोदकेन च फडिति सरक्ष्यावगुण्ठयेत्।**
**कवचेन तु मूलेनामृतीकृत्य च मुद्रया ॥ १५२ ॥**
**धेन्वा तद् दक्षिणे कर्णे गायत्रीं तस्य त्रिः पठेत्।**
**प्रणवं पशुपाशाय विद्महे विश्वशब्दतः ॥ १५३ ॥**
**कर्मणो धीमहीत्युक्ता तन्नो जीवः प्रचोदयात्।**
**एवं श्राव्यविधानेन बलिं सम्पूजयेत् ततः ॥ १५४ ॥**

वहीं पर दृष्टान्त भी दिया गया है—जिस विष खण्ड के प्रयोग से सारे जन्तु

मर जाते हैं, वैद्य उन्हीं विष खण्डों के प्रयोग से शरीर के विष का नाश कर देता है। इसलिये साधक अपने उपास्य को प्रसन्न करने के लिये विधिपूर्वक बलिदान करे। बलि के लिये जो पशु सर्वावयव सम्पन्न हो, सुन्दर हो, तरुण, काले रङ्ग का तथा क्षतादि दोष वर्जित हो, ऐसे बलि पशु को स्नान करावे और पुष्प, चन्दन से भूषित करे। रक्तवर्ण की माला विशेष कर सिन्दूर से भूषित करे। स्वयं उत्तराभिमुख रहे और बलिपशु को पूर्वाभिमुख रखे। अपनी बाई ओर से उसे खींचकर लावे और मूल मन्त्र से प्रोक्षण करे। फट् मन्त्र का उच्चारण कर अर्घ के जल से रक्षित करे तथा कवच एवं मूल मन्त्र से उसे अवगुण्ठित करे (घेर देवे)। फिर धेनुमुद्रा से उसे अमृतीकरण करे। फिर उसके दाहिने कान में तीन बार गायत्री मन्त्र पढ़े। प्रणव (ॐ) फिर पशुपाशाय विद्महे, विश्वकर्मणो धीमहि। तन्नो जीवः प्रचोदयात्—यह बलिगायत्री मन्त्र है। इस प्रकार विधानतः सुना कर बलि का सम्पूजन करे ॥ १४८-१५४ ॥

**ब्रह्मरन्ध्रे च ब्रह्माणं तत्त्वमायां च मेदिनीम्।**
**कर्णयोश्च तथाकाशं जिह्वायां सर्वतोमुखम् ॥ १५५ ॥**
**ज्योतिषी नेत्रयोर्विष्णुं वदने परिपूजयेत्।**
**ललाटे पूजयेच्चक्रं चक्रं दक्षिणगण्डके ॥ १५६ ॥**
**वामगण्डे तथा वह्निं ग्रीवायां समवर्तनम्।**
**रोमकूपे धृतिं चैव भ्रुवोर्मध्ये प्रचेतसम् ॥ १५७ ॥**
**नासामूले च श्वसनं स्कन्धमध्ये महेश्वरम्।**
**हृदये सर्पराजान्तं पूजयित्वा पठेदिदम् ॥ १५८ ॥**
**ॐ महातपोभिदर्नैश्च यज्ञैर्यत् साध्यते नरैः।**
**तन्मे देहि महाभाग! सत्वरं चाप्नुहि श्रियम् ॥ १५९ ॥**
**शिवबुद्ध्या सुसम्पूज्य उत्सृज्य च ततः परम्।**
**ततो देवं समुद्दिश्य काममुद्दिश्य चात्मनः ॥ १६० ॥**
**सङ्कल्प्य च बलिं पश्चात् करवालं प्रपूजयेत्।**
**ध्रुवं मायां कालियुग्मं वज्रेश्वरि ततः परम् ॥ १६१ ॥**
**लोहान्ते च तथा दण्डायै नमोऽष्टादशाक्षरः।**
**मन्त्रोऽनेन च सम्पूज्य खड्गं सम्पूजयेत् पुनः ॥ १६२ ॥**

ब्रह्मरन्ध्र में ब्रह्मा तत्त्व, माया और मेदिनी का पूजन करे। दोनों कानों में आकाश का, जिह्वा में सर्वतोमुख का, नेत्र में सूर्य-चन्द्रमा का, मुख में विष्णु का, ललाट में चक्र का, दाहिने गण्डस्थल में चक्र का, वाम गण्डस्थल में अग्नि का, ग्रीवा में समवर्त्तन का, रोमकूप में धृति का, भ्रूमध्य में प्रचेता का, नासिका के मूल में वायु का, कन्धे के मध्य में महेश्वर का और हृदय में सर्पराज का पूजन

कर 'ॐ महातपोभिः............चाप्नुहि श्रियम्' (श्लो. १५९) पर्यन्त श्लोक पढ़े। इस प्रकार अपने मन में शिव का ध्यान पूजन कर उसको छोड़ देवे। तदनन्तर देवता के उद्देश्य से और अपनी कामना के उद्देश्य से बलि का सङ्कल्प करे। फिर करवाल का पूजन करे। (ध्रुव ॐ) माया (ह्रीं), फिर दो बार कालि (कालि कालि), इसके बाद 'वज्रेश्वरि लोहदण्डायै नमः', यह १७ अक्षरों का करवाल (मुष्टिका) पूजन का मन्त्र है। इस प्रकार पूजन के पश्चात् साधक पुनः खड्ग का पूजन करे ॥ १५५-१६२ ॥

**अग्रभागे च सम्पूज्यौ ब्रह्मा वागीश्वरी ततः ।**
**मध्ये तथैव सम्पूज्यौ लक्ष्मीनारायणावपि ॥ १६३ ॥**
**मूले च पूजयेन्मन्त्री उमया सह शङ्करम् ।**
**एवं पूजां विधायाथ खड्गं ध्यायेत् समाहितः ॥ १६४ ॥**

खड्ग के अग्रभाग में पहले ब्रह्मा, फिर वागीश्वरी का पूजन करना चाहिए। मध्य में लक्ष्मीनारायण का पूजन करे। मूल में पार्वती के साथ मन्त्रज्ञ महादेव का पूजन करे। इस प्रकार पूजा कर लेने के पश्चात् साधक को एकाग्रचित्त होकर खड्ग का ध्यान करना चाहिए ॥ १६३-१६४ ॥

**कृष्णं पिनाकपाणिं च कालरात्रिस्वरूपिणम् ।**
**रक्ताक्षं रक्तवस्त्रं च सपाशं पीतशोणितम् ॥ १६५ ॥**
**कृताञ्जलिर्नमस्कुर्यादिनं मन्त्रं समुच्चरन् ।**
**ॐअसिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः॥ १६६ ॥**
**श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तु ते ।**
**एवं प्रणम्य तत् खड्गमुत्तोल्य साधकोत्तमः ॥ १६७ ॥**
**छेत्ता पूर्वमुखो भूत्वा बलिमुत्तरवक्त्रकम् ।**
**ॐयज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा॥ १६८ ॥**
**अतस्त्वां घातयिष्यामि तस्माद् यज्ञे वधोऽवधः ।**
**शिवायत्तमिदं पिण्डमतस्त्वं शिवतां गतः ॥ १६९ ॥**
**उद्बुद्ध्यस्व पशो त्वं हि नाशिवस्त्वं शिवोऽसि हि ।**
**पाशं कूर्चं समुच्चार्य हन्यादेकप्रहारतः ॥ १७० ॥**

कृष्ण पिनाकपाणि कालरात्रिस्वरूप रक्त नेत्र वाले, रक्तवस्त्र धारण किये हुये, पाशयुक्त शोणित पान करने वाले खड्ग का मैं ध्यान करता हूँ। इस प्रकार ध्यान करने के पश्चात् 'ॐ असि विशसन........धर्मपाल नमोऽस्तु ते' इस मन्त्र को पढ़ते हुये खड्ग को नमस्कार करे। इस प्रकार प्रणाम कर लेने के पश्चात् बलिदान कर्त्ता साधक खड्ग को ऊपर उठावे। उस समय छेदन करने वाला पूर्वाभिमुख तथा

बलि उत्तराभिमुख रहे । फिर 'यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा । अतस्त्वां घातयिष्यामि तस्माद् यज्ञे वधोऽवधः । शिवायत्तमिदं पिण्डं अतस्त्वं शिवतां गतः ॥ उद्बुध्यस्व पशो त्वं हि नाशिवस्त्वं शिवोऽसि हि' इस मन्त्र को पढ़ लेने के पश्चात् पाश (आं) और कूर्च (हूं हूं) उच्चारण कर तलवार के एक प्रहार से बलि पशु का हनन करे ॥ १६५-१७० ॥

**ततो बलीनां रुधिरं तोयसैन्धवसत्फलैः ।**
**मधुभिर्गन्धपुष्पैश्च स्वधिवास्य प्रयत्नतः ॥ १७१ ॥**
**गन्धपुष्पान्वितं कृत्वा चोत्सृजेन्मन्त्रमुच्चरन् ।**
**प्रणवं वाग्भवं लक्ष्मीं ततः कौशिकि शब्दतः ॥ १७२ ॥**
**रुधिरेण ततः पश्चादाप्यायतां समुच्चरेत् ।**
**निवेद्य रुधिरं देवि दद्यात् शिरसि दीपकम् ॥ १७३ ॥**
**ततो निवेदयेन्मन्त्री ताम्बूलं सुमनोहरम् ।**
**नापसव्ये शिरोरक्तं दद्याद् देवस्य सम्मुखे ॥ १७४ ॥**
**छागं तु वामतो दद्यान्महिषं वितरेत् पुरः ।**
**पक्षिणं वामतो दद्यादग्रतो देहशोणितम् ॥ १७५ ॥**

इसके पश्चात् बलि पशु के रुधिर को जल, सेंधा नमक, अच्छे प्रकार का फल, मधु, गन्ध एवं पुष्प से प्रयत्नपूर्वक स्वयं अधिवासन कर गन्ध, पुष्प से युक्त कर प्रणव (ॐ), वाग्भव (ऐं), लक्ष्मीं (श्रीं), तदनन्तर 'कौशिकि रुधिरेण आप्यायताम्' इस मन्त्र को पढ़कर महाकाली के आगे छोड़ देवे । इस प्रकार बलि पशु का रुधिर निवेदन करने के पश्चात् बलि पशु के शिर पर दीप दान करे । फिर मन्त्रज्ञ साधक को ताम्बूल निवेदन करना चाहिए । अपसव्य होकर शिरो रक्त न देवे, किन्तु देवता के सम्मुख होकर देवे । इसी प्रकार महिष का भी बलिदान देवे और उसको रक्त बायें होकर देवे । पक्षी के देह का शोणित बायें अथवा आगे होकर देवे ॥ १७१-१७५ ॥

### बलिदानफलश्रुतिकथनम्

**यदा कटकटाशब्दो दन्तानां श्रावयेत् क्वचित् ।**
**तदा तु मरणं विद्याद् हानिं वा तस्य निर्दिशेत् ॥ १७६ ॥**
**यदाश्रु कृष्यते नेत्रे तदा हानिं विनिर्दिशेत् ।**
**पूर्वे चोत्तरदिग्भागे पतते यदि मस्तकम् ॥ १७७ ॥**
**ततः स्वल्पेन कालेन सर्वसिद्धिर्भवेद् ध्रुवम् ।**
**ईशाग्नेयमध्यभागे पतते यदि मस्तकम् ॥ १७८ ॥**
**सर्वसम्पत्करं विद्याद् राज्ञो राज्यं विनिर्दिशेत् ।**

यदि वायव्यदिग्भागे नैर्ऋत्यां दक्षिणेऽपि वा ॥ १७९ ॥
मस्तकं पतते यत्तु तदा हानिं विनिर्दिशेत् ।
तद्दोषस्याशु शान्त्यर्थं तन्मांसेन यथाविधि ॥ १८० ॥
जुहुयाद् घृतयुक्तेन तदा पञ्चदशाहुतिम् ।
ग्राहाणां कच्छपानां च गोधायाश्च विशेषतः ॥ १८१ ॥
मत्स्यानां पक्षिणां चैव दीपं नो शिरसि न्यसेत् ।
शिरसि प्रज्वलद्दीपं यावत्कालं प्रवर्तते ॥ १८२ ॥
तावत्कालं वसेत् स्वर्गे तस्माद् यत्नेन दापयेत् ।
घ्रात्वा लोमोद्भवं गन्धं शीघ्रं देवो प्रसीदति ।
तस्मात् प्रवर्धयेद्दीपं पात्रं तत्र विवर्जयेत् ॥ १८३ ॥

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे कुमारीपूजनादिकथनं नाम षोडशः पटलः ॥ १६ ॥**

जब पशु अपने दातों से कदाचित् क्वचित् कटकटा शब्द सुनावे तब साधक को मरण, अथवा हानि रूप फल समझना चाहिये । जब उसके नेत्रों से अश्रुपात हो, तब हानि होती है । यदि पशु का मस्तक पूर्व या उत्तर दिशा में गिरे, तब उसे सर्वसम्पत्कर समझे और राजा को राज्य प्राप्ति होती है ऐसा समझे । यदि मस्तक वायव्य दिशा में, नैर्ऋत्य में, अथवा दक्षिण दिशा में गिरे; तब उसका फल हानिकारक ही होता है । उस दोष की शान्ति के लिये उस पशु के मांस में घृत मिलाकर १५ आहुति अग्नि में देवे । मकरादि ग्राह, कछुआ, गोधा, मछली और पक्षिओं के शिर पर दीप न रखे । दीपक जब तक बलि पशु के शिर पर जलता है उतने काल तक स्वर्ग में वास रहता है । अतः प्रयत्नपूर्वक दीपदान अवश्य करे । पशु के लोम से उत्पन्न होने वाले गन्ध को सूँघ कर देवता शीघ्र प्रसन्न हो जाते हैं । इसलिये दीप को उत्तरोत्तर प्रज्वलित करता रहे और उस दीप को किसी पात्र में न रखे ॥ १७६-१८३ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में कुमारी-पूजनादिकथन नामक षोडश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १६ ॥**



# सप्तदशः पटलः

## सपर्याकथनम्

**अथ मन्त्रसिद्धेरुपायाः गौतमीये—**

**सम्यगनुष्ठितो मन्त्रो यदि सिद्धिर्न जायते ।**
**पुनस्तेनैव कर्त्तव्यं ततः सिद्धो भवेद् ध्रुवम् ॥ १ ॥**

अब गौतमीय तन्त्र के अनुसार मन्त्र सिद्धि का उपाय कहते हैं—अच्छी प्रकार से मन्त्र का अनुष्ठान करने पर भी यदि सिद्धि न प्राप्त हो तब उसे पुनः करे । ऐसा करने से निश्चित मन्त्र सिद्ध हो जाता है ॥ १ ॥

**एवं पुनः पुनश्चैव कृते सिद्धिर्न चेद् भवेत्।**
**उपायास्तत्र कर्त्तव्याः सप्त शङ्करभाषिताः ॥ २ ॥**
**भ्रामणं बोधनं वश्यं पीडनं पोथशोषणे ।**
**दहनान्तं क्रमात् कुर्यात् ततः सिद्धो भवेद् ध्रुवम्॥ ३ ॥**

बारम्बार इस प्रकार करने पर भी जब मन्त्रसिद्धि प्राप्त न हो, तब शङ्कर द्वारा बतलाये गये इन सात उपायों को करे । भ्रामण, बोधन, वश्य, पीडन, पोथ, शोषण और अन्त में दहन—इन सात उपायों के करने से अवश्य ही मन्त्र सिद्ध हो जाता है ॥ २-३ ॥

**भ्रामणं वायुबीजेन प्रथमक्रमयोगतः ।**
**तन्मन्त्रयन्त्रमालिख्य सिल्हकर्पूरकुंकुमैः ॥ ४ ॥**
**उशीरचन्दनाभ्यां तु मन्त्रं संग्रथितं लिखेत् ।**
**पूजनाज्जपनाद् होमाद् भ्रामितः सिद्धिदो भवेत् ॥ ५ ॥**

१. प्रथम क्रम में कहे गये योग के अनुसार मन्त्र का वायुबीज (यं) से इस प्रकार भ्रामण क्रिया करे । मन्त्र को सिल्ह, कपूर, दोनों चन्दन, कुङ्कुम एवं उशीर से संग्रथित कर लिखे । फिर पूजन, जप और होम के पश्चात् वायु मन्त्र से उसे भ्रामित करे (घुमावे)। ऐसा करने से वह मन्त्र सिद्ध हो जाता है ॥ ४-५ ॥

**भ्रामितो यदि नो सिद्ध्येद् बोधनं तस्य कारयेत् ।**

सारस्वतेन बीजेन सम्पुटीकृत्य तं जपेत् ॥ ६ ॥
एवं रुद्धो भवेत् सिद्धो न चेदेतद् वशीकुरु ।
अलक्तं चन्दनं कुष्टं हरिद्रामलकं शिलाम् ।
एतैस्तु मन्त्रमालिख्य भूर्जपत्रे सुशोभने ॥ ७ ॥
धार्यं कण्ठे न चेत् सिद्धः पीडनं तस्य कारयेत् ।
अधरोत्तरयोगेन पदानि परिजप्य वै ॥ ८ ॥
ध्यायेच्च देवतां तत्र अधरोत्तररूपिणीम् ।
विद्यामादित्यदुग्धेन लिखित्वाक्रम्य चांघ्रिणा ॥ ९ ॥
तथाभूतेन मन्त्रेण होमः कार्यो दिने दिने ।
पीडितो लज्जयाविष्टः सिद्धिः स्यान्नो च पोथयेत् ॥ १० ॥
बालायास्त्रितयं बीजमाद्यन्ते तस्य योजयेत् ।
गोक्षीरमधुनालिख्य विद्यां पाणौ विधारयेत् ॥ ११ ॥
पोथितोऽयं भवेत् सिद्धो न चेत् कुर्वीत शोषणम्।
द्वाभ्यां च वायुबीजाभ्यां मन्त्रं कुर्याद् विदर्भितम्।
एषा विद्या गले धार्या लिखित्वा वरभस्मना ॥ १२ ॥
शोषितोऽपि न सिद्ध्येच्च दहनीयोऽग्निबीजतः ।
आग्नेयेन तु बीजेन मन्त्रस्यैकैकमक्षरम् ॥ १३ ॥
आद्यन्तमध ऊर्ध्वं च योजयेद्दाहकर्मणि ।
ब्रह्मवृक्षस्य तैलेन मन्त्रमालिख्य धारयेत् ॥ १४ ॥
कण्ठदेशे ततो मन्त्रसिद्धिः स्यात् शङ्करोदितम् ।
इत्येतत् कथितं सम्यक् केवलं तव भक्तितः ॥ १५ ॥

२. यदि भ्रामित करने पर भी सिद्ध न हो तो उसका दूसरा उपाय **बोधन** क्रिया करे । सारस्वत बीज (ऐं) से सम्पुष्टित कर उसका जप करे । ऐसा करने से रुकी हुई मन्त्र की सिद्धि हो जाती है । यदि इतने पर भी सिद्ध न हो तो ३. तीसरा उपाय **वशीकरण** करे । अलक्तक, चन्दन, कुष्ठ, हरिद्रा, आमलक एवं शिलाजीत इनसे भोज पत्र पर मन्त्र लिखकर उसे अपने कण्ठ में धारण करे । यदि इतने पर भी सिद्ध न हो ४. तब उसका **पीडन** करे । अधरोत्तर योग से मन्त्र के पदों का जप कर अधरोत्तर रूपिणी देवता का ध्यान करना चाहिए । फिर मन्दार के दुग्ध से महाविद्या मन्त्र लिखकर उसे पैर से दबा देवे । उसी मन्त्र से प्रतिदिन होम करना चाहिए । ऐसा करने से पीड़ित लज्जाविष्ट मन्त्र सिद्ध हो जायगा । ५. यदि इतने पर भी सिद्धि न हो तो उसे जल से भिगा देवे । फिर उसके आदि और अन्त में बाला के तीन मन्त्र और जोड़ देवे । फिर गोदुग्ध और मधु से विद्या मन्त्र लिखकर हाथ में धारण करे । इस प्रकार **पोथित** करने पर भी

यदि वह सिद्ध न हो तब उसका शोषण करे । ६. फिर श्रेष्ठ भस्म से मन्त्र को दो-दो वायु बीज (यं यं) विदर्भित करे । फिर उसे अपने गले में धारण करना चाहिए । ७. यदि इस शोषण से भी सिद्ध न हो तो अग्नि बीज (रं) को उसे मन्त्र के एक-एक अक्षर के आदि, अन्त, नीचे एवं ऊपर लिखकर जला देवे । तदनन्तर ब्रह्म बीज के तैल से मन्त्र लिखकर कण्ठ में धारण करे । ऐसा करने से मन्त्र अवश्य सिद्ध हो जायेगा । ऐसा शङ्कर का कथन है । हे पार्वति! यह आपकी भक्ति के कारण मैंने आपसे कहा ॥ ६-१५ ॥

**एकेनैव कृतार्थः स्याद् बहुभिः किमु सुव्रते।**
**अथान्यत् सम्प्रवक्ष्यामि मन्त्रसिद्धेस्तु कारणम् ॥ १६ ॥**
**मातृकापुटितं कृत्त्वा स्वस्वमन्त्रं जपेत् सुधीः ।**
**क्रमोत्क्रमात् शतावृत्त्या तदन्ते च मनुं जपेत् ॥ १७ ॥**

हे सुव्रते! ऐसे तो एक उपाय से ही मन्त्रसिद्धि हो जाती है और बहुत उपायों की आवश्यकता नहीं होती । अब मन्त्रसिद्धि में कारणभूत अन्य सिद्धि कहता हूँ । सुधी साधक मातृका से सम्पुटित तत्तन्मन्त्रों का क्रमोत्क्रम से सौ बार जप करे । फिर अपने मन्त्र का जप करे ॥ १६-१७ ॥

**एवं तु प्रत्यहं कृत्त्वा यावल्लक्षं समाप्यते ।**
**निश्चितं मन्त्रसिद्धिः स्यादित्युक्तं तन्त्रवेदिभिः ॥ १८ ॥**
**अथवान्यप्रकारेण पुरश्चरणमुच्यते ।**
**अष्टम्यां वा चतुर्दश्यां पक्षयोरुभयोरपि ॥ १९ ॥**
**सूर्योदयात् समारभ्य यावत् सूर्योदयान्तरम् ।**
**तावज्जप्तो निरातङ्कः सर्वसिद्धीश्वरो भवेत् ॥ २० ॥**

इस प्रकार जप प्रतिदिन तब तक करे, जब तक एक लाख की संख्या पूर्ण होवे । ऐसा करने से निश्चय ही मन्त्र की सिद्धि हो जाती है, क्योंकि तन्त्रवेत्ताओं ने ऐसा कहा है । अथवा अन्य प्रकार से पुरश्चरण की विधि कहता हूँ । दोनों पक्ष की अष्टमी, चतुर्दशी तिथियों में सूर्योदय से आरम्भ कर दूसरे दिन के सूर्योदय तक जप करे । इस प्रकार आतङ्करहित होकर उतने समय तक जप करने से साधक सभी सिद्धियों का ईश्वर बन जाता है ॥ १८-२० ॥

**कृष्णाष्टमीं समारभ्य यावत् कृष्णाष्टमी भवेत् ।**
**सहस्रसंख्या जप्ते तु पुरश्चरणमिष्यते ॥ २१ ॥**
**चतुर्दशीं समारभ्य यावदन्या चतुर्दशी ।**
**तावज्जप्ते महेशानि पुरश्चरणमिष्यते ॥ २२ ॥**

अथवा कृष्णाष्टमी से आरम्भ कर जब तक दूसरी कृष्णाष्टमी आवे; उतने

काल तक प्रतिदिन एक सहस्र की संख्या में किया गया जप पुरश्चरण कहा जाता है । हे महेशानि! चतुर्दशी से आरम्भ कर जब तक अन्य चतुर्दशी आवे; उतने काल तक जप करने से भी पुरश्चरण हो जाता है ॥ २१-२२ ॥

**चन्द्रसूर्यग्रहं दृष्ट्वा कालातीतभयात्तथा ।**
**सर्वं विधिं च संत्यज्याचम्याभीष्टदिङ्मुखः ॥ २३ ॥**
**सङ्कल्पं मानसं कृत्त्वा ऋष्यादीन्न्यस्य वै जपेत् ।**
**ग्रासावधि विमुक्त्यन्तं तद्दशांशं च होमयेत् ।**
**तस्मिन् काले च यत्कुर्यान्मन्त्रं वा स्तोत्रमेव वा ॥ २४ ॥**
**एकोच्चारेण देवेशि असंख्यं तज्जपं भवेत् ।**
**शाक्तं वा विष्णुमन्त्रं वा शैवं गाणपतं तथा ।**
**चन्द्रसूर्यग्रहे जप्त्वा सिद्धो भवति नान्यथा ॥ २५ ॥**

अथवा पुरश्चरण में बहुत काल बीतने के भय से चन्द्र ग्रहण या सूर्य ग्रहण का काल देख उस समय सारी विधि का त्याग कर, आचमन कर, अभीष्ट दिशा में बैठकर, मानस सङ्कल्प कर, ऋष्यादि न्यास कर ग्रास से आरम्भ कर मोक्षपर्यन्त जप करे । उसका दशांश होम करे । उस काल में जिस मन्त्र का जप किया जाता है अथवा जिस स्तोत्र का पाठ किया जाता है, हे देवेशि! उसके एक बार के उच्चारण से असंख्य जप संख्या तथा अनन्त स्तोत्र पाठ का फल प्राप्त होता है । चाहे शाक्त मन्त्र हो, या विष्णु मन्त्र हो, या शैव, या गाणपत्य मन्त्र हो, चन्द्र ग्रहण या सूर्य ग्रहण में उसके जप करने से मन्त्र सिद्ध हो जाता है यह अन्यथा नहीं है ॥ २३-२५ ॥

**यद्वा—**

**ग्रहणे चन्द्रसूर्यस्य शुचिः पूर्वमुपोषितः ।**
**नद्यां समुद्रगामिन्यां नाभिमात्रे जले स्थितः ॥ २६ ॥**
**यद्वा शुद्धोदके स्नात्वा शुचौ देशे समाहितः ।**
**स्पर्शाद् विमुक्तिपर्यन्तं जपं कुर्यादनन्यधीः ॥ २७ ॥**
**अनन्तरं दशांशेन क्रमाद् होमादिकं चरेत् ।**
**तदन्ते महतीं पूजां कुर्याद् ब्राह्मणभोजनम् ॥ २८ ॥**
**ततो मन्त्रस्य सिद्ध्यर्थं गुरुं सम्पूज्य तोषयेत् ।**
**ततः प्रयोगान् कुर्वीत मन्त्रवित् कल्पतोदितान् ॥ २९ ॥**

अथवा—चन्द्र सूर्य के ग्रहणकाल में पहले दिन उपवास कर आत्म शुद्धि करे । फिर समुद्रगामिनी नदी में नाभिमात्र जल में खड़े होकर, अथवा शुद्धोदक में स्नान कर, किसी पवित्र स्थान में समाहित चित्त होकर, स्पर्श से विमुक्ति पर्यन्त

अनन्यधां होकर जप करे। फिर जप का दशांश होमादि करे। उसके बाद महाशक्ति की पूजा कर ब्राह्मण भोजन करावे। फिर मन्त्र की सिद्धि के लिये गुरु पूजा कर द्रव्यादि से उन्हें सन्तुष्ट करे। तदनन्तर मन्त्रवेत्ता साधक कल्प ग्रन्थों के अनुसार मन्त्र प्रयोग करे ॥ २६-२९ ॥

**प्रकारान्तरेण पुरश्चरणकथनम्**

**अथवान्यप्रकारेण पुरश्चरणमुच्यते ।**
**शरत्काले चतुर्थ्यादि नवम्यन्तं विशेषतः ॥ ३० ॥**
**भक्तितः पूजयित्वा तु रात्रौ तावत् सहस्रकम्।**
**जपेदेकस्तु विजने केवलं तिमिरालये ॥ ३१ ॥**

अथवा अन्य प्रकार से पुरश्चरण कह रहा हूँ शरत्काल में विशेष कर चतुर्थी से लेकर नवमी तिथि पर्यन्त रात्रि के समय किसी विजन वन में जहाँ एकान्त हो, वहाँ भक्तिपूर्वक पूजन कर एक सहस्र जप करे ॥ ३०-३१ ॥

**अष्टम्यादिनवम्यन्तमुपवासपरो भवेत् ।**
**स भवेत् सर्वसिद्धीशो नात्र कार्या विचारणा॥ ३२ ॥**

अष्टमी से लेकर नवमी पर्यन्त उपवास करे। ऐसा करने से साधक सर्व सिद्धियों का स्वामी हो जाता है इसमें विचार की आवश्यकता नहीं ॥ ३२ ॥

**यच्च—**

**शरत्काले महापूजा क्रियते या च वार्षिकी ।**
**तस्मिन् पक्षे विशेषेण पुरश्चरणतत्परः ॥ ३३ ॥**
**अष्टम्यादि नवम्यन्तमुपवासपरो भवेत् ।**
**पूजयेद् भक्तितो रात्रौ षट्सहस्रं जपं चरेत् ॥ ३४ ॥**

और जो—शरत्काल में जो वार्षिकी महापूजा की जाती है उस पक्ष में पुरश्चरणकर्त्ता अष्टमी से लेकर नवमी पर्यन्त उपवास करे। रात्रि में भगवती का पूजन कर छह हजार जप करे ॥ ३३-३४ ॥

**प्रकारान्तरेण पुरश्चरणकथनम्**

**अथवान्यप्रकारेण पुरश्चरणमुच्यते ।**
**यत् क्षणे कम्पते भूमिस्तत्क्षणं सिद्धिदायकम् ॥ ३५ ॥**
**प्रहराभ्यन्तरे यद् यत् कृतमक्षयमाप्नुयात् ।**
**ज्ञात्वा सङ्क्षेपतः कृत्यं समाप्य प्रजपेन्मनुम् ॥ ३६ ॥**
**तदन्ते हवनं कृत्त्वा सिद्धिमाप्नोति निश्चितम् ।**

महामन्त्रं जपेन्नित्यं स्मरेद् वापि समाहितः ॥ ३७ ॥
तस्य गेहे वसेल्लक्ष्मी जिह्वायां च सरस्वती ।
हृदये च वसेद्देवो नारायण इति श्रुतिः ॥ ३८ ॥

अथवा अन्य प्रकार से पुरश्चरण कहता हूँ; वह अक्षय होता है । भूमि कम्पन का ज्ञान होने पर समस्त कृत्य सङ्क्षेप में समाप्त कर मन्त्र जप करे । अन्त में होम करे । ऐसा करने से निश्चित सिद्धि प्राप्त होती है । अथवा समाहित चित्त होकर प्रतिदिन महामन्त्र का जप करे, अथवा स्मरण करे । ऐसे पुरुष के घर में लक्ष्मी तथा जिह्वा पर सरस्वती और हृदय में लक्ष्मीनारायण का निवास होता है यह श्रुति है ॥ ३५-३८ ॥

ब्रह्मा स्यात् कण्ठदेशे च अहं तिष्ठामि सम्मुखे ।
मन्त्रदेवः सहैतैश्च सदा रक्षति साधकम् ॥ ३९ ॥
दहेत् तृणं यथा वह्निस्तथा शत्रून् जयेत् सदा ।
स्वयं ब्रह्मा स्वयं विष्णुः स्वयं रुद्रो न संशयः ॥ ४० ॥
अन्ते निरामयं ब्रह्म मन्त्री भवति नान्यथा ।
लक्षमेकं जपेद्देवि महापापैः प्रमुच्यते ॥ ४१ ॥

कण्ठदेश में ब्रह्मा तथा मैं सम्मुख निवास करता हूँ । इन देवताओं के साथ मन्त्र के देवता साधक की रक्षा करते हैं । जिस प्रकार अग्नि तृण को जला देती है उसी प्रकार वह भी अपने शत्रुओं को जला देता है । वह स्वयं ही ब्रह्मा, स्वयं विष्णु और स्वयं रुद्र है; इसमें संशय नहीं । अन्त में वह मायारहित निरञ्जन ब्रह्म हो जाता है; यह अन्यथा नहीं । यदि एक लाख मन्त्र का जप करे तो, हे देवि! ब्रह्महत्यादि महापापों से छूट जाता है ॥ ३९-४१ ॥

लक्षद्वयेन पापानि सप्तजन्मकृतान्यपि ।
लक्षत्रयेण पापानि हन्ति जन्मसहस्रकम् ॥ ४२ ॥
चतुर्लक्षजपान् मन्त्री वागीश्वरसमो भवेत् ।
पञ्चलक्षाद्दरिद्रोऽपि साक्षाद् वैश्रवणो भवेत् ॥ ४३ ॥
लक्षषट्कजपात् देवि महाविद्याधरो भवेत् ।
जप्त्वैवं सप्तलक्षाणि खेचरीसिद्धिमाप्नुयात् ॥ ४४ ॥
अष्टलक्षप्रमाणं तु महामन्त्रं जपेत् तु यः ।
अणिमाद्यष्टसिद्धीशो जायते नात्र संशयः ॥ ४५ ॥
नवलक्षजपाद्देवि रुद्रमूर्तिरिवापरः ।
कर्ता हर्ता महादेवि लोकेऽप्रतिहतः प्रभुः ॥ ४६ ॥
दशलक्षफलं देवि वर्णितुं नैव शक्यते ।

**साक्षान्मन्त्रमयी मूर्तिर्भवेत् साधकसत्तमः ॥ ४७ ॥ इति ।**

दो लाख के जप से सात जन्म के समस्त पाप नष्ट हो जाते हैं । तीन लाख जप से सहस्त्र जन्मों के पाप नष्ट हो जाते हैं । चार लाख जप से साधक वागीश्वर के समान हो जाता है । पाँच लाख जप से अत्यन्त दरिद्र भी कुबेर के समान धनी हो जाता है । हे देवि! छह लाख जप से महाविद्याधर बन जाता है । इसी प्रकार सात लाख जप से खेचरी (आकाश गामिता) सिद्धि प्राप्त हो जाता है और जो आठ लाख के प्रमाण में महामन्त्र का जप करता है; वह अणिमादि अष्टसिद्धियों का स्वामी बन जाता है । हे देवि! नवलक्ष के जप के प्रभाव से वह अपर रुद्र हो जाता है । वह लोक में कर्त्ता, हर्त्ता और अप्रतिहत ईश्वर बन जाता है । हे देवि! दशलाख महामन्त्र के जप का फल वर्णन से परे है । वह उत्तम साधक साक्षात् मन्त्रमयी मूर्त्ति हो जाता है ॥ ४२-४७ ॥

**अथ सिद्धिचिह्नानि नारदपञ्चरात्रे, तन्त्रशेखरे च—**

**मन्त्राराधनशक्तस्य प्रथमं वत्सरत्रये ।**
**जायन्ते बहवो विघ्ना जपतस्तस्य नारद ॥ ४८ ॥**
**नोद्वेगं साधको याति कर्मणा मनसा यदि ।**
**सेत्स्यतीति च विश्वासस्तुरीयेऽब्दे स सिद्धिभाक्॥ ४९ ॥**
**सिद्धे मनौ च राजानः प्रभवोऽन्ये महीश्वराः ।**
**प्रार्थयन्तेऽनुरोधेन गर्विता अपि मानिनः ॥ ५० ॥**
**प्रसादः क्रियतां नाथ ममोद्धारणकारण ।**
**प्रज्वलन्तं च पश्यन्ति तेजसा विभवेन च ॥ ५१ ॥**
**अतस्ते मुनिशार्दूल निष्ठुरं वक्तुमक्षमाः ।**
**नवमाद् वत्सरादूर्ध्वं स्वयं सिद्ध्यति मन्त्रराट् ॥ ५२ ॥**

अब मन्त्र सिद्धि के चिह्न कहते हैं जैसा नारदपञ्चरात्र और तन्त्रशेखर में कहा है—मन्त्राराधन में लगे हुये पुरुष को प्रथम से लेकर तीन वर्ष पर्यन्त बहुत विघ्नों का सामना करना पड़ता है । यदि साधक कर्म से एवं मन से उद्विग्न न हो और मन्त्र सिद्ध होगा; इस विश्वास से अटल रह गया तो चौथे वर्ष में वह अवश्य सिद्धि प्राप्त कर लेता है । मन्त्र सिद्ध हो जाने पर राजा प्रभु अन्य महेश्वर जो गर्वीले एवं अत्यन्त मानी हैं वे भी उससे अनुरोधपूर्वक प्रार्थना करते हैं । हे नाथ! आप हमारे उद्धार में कारण हैं; अतः मुझ पर प्रसन्न हो जाइये । वे उस सिद्ध साधक को तेज से और वैभव से अत्यन्त प्रज्वलित देखते हैं । अतः मुनिशार्दूल भी उससे विनम्र रहते हैं; निष्ठुर होकर बात नहीं करते ॥ ४८-५२ ॥

**नानाश्चर्याणि हृदये मन्त्रसिद्धिमयानि वै ।**
**अत्यानन्दप्रदान्याशु प्रत्यक्षेण बहिस्तथा ॥ ५३ ॥**

जडधीस्तु क्षणं विप्रः क्षणमस्ति प्रहर्षितः ।
क्षणं दुन्दुभिनिर्घोषं शृणोत्यप्यन्तरिक्षतः ॥ ५४ ॥
क्षणं च मधुरं वाद्यं नानागीतसमन्वितम् ।
आजिघ्रति क्षणं गन्धान् कर्पूरमृगनाभिजान् ॥ ५५ ॥
इत्यनन्तं क्षणं वापि पश्यत्यात्मानमात्मनः ।
चन्द्रार्ककिरणाकीर्णं क्षणमालोकयेन्नभः ॥ ५६ ॥
गजगोवृषनादाँश्च शृणुयाच्च क्षणं द्विज ।
निर्भराम्बुदसङ्क्षोभं क्षणमाकर्णयत्यपि ॥ ५७ ॥
तारकाणि विचित्राणि योगिनो नभसि स्थितान् ।
पश्यत्युद्ग्राहयन्तं च क्षणं मन्त्रव्रती सदा ॥ ५८ ॥
क्षणं किलिकिलारावं हंसं च बर्हिणं तथा ।
क्षणं मेघोदयं पश्येत् क्षणं रात्रिं दिने सति ॥ ५९ ॥
रात्रौ च दिवसालोकं ससूर्यक्षणमीक्षते ।
बलेन परिपूर्णश्च तेजसा भास्करोपमः ॥ ६० ॥
पूर्णेन्दुसदृशः कान्त्या गमने विहगोपमः ।
शमेन युक्तः प्रौढेन गाम्भीर्येण सुखेन च ॥ ६१ ॥
स्वल्पाशनेन कृशता बहुनापि न खिद्यते ।
विण्मूत्रयोः स्यादल्पत्वं भवेन्निद्रा जयस्तथा ॥ ६२ ॥

मन्त्रराज नव वर्ष के उपरान्त स्वयं सिद्ध हो जाते हैं । वह अपने हृदय में मन्त्र सिद्धिमय अनेक आश्चर्यों को, अत्यानन्दप्रद दृश्यों को प्रत्यक्ष बाहर देखता है । वह ब्राह्मण क्षण में सर्वथा मूर्ख और क्षण भर में अत्यन्त प्रसन्न होता है । क्षण में अन्तरिक्ष से दुन्दुभी का निर्घोष सुनता है और क्षण में अनेक गानों के साथ मधुर बाजा सुनता है । क्षण भर में कपूर, कस्तूरी की अत्यन्त तीक्ष्ण सुगन्ध को नासिका से सूँघता है । इसी प्रकार अनन्त दृश्य देखता है । कभी अपनी आत्मा में आत्मसाक्षात्कार करता है । कभी समस्त नभ मण्डल को चन्द्र किरणों से आकीर्ण देखता है । वह साधक कभी हाथी, साँड़ के शब्दों को सुनता है । कभी अत्यन्त घने बादल की गर्जना सुनता है । कभी आकाश मण्डल में स्थित विचित्र-विचित्र तारागणों को पकड़ते हुये योगियों को देखता है । कभी किल-किला शब्द करते हुये हंसों एवं मयूरों को देखता है । क्षण में मेघोदय तथा क्षण में दिन में भी रात्रि देखता है । इतना ही नहीं रात्रि में ही सूर्य के प्रकाश सहित दिन को देखता है । वह दैवीय बल से परिपूर्ण होता है और तेज से सूर्य के समान प्रखर रहता है । कान्ति में पूर्णमासी के चन्द्रमा के समान एवं आकाश में उड़ते हुये पक्षी के समान, शम से युक्त, प्रौढ़ता से युक्त, गाम्भीर्य से युक्त एवं सर्वसुख

सम्पन्न रहता है । उसे स्वल्प भोजन से कृशता पर खेद नहीं होता और न बहुत भोजन कर लेने पर खिन्नता ही प्रकट होती है । उसे मलमूत्र अत्यन्त स्वल्प होती है वह निद्रा पर विजय प्राप्त कर लेता है ॥ ५३-६२ ॥

**जपध्यानपरो मन्त्री न खेदमधिगच्छति ।**
**विना भोजनपानाभ्यां पक्षमासादिकं मुने ॥ ६३ ॥**
**इत्येवमादिभिश्चिह्नैर्महाविस्मयकारिभिः ।**
**प्रवृत्तैः सम्प्रबोद्धव्यं प्रसन्नो मन्त्रराडिति ॥ ६४ ॥**

वह मन्त्रज्ञ जप ध्यान में निरन्तर लगे रहने पर भी कभी खिन्न नहीं होता । वह बिना कुछ खाये पीये ही पक्षों, मासों और दिनों को बिता देता है पर खिन्न नहीं होता । इस प्रकार के अन्य महाविस्मयकारी चिह्नों को देखकर समझ लेना चाहिये कि मन्त्रराट् इस पर प्रसन्न है ॥ ६३-६४ ॥

**ततोऽस्य प्रत्ययास्त्वेवं जायन्ते जपतो मनुम् ।**
**अधिष्ठितं निश्यदीपं निस्तमिस्त्रं गृहं भवेत् ॥ ६५ ॥**
**अर्काभस्तेजसाऽसौ भवति नलिनजा सन्ततं किङ्करी स्याद्**
**रोगा नश्यन्ति दृष्ट्या द्रुतमथ धनधान्याकुलं तत्समीपम् ।**
**देवा नित्यं नमोऽस्मै विदधति फणिनो नैव दश्यन्ति पुत्रान्**
**पौत्रा मित्राणि वृद्धा न तु विपदिपरा धाम विष्णोः प्रयाति ॥ ६६ ॥**

उस मन्त्र जाप करते हुये साधक पुरुष को सिद्धि में इस प्रकार के दृश्य को देखकर स्वयं विश्वास हो जाता है । जब रात्रि के समय घर में बिना दीप रखे हुये ही अन्धकार न रहकर प्रकाश हो जाता है । वह तेज में सूर्य के समान तेजस्वी हो जाता है । महालक्ष्मी उसकी किङ्करी बन जाती है । सिद्ध साधक अपनी दृष्टि से रोग नष्ट कर देता है और वह शीघ्र ही धन-धान्य से सम्पन्न हो जाता है । देवता उसके समीप में आकर नमस्कार करते हैं । उसके पुत्रों को सर्पादि नहीं काटते । उसके पौत्र, मित्र एवं वृद्ध कभी विपद्ग्रस्त नहीं होते और अन्त में वह विष्णुलोक प्राप्त करता है ॥ ६५-६६ ॥

**तथा च गौतमीये—**

**सिद्धयस्त्रिविधाः प्रोक्ता उत्तमामध्यमाधमाः ।**
**तासां क्रमाल्लक्षणानि यथावदवधारय ॥ ६७ ॥**
**मृत्यूनां हरणं तद्वद् देवतादर्शनं तथा ।**
**ऊर्ध्वक्रामणमेवं हि चराचरपुरे गतिः ॥ ६८ ॥**
**खेचरी मेलकं चैव तत्कथाश्रवणादिकम् ।**
**भूछिद्राणि प्रपश्येत चैतदुत्तमलक्षणम् ॥ ६९ ॥**

जैसा कि गौतमीयतन्त्र में कहा गया है—उत्तम, मध्यम और अधम भेद से सिद्धि तीन प्रकार की कही गई है । उनके लक्षणों को मैं कहता हूँ । आप सावधान होकर सुनिए । मृत्यु पर विजय, देवता का दर्शन, ऊर्ध्व गमन, आकाशगति, खेचरी मेलक, भगवान् की कथा का श्रवण और भूमि सम्बन्धी छिद्रों का अवलोकन (आदि उत्तम सिद्धि के लक्षण हैं) ॥ ६७-६९ ॥

**ख्यातिर्भूषणवाहादिलाभः सुचिरजीवनम् ।**
**नृपाणां तद्‌गणानां च वशीकरणमुत्तमम् ॥ ७० ॥**
**सर्वत्र सर्वलोकेषु चमत्कारकरं सुधीः ।**
**रोगापहरणं दृष्ट्या विषापहरणं तथा ॥ ७१ ॥**
**पाण्डित्यं लभते मन्त्री चतुर्विधमयत्नतः ।**

ख्याति प्राप्त होना, भूषण (अलङ्करण), वाहन आदि का लाभ, दीर्घजीवन, राजा एवं उनके गणों का वश में होना, सर्वत्र सभी लोकों में चमत्कारी होना, दृष्टि से ही रोगों को, विष को हरण कर लेने की क्षमता, बिना प्रयत्न के चारों ओर पाण्डित्य की प्राप्ति—ये अधम सिद्धि के लक्षण हैं ॥ ७०-७२ ॥

**वैराग्यं च मुमुक्षुत्वं त्यागिता सर्ववश्यता ॥ ७२ ॥**
**अष्टाङ्गयोगाभ्यसनं भोगेच्छापरिवर्जनम् ।**
**सर्वभूतानुकम्पा च सर्वज्ञादिगुणोदयः ॥ ७३ ॥**
**इत्यादि गुणसम्पत्तिर्मध्यसिद्धेस्तु लक्षणम् ।**

वैराग्य एवं मुमुक्षुत्व होना, (काम, क्रोधादि शत्रुओं का) त्याग होना, सभी को वश में कर लेने की सामर्थ्य, अष्टाङ्गयोग का अभ्यास, सांसारिक भोगेच्छा का परित्याग, सभी जीवों पर दया का भाव, सर्वज्ञता आदि गुणों का उदय इत्यादि गुणों की सम्पत्ति वाले साधक सिद्धि मध्यम सिद्धि कही जाती है ॥ ७२-७४ ॥

**ख्यातिर्भूषणवाहादिलाभः सुचिरजीवनम् ॥ ७४ ॥**
**नृपाणां तद् गणानां च वात्सल्यं लोकवश्यता ।**
**महैश्वर्यं धनित्वं च पुत्रदारादिसम्पदः ॥ ७५ ॥**
**अधमा सिद्धयः प्रोक्ता मन्त्राणामथ भूमिकाः ।**
**सिद्धमन्त्रस्तु यः साक्षात् स शिवो नात्र संशयः ॥ ७६ ॥**

ख्याति प्राप्त होना, भूषण वाहनादि का लाभ और दीर्घ जीवन, नृप और उनके गणों के प्रति वात्सल्यभाव, लोकवश्यता, महान् ऐश्वर्य से युक्त, धनी एवं पुत्र-पौत्रादि से सम्पन्न साधक की सिद्धि अधम सिद्धि होती है । यदि सिद्धमन्त्र का साक्षात्कार हो जाय तो वह साक्षात शिव ही हैं, इसमें कोई संशय नहीं समझना चाहिए ॥ ७४-७६ ॥

**तत्त्वसागरसंहितायां पूजाभेदाः—**

**पुनस्त्रिधा मताः पूजा उत्तमाधममध्यमाः ।**
**अधिकारिनिमित्ताभ्यां शतधा भिद्यते पुनः ॥ ७७ ॥**
**यागोपकरणैः कृत्स्नैः क्रियमाणोत्तमा मता ।**
**यथालब्धैर्विनिष्पाद्या दृष्टैः पूजा तु मध्यमा ॥ ७८ ॥**
**पत्रपुष्पाम्बुनिष्पाद्या पूजा चाधमसंज्ञिता ।**
**विदिताखिलवेदार्थैर्ब्रह्मर्षिभिरकल्मषैः ।**
**क्रियमाणा तु या पूजा सात्त्विकी सा विमुक्तिदा ॥ ७९ ॥**
**राजर्षिभिस्तपोनिष्ठैर्भगवत्तत्त्ववेदिभिः ।**
**या पूजा क्रियते सम्यग् राजसी सा सुखप्रदा ॥ ८० ॥**
**स्त्रीबालवृद्धमूर्खाद्यैर्भक्तैरक्षुद्रमानसैः ।**
**या पूजा क्रियते नित्यं तामसी सा प्रकीर्तिता ॥ ८१ ॥**

तत्त्वसागरसंहिता में पूजाभेद इस प्रकार बतलाया गया है—उत्तम, मध्यम, अधम भेद से पूजा तीन प्रकार की कही गई है । अधिकारी और निमित्त भेद से पुनः उसके सैकड़ों भेद हो जाते हैं । जो समस्त योगोपकरणों से किया जाय, वह उत्तमा पूजा कही जाती है । जो दृष्ट एवं यथोपलब्ध पदार्थों से पूजा की जाती है, वह मध्यमा पूजा है । पत्र, पुष्प, जलादि द्वारा की गई पूजा अधमा पूजा कही जाती है । समस्त वेदार्थों को जानने वाले निष्पाप ब्रह्मर्षियों द्वारा की जाने वाली पूजा **सात्त्विक** कही जाती है जो मुक्ति प्रदान करने वाली है । भगवत्तत्त्ववेत्ता तपोनिष्ठ राजर्षियों द्वारा सम्यक् की जाने वाली पूजा **राजसी** कही जाती है जो सुख प्रदान करती है । जिनके मन में क्षुद्रता नहीं है, किन्तु वे भगवद् भक्त हैं, ऐसे भक्त, स्त्री, बाल, वृद्ध एवं मूर्खों द्वारा की जाने वाली पूजा **तामसी** कही जाती है ॥ ७७-८१ ॥

### पूजोपचारकथनम्

**अथोपचारं वक्ष्यामि शृणु पार्वति सादरम् ।**
**विनोपचारैर्या पूजा सा न सिद्धयति कुत्रचित् ॥ ८२ ॥**

अब हे पार्वति! पूजा के उपचारों को आपको बतला रहा हूँ, उसे आदरपूर्वक सुनिए । बिना उपचार के जो पूजा की जाती है; वह कभी किसी काल में सिद्ध नहीं होती ॥ ८२ ॥

**तथा च गौतमीये—**

**परिभाषामथो वक्ष्ये उपचारविधौ हरेः ।**
**द्रव्याणां यावती संख्या पात्राणां द्रव्यसंहतेः ॥ ८३ ॥**

हाटकं राजतं ताम्रमारकूटं मृदादिना ।
उपचारविधावेतद् द्रव्यमाहुर्मनीषिणः ॥ ८४ ॥
आसने पञ्चपुष्पाणि स्वागते षट्चतुःफलम् ।
जलं श्यामाकदूर्वाब्जविष्णुक्रान्तानि पञ्चशः ॥ ८५ ॥
पाद्ये चार्घ्ये जलं तावद् गन्धपुष्पाक्षतं जपा ।
दूर्वास्तिलाश्च चत्वारः कुशाग्रश्वेतसर्षपाः ॥ ८६ ॥
जातीलवङ्गकक्कोलतोयं च षट्पलं मतम् ।
प्रोक्तमाचमनं कांस्ये मधुपर्कं घृतं मधु ॥ ८७ ॥
दध्ना सह जलैः कर्तुं शुद्धं वारि तथाचमे ।
परिमाणं तु पञ्चाशत् पलं स्नानार्थमम्भसः ॥ ८८ ॥
निर्मलेनोदकेनाथ सर्वत्र परिपूर्णता ।
मलिनं पतितं सर्वं त्यजेत् पूजाविधौ हरेः ॥ ८९ ॥

जैसा कि गौतमीयतन्त्र में भी बतलाया गया है—अब विष्णु की उपचार विधि की परिभाषा कहता हूँ । पूजा में उपयोगी जितने द्रव्य हों, उन द्रव्यों को रखने के लिये उतने ही पात्र होने चाहिये । वे पात्र चाहे सोने के, चाहे चाँदी के, चाहे ताँबे के अथवा चाहे मिट्टी से बने होने चाहिये । पूजा में मनीषियों ने इतने द्रव्य कहे हैं । आसन में पाँच पुष्प और स्वागत में १० फल, अथवा चौबीस फल, जल, सावाँ चावल, दूर्वा, कमल और विष्णुक्रान्ता—ये पाँच वस्तुयें जल, पाद्य और अर्घ के लिये । फिर गन्ध, पुष्प, अक्षत, फिर दूर्वा, तिल, चार कुशाग्र, श्वेत सर्षप, जाती, लवङ्ग, कक्कोल और जल—जो मात्रा में छह पल हों, ये आचमनीय पदार्थ कहे गए हैं । कांस्य पात्र में मधुपर्क के लिये घृत, मधु, जल के साथ दधि एवं आचमन के लिये शुद्ध वारि जिसका परिमाण ५० पल हो । फिर स्नान के लिये जल, जो निर्मल हो और स्नान के लिये पर्याप्त हो; आवश्यक है । मलिन एवं पतित वस्तुयें भगवान् की पूजा में त्याज्य बतलायी गयी हैं ॥ ८३-८९ ॥

वितस्तिमात्रादधिकं वासो युग्मं तु नूतनम् ।
स्वर्णाद्याभरणान्येव रत्नेन संयुतानि च ॥ ९० ॥
चन्दनागरुकर्पूरपङ्कगन्धं पलावधि ।
नानाविधानि पुष्पाणि पञ्चाशदधिकानि च ॥ ९१ ॥
कांस्यादिनिर्मिते पात्रे धूपो गुग्गुलुकर्षभाक् ।
सप्तवर्त्त्या च संयुक्तो दीपः स्याच्चतुरङ्गुलः ॥ ९२ ॥
यावद् भक्ष्यं भवेत् पुंसस्तावद् दद्याज्जनार्दने ।
नैवेद्यं विविधं वस्तु भक्ष्यादिकचतुर्विधम् ॥ ९३ ॥

**कर्पूरादियुतावर्त्तिर्नवकर्पासनिर्मिता ।**
**शालिपिष्टावन्दनायां सप्तधावर्तयेन्नरः ॥ ९४ ॥**
**कार्या ताम्रादिपात्रे तत्प्रीतये हरिमेधसः ।**
**दूर्वाक्षतप्रमाणं तु विज्ञेयं च शताधिकम् ।**
**उत्तमोऽयं विधिः प्रोक्तो विभवे सति सर्वदा ॥ ९५ ॥**

एक वित्ता से अधिक दो वस्त्र जो नये हों रत्नजटित, स्वर्णादि आभूषण, चन्दन, अगुरु, कर्पूर एवं कस्तूरी एक पल की मात्रा में, पचास संख्या से अधिक नाना प्रकार के पुष्प, काँस्यादि से निर्मित पात्र में धूप एवं गुग्गुलु एक कर्ष परिमाण में और सात बत्ती से संयुक्त दीप जो चार अङ्गुल का हो । एक मनुष्य जितना खा सके, उतना नैवेद्य जनार्दन को देना चाहिए । जो भक्ष्यादि चार पदार्थों से (भक्ष्य, भोज्य, लेह्य एवं चोष्य) से और विविध पदार्थों से युक्त हो, ऐसा नैवेद्य होना चाहिए । कर्पूरादि से युक्त वर्त्ति जो कार्पास निर्मित न हो, शाली पिष्ट एवं वन्दना में मनुष्य उसे सात बार लपेट कर, उसकी बत्ती बनाकर, ताम्रादि पात्र में विष्णु की प्रीति के लिये स्थापित करे । दूर्वा और अक्षत की मात्रा १०० संख्याक होनी चाहिये । यदि विभव (=विस्तार) हो, तब विष्णु पूजा के लिये यह विधि कही गई है ॥ ९०-९५ ॥

**एषामभावे सर्वेषां यथाशक्त्या तु पूजयेत् ।**
**अनुकल्पं विवर्जेत द्रव्याणां विभवे सति ॥ ९६ ॥**
**अनेन विधिना यस्तु पूजयेदुपचारतः ।**
**सर्वभोगान्वितो भूत्वा व्रजेदन्ते हरेः पुरम् ॥ ९७ ॥**

**हरिरित्युपलक्षणम् । स्वोपास्यदेवपुरमित्यर्थः ।**

अभाव में सबके लिये यह विधि है कि यथाशक्ति विष्णु पूजन करे । यदि विभव हो तब उसका अनुकल्प न करे । जो भक्त इन उपचारों से तथा इस विधि से विष्णु पूजन करता है, वह इस लोक में सभी भोगों से समन्वित होता है और अन्त में विष्णुपद प्राप्त करता है ॥ ९६-९७ ॥

हरि शब्द उपलक्षण प्रयुक्त है । 'अपने उपास्य देव के धाम में जाता है' यह अर्थ है ।

**अथ कालकथनं योगिनीतन्त्रे—**

**मणिमुक्तासुवर्णानि देवे दत्तानि यानि वै ।**
**तन्निर्माल्यं द्वादशाब्दात् ताम्रपात्रं तथैव च ॥ ९८ ॥**
**पटी शाटी च षण्मासं नैवेद्यं दत्तमात्रतः ।**
**मोदकं कृसरं चैव यामार्धेन महेश्वरि ॥ ९९ ॥**

**पट्टसूत्रं त्रिमासाच्च यज्ञसूत्रं त्र्यहात् स्मृतम् ।**
**यावदन्नं भवेदुष्णं परमान्नं तथैव च ॥ १०० ॥**
**मस्तकं रुधिरं चैव अहोरात्रेण पार्वति ।**
**मुहूर्त्तं दधि दुग्धं च आज्यं यामेन सुन्दरि ॥ १०१ ॥**
**करवीरमहोरात्रं विल्वपत्रं तथैव च ।**
**जवापुष्पं च माध्यं च निर्माल्यं सार्धयामके ॥ १०२ ॥**
**मानं वै करवीरस्य पद्मस्य बिल्वकस्य च ।**
**यामान्तेन महेशानि ताम्बूलं दत्तमात्रतः ॥ १०३ ॥**

अब निर्माल्य काल कहते हैं जैसा योगिनीतन्त्र में कहा है—भगवान् को समर्पित मणि, मोती और सुवर्ण एवं ताम्र पात्र बारह वर्ष के बाद निर्माल्य हो जाते हैं । धोती एवं साड़ी छह मास के बाद निर्माल्य होते हैं । नैवेद्य समर्पित करने के पश्चात् ही निर्माल्य बन जाता है । मोदक, तिल, मूँग, आधे याम (१ घड़ी) के पश्चात् और पट्ट सूत्र तीन महीने के बाद तथा यज्ञसूत्र तीन दिन के पश्चात् निर्माल्य होते हैं । अन्न एवं परमान्न (खीर) उष्ण रहने के पश्चात् तथा मस्तक एवं रुधिर एक दिन रात के पश्चात् और दही-दूध एक मुहूर्त्त के पश्चात् एवं घी एक याम के पश्चात् एवं करवीर एक दिन रात के पश्चात् और इसी प्रकार बिल्वपत्र भी निर्माल्य हैं । जवा पुष्प और माध्य डेढ़ प्रहर के बाद निर्माल्य हो जाते हैं । हे महेशानि! करवीर, पद्म एवं बिल्व के निर्माल्य में यामान्त मान कहा गया है और ताम्बूल देते ही निर्माल्य हो जाता है ॥ ९८-१०३ ॥

**यामले—**

**सर्वं पर्युषितं वर्ज्यं पत्रं पुष्पं फलं जलम् ।**
**अवर्ज्यं जाह्नवीतोयमवर्ज्यं तुलसीदलम् ॥ १०४ ॥**

अब यामल में भी बतलाया गया है—पत्र, पुष्प, फल एवं जल—ये सभी पर्युषित हो जाने पर न चढ़ावे । किन्तु गङ्गाजल पर्युषित होने पर भी वर्जनीय नहीं है । इसी प्रकार तुलसीदल भी वर्जनीय नहीं है ॥ १०४ ॥

**अवर्ज्यं विल्वपत्रं स्यादवर्ज्यं जलजं तथा ।**
**पुष्पैः पर्युषितैर्देवि नार्चयेत् स्वर्णजैरपि ॥ १०५ ॥**

इसी प्रकार बिल्वपत्र एवं कमल भी वर्जित नहीं हैं । हे देवि! पर्युषित पुष्प से कदापि पूजा न करे, भले ही वे सुवर्ण निर्मित ही क्यों न हों ॥ १०५ ॥

**बिल्वपत्रं च माध्यं च तमालामलकीदलम् ।**
**कह्लारं तुलसीपत्रं पद्मं च मुनिपुष्पकम् ॥ १०६ ॥**
**एतत् पर्युषितं न स्यादन्यच्च कलिकात्मकम् ।**

तिष्ठेद् दिनत्रयं शुद्धपद्ममामलकं तथा ॥ १०७ ॥
दिनैकं करवीराणि योग्यानि भवति प्रिये ।
पद्मानि सितरक्तानि कुमुदान्युत्पलानि च ॥ १०८ ॥
एषां पर्युषितानां च त्यागः पञ्चदिनोर्ध्वतः ।
अन्येषां कुसुमानां च यावद् गन्धविपर्ययः ॥ १०९ ॥
पुष्पं च पञ्चगव्यं च उपचारांस्तथा परान् ।
घ्रात्वा निवेद्य देवेशि नरो नरकमाप्नुयात् ॥ ११० ॥

बिल्वपत्र, माध्य, तमाल, आँवला का पत्ता, कह्लार, तुलसी पत्र, पद्म और अगस्त्य पुष्प—ये पर्युषित नहीं होते और अन्य जब तक कली के रूप में हैं; तब तक पर्युषित नहीं होते । कमल एवं आँवला तीन दिन तक शुद्ध रहते हैं । हे प्रिये! करवीर एक दिन तक शुद्ध रहता है । श्वेत रक्त वर्ण के कमल, कुमुद एवं उत्पल इन पुष्पों का त्याग पाँच दिन के बाद कर देना चाहिए । अन्य पुष्पों का त्याग तब करे जब उसकी गन्ध बदलने लगे । पुष्प एवं पञ्चगव्य तथा अन्य देवोपचार सूँघने के पश्चात् निवेदन करने पर हे देवेशि! मनुष्य को नरक की प्राप्ति होती है ॥ १०६-११० ॥

अङ्गसंस्पृष्टमाघ्रातं त्यजेत् पर्युषितं बुधः ।
केशकीटोपविद्धानि छिन्नभिन्नानि पार्वति ॥ १११ ॥
स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ।
शेफाली वकुलं चैव स्वयं शीर्णं च दुष्यति ॥ ११२ ॥
सर्वं भूमिगतं त्याज्यं शेफालीं वकुलं विना ।
कृमिभक्ष्याणि भग्नानि वर्ज्याणि पतितानि च ॥ ११३ ॥
तमालं च तथा पद्मं छिन्नं भिन्नं न दुष्यति ।
विष्णुक्रान्ता जवा नागकेशरं नागवल्लभम् ।
बन्धूकं चैव कह्लारं सवृन्तेन समर्चयेत् ॥ ११४ ॥

अङ्ग से स्पृष्ट, आघ्रात तथा पर्युषित पदार्थ बुद्धिमान् साधक उपचार में त्याग देवे । केश कीट से संलग्न, छिन्न-भिन्न, स्वयं गिरे हुये इनके ग्रहण कर लेने के पश्चात् भी; हे पार्वती ! त्याग देना चाहिए । शेफाली, बकुल, स्वयं पृथ्वी पर गिर जाने के पश्चात् भी दूषित नहीं होते । शेफाली एवं वकुल को छोड़कर स्वयं पृथ्वी पर गिरे हुये पुष्प त्याज्य हैं । कृमि भक्ष्य, भग्न एवं पतित पुष्प त्याज्य हैं, तमाल, कमल छिन्न-भिन्न होने पर भी दूषित नहीं होते । विष्णुक्रान्ता, जपा (=अड़हुल), नागकेशर, नागवल्लभ, वन्धूक एवं कल्हार (कुमुद) को वृन्त सहित अर्चन करे ॥ १०६-११४ ॥

**अन्यच्च—**

**पञ्चाहात् तुलसी त्याज्या त्र्यहाद् विल्वदलं तथा ।**
**गङ्गाम्बु च सहस्राहाद् दशाहात् पङ्कजं तथा ॥ ११५ ॥**
**न निर्माल्यं दाडिमं च तथा विल्वफलं प्रिये ।**
**सौगन्धिकं च कदलीं प्रयत्नेन नियोजयेत् ।**
**कदलीं बीजपूरं च दुग्धं पक्वं निवेदयेत् ॥ ११६ ॥**

पाँच दिन के बाद तुलसी, तीन दिन के बाद बिल्वपत्र, एक हजार दिन के बाद गङ्गाजल, दश दिन के बाद कमल त्याज्य हैं; हे प्रिये! अनार तथा बिल्वफल कभी निर्माल्य नहीं होते । सौणन्धिक (कर्पूर) कदली (केला) प्रयत्नपूर्वक पूजा में संयुक्त करे । कदली, बीजपुर (बड़ा नीबू) तथा पका हुआ दूध भगवान् को अवश्य निवेदन करे ॥ ११५-११६ ॥

**अथोपचाराः, नवरत्नेश्वरे—**

**चतुःषष्ट्युपचाराणामभावेऽष्टादश स्मृताः ।**
**अष्टादशोपचाराश्च सर्वेषामुत्तमाः प्रिये ॥ ११७ ॥**
**षोडशातः प्रधानाश्च दशधा तदनु स्मृताः ।**
**पञ्चधा तदनु प्रोक्ता कर्त्तव्या भूतिमिच्छता ॥ ११८ ॥**

अब उपचारों के नाम कहते हैं जैसा कि नवरत्नेश्वरतन्त्र में कहा गया है—चौंसठ उपचार मुख्य हैं किन्तु उनके अभाव में १८ उपचार कहे गये हैं । हे प्रिये! ये अष्टादशोपचार सब उपचारों से उत्तम हैं । उसके बाद षोडश उपचार प्रधान हैं । उसके बाद दश उपचार और उसके बाद पाँच उपचार कहे गये हैं । अपना कल्याण चाहने वाले साधक इन उपचारों से भगवत् पूजा करे ॥ ११७-११८ ॥

**अथाष्टादशोपचाराः—**

**आसनं स्वागतं पाद्यं चार्घ्यमाचमनं तथा ।**
**स्नानं वासोपवीतं च भूषणानि च सर्वशः ॥ ११९ ॥**
**गन्धं पुष्पं तथा धूपं दीपमन्नं च तर्पणम् ।**
**माल्यानुलेपनं चैव नमस्कारविसर्जने ।**
**अष्टादशोपचारैस्तु मन्त्री पूजां समाचरेत् ॥ १२० ॥**

अब अष्टादशोपचार कहते हैं—आसन, स्वागत, पाद्य, अर्घ, आचमन, स्नान, वस्त्र एवं यज्ञोपवीत, सभी प्रकार के आभूषण, गन्ध, पुष्प, धूप, दीप, अन्न, तर्पण, माल्य अनुलेपन, नमस्कार और विसर्जन—इन अष्टादश उपचारों से पूजा करे ॥ ११९-१२० ॥

अथ षोडशोपचाराः—

पाद्यार्घ्याचमनीयकं स्नानं वसनभूषणे ।
गन्धं पुष्पं धूपदीपौ नैवेद्याचमने तथा ॥ १२१ ॥
ताम्बूलं च तथा स्तोत्रं तर्पणं च नमस्क्रिया ।
प्रयोजयेदर्चनायामुपचारांस्तु षोडश ॥ १२२ ॥

अब षोडशोपचार कहते हैं—१. पाद्य, २. अर्घ, ३. आचमनीय, ४. स्नान, ५. वस्त्र, ६. आभूषण, ७. गन्ध, ८. पुष्प, ९. धूप, १०. दीप, ११. नैवेद्य, १२. आचमन, १३. ताम्बूल, १४. स्तोत्र, १५. तर्पण और १६. नमस्कार—ये सोलह उपचार कहे गये हैं ॥ १२१-१२२ ॥

अथ दशोपचारा—

पाद्यार्घ्याचमनमधुपर्काण्याचमनं ततः ।
गन्धादयो निवेद्यान्ता उपचारा दश स्मृताः ॥ १२३ ॥

अब दश उपचार कहते हैं—पाद्य, अर्घ, आचमन, मधुपर्क एवं आभूषण, आचमन, गन्ध, पुष्प, धूप, दीप एवं नैवेद्य पर्यन्त—ये कुल दश उपचार बतलाये गये हैं ॥ १२३ ॥

अथ पञ्चोपचारा—

गन्धं पुष्पं च धूपं च दीपं नैवेद्यमेव च ।
प्रदद्यात् परमेशानि पूजा पञ्चोपचारिका ॥ १२४ ॥

अब पञ्चोपचार कहते हैं—गन्ध, पुष्प, धूप, दीप एवं नैवेद्य, हे परमेश्वरि! ये पञ्चोपचार देवता के लिये प्रदान करे ॥ १२४ ॥

पाद्यार्थमुदकं पाद्यं चन्दनागरुसंयुतम् ।
एतत् श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् ॥ १२५ ॥
पाद्यं पाद्ये च दातव्यमर्घ्यं चैवार्घ्यपात्रके ।
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपाः ॥ १२६ ॥
दूर्वा च सर्वदेवानामष्टाङ्गोऽर्घः समीरितः ।
अन्तःशून्यां त्रिपत्रां च दूर्वामर्घ्ये विनिःक्षिपेत् ॥ १२७ ॥
जातीलवङ्गकक्कोलैर्दद्यादाचमनीयकम् ।
तत्तैजसेन पात्रेण शङ्खेनैवाथवा दिशेत् ॥ १२८ ॥
उदकं दीयते यद्यत् सुगन्धं फेनवर्जितम् ।
नारिकेलोदकं स्वल्पं सिताघृतसमन्वितम् ।
सर्वेषामधिकं क्षौद्रं मधुपर्के प्रयोजयेत् ॥ १२९ ॥

पाद्य के लिये जो जल दिया जाता है वह पाद्य है । वह चन्दन, अगुरु, श्यामाक, दूर्वा, कमल एवं विष्णुक्रान्ता से युक्त होता है । ऐसा पाद्य-पदार्थ पाद्य पात्र में देना चाहिये । अर्घ-पदार्थ अर्घ पात्र में देना चाहिये । वह गन्ध, पुष्प, अक्षत, यव, कुशाग्र, तिल, श्वेत, सर्षप और दूर्वा से युक्त होता है । ऐसा अर्घ सभी देवताओं को प्रिय है । इसलिये इनका अर्घ प्रदान करे । अर्घ में तीन पत्तों वाली दूर्वा जो अन्तः शून्य (मध्य में कुछ नहीं) हो उसका उपयोग करे । जाती, लवङ्ग और कक्कोल से संयुक्त आचमन देवे । यह आचमन किसी तैजस पात्र से अथवा शङ्ख से देना चाहिये । जो आचमन में जल दिया जाय वह सुगन्धित हो, किन्तु फेन वर्जित हो । मधुपर्क में नारिकेलोदक जिसमें स्वल्प शक्कर और स्वल्प घृत सम्मिलित हो, किन्तु मधु की मात्रा सभी से अधिक हो; ऐसा मधुपर्क प्रदान करना चाहिए ॥ १२५-१२९ ॥

**तथान्यच्च—**

**आज्यं दधि मधून्मिश्रं मधुपर्कं विदुर्बुधाः ।**
**तं दद्यात् कांस्यपात्रेण शोभनेन विशेषतः ॥ १३० ॥**

इस विषय में और भी बतलाया गया है—बुद्धिमानों ने घी, दधि और मधु मिश्रित पदार्थ को 'मधुपर्क' कहा है । वह मधुपर्क कांस्य पात्र में स्थापित करके, जो विशेष रूप से सुन्दर हो, उसमें देवे ॥ १३० ॥

**वस्वङ्गुलविहीनं तु न पात्रं कारयेद् बुधः ।**
**दद्यात् तु विमलं गन्धं मूलमन्त्रेण देशिकः ॥ १३१ ॥**
**गन्धश्चन्दनकर्पूरकालागरुभिरीरितः ।**

**गन्धपदेन गन्धाष्टकमिति केचिद् वदन्ति । तन्मते तु, विष्णु-शिवशक्ति-गणेश भेदेन चतुर्विधम् ।**

बुद्धिमान् साधक मधुपर्क का पात्र आठ अङ्गुल से कम न बनवावे । इसके बाद आचार्य भगवान् को मूल मन्त्र से गन्ध प्रदान करें । चन्दन, कपूर, काला गुरु से युक्त गन्ध कहा जाता है ॥ १३१-१३२ ॥

कुछ लोग गन्ध पद से गन्धाष्टक कहते हैं । उनके मत में विष्णु, शिव, शक्ति और गणेश के भेद से चार प्रकार का गन्ध जानना चाहिये ।

**तद्यथा शारदायाम्—**

**चन्दनागरुह्रीवेरकुष्ठकुँकुमसेव्यकाः ।**
**जटामासीमरुमिति विष्णोर्गंधाष्टकं स्मृतम् ॥ १३२ ॥**
**चन्दनागरुकर्पूरतमालजलकुंकुमम् ।**
**कुशीतकुष्ठसंयुक्तं शैवं गन्धाष्टकं स्मृतम् ॥ १३३ ॥**

**चन्दनागरुकर्पूरचोरकुंकुमरोचना: ।**
**जटामासी कपियुता शक्तेर्गन्धाष्टकं स्मृतम् ॥ १३४ ॥**

वह शारदातिलकतन्त्र में इस प्रकार कहा गया है—चन्दन, अगुरु, कर्पूर, ह्लीवेर (इंगुल?), कुष्ठ, कुङ्कुम, सेव्यक, जटामासी और मरुआ—ये विष्णु के गन्धाष्टक हैं । चन्दन, अगुरु, कर्पूर, तमाल, जल, कुङ्कुम, कुशीत और कुष्ठ—इनको मिश्रित करने से शैव अष्ट गन्ध होता है । चन्दन, अगुरु, कर्पूर, चोर, कुङ्कुम, गोरोचन, जटामासी और कपि—इनको मिलाने से शक्ति का गन्धाष्टक कहा जाता है ॥ १३२-१३४ ॥

**गणपतिसंहितायाम्—**

**स्वरूपं चन्दनं चोरं रोचनागरुमेव च ।**
**मदं मृगद्वयोद्भूतं कस्तूरीचन्द्रसंयुतम् ।**
**अष्टगन्धं विनिर्दिष्टं गणेशस्य महाविभो: ॥१३५॥ इति ।**

अब गाणपत्याष्टकगन्ध जो गणेशसंहिता में कहा गया है उसे कहते हैं—स्वरूप चन्दन, चोर, गोरोचन, अगुरु दो प्रकार के मृगों से उत्पन्न मद, कस्तूरी जिसमें कर्पूर मिला हो, यह गणेश का अष्टगन्ध कहा गया है ॥ १३५ ॥

**अङ्गुष्ठतर्जनीभ्यां तु देवे पुष्पं निवेदयेत् ।**
**पुष्पैररण्यसम्भूतै: पत्रैर्गिरिसमुद्भवै: ॥ १३६ ॥**
**अपर्युषिताविच्छिन्नै: प्रोक्षितैर्जलवर्जितै: ।**
**आत्मारामोद्भवै: पुष्पैर्देवं सम्पूजयेत् सदा ॥ १३७ ॥**
**परारोपितवृक्षेभ्य: पुष्पाण्यानीय योऽर्चयेत् ।**
**तमविज्ञाप्य सा पूजा विफला भवति ध्रुवम् ॥ १३८ ॥**

अङ्गुष्ठ और तर्जनी मिलाकर देवता को पुष्प निवेदन करे । अरण्य में उत्पन्न पुष्पों से, पहाड़ों में उत्पन्न पत्तों से, जो पर्युषित न हो, कटे-फटे न हों, जल से प्रोक्षित हों, किन्तु जल में भीगे न हों, अथवा अपने बगीचे के हों, इस प्रकार के पुष्पों से मन्त्रज्ञ साधक देवाधिदेव की पूजा करे । जो दूसरों के द्वारा आरोपित वृक्षों के पुष्पों से बिना उसकी आज्ञा से पूजा करता है, उसकी पूजा निष्फल होती है यह निश्चित है ॥ १३६-१३८ ॥

**ज्ञानमालायाम्—**

**उग्रगन्धमगन्धं च कृमिकेशादिदूषितम् ।**
**अशुद्धपात्रपाण्यङ्गवासोभि: कुत्सितादिभि: ॥ १३९ ॥**
**आनीतं नार्पयेद् देवं प्रमादादपि दोषकृत् ।**
**कलिकाभिस्तथा नेज्यं विना चम्पकपङ्कजै: ॥ १४० ॥**

शुष्कैर्न पूजयेद् देवं याचितैः कृष्णवर्णकैः ।
अन्यार्थमाहृतं दुष्टं तथैवान्योपभुक्तकम् ॥ १४१ ॥
मल्लिकामुत्पलं रम्यं नागपुन्नागचम्पकम् ।
अशोकं कर्णिकारं च द्रोणपुष्पं विशेषतः ॥ १४२ ॥
करवीरं शमीपुष्पं कुंकुमं नागकेशरम् ।
यः प्रयच्छति देवेभ्यः स गच्छेत् परमं पदम् ॥ १४३ ॥
स्वयं विकसितैः पुष्पैस्तथा च मासपुष्पकैः ।
माघादिसर्वमासेषु पूज्यपुष्पाणि द्वादश ॥ १४४ ॥
कुन्दं कुरवकं केतकं वकं डिण्डीनकं तथा ।
नीलं च विकटं शीर्षं क्षुद्रं च भृङ्गराजकम् ।
वकुलं रङ्गणं चैव नान्यमासे यजेत् क्वचित् ॥ १४५ ॥

ज्ञानमाला में भी बतलाया गया है—जिसका गन्ध उग्र है, अथवा जो गन्ध हीन है, अथवा कृमि कीट से दूषित है, अशुद्ध पात्र, अशुद्ध हाथ, अशुद्ध अङ्गवस्त्र तथा कुत्सित जनों से लाया गया है, ऐसे पुष्प को भूलकर भी भगवान् को अर्पण न करे । वह दोषावह कहा गया है । चम्पा और कमल की कालिका को छोड़कर अन्य पुष्पों की कलियों से भी देव पूजा न करे । शुष्क पुष्पों से, दूसरों से याचित पुष्पों से, काले पुष्पों से, दूसरों द्वारा लाये गये पुष्पों से, दुष्ट (दूषित) अन्योपभुक्त से भी पूजा न करे । जो साधक सुरम्य, मल्लिका, उत्पल, नागकेसर, पुन्नाग, चम्पक, अशोक, कर्णिकार, विशेषकर द्रोणपुष्प, करवीर, शमीपुष्प, कुङ्कुम तथा नागकेशर का पुष्प देवताओं को समर्पण करता है; वह परम पद प्राप्त करता है । स्वयं विकसित पुष्पों से तत्तन्मासों में होने वाले पुष्पों से माघ से लेकर सभी मासों में पूजा करे । १. कुन्द, २. कुरवक, ३. केतकी, ४. बक, ५. डिण्डीनक, ६. नील, ७. विकट, ८. शीर्ष, ९. क्षुद्र, १०. भृङ्गराज, ११. वकुल, १२. रङ्गण—इन द्वादश पुष्पों से क्रमशः द्वादश मासों में पूजा करे । अन्य मासों में इनसे कभी पूजा न करे ॥ १३९-१४५ ॥

**अथान्यत्रापि—**

मालती मल्लिका जाती यूथिका माधवी तथा।
तगरः कर्णिकारश्च द्रोणश्चोत्पलचम्पकौ ॥ १४६ ॥
अशोकः कुमुदश्चैव शेफालिककदम्बकौ ।
केतकी नवमाला च कुसुम्भकिंशुकौ तथा ॥ १४७ ॥
कह्लारं वकुलं चैव लवङ्गनागकेशरौ ।
एतान्यपि प्रियाणि स्युर्देवस्य सततं शिवे ॥ १४८ ॥
नाक्षतैरर्चयेद् विष्णुं तुलस्या न गणेश्वरम् ।

**न दूर्वया यजेद् दुर्गां सूर्यं तगरविल्वजैः ॥ १४९ ॥**

**दूर्वानिषेधे यदुक्तं तत् श्वेतदूर्वापरम् ।**

अन्यत्र भी बतलाया गया है—हे शिवे! मालती, मल्लिका, जाती, यूथिका, माधवी, तगर, कर्णिकार, द्रोण, उत्पल, चम्पक, अशोक, कुसुम, शेफालिका, कदम्ब, केतकी, नवमाला, कुसुम, किंशुक, कह्लार, वकुल, लवङ्ग, नागकेसर इतने पुष्प देवताओं को प्रिय हैं । अक्षत से विष्णु की, तुलसी से गणेश की, दूर्वा से दुर्गा की, तगर और बिल्वपत्र से सूर्य की पूजा न करे । यहाँ जो दुर्गा को दूर्वा पूजन से निषेध कहा गया है वह श्वेतदूर्वापरक वचन है ॥ १४६-१४९ ॥

**यत्तु यामले—**

**रक्तमाघ्यं श्वेतदूर्वां नीलकण्ठं कुरण्टकम् ।**
**न दद्याच्च महादेव्यै यदीच्छेत् शुभमात्मनः ॥ १५० ॥**
**पुष्पाभावे यजेत् पत्रैः पत्राभावे तु तत्फलैः ।**
**फलेऽप्यामलकं श्रेष्ठं बादरं तिन्तिणीभवम् ॥ १५१ ॥**

जैसा कि यामल ग्रन्थ में भी बतलाया गया है—रक्त माघ्य, श्वेत दूर्वा, नीलकण्ठ एवं कुरण्टक यदि अपना शुभ चाहे तो इन पुष्पों को भगवती को समर्पण न करे । यदि पुष्प न प्राप्त हो, तब पत्ते से पूजा करे । सभी फलों में आमलक फल बदरीफल एवं तिन्तिणी फल श्रेष्ठ कहा गया है ॥ १५०-१५१ ॥

**दाडिमं मातुलुंगं च जम्बीरं पनसोद्भवम् ।**
**कदलीचूतसम्भूतं श्रेष्ठं जम्बूफलं तथा ॥ १५२ ॥**
**यजेदेतैः सदा देवं पत्रपुष्पफलैरपि ।**
**अक्षतैर्वाजलैर्वापि न पूजां व्यतिलङ्घयेत् ॥ १५३ ॥**

इसी प्रकार अनार, बड़ा नीबू, जम्वीर (नीबू), कटहल, केला, आम एवं जामुन फल श्रेष्ठ कहा गया है । साधक इनसे तो देवयजन करे ही, अन्य पत्र, पुष्प एवं फलों से भी यजन करे । इनके अभाव में केवल अक्षत अथवा केवल जल से ही पूजा करे । पूजा का उल्लङ्घन कदापि न करे ॥ १५२-१५३ ॥

**जलाभावे तु गन्धाढ्यं दूर्वां वा श्रीफलच्छदम् ।**
**विना वै दूर्वया देवि पूजा नास्तीह कर्हिचित् ।**
**तस्माद् दूर्वा गृहीतव्या सर्वपुष्पमयी हि सा ॥ १५४ ॥**

यदि जल भी न प्राप्त हो, तब केवल गन्ध अथवा दूर्वा अथवा विल्वपत्र से ही पूजा करे । हे देवि! बिना दूर्वा के पूजा नहीं करनी चाहिये । इसलिये दूर्वा अवश्य ग्रहण करे क्योंकि वह सर्वपुष्पमयी है ॥ १५४ ॥

**अन्यच्च—**

**शिवे केतकमुन्मत्तकुन्दार्काणि हरेस्तथा ।**
**देवीनामर्कमन्दारौ सूर्ये च तगरं तथा ॥ १५५ ॥**

इस विषय में और भी बतलाया गया है—शिव को केतकी पुष्प न अर्पित करे । विष्णु को धतूर, कुन्द और मन्दार पुष्प न चढ़ावे । इसी प्रकार देवी को अर्क, मन्दार तथा सूर्य को तगर पुष्प अर्पित न करे ॥ १५५ ॥

**मन्त्रतन्त्रप्रकाशे—**

**पत्रेषु तुलसी श्रेष्ठा बिल्वं दमनकं तथा ।**
**मरुको देवकह्लारी विष्णुक्रान्ता तथैव च ॥ १५६ ॥**
**अपामार्गोऽथ गान्धारी पत्री सुरभिसञ्ज्ञका ।**
**नागवल्लीदलं दूर्वा कुशपत्रं तथा मतम् ॥ १५७ ॥**
**पत्रं चागस्त्यवृक्षस्य पुण्यं धात्रीदलं तथा ।**
**देवेभ्यः सर्वगन्धानामभावे तुलसीदलम् ॥ १५८ ॥**
**तुलस्या पूजयेद् देवीं देवान् गणपतिं विना ।**
**विना तुलस्या स्नानादि श्राद्धं यज्ञार्चनं प्रिये ॥ १५९ ॥**
**न सम्पूर्णफलं प्राहुः सर्व एव विपश्चितः ।**
**दूर्वा वा तुलसी तस्माद् गृहीतव्या च साधकैः ॥ १६० ॥**
**सुन्दरी भैरवी काली ब्रह्मविष्णुविवस्वतः ।**
**विना तुलस्या या पूजा सा पूजा विफला भवेत् ॥ १६१ ॥**

मन्त्रतन्त्रप्रकाश में भी बतलाया गया है—पत्रों में तुलसी, बिल्व, दमनक, मरुक, देवकह्लारी, विष्णुक्रान्ता, अपामार्ग, गान्धारी, सुरभी, नागवल्ली दल, दूर्वा एवं कुशपत्र सर्वश्रेष्ठ कहा गया है । इसी प्रकार अगस्त्य वृक्ष का पत्र तथा धात्री का दल श्रेष्ठ कहा गया है । देवताओं के लिये यदि गन्ध अप्राप्त हो, तो तुलसी दल प्रदान करे । गणेशजी को छोड़कर सभी देवी-देवताओं की पूजा तुलसीदल से करना चाहिए । हे प्रिये! तुलसी पत्र के बिना जो पूजा की जाती है वह निष्फल होती है ॥ १५६-१६१ ॥

**शक्तियामले—**

**सावित्रीं च भवानीं च दुर्गां देवीं सरस्वतीम् ।**
**योऽर्चयेत्तुलसीपत्रैर्देवैः स्वर्गे स मोदते ॥ १६२ ॥**

शक्तियामलतन्त्र में भी बतलाया गया है—सावित्री, दुर्गा, भवानी एवं सरस्वती की पूजा जो तुलसीदल से करता है वह भक्त साधक स्वर्ग में देवताओं के साथ प्रसन्न रहता है ॥ १६२ ॥

यामले—

**रात्रौ रहस्यपूजायां तुलसीं वर्जयेत् सदा ।**
**तुलसी घ्राणमात्रेण रुष्टा भवति चण्डिका ॥ १६३ ॥**
**तुलसी ब्रह्मरूपा च सर्वदेवमयी शुभा ।**
**सर्वतीर्थमयी सा तु गणेशस्य प्रिया न हि ।**
**लक्ष्म्यास्तथा च ताराया न प्रिया तुलसी मता॥ १६४ ॥**

रात्रि में रहस्य पूजा में सर्वदा तुलसी का वर्जन करना चाहिये । तुलसी के आघ्राण मात्र से चण्डिका रुष्ट हो जाती हैं । तुलसी ब्रह्मरूपा और सर्वदेवमयी कही गई हैं । वह यद्यपि सर्वतीर्थमयी हैं तथापि गणेश उससे प्रेम नहीं करते । इसी प्रकार लक्ष्मी और तारा को तुलसी प्रिय नहीं है ॥ १६३-१६४ ॥

**सर्वदेवमयं पुष्पं देवेभ्यः सर्वथार्पयेत् ।**
**सर्वदेवमयं पुष्पं करवीरमपराजिताम् ॥ १६५ ॥**
**तद्वज्जवां महेशानि विद्धि पुष्पगणेष्विह ।**
**एषां मूले वसेद् ब्रह्मा एषां मध्ये जनार्दनः ॥ १६६ ॥**
**एषामग्रे वसेद् रुद्रः सर्वे देवाः दले स्थिताः ।**
**पञ्चदेवमयं पुष्पं करवीरं मनोहरम् ॥ १६७ ॥**
**विष्णुर्लम्बोदरः सूर्यो ब्रह्मा च कालिका तथा ।**
**पञ्चदेवा पञ्चदले सदा तिष्ठन्ति नान्यथा ॥ १६८ ॥**

सर्व देवमय पुष्प सभी देवों को सब प्रकार से अर्पण करे । करवीर और अपराजिता ये पुष्प सर्वदेवमय हैं । हे महेशानि! उसी प्रकार जवापुष्प भी पुष्पगणों में सर्वदेवमय है । इनके मूल में ब्रह्मदेव हैं, इनके मध्य में जनार्दन और इनके अग्रभाग में शिव का निवास है । सभी देवता इन पुष्पों के पत्र में स्थित रहते हैं, यतः करवीर पञ्चदेवमय पुष्प है अतः यह सब पुष्पों की अपेक्षा श्रेष्ठ हैं, विष्णु, गणेश, सूर्य, ब्रह्मा और काली—ये पाँच देवता इसके पाँच पत्ते पर निवास करते हैं, यह असत्य नहीं है ॥ १६५-१६८ ॥

**तथैव विष्णुक्रान्ता च तथैव च जवा प्रिये ।**
**विष्णुस्तु पश्चिमदले उत्तरे गणनायकः ॥ १६९ ॥**
**ऐशान्यां सूर्यदेवश्च पूर्वे ब्रह्मा प्रकीर्तितः ।**
**दक्षिणे कालिका देवी या परा शक्तिरिष्यते ॥ १७० ॥**
**यथा रक्तं तथा शुक्लं हरितं कृष्णमेव वा ।**
**गङ्गादिसर्वतीर्थानि तिष्ठन्ति बिन्दुगह्वरे ॥ १७१ ॥**
**तन्मध्ये शिवलिङ्गं च महाकुण्डलिनीयुतम् ।**

शिवशक्तिमयं पुष्पं करवीरं जवा तथा ॥ १७२ ॥
विष्णुक्रान्तापि देवेशि देवतीर्थमयी सदा ।
एषां मूलं च यः सिञ्चेत् पूजिता तेन देवताः ॥ १७३ ॥
पुष्पं वा यदि वा पत्रं फलं वाधोमुखं च यत् ।
समर्पितं दुःखदं तद् यथोत्पन्नं तथार्पणम् ॥ १७४ ॥
स्नानं कृत्त्वा तु मोहेन पुष्पं चिन्वन्ति ये द्विजाः ।
देवतास्तन्न गृह्णन्ति भस्मनीव तथा हुतम् ॥ १७५ ॥

हे प्रिये! इसी प्रकार विष्णुक्रान्ता तथा जवापुष्प को समझना चाहिए । इसके पश्चिम दल में विष्णु, उत्तर दल में गणेश, ईशान में सूर्य देव, पूर्व में ब्रह्मदेव, दक्षिण में कालिका, जिसे परा शक्ति भी कहते हैं, उनका निवास है । इसका रक्त, शुक्ल, हरा एवं कृष्ण वर्ण का पुष्प एक समान है इसके बिन्दु रूप गुफा में गङ्गादि सभी तीर्थों का निवास है । इसके मध्य में कुण्डलिनी युक्त शिवलिङ्ग है इसलिये करवीर तथा जवापुष्प शिवशक्तिमय कहा जाता है । इसी प्रकार हे देवेशि! विष्णुक्रान्ता भी सर्वदेवमयी है जो विष्णुक्रान्ता के मूल का सिञ्चन करता है उसने देव पूजा कर ली, ऐसा समझना चाहिए । यदि पुष्प-पत्र फल अधोमुख स्थापित कर अर्पण किया गया तो वह दुःखदायक होता है । इसलिये जैसे वह उत्पन्न हुआ है उसी प्रकार उसे समर्पण करे । जो ब्राह्मण स्नान करने के पश्चात् पुष्पावचय करते हैं । देवता उसे नहीं ग्रहण करते । उससे की गई पूजा भस्म में होम के समान है ॥ १६९-१७५ ॥

एतत्तु मध्यान्हस्नानपरम् । यत्तु तन्त्रे—

स्नात्वा मध्याह्नसमये न छिंद्यात्कुसुमं बुधः ।
तत्पुष्पार्चनतो देवि नरके परिपच्यते ॥ १७६ ॥

यह बात मध्याह्न स्नान के विषय में कही गई है । जैसा कि तन्त्रों में भी कहा गया है—बुद्धिमान् पुरुष मध्याह्न काल में स्नान के पश्चात् पुष्पावचय न करे । मध्याह्न काल में स्नान के पश्चात् किये गये पुष्प से पूजा करने पर साधक नरक में परिपच्यमान होता है ॥ १७६ ॥

न पुष्पच्छेदनं कुर्याद् देवार्थं वामहस्ततः ।
न दद्यात् तेन देवेभ्यः संस्थाप्य वामहस्तके ॥ १७७ ॥

देवसामान्यधूपनिरूपणम्

अगरूशीरगुग्गुलुशर्करामधुचन्दनैः ।
सामान्यः सर्वदेवानां धूपोऽयं परिकीर्तितः ॥ १७८ ॥

इतना ही नहीं देवपूजा के लिये कभी बायें हाथ से फूल नहीं तोड़ना चाहिए

और उसे बायें हाथ में स्थापित कर देवता को समर्पण भी नहीं करना चाहिए । अगुरु, उशीर, गुग्गुलु, शर्करा, मधु और चन्दन—ये सभी देवताओं के लिये सामान्य धूप कहे गये हैं ॥ १७७-१७८ ॥

**विशेषस्तन्त्रान्तरे—**

**सिताज्यमधुसंमिश्रं गुग्गुल्वगरुचन्दनम् ।**
**षडङ्गधूपमेतत्तु सर्वदेवप्रियं सदा ॥ १७९ ॥**
**गुग्गुलुं सरलं दारुपत्रं मलयसम्भवम् ।**
**ह्रीवेरमगरुं कुष्ठं गुडं सर्ज्जरसङ्घनम् ॥ १८० ॥**
**हरीतकीं नखीं लाक्षां जटामासीं च शैलजम् ।**
**षोडशाङ्गं विदुर्धूपं दैवे पैत्र्ये च कर्मणि ॥ १८१ ॥**

इससे विशेष और अन्य तन्त्रों में भी बतलाया गया है—मिश्री, घृत और मधु तथा गुग्गुलु, अगुरु, चन्दन यह षडङ्ग धूप सर्वदा सभी देवताओं को प्रिय कहा गया है । गुग्गुलु, देवदारु, दारुपत्र, मलयज चन्दन, ह्रीवर, अगुरु, कुष्ठ, गुड़, सर्जन, सङ्घन, हरीतकी, नखी, लाक्षा, जटामासी और शैलज—इन सोलह पदार्थों को मिश्रित कर पैतृक कर्मों में धूप कहा गया है ॥ १७९-१८१ ॥

**मधु मुस्तां घृतं गन्धो गुग्गुल्वगरुशैलजान् ।**
**सरलं सिल्हसिद्धार्थौ दशाङ्गो धूप इष्यते ॥ १८२ ॥**

मधु, मुस्ता, घृत, गन्ध, गुग्गुलु, अगुरु, शैलज, सरल सिल्ह और सिद्धार्थ —यह दशाङ्ग धूप कहा जाता है ॥ १८२ ॥

**सर्वेषामेव धूपानां दुर्गाया गुग्गुलुः प्रियः ।**
**घृतयुक्तो विशेषेण सततं प्रीतिवर्धनः ॥ १८३ ॥**
**न भूमौ वितरेद् धूपं नासनेन घटे तथा ।**
**यथायथाधारगतं कृत्त्वा तं विनिवेदयेत् ॥ १८४ ॥**
**राशीकृतेन चैकत्र एतैर्धूपैर्विधूपयेत् ।**

सभी धूपों में दुर्गा को गुग्गुलु प्रिय है । इसमें घी मिला देने से वह सतत प्रीतिवर्धक हो जाता है । पृथ्वी पर धूप न देवे, आसन से धूप न दे । घड़े में स्थापित कर धूप न देवे । सबको एक में मिलाकर राशी बनावे और फिर किसी एक जगह धूप से धूपित करे ॥ १८३-१८५ ॥

**मन्त्रतन्त्रप्रकाशे तु—**

**न दहेद्दूषितं धूपं कर्पासास्थिशिरोरुहैः ।**
**तुषाग्निवत् तथा कृत्त्वा न तत्फलमवाप्नुयात् ॥ १८५ ॥**

दीपदानविषयकनियमकथनम्

**वर्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।**
**आरोप्य दर्शयेद् दीपानुच्चैः सौरभशालिनः ॥ १८६ ॥**
**न मिश्रीकृत्य दद्यात्तु दीपं स्नेहान् घृतादिकान्।**
**दत्त्वा मिश्रीकृतं स्नेहं तामिस्रं नरकं व्रजेत् ॥ १८७ ॥**

मन्त्रतन्त्रप्रकाश में तो—दूषित धूप न जलावे । कपास, अस्थि और केश में मिलाकर धूप न देवे । भूसे की अग्नि के धूम के समान धूप न देवे । ऐसा करने से धूप का फल प्राप्त नहीं होता । कर्पूर मिश्रित बत्ती अथवा घी मिश्रित अथवा तिल तैल मिश्रित वर्त्ति सुगन्ध युक्त दीपक में डालकर ऊँचे स्थान पर दीप दान करे । तेल और घृत एक में मिलाकर दीप प्रदान न करे । मिश्री कृत स्नेह (तैल) युक्त दीप दान से साधक तामिस्त्र नरक प्राप्त करता है ॥ १८५-१८७ ॥

**यामले—**

**वृक्षेषु दीपो दातव्यो न तु भूमौ कदाचन ।**
**कुरुते पृथिवीतापं दीपमृत्सृज्य यो नरः ॥ १८८ ॥**
**तामिस्रं नरकं घोरं प्राप्नोत्येव न संशयः ।**
**सर्वंसहा वसुमती सहते न त्विदं द्वयम् ॥ १८९ ॥**
**अकार्यपादघातं च दीपतापं तथैव च ।**
**तस्माद् यथा न पृथिवी तापमाप्नोति वै तथा ॥ १९० ॥**
**नैव निर्वापयेद् दीपं देवार्थमुपकल्पितम् ।**
**दीपहन्ता भवेदन्धः काणो निर्वापको भवेत् ॥ १९१ ॥**

यामल में भी बतलाया गया है—किसी वृक्ष पर रखकर दीप दान करे, भूमि में स्थापित कर दीपदान कदापि न करे । जो मनुष्य पृथ्वी पर दीप स्थापित कर पृथ्वी उत्तप्त करता है, वह तामिस्त्र नरक प्राप्त करता है; इसमें संशय नहीं । ऐसे पृथ्वी सब कुछ सह लेती है, किन्तु इन दो को सहन नहीं करती १. बिना वजह के पृथ्वी पर पैर पटकना और २. दीप का ताप । इसलिये जिस प्रकार दीप से पृथ्वी उत्तप्त न हो वैसे दीपदान करे । देवता के लिये दिये गये दीप का निर्वाप न करे (न बुझावे) और न दीपक को फोड़े ही । दीपहन्ता अन्धा होता है और दीप बुझाने वाला काना होता है ॥ १८८-१९१ ॥

**दीपं घृतयुतं दक्षे तैलयुक्तं तु वामतः ।**
**दक्षिणे च सितावर्त्तिर्वामतो रक्तवर्त्तिकम् ॥ १९२ ॥**
**पक्वापक्वविभेदेन नैवेद्येष्वेव तत् स्थितिः ।**
**पुरतो नियमो नास्ति दीपनैवेद्ययोः क्वचित् ॥ १९३ ॥**

कन्दुपक्वं स्नेहपक्वं घृतसंयुक्तपायसम् ।
मनःप्रियं च नैवेद्यं दद्याद् देवाय साधकः ॥ १९४ ॥
यद् यद् वाञ्छितवस्तूनि तद् दद्याद् देवपूजने ।
बालप्रियं च नैवेद्यं दत्त्वा देवं प्रपूजयेत् ॥ १९५ ॥
स्त्रीणां प्रीतिकरं यत् तद् देव्यै दद्याद् विचक्षणः ।
ताम्बूलस्य प्रदानेन देवी प्रीतिमती भवेत् ॥ १९६ ॥

घृत युक्त दीपक दायें से और तैल युक्त दीपक बायें से देवे । श्वेत बत्ती दाहिनी ओर, रक्त वर्ण की पत्ती बाई ओर स्थापित करे । इसी प्रकार पक्वापक्व नैवेद्य में भी यही स्थिति करे । दीप और नैवेद्य सामने होकर देवे ऐसा कोई नियम नहीं है । कन्दुपक्व या तैलपक्व तथा घृत संयुक्त पायस, इसी प्रकार अपने मन को प्रिय लगने वाला नैवेद्य साधक देवता को प्रदान करे । अपने लिये जो-जो वाञ्छित वस्तु हो, देव पूजन में वह सब वस्तु देवता को समर्पित करे । प्रातःकाल बालप्रिय नैवेद्य स्थापित कर तदनन्तर देवता की पूजा करे । स्त्रियों के लिये जो प्रिय वस्तु हो वह सभी वस्तु देवी को निवेदन करे । ताम्बूल के प्रदान से देवी अत्यन्त प्रसन्न होती हैं ॥ १९२-१९६ ॥

### प्रदक्षिणानियमकथनम्

शङ्खहस्तेन सर्वत्र प्रदक्षिणं प्रकीर्तितम् ।
सकृद् द्विस्त्रिश्चरेद् देवि देवतायाः प्रदक्षिणम् ॥ १९७ ॥
एकं चण्ड्यां रवौ सप्त त्रीणि दद्याद् विनायके ।
चत्वारि केशवे दद्यात् शिवे चार्द्धं प्रदक्षिणम् ॥ १९८ ॥

सभी देवताओं की प्रदक्षिणा हाथ में शङ्ख लेकर करे । हे देवि! देवता की प्रदक्षिणा एक बार, दो बार या तीन बार करे । चण्डी की परिक्रमा एक बार, सूर्य की परिक्रमा सात बार, गणेश की परिक्रमा तीन बार, केशव की प्रदक्षिणा चार बार तथा शिव की आधी प्रदक्षिणा करे ॥ १९७-१९८ ॥

दक्षिणाद् वायवीं गत्वा दिशं तस्माच्च शाम्भवीम् ।
ततो वै दक्षिणां गच्छेन्नमस्कारस्त्रिकोणतः ॥ १९९ ॥
त्रिकोणोऽयं नमस्कारस्त्रिपुराप्रीतिवर्धनः ।
नतिस्त्रिकोणिकाकारा तारादेव्याः समीरिता ॥ २०० ॥
दर्शयन् दक्षिणं पार्श्वं नमसा च प्रदक्षिणम् ।
स च प्रदक्षिणो ज्ञेयः सर्वदेवोपतुष्टये ॥ २०१ ॥
पश्चात् कृत्त्वा तु यो देवं भ्रमित्वा प्रणमेन्नरः ।
तस्य चैवैहिकं नास्ति न परत्र दुरात्मनः ॥ २०२ ॥

अब त्रिपुरा की त्रिकोण परिक्रमा कहते हैं—दक्षिण दिशा से वायव्यकोण में जाए, वायव्य से ईशानकोण में, फिर ईशान से दक्षिण दिशा में नमस्कार करते हुये जावे, यह त्रिकोण परिक्रमा है। इस प्रकार त्रिकोण में नमस्कारपूर्वक प्रदक्षिणा त्रिपुरा को अत्यन्त प्रिय है। त्रिकोण के आकार (तिरछे) में नमस्कार यह तारा देवी की प्रदक्षिणा कही गई है। दक्षिण पार्श्व दिखाते हुये नमस्कारपूर्वक प्रदक्षिण होना ही प्रदक्षिणा कही जाती है; जो सभी देवताओं की सन्तुष्टि के लिये की जाती है। जो देवता को पीछे कर घूमते हुये प्रणाम करता हुआ परिक्रमा करता है उस दुरात्मा का न इस लोक में कल्याण होता है, न परलोक में ही ॥ १९९-२०२ ॥

**नमनप्रकारकथनम्**

**नमनं मानसं प्रोक्तं कायिकं वाचिकं तथा।**
**त्रिविधे च नमस्कारे कायिकश्चोत्तमः स्मृतः ॥ २०३ ॥**
**कायिकैस्तु नमस्कारैर्देवास्तुष्यन्ति नित्यशः।**
**जानुभ्यामवनीं गत्वा शिरसास्पृश्य मेदिनीम् ॥ २०४ ॥**
**क्रियते यो नमस्कार उत्तमः कायिकः स्मृतः।**

नमन मानसिक, कायिक एवं वाचिक भेद से तीन प्रकार का कहा गया है। तीनों प्रकार के नमस्कारों में कायिक नमस्कार उत्तम कहा गया है; क्योंकि कायिक नमस्कार से देवता नित्य प्रसन्न हो जाते हैं। दोनों जानुओं के बल पृथ्वी पर लोट कर शिर से पृथ्वी का स्पर्श करते हुये जो नमस्कार किया जाता है वह कायिक नमस्कार है ॥ २०३-२०५ ॥

**पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा ॥ २०५ ॥**
**मनसा वचसा चैव प्रणामोऽष्टाङ्ग उच्यते।**
**पद्भ्यां कराभ्यां शिरसा पञ्चाङ्गा प्रणतिः स्मृता॥ २०६ ॥**
**पुटीकृत्य करे शीर्षे दीयते तद्यथा तथा।**
**अस्पृष्ट्वा शीर्षजानुभ्यां क्षितिं मध्यम उच्यते ॥ २०७ ॥**

दोनों पैरों से, दोनों हाथों से, दोनों जानुओं से, उरःस्थल से, शिर से, नेत्र से, मन से एवं वचन से जो प्रणाम किया जाता है वह अष्टाङ्ग प्रणाम कहा जाता है। दोनों पैरों से, दोनों हाथों से तथा शिर से पृथ्वी पर गिरकर जो प्रणाम किया जाता है वह 'पञ्चाङ्ग प्रणाम' कहा जाता है। दोनों हाथों को जोड़कर, उसे शिर पर रख कर, शीर्ष और जानु के बल पृथ्वी पर बिना गिरे जो प्रणाम किया जाता है, वह मध्यम प्रणाम है ॥ २०५-२०७ ॥

**कायिकस्त्रिविधः प्रोक्तो अष्टाङ्गादिविभेदतः।**
**अष्टाङ्ग उत्तमः प्रोक्तः पञ्चाङ्गो मध्यमः स्मृतः ॥ २०८ ॥**

अधमः करशीर्षाभ्यां नमस्कारं विवर्जयेत् ।
अयमेव नमस्कारो दण्डादिप्रतिनामभिः ॥ २०९ ॥
प्रणाम इति विज्ञेयः स पूर्वं प्रतिपादितः ।
यैः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिः ।
क्रियते भक्तियुक्तेन वाचिकस्तु नमस्तु सः ॥ २१० ॥
पौराणिकैर्वैदिकैर्वा मन्त्रैर्या क्रियते नतिः ।
स मध्यमो नमस्कारो भवेद् वै वाचिकः सदा ॥ २११ ॥
यत्तु मानुषवाक्येन नमनं क्रियते तथा ।
स वाचिकोऽधमो ज्ञेयो नमस्कारेषु पार्वति ॥ २१२ ॥

अष्टाङ्ग आदि भेद से कायिक प्रणाम तीन प्रकार का कहा गया है । जिसमें अष्टाङ्ग उत्तम है एवं पञ्चाङ्ग मध्यम कहा गया है । अञ्जलि बाँधकर शिर पर रखकर जो नमस्कार किया जाता है वह अधम है, उसे वर्जित करे । दण्डवत् प्रणाम आदि नामों वाला जो अष्टाङ्ग प्रणाम है, वही प्रणाम है जिसे हम पहले कह चुके हैं । गद्य-पद्य घटित वाक्यों से भक्तिपूर्वक जो नमस्कार किया जाता है वह 'वाचिक' नमस्कार है । पौराणिक अथवा वैदिक मन्त्रों को पढ़ते हुये जो नमस्कार किया जाता है वह 'वाचिक-मध्यम' नमस्कार है और जो मनुष्य द्वारा बनाये गये गद्य- पद्य वाक्यों से नमस्कार किया जाता है वह वाचिक नमस्कारों में 'अधम' नमस्कार कहा गया है ॥ २०८-२१२ ॥

**अथ देवानां प्रीतिकथनम्—**

स्तुतिप्रियो महाविष्णुर्गणेशस्तर्पणप्रियः ।
दुर्गाऽर्चनप्रिया नूनमभिषेकप्रियः शिवः ।
दीपप्रियः कार्तवीर्यो मार्तण्डो नतिवल्लभः ॥ २१३ ॥

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे सपर्याकथनं नाम सप्तदशः पटलः ॥ १७ ॥**

...⁂...

अब देवताओं के प्रसन्नता के विषय में कहते हैं—महाविष्णु को स्तुति प्रिय है। गणेश तर्पण प्रिय हैं । दुर्गा को अर्चन प्रिय है । शिव को अभिषेक प्रिय है । कार्त्तवीर्य को दीप प्रिय हैं और सूर्य को नमस्कार प्रिय है ॥ २१३ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में सपर्याकथन नामक सप्तदश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १७ ॥**



# अष्टादशः पटलः

## प्रायश्चित्तादिकथनम्

अथ प्रायश्चित्तम्, यामले—

निषिद्धाचरणे पुंसां विहिताकरणे तथा ।
प्रायश्चित्तोपपातः स्यादिति सत्यं न संशयः ॥ १ ॥

अब प्रायश्चित्त कहते हैं, जैसा कि यामलतन्त्र में कहा गया है—पुरुष यदि निषिद्धाचरण करे और विहित कर्म न करे तब उसे प्रायश्चित्त लगता है, यह सत्य है, इसमें संशय नहीं ॥ १ ॥

निषिद्धाचरणं तु गौतमीये तन्त्रान्तरे च—

यानैर्वा पादुकाभिर्वा यानं भगवतो गृहे ।
देवोत्सवेस्वसेवा च अप्रणामस्तदग्रतः ॥ २ ॥
उच्छिष्टे च तथाशौचे देवस्य वन्दनादिकम् ।
एकहस्तप्रणामं च पुरस्तात् तत्प्रदक्षिणम् ॥ ३ ॥
पादप्रसारणं चाग्रे तथा पर्यंकबन्धनम् ।
शयनं भक्षणं चापि मिथ्याभाषणमेव च ॥ ४ ॥
उच्चैर्हासो मिथो जल्पो रोदनानि च विग्रहः ।
निग्रहानुग्रहौ चैव स्त्रीषु च क्रूरभाषणम् ॥ ५ ॥
कम्बलावरणं चैव परनिन्दां परस्तुतिम् ।
अश्लीलभाषणं चैव अधोवायुविमोक्षणम् ॥ ६ ॥
शक्तौ गौणोपचारस्तु अनिवेदितभक्षणम् ।
तत्तत्कालोद्भवानां च फलादीनामनर्पणम् ।
विनियुक्तावशिष्टस्य प्रदानं व्यञ्जनस्य च ॥ ७ ॥
स्पष्टीकृत्यासनं चैव परनिन्दा परस्तुतिः ।
गुरौ मौनं निजस्तोत्रं देवतानिन्दनं तथा ॥ ८ ॥
अपराधास्तथा विष्णोर्द्वात्रिंशत् परिकीर्तिताः ।

**विष्णोरित्युपलक्षणम्, तेनेदं देवमात्रपरम् ।**

अब निषिद्धाचरण कहते हैं, जैसा कि गौतमीयतन्त्र में एवं अन्य तन्त्रों में कहा गया है । सवारी से अथवा खड़ाऊँ आदि पहन कर भगवान् के मन्दिर में प्रवेश करना, देवता के उत्सव काल में उनकी सेवा न करना, उनके आगे होकर भी प्रणाम न करना, उच्छिष्ट एवं अशौच लगने पर भी देवता की वन्दना करना, एक हाथ से प्रणाम करना, आगे खड़े होकर प्रदक्षिणा करना, देवता के आगे पैर फैलाना एवं खाट चारपाई पर बैठना, सोना, खाना, पीना, मिथ्या भाषण करना, अट्टहासपूर्वक हँसना, व्यर्थ का बकवाद करना, रोना एवं झगड़ा करना, निग्रह एवं अनुग्रह करना, स्त्री को गाली आदि देना, कम्बल ओढ़ाना, परनिन्दा परस्तुति करना, अश्लील भाषण करना, अधोवायु छोड़ना, शक्ति रहते गौण उपचारों से पूजा करना, बिना निवेदन किये भोजन करना, तत्तत् कालों में उत्पन्न होने वाले फलादि का समर्पण न करना, स्वयं उपयोग कर लेने के पश्चात् व्यञ्जन का निवेदन करना, अभिमान सहित आसन पर बैठना, परनिन्दा, परस्तुति एवं गुरु के विषय में मौन रहना, अपनी प्रशंसा करना और देवता की निन्दा करना—ये विष्णु के विषय में ३२ अपराध कहे गये हैं ॥ २-९ ॥

यहाँ विष्णु शब्द उपलक्षण प्रयुक्त है। किसी भी देवता के विषय में ये अपराध कहे गये हैं ।

**यद् यत् कर्मणि वैगुण्यं नित्ये नैमित्तिके तथा ॥ ९ ॥**
**सहस्रं प्रजपेन्मूलमन्त्रं चायुतमेव वा ।**
**नित्ये सहस्रं प्रजपेन्नैमित्तिके तथायुतम् ॥ १० ॥**

अब प्रायश्चित्त कहते हैं—नित्य एवं नैमित्तिक कार्य में जब वैगुव्य (अपराध) हो जावे तब मूल मन्त्र का एक सहस्र अथवा दस हजार जप करे । नित्य में एक सहस्र और नैमित्तिक कार्य में अतिक्रमण होने पर दस हजार जप करे ॥ ९-१०॥

**विष्णुविषयक एवायं विधिः । अन्यत्र तन्त्रराजे—**

**नित्यादिकर्मदोषाणां शान्त्यै विद्यां शतं जपेत्।**
**नैमित्तिकातिक्रमणे सहस्रं प्रजपेन्मनुम् ॥ ११ ॥**

यह विधि विष्णु विषयक है । अन्यत्र तन्त्रराजतन्त्र में भी बतलाया गया है—नित्यादि (नित्य, नैमित्तिक एवं काम्य) कर्मों में दोष शान्ति के लिये १०० संख्या में महाविद्या मन्त्र का जप करना चाहिये । नैमित्तिक कर्म के अतिक्रमण होने में एक सहस्र विद्या मन्त्र का जप करे ॥ ११ ॥

**पापसङ्करे तु—**

**सर्वेषामेव पापानां सङ्करे समुपस्थिते ।**

प्रायश्चित्तं तु तन्त्रोक्तमयुतं सञ्जपेन्मनुम् ॥ १२ ॥

पापसाङ्कर्य दोष में भी बतलाया गया है—सभी पापों के साङ्कर्य उपस्थित होने पर दश हजार मन्त्र का जप करे यह प्रायश्चित्त तन्त्र ग्रन्थों में कहा गया है ॥१२॥

**अन्यच्च यामले—**

**देवनिन्दापराणां च सङ्कराणां सह प्रिये ।**
**शाक्तः शैवो वैष्णवो वा संसर्गं यत्नतस्त्यजेत् ॥ १३ ॥**
**चेत् संसर्गो भवेद् देवि विद्यामेनां तदा जपेत् ।**
**कामसम्पुटितां मायामष्टोत्तरसहस्रकम् ॥ १४ ॥**
**जप्त्वा पापात् प्रमुच्येत सङ्गदोषभवात् शिवे ।**
**जाम्बूनदस्य मालिन्यं परिशुद्धेद् यथाग्निना ॥ १५ ॥**
**अनाचारस्य कलुषं प्रायश्चित्ताग्निना दहेत् ।**
**प्रायश्चित्ते तु पापानां मूलमष्टसहस्रकम् ।**
**गायत्रीं वा जपेद् देवि सर्वपापप्रणाशिनीम् ॥ १६ ॥**

अन्यत्र यामल में भी बतलाया गया है—हे प्रिये! जो एक साथ ही अनेक देवताओं की निन्दा करते हैं, उनका संसर्ग शाक्त, वैष्णव और शैव भक्त यत्नपूर्वक त्याग देवें । यदि संसर्ग हो ही जाय तब साधक काम बीज (क्लीं) सम्पुटित माया बीज (ह्रीं) विद्या का एक हजार आठ की संख्या में जप करे । हे शिवे! इतना जप करने के पश्चात् ही वह सङ्गदोष से उत्पन्न पापों से मुक्त होता है, जिस प्रकार सोने का मालिन्य अग्नि से दूर होता है उसी प्रकार अनाचार से जन्य पाप प्रायाश्चित्त रूप अग्नि से दूर होता है । सभी प्रकार के पापों के लिये मूल मन्त्र का एक हजार आठ की संख्या में जप करे अथवा सर्वपाप प्रणाशिनी गायत्री का जप करे ॥ १३-१६ ॥

**अथ धृतकवचनाशप्रायश्चित्तं यामले—**

**विधृतं कवचं देवि यदि नश्यति कर्हिचित् ।**
**तत्रोपायं प्रवक्ष्यामि शृणुष्व कमलानने ॥ १७ ॥**
**उपविश्य तथाचम्य भूतशुद्धिं विधाय च ।**
**षट्चक्राणि विचिन्त्याथ गुरुं शिरसि चिन्तयेत्॥ १८ ॥**
**अनुलोमविलोमाभ्यां मातृकाभ्यां च सम्पुटम् ।**
**कवचं प्रपठेद् देवि अर्कावृत्तिमनुक्रमात् ॥ १९ ॥**
**ततो जपेन्महाविद्यां सहस्रं वा शतं क्रमात् ।**
**विलिख्य कवचं देवि नूतनं साधयेत् ततः ॥ २० ॥**
**तत्र प्राणान् प्रतिष्ठाप्य रक्तसूत्रेण वेष्टयेत् ।**

**वेष्टयित्वा महेशानि स्वर्णादौ स्थापयेद् बुधः ॥ २१ ॥**
**पञ्चामृतैः पञ्चगव्यैः स्नापयित्वा शुभेऽहनि ।**
**प्राणप्रतिष्ठामन्त्रेण प्राणांस्तत्र नियोजयेत् ॥ २२ ॥**
**सम्पूज्य देवतारूपं कवचं धारयेत् ततः ।**

शरीर पर धारण किये गये कवच के नाश होने पर यामल में भी बतलाया गया है—हे देवि! यदि संयोगवशात् शरीर में धारण किया गया कवच नष्ट हो जावे, तब हे कमलानने! उसका उपाय कहता हूँ सुनिए । आसन पर बैठकर आचमन करे फिर भूतशुद्धि करे । तदनन्तर षट्चक्र का ध्यान करते हुये शिर में ब्रह्मरन्ध्र का ध्यान करे । मातृकाओं के अनुलोम तथा विलोम से सम्पुट कवच का पाठ बारह आवृत्ति करे । इसके बाद सहस्र संख्या में अथवा शत संख्या में महाविद्या का जप करे । फिर नवीन कवच लिखकर सिद्ध करे । पहले उसमें प्राण-प्रतिष्ठा करे । फिर रक्तसूत्र से उसे वेष्टित करे । वेष्टन करने के पश्चात्, हे महादेवि! उसे स्वर्णादि निर्मित यन्त्र में स्थापित करे । फिर किसी अच्छे दिन पञ्चगव्य एवं पञ्चामृत में स्नान करा कर प्राणप्रतिष्ठा मन्त्र से उसमें प्राण स्थापित करना चाहिए ॥ १७-२३ ॥

**अथ यन्त्रनाशप्रायश्चित्तं नवरत्नेश्वरे—**

**यदि प्रतिष्ठितं यन्त्रं दैवाद् देवि विनश्यति ।**
**उपोषणमहोरात्रमादरेण समाचरेत् ॥ २३ ॥**
**येन स्वर्णादिना यन्त्रं द्रव्येण परिनिर्मितम् ।**
**विलिख्य यन्त्रं तत्पत्रे देवतां तत्र पूजयेत् ॥ २४ ॥**
**यथालब्धोपचारैश्च अयुतं प्रजपेन्मनुम् ।**
**ततः प्रक्षाल्य तद् यन्त्रं पीत्वान्ते भोजनं चरेत्॥ २५ ॥**
**तावत्कालं ब्रह्मचर्यं यावद् यन्त्रं न लभ्यते ।**
**पुनर्नवं प्रतिष्ठाप्य यन्त्रे पूज्य यथा सुखम् ।**
**व्रतं समापयेद् धीमानतो देवः प्रसीदति ॥ २६ ॥**

तदनन्तर देवता की तरह उसका पूजन कर पुनः धारण करे । अब यन्त्रनाश का प्रायश्चित्त नवरत्नेश्वरतन्त्र के अनुसार है—यदि प्रतिष्ठित यन्त्र भाग्यवशात् विनष्ट हो जावे । तब आदरपूर्वक रात दिन उपवास करे । पूर्व में जिस स्वर्णादि द्रव्यों से यन्त्र का निर्माण किया गया था उसे, उसी प्रकार के स्वर्णादि-पत्र पर लिखकर देवता का पूजन यथा-लब्धोपचार से करे । फिर दश हजार मन्त्र का जप करे । फिर उस यन्त्र का प्रक्षालन कर पान करे और अन्त में भोजन करे । जब तक यन्त्र न प्राप्त हो तब तक ब्रह्मचर्य का पालन करे । फिर नवीन यन्त्र की प्रतिष्ठा कर पूजन करे । फिर सुखपूर्वक व्रत की समाप्ति करे । ऐसा करने पर

देवता प्रसन्न होते हैं ॥ २३-२६ ॥

**अथ पूजाकाले यन्त्रपतनप्रायश्चित्तम्—**

**यन्त्रं यदि पतेद् देवि पूजाकाले कदाचन ।**
**लिङ्गं वापि शिला वापि तत् फलं शृणु पार्वति॥ २७ ॥**
**आयुर्बन्धुधनानां च हानिः स्यादुत्तरोत्तरम् ।**
**अतस्तत् पापशुद्ध्यर्थमेकरात्रं त्रिरात्रकम् ॥ २८ ॥**
**उपवासपरो मूलं जपेत् साष्टसहस्रकम् ।**
**जवापुष्पं च जुहुयात् तद्दशांशं ततश्चरेत् ॥ २९ ॥**
**तर्पणं मार्जनं विप्रभोजनं शक्तिपूर्वकम् ।**
**एवं कृते सुतुष्टः सन् देवोऽभीष्टं प्रदास्यति॥ ३० ॥**

पूजाकाल में यन्त्र यदि गिर जावे तब उसका प्रायश्चित्त कहते हैं—हे देवि! यदि कदाचित् पूजा के समय यन्त्र गिर जावे, अथवा शिवलिङ्गि अथवा शिवलिङ्ग अथवा शालग्राम शिला गिर जावे तब हे पार्वति! उसका फल सुनिए । उसके आयु, बन्धु तथा धन का उत्तरोत्तर नाश होता है । अत: उस पाप की शुद्धि के लिये एक रात, दो रात वा तीन रात उपवास कर आठ सहस्र संख्या में मूल मन्त्र का जप करे । फिर उसका दशांश जपा पुष्प का हवन करे । उसका दशांश तर्पण और उसका दशांश मार्जन करे । उसका दशांश अथवा अपनी शक्ति के अनुसार ब्राह्मण भोजन करावे । ऐसा करने से देवता अत्यन्त प्रसन्न होते हैं और अभीष्ट सिद्धि करते हैं ॥ २७-३० ॥

**अथ मालानाशे पतने च प्रायश्चित्तम्—**

**माला यदि पतेद् हस्तादथ चैव विनश्यति ।**
**सहस्रं चैव सञ्जप्य ब्राह्मणान् भोजयेत् ततः ॥ ३१ ॥**
**भोजनं ब्राह्मणानां तु सर्वारिष्टविनाशनम् ।**
**गायत्रीं वा जपेत् साष्टशतं भक्त्या समाहितः॥ ३२ ॥**

अब माला नाश तथा माला पतन का प्रायश्चित्त कहते हैं—यदि माला हाथ से (भूमि पर) गिर जावे, अथवा टूट कर नष्ट हो जावे, तब एक सहस्र जप कर ब्राह्मण भोजन करावे । क्योंकि ब्राह्मण भोजन सभी अरिष्टों को नष्ट करने वाला कहा गया है, अथवा एकाग्रचित्त हो भक्तिपूर्वक एक-सौ आठ की संख्या में गायत्री मन्त्र का जप करे ॥ ३१-३२ ॥

**महापातकयुक्तोऽपि गायत्रीं प्रजपेद् यदि ।**
**सत्यं सत्यं महेशानि मुक्तो भवति तत्क्षणात् ॥ ३३ ॥**

**गायत्रीं स्वोपास्यगायत्रीम् ।**

यदि महापातक युक्त भी पुरुष गायत्री का जप करे तो, हे महेशानि! यह सत्य है त्रि:सत्य है कि वह उस पाप से तत्क्षण मुक्त हो जाता है ॥ ३३ ॥

**ततोऽपरां नवां मालां तज्जातीयां वरानने ।**
**गृह्णीयात् तत्कृते चैवं न विघ्नैरभिभूयते ॥ ३४ ॥**

यहाँ गायत्री का अर्थ स्वोपास्य गायत्री कहा गया है—हे वरानने! तदनन्तर दूसरी नई माला जो उसी जाति की हो धारण करे। इतना कर लेने पर वह विघ्नों से अभिभूत नहीं होता ॥ ३४ ॥

**अथवा—**

**छिन्ना भवति चेन्माला हस्ताद् वा पतिता तथा ।**
**प्रतिष्ठां पूर्ववत् कृत्त्वा पुनर्मन्त्रं जपेत् सुधीः ॥ ३५ ॥**

अथवा यदि माला हाथ से छिन्न-भिन्न हो जावे, अथवा स्वयं गिर जावे तब सुधी साधक पुन: माला की प्रतिष्ठा कर पुन: उस पर जप करे ॥ ३५ ॥

**अथ श्रीगुरुक्रोधे प्रायश्चित्तम्—**

**शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ।**
**उपवासं गुरुक्रोधे कृत्त्वा तं तु प्रसादयेत् ॥ ३६ ॥**
**यावत् प्रसत्तिं नायाति न तावद् भोजनं चरेत् ।**
**गुरौ प्रसन्ने भुञ्जीत एवं दोषो न विद्यते ॥ ३७ ॥**

अब गुरु के क्रुद्ध होने पर गुरु रक्षा कर सकते हैं किन्तु गुरु के रुष्ट होने पर कोई रक्षा नहीं कर सकता। अत: उपवास कर गुरु को प्रसन्न करना चाहिए। जब तक गुरु प्रसन्न नहीं होते तब तक भोजन न करे। गुरु के प्रसन्न हो जाने पर भोजन करे। ऐसा करने से दोष नहीं लगता ॥ ३६-३७ ॥

**अथ अनिवेदितभोजन-प्रायश्चित्तं मत्स्यसूक्ते—**

**अनिवेद्य न भुञ्जीत यदाहाराय कल्प्यते ।**

भगवान् के निवेदन किये बिना भोजन का प्रायश्चित्त मत्स्य सूक्त के अनुसार कहते हैं—आहार के लिये जो कुछ भी बनाया गया है उसे बिना निवेदन किये भोजन न करे ॥ ३८ ॥

**यामले—**

**अनिवेद्य महेशानि भुञ्जानः पातकी भवेत् ।**
**यत् यदा भक्ष्यते भक्ष्यं तत्तदैव प्रदापयेत् ॥ ३८ ॥**
**अनिवेद्य तु भुञ्जीत प्रायश्चित्तीभवेन्नरः ।**

**फलं पुष्पं तु ताम्बूलमन्नपानादिकं च यत् ॥ ३९ ॥**
**अनिवेद्य न भोक्तव्यमापत्कालेऽपि पार्वति ।**
**भुक्त्वाष्टशतमूलं तु जप्त्वा पूतो भवेन्नरः ॥ ४० ॥**

जैसा कि यामल ग्रन्थ में भी बतलाया गया है—हे महेशानि! भगवान् को बिना निवेदन किये हुये भोजन कर लेने पर पापी होता है । जिस समय जो जो भक्ष्य भक्षण करना हो, उस समय वह वस्तु भगवान् को अवश्य निवेदन करे । यदि बिना निवेदन किये ही मनुष्य भोजन कर लेता है तो उसका प्रायश्चित्त आवश्यक हो जाता है । इसलिए फल, पुष्प, ताम्बूल, अन्न-पानादि वस्तु जात बिना भगवदर्पण किये भोजन कर लेवे तो मूल मन्त्र का एक-सौ आठ बार जप करने पर ही मनुष्य शुद्ध हो पाता है ॥ ३८-४० ॥

**यो यद् देवार्चनरतः स तन्नैवेद्यभक्षकः ।**
**शिवदत्तं विष्णुदत्तं गिरिजादत्तमेव वा ।**
**प्राप्तमात्रेण भोक्तव्यमन्यथा पातकी भवेत् ॥ ४१ ॥**

जो जिस देवता का अर्चक है वह उस देवता के नैवेद्य का भी भक्षक होता है । शिव निवेदित, विष्णु निवेदित एवं शक्ति निवेदिन प्रसाद प्राप्त होते ही भोजन कर लेना चाहिए । अन्यथा पातकी होना पड़ता है ॥ ४१ ॥

**अग्निपुराणेऽपि—**

**शिवदत्तं विष्णुदत्तं गिरिजादत्तमेव वा ।**
**नैवेद्यमुदरे कृत्वा नरः सायुज्यमाप्नुयात् ॥ ४२ ॥**

अग्निपुराण में भी बतलाया गया है—शिव को निवेदन किया गया, विष्णु को निवेदन किया गया, अथवा शक्ति को निवेदन किया गया नैवेद्य उदरस्थ कर लेने पर मनुष्य सायुज्य प्राप्त कर लेता है ॥ ४२ ॥

**स्कन्दपुराणे—**

**बाणलिङ्गे स्वयम्भूते स्फाटिके हृदि संस्थिते ।**
**अत्र शतक्रतोः पुण्यं शम्भोर्नैवेद्यभक्षणात् ॥ ४३ ॥**

स्कन्दपुराण में भी बतलाया गया है—बाणलिङ्ग, स्वयम्भूत लिङ्ग, स्फटिक लिङ्ग तथा हृदय में रहने वाले शिवलिङ्ग के नैवेद्य भक्षण से सैकड़ों यज्ञ का फल प्राप्त होता है ॥ ४३ ॥

**आदित्यपुराणे—**

**निर्माल्यं धारयेद् यस्तु शिरसा पार्वतीपतेः ।**
**स राजसूययज्ञस्य फलमाप्नोत्यनुत्तमम् ॥ ४४ ॥ इति ।**

आदित्यपुराण में भी कहा गया है—जो पार्वती पति का निर्माल्य धारण करता है वह सर्वश्रेष्ठ राजसूय यज्ञ का फल प्राप्त करता है ॥ ४४ ॥

**अथ वैष्णवविषये गौतमीये—**

**शालग्रामशिलातोयमपीत्वा यस्तु मस्तके ।**
**प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते ॥ ४५ ॥**
**विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम् ।**
**तदेवाष्टगुणं पापं भूमौ बिन्दुनिपातनात् ॥ ४६ ॥**
**विष्णुपादोदकात् पूर्वं विप्रपादोदकं पिबेत् ।**
**विरुद्धमाचरन् मोहादात्महा स निगद्यते ॥ ४७ ॥**

अब वैष्णव विषय में गौतमीयतन्त्र में भी बतलाया गया है—जो शालिग्राम का चरणामृत बिना पान किये ही शिर पर छिड़क लेता है वह ब्रह्म हत्यारा है । करोड़ों जन्मों के पापों को नष्ट करने वाला विष्णु का चरणामृत है । उसे पान अवश्य करे । उस चरणामृत का यदि एक भी बिन्दु पृथ्वी पर गिर जाय तो उसका आठ गुना पाप लगता है । विष्णुपादोदक पान करने से पहले विप्रपादोदक पान करना चाहिये । मोहवश जो इसके विरुद्ध आचरण करता है वह आत्मघाती होता है ॥ ४५-४७ ॥

**पृथिव्यां यानि तीर्थानि तानि तीर्थानि सागरे ।**
**स सागराणि तीर्थानि पादे विप्रस्य दक्षिणे ॥ ४८ ॥**

पृथ्वी में जितने तीर्थ हैं, उतने तीर्थ समुद्र में हैं । वही सागर समेत समस्त तीर्थ ब्राह्मण के दाहिने पैर में निवास करते हैं ॥ ४८ ॥

**वासिष्ठे—**

**केशवाग्रे नृत्यगीतं न करोति हरेर्दिने ।**
**वह्निना किं न दग्धोऽसौ गतः किं न रसातलम्॥ ४९ ॥**

वशिष्ठ स्मृति में भी बतलाया गया है—जो द्वादशी के दिन भगवान् विष्णु के आगे नृत्य गीत नहीं करता वह अग्नि में जल क्यों नहीं गया? पाताल में क्यों नहीं चला गया ॥ ४९ ॥

**अगस्त्यसंहितायाम्—**

**हत्यां हन्ति यदंघ्रिजापि तुलसी स्तेयं च तोयं पदे**
**नैवेद्यं बहुमद्यपानजनितं गुर्वंगनासङ्गजम् ।**
**श्रीशाधीनमतिस्थितिर्हरिजनैस्तत्सङ्गजं किल्विषं**
**शालग्रामशिलानृसिंहमहिमा कोप्येष लोकोत्तरः ॥ ५० ॥**

अगस्त्यसंहिता में भी बतलाया गया है—जिन भगवान् के चरणों पर चढ़ाई गई तुलसी ब्रह्महत्या नष्ट कर देती है, जिनका चरणोदक चोरी जैसे पाप को नष्ट कर देता है, जिनको निवेदित नैवेद्य अत्यन्त मद्यपान जनित एवं गुर्वङ्गना गमन जैसे महापापों को नष्ट कर देता है। भगवान् में श्रद्धा रखने वाले भगवद् भक्तों का सत्सङ्ग मद्यपादि महापातकियों से संसर्ग रखने वाले भी पाप नष्ट कर देता है। इस प्रकार शालग्राम शिला एवं श्रीनृसिंह की महिमा अनिर्वचनीय है ॥ ५० ॥

**शालग्रामचिन्हं कथनं तत्रैव विष्णुधर्मोत्तरेऽपि—शिव वाक्यम्—**

**कुत्र वासश्च ते विष्णो किमाधारः किमाश्रयः।**
**कुत्र सम्पूजितोऽभीष्टं भक्तानां त्वं प्रदास्यसि ॥ ५१ ॥**

अब शालग्राम में होने वाले चिह्नों को विष्णुधर्मोत्तर पुराण के अनुसार कहते हैं। भगवान् शङ्कर ने पूछा—हे विष्णो! आपका निवास कहाँ है? आपका आधार क्या है? आपका आश्रय क्या है? कहाँ सम्पूजित होने पर आप अपने भक्तों को अभीष्ट प्रदान करते हैं? ॥ ५१ ॥

**विष्णोरुत्तरम्—**

**निवसामि सदा शम्भो शालग्रामशिलान्तरे।**
**तत्रैव मे सुचिह्नानि तन्नामानि च संश्रृणु ॥ ५२ ॥**
**द्वारदेशे समे चक्रे दृश्यते नान्तरं यदि।**
**वासुदेवः स विज्ञेयः शुक्लश्चैवातिशोभनः ॥ ५३ ॥**
**सुषिरं छिद्रबाहुल्यं दीर्घाकारं तु तद् भवेत्।**
**अनिरुद्धस्तु पीताभो वर्तुलश्चातिशोभनः ॥ ५४ ॥**
**रेखात्रयाङ्कितो द्वारि पद्मेनापि विचिह्नितः।**
**श्यामो नारायणो देवो नाभिचक्रे तथोत्तमे ॥ ५५ ॥**
**दीर्घरेखासमीपे तु दक्षिणे सुषिरान्वितः।**
**ऊर्ध्वं मुखं विजानीयात् सुषिरं हरिरूपिणम् ॥ ५६ ॥**

विष्णु ने उत्तर दिया—हे शम्भो! मैं सर्वदा शालग्राम शिला में निवास करता हूँ। उसमें हमारे निवास का चिह्न और उस चिह्न के अनुसार मेरा नाम सुनिए। यदि समतल चक्र के द्वार देश में कोई अन्तर न दिखलाई पड़े तो, और वह शोभायुक्त शुक्ल वर्ण का दिखलाई पड़े तो, उसे **वासुदेव** नामक चक्र समझे। जो सुषिर छिद्रबाहुल्य हो, आकार में बड़ा हो, वर्ण से पीला हो और अत्यन्त सुन्दर गोल हो, तब उसे **अनिरुद्ध** नाम वाला समझना चाहिए। जिसके द्वार पर तीन रेखा हो, कमल का चिह्न हो, सर्वोत्तम नाभिचक्र में श्याम वर्ण दिखलाई पड़े, तब उसे **नारायण** देव समझना चाहिये। जिसके दक्षिण में होने वाली रेखा

के समीप सुषिर चिह्न हो, मुख ऊपर हो, तब उस सुषिर चिह्न वाली शिला को **हरि** समझना चाहिए ॥ ५२-५६ ॥

**कामदं मोक्षदं चैव अर्थदं च विशेषतः ।**
**परमेष्ठी च शुक्लाभः पद्मचक्रसमन्वितः ॥ ५७ ॥**
**किं वाऽऽकृतिस्तथा पृष्ठे सुचिरं चातिपुष्कलम् ।**
**कृष्णवर्णस्तथा विष्णुर्मूले चक्रे च शोभने ॥ ५८ ॥**
**द्वारोपरि तथा रेखा दृश्यते मध्यदेशतः ।**
**कपिलो नरसिंहस्तु पृथक् चक्रेण शोभितः ॥ ५९ ॥**
**ब्रह्मचर्येण पूज्योऽसावन्येषां विघ्नदो भवेत् ।**
**वराहशक्तिलिङ्गस्तु चक्रं च विषमं स्मृतम् ॥ ६० ॥**
**इन्द्रनीलनिभं स्थूलं त्रिरेखान्वितमुत्तमम् ।**
**दीर्घकाञ्चनवर्णाभा बिन्दुत्रयविभूषिता ॥ ६१ ॥**
**मत्स्यनाम्नी शिला ज्ञेया भुक्तिमुक्तिफलप्रदा ।**

जो पद्मचक्र समन्वित हो, जिसकी आभा शुक्ल वर्ण की हो, वह **परमेष्ठी** है जो कामद एवं मोक्षद विशेष रूप से अर्थ प्रदान करने वाला है । उसके आकृति के विषय में क्या कहें जो बहुकालीन और अत्यन्त बड़ा हो? जिसके पृष्ठ देश में तथा मनोहर चक्र के मूल में काला वर्ण हो, उसे **विष्णु** समझना चाहिये । जिसके मध्य देश से लेकर द्वार के ऊपर तक रेखा हो, वर्ण कपिल हो, वह **नरसिंह** हैं। जो सबसे पृथक् चक्र में शोभित रहता है उसे ब्रह्मचर्यपूर्वक पूजन करे । अन्यों के द्वारा पूजन करने से वह विघ्नकारक होता है वाराह और शक्ति का चिह्न एवं चक्र विषम कहा गया है । जिसका वर्ण इन्द्रनील के समान हो एवं स्थूल हो, जिसमें तीन रेखा हो, वह उत्तम **वाराह** चक्र है । लम्बी सुवर्ण की रेखा के समान आभा वाली, बिन्दुत्रय से विभूषित को **मत्स्य** नाम वाली शिला समझनी चाहिये जो भोग और मोक्ष दोनों प्रदान करने वाली है ॥ ५७-६२ ॥

**कूर्मस्तथोन्नतः पृष्ठे वर्त्तुलावर्तभूषितः ॥ ६२ ॥**
**हरितं वर्णमाधत्ते कौस्तुभेन तु चिह्नितः ।**
**हयग्रीवो हयाकारो रेखात्रयविभूषितः ॥ ६३ ॥**
**बहुबिन्दुसमाकीर्णः पृष्ठे नीलाभभूषितः ।**
**तद् वैकुण्ठाधिपो नाम चक्रमेकं तथा ध्वजम् ॥ ६४ ॥**

जिसकी पीठ ऊँची हो, जो गोले आकार वाला हो, वर्ण से हरा हो और कौस्तुभ का चिह्न हो, वह **कूर्म** चक्र है । **हयग्रीव** चक्र वह है जिसका आकार घोड़े के समान हो । जो तीन रेखा से विभूषित हो, जिसमें बहुत से बिन्दु

दिखलाई पड़े एवं पृष्ठ भाग में नील वर्ण का चिह्न हो तथा एक ध्वज हो, वह **बैकुण्ठ** नाम वाला चक्र है ॥ ६२-६४ ॥

**द्वारोपरि तथा रेखा गुञ्जाकारा सुशोभना ।**
**श्रीधरस्तु तथा देवश्चिह्नितो वनमालया ॥ ६५ ॥**
**कदम्बकुसुमाकारो रेखापञ्चविभूषितः ।**
**वर्तुलश्चातिह्रस्वश्च वामनः परिकीर्तितः ॥ ६६ ॥**
**अतसीकुसुमप्रख्यो विन्दुना परिशोभितः ।**
**सुदर्शनस्ततो देवः श्यामवर्णो महाद्युतिः ।**
**वामपार्श्वे गदाचक्रे रेखैका दक्षिणे तथा ॥ ६७ ॥**

जिसके द्वारभाग में रेखा हो, अत्यन्त मनोहर गुञ्जा के समान जिसका आकार हो और जिसमें वनमाला का चिह्न हो, वह चक्र **श्रीधर** नाम वाला है । कदम्ब पुष्प के समान जिसका आकार हो, जो पाँच रेखाओं से विभूषित हो और जो गोलाकार किन्तु अत्यन्त छोटा हो, वह **वामन** चक्र कहा जाता है । जो तीसी के फूल के समान बिन्दु से परिभूषित हो, वर्ण से श्याम हो और अत्यन्त चमकीला हो वह **सुदर्शन** चक्र है ॥ ६५-६७ ॥

**दामोदरस्तथा स्थूलो मध्ये चक्रविभूषितः ।**
**दूर्वाभं द्वारि सम्पूर्णं पीतरेखं तथा स्मृतम् ॥ ६८ ॥**
**नानावर्णो ह्यनन्तः स्यान्नानाचिह्नेन चिह्नितः ।**
**अनेकमूर्तिसम्भिन्नः सर्वकामफलप्रदः ॥ ६९ ॥**
**दृश्यते शिखरे लिङ्गं शालग्रामशिलाभवम् ।**
**सः स्याद् योगेश्वरो देवो ब्रह्महत्यां व्यपोहति ॥ ७० ॥**
**अतिरक्तः पद्मनाभः पद्मचक्रसमन्वितः ।**
**आपद्गतमपि कुर्यादीश्वरं दुःखवर्जितम् ॥ ७१ ॥**

जिस चक्र के वामपार्श्व में गदा हो एवं दक्षिण पार्श्व में एक रेखा हो, जो स्थूल हो और मध्य में चक्र से विभूषित हो, वह **दामोदर** कहा जाता है । जिसका द्वार दूर्वा की आभा वाला हो और शेष सम्पूर्ण भाग में पीत वर्ण की रेखा हो, इस प्रकार के नाना चिह्नों से समन्वित नाना वर्ण वाले चक्र **अनन्त** कहे जाते हैं । अनेक मूर्त्तियों से भिन्न भेद वाले, सभी कामनाओं को पूर्ण करने वाले, जिनके शिर पर शालग्राम शिला से उत्पन्न लिङ्ग हो, वे **योगेश्वर** कहे जाते हैं और ब्रह्महत्या जैसे पाप का विनाश करते हैं । इनके अतिरिक्त पद्मचक्र से समन्वित **पद्मनाभ** चक्र है जो आपत्ति में प्राप्त अपने भक्त को दुःखरहित बनाकर ऐश्वर्य समन्वित ईश्वर बना देते हैं ॥ ६८-७१ ॥

**वक्राकृतिं हिरण्याङ्कं स्वर्णगर्भं विनिर्दिशेत् ।**
**सुवणरिखा बहुलं स्फटिकद्युतिभूषितम् ॥ ७२ ॥**

वे शालग्राम वक्राकृति हिरण्य चिह्न से युक्त, स्वर्ण गर्भ एवं अनेक सुवर्ण रेखा वाले तथा स्फटिक मणि के समान कान्तिमान् कहे गये हैं ॥ ७२ ॥

**अतिस्निग्धा सिद्धिकरी शिला कीर्तिं ददाति च।**
**पाण्डुरा पापहरिणी पीता पुत्रफलप्रदा ॥ ७३ ॥**
**नीला प्रयच्छती लक्ष्मीं रक्ता रोगप्रदायिनी ।**
**रूक्षोद्वेगकरी नित्यं वक्रा दारिद्र्यकारिणी ॥ ७४ ॥**

जो शालग्राम शिला अत्यन्त चिकनी हो, वह सिद्धिकरी होती है और कीर्त्ति प्रदान करती है । पाण्डुरा (पीत श्वेत मिश्रित) शिला पापहारिणी होती है । पीता शालग्राम शिला पुत्र रूप फल प्रदान करती है । नील वर्ण की शिला लक्ष्मी प्रदान करती है । रक्त वर्ण वाली शिला रोग प्रदान करती है और रूक्षा शिला उद्वेगकारिणी होती है तथा वक्रा शिला दारिद्र्यकारिणी होती है ॥ ७३-७४ ॥

**सुदर्शनमेकचक्रं लक्ष्मीनारायणद्वयम् ।**
**त्रितयं चाच्युतं ज्ञेयं चतुश्चक्रं जनार्दनम् ॥ ७५ ॥**
**पञ्चचक्रं वासुदेवं षट्कं प्रद्युम्नसञ्ज्ञकम् ।**
**सङ्कर्षणं सप्तचक्रं अष्टयुक् पुरुषोत्तमम् ॥ ७६ ॥**
**अक्रूरं नवसंयुक्तं दशयुक्तं दशात्मकम् ।**
**एकादशं चानिरुद्धं द्वादशं द्वादशात्मकम् ।**
**चक्रसंख्याविभेदेन भिन्नं द्वादशरूपकम् ॥ ७७ ॥ इति ।**

एक चक्र सुदर्शन, दो चक्र लक्ष्मीनारायण, तीन चक्र अच्युत, चार चक्र जनार्दन, पाँच चक्र वासुदेव, छह चक्र प्रद्युम्न सञ्ज्ञक, सात चक्र सङ्कर्षण, आठ चक्र पुरुषोत्तम, नव संयुक्त चक्र अक्रूर, दश चक्र दशात्मक, एकादश चक्र अनिरुद्ध और द्वादश चक्र द्वादशात्मक कहे जाते हैं । इस प्रकार चक्रो के संख्या भेद से भिन्न द्वादश रूपों को कहा ॥ ७५-७७ ॥

### वैष्णवानांद्वादशशुद्धिकथनम्

**अथ द्वादशशुद्धिस्तु वैष्णवानामिहोच्यते ।**
**गृहोपसर्पणं चैव तथानुगमनं हरेः ॥ ७८ ॥**
**भक्त्या प्रदक्षिणं चैव पादयोः शोधनं पुनः ।**
**पूजार्थं पत्रपुष्पाणां भक्तेन त्रोटनं हरेः ॥ ७९ ॥**
**करयोः सर्वशुद्धीनामियं शुद्धिर्विशिष्यते ।**

**तन्नामकीर्तनं चैव गुणानामथ कीर्तनम् ॥ ८० ॥**
**भक्त्या श्रीकृष्णदेवस्य वचसः शुद्धिरिष्यते ।**
**तत्कथाश्रवणं चैव तस्योत्सवनिरूपणम् ॥ ८१ ॥**
**श्रोत्रयोर्नेत्रयोश्चैव शुद्धिः सम्यगिहोच्यते ।**
**पादोदकं च निर्माल्यं मालानामपि धारणम् ॥ ८२ ॥**
**उच्यते शिरसः शुद्धिः पुंसस्तस्य हरेः पुनः ।**
**आघ्राणं गन्धपुष्पादेर्निर्माल्यस्य तपोधन ॥ ८३ ॥**
**विशुद्धिः स्यादनन्तस्य घ्राणस्यापि विधीयते ।**
**पत्रपुष्पादिकं यच्च कृष्णपादयुगार्पितम् ।**
**तदेकं पावनं लोके तद्धि सर्वं विशोधयेत् ॥ ८४ ॥**

अब वैष्णवों के द्वादश शुद्धि को कहते हैं—(१-५) भगवान् के मन्दिर में जाना, भगवान् का अनुगमन करना, भक्तिपूर्वक प्रदक्षिणा करना, भगवान् का चरण प्रक्षालन, भगवान् की पूजा के लिये भक्ति से पत्र पुष्पों को तोड़ना, इस प्रकार सभी शुद्धियों में दोनों हाथ की शुद्धि विशिष्ट है । (६-७) भगवान् के नाम का सङ्कीर्त्तन और भगवान् के गुणों का कीर्त्तन, यह वचन की शुद्धि कही गई । (८-९) भगवत्कथा श्रवण, उनके उत्सव का निरूपण, यह दोनों कानों तथा दोनों नेत्रों की शुद्धि कही गई । (१०-११) चरणोदक लेना, निर्माल्य और माला रूप प्रसाद धारण करना, यहाँ तक पुरुष के शिर की शुद्धि कही गई । (१२) पुनः भगवान् को चढ़ाये गये गन्ध-पुष्पादि का आघ्राण—यह घ्राणशुद्धि कही गई । पत्र-पुष्पादि जो श्रीकृष्ण के चरणों में अर्पित हो, उसका ग्रहण करना मात्र एक यह ही सबसे पवित्र है जो सभी इन्द्रियों को पवित्र कर देता है ॥ ७८-८४ ॥

**तुलसीग्रहणे विशेषः—**

**वैधृतौ च व्यतीपाते भौमभार्गवभानुषु ।**
**पर्वद्वये च संक्रान्तौ द्वादश्यां सूतकद्वये ॥ ८५ ॥**
**तुलसीं ये विचिन्विन्ति ते छिन्दन्ति हरेः शिरः ।**
**नैव छिंद्याद् रवौ दूर्वां तुलसीं निशि सन्ध्ययोः ॥ ८६ ॥**
**धात्रीपत्रं कार्तिके च पुण्यार्थी मतिमान्नरः ।**

अब तुलसी ग्रहण में विशेष कहते हैं—वैधृति, व्यतीपात योग, मङ्गल, शुक्रवार और रविवार दिन, अमावास्या, पौर्णमासी दोनों, पर्व सङ्क्रान्ति, द्वादशी, मरणाशौच, सूतकाशौच—इन दिनों में जो तुलसी पत्र तोड़ता है वह भगवान् का शिर काटता है, ऐसा समझे । रविवार को दूर्वाच्छेदन न करे और रात्रि में तथा दोनों सन्ध्याओं में तुलसी न तोड़े । कार्त्तिक के महीने में आमलकच्छेदन न करे । अतः मतिमान् साधक इतना कार्य वर्जित करे ॥ ८५-८७ ॥

**द्वादश्यां तु दिवास्वापस्तुलस्यावचयस्तथा ।**
**विष्णोश्चैव दिवास्नानं वर्जनीयं सदा बुधैः ॥ ८७ ॥**

द्वादशी को दिन में शयन, तुलसी अवचय और विष्णु को दिन में स्नान कराना; बुद्धिमान् साधक इतना कार्य वर्जित करे ॥ ८७ ॥

**अथ वैष्णवतिलके विशेषः ब्रह्माण्डपुराणे, गौतमीये च—**

**ऊर्ध्वपुण्ड्रमृजुं सौम्यं ललाटे यस्य दृश्यते ।**
**स चाण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः ॥ ८८ ॥**
**अशुचिश्चाप्यनाचारो मानसं पापमाचरेत् ।**
**शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्राङ्कितो नरः ॥ ८९ ॥**
**मत्प्रियार्थं शुभार्थं वा रक्षार्थं चतुरानन ।**
**मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रमतन्द्रितः ॥ ९० ॥**
**ललाटे च गदा कार्या मूर्ध्नि चापं शरांस्तथा ।**
**नन्दकं चैव हृन्मध्ये शङ्खं चक्रं भुजद्वये ॥ ९१ ॥**
**शङ्खचक्राङ्कितो विप्रः श्मशाने म्रियते यदि ।**
**प्रयागे या गतिः प्रोक्ता सा गतिस्तस्य नारद ॥ ९२ ॥ इति ।**

**तदङ्कनं तु गोपीचन्दनादिना न तु तप्ताङ्कनं, तत्कृते महद्विरोधापत्तिः ।**

अब वैष्णव तिलक की ब्रह्माण्डपुराण तथा गौतमीयतन्त्र के अनुसार विशेषता कह रहे हैं—जिसके ललाट में अत्यन्त सौम्य तथा ऋजु ऊर्ध्व पुण्ड्राङ्कित है, तब उसे शुचि ही समझना चाहिये । अतः हे चतुरानन! मेरा भक्त मुझे प्रसन्न करने के लिये आलस्यरहित होकर ऊर्ध्वपुण्ड्र धारण करे । ललाट में गदा का चिह्न, शिर में धनुष बाण का चिह्न, हृदय में नन्दक नामक तलवार का चिह्न, दोनों भुजाओं में शङ्ख चक्र का चिह्न अवश्य धारण करे । शङ्ख चक्र से अङ्कित ब्राह्मण यदि श्मशान में मर जावे तो, हे नारद! प्रयाग में मरने वाले की जो गति होती है वही गति उसे भी प्राप्त होती है ॥ ८८-९२ ॥

वह अङ्कन गोपी चन्दन से करे तप्ताङ्कन तो महाविरोधकारक है ।

**अथ शैव-विषये, भविष्ये—**

**बाणलिङ्गानि राजेन्द्र रम्याणि भुवनत्रये ।**
**तेनैव च कृतार्थः स्याद् बहुभिः किमु सुव्रत ॥ ९३ ॥**
**न प्रतिष्ठा न संस्कारस्तेषामावाहनं तथा ।**
**बाणलिङ्गेषु चण्डांशोर्न हि निर्माल्यकल्पना ॥ ९४ ॥**
**सर्वं बाणार्पितं ग्राह्यं भक्त्या भक्तैरनन्यया ।**

**बाणलिङ्गे स्वयम्भूते चन्द्रकान्ते हृदि स्थिते ।**
**चान्द्रायणशतं ज्ञेयं शम्भोर्नैवेद्यभक्षणात् ॥ ९५ ॥**

अब शैवों के विषय में भविष्यपुराण में भी बतलाया गया है—तीनों लोकों में बाणलिङ्ग सर्वापेक्षया सृष्ट हैं और रम्य है । मात्र केवल उस एक से ही शैव कृतार्थ हो जाता है । हे सुव्रत! बहुत लिङ्गो से क्या? बाणलिङ्ग में प्रतिष्ठा की आवश्यकता नहीं है; न संस्कार की और न आवाहन की आवश्यकता होती है । बाणलिङ्ग में चण्ड का अंश नहीं होता और न निर्माल्य की ही कल्पना है । भक्त अनन्य भक्ति से बाणलिङ्ग का चरणामृत प्रसादादि सब कुछ ग्रहण करे । बाणलिङ्ग में जो-जो बातें कही गई हैं, वही बात स्वयम्भू लिङ्ग में, चन्द्रकान्त लिङ्ग में और हृदयस्थित लिङ्ग में जाननी चाहिये । बाणलिङ्ग के नैवेद्य भक्षण से सौ चान्द्रायण व्रत का फल होता है ॥ ९३-९५ ॥

**तथा च हेमाद्रौ कालोत्तरे—**

**नर्मदायां देविकायां गङ्गायां मुनिसेवित ।**
**सन्त्यसंख्यानि पुण्यानि लिङ्गानि च षडानन ॥ ९६ ॥**
**इन्द्रादिदेवपूज्यानि तच्चिह्नैश्चिह्नितानि च ।**
**सदा सन्निहितस्तत्र शिवः सर्वार्थसाधकः ॥ ९७ ॥**
**पक्वजम्बूफलाकारं कुक्कुटाण्डसमाकृतिम् ।**
**भुक्तिमुक्तिप्रदं चैव बाणलिङ्गमुदाहृतम् ॥ ९८ ॥**
**कर्षके बाणलिङ्गे तु पुत्रदाराक्षयो भवेत् ।**
**चर्पटे पूजिते बाणे गृहभङ्गो भवेद् ध्रुवम् ।**
**लिङ्गे कलिकया युक्ते व्याधिमान् पूजको भवेत् ॥ ९९ ॥**
**अर्च्यं स्यात्कापिलं लिङ्गं मुनिभिर्मोक्षकाङ्क्षिभिः ।**
**लघुं वा कपिलं स्थूलं गृहस्थो नार्चयेत् क्वचित् ॥ १०० ॥**
**तीक्ष्णाग्रं वक्रशीर्षं च बाणलिङ्गं विवर्जयेत् ।**
**अतिस्थूलं चातिकृशं स्वल्पं वा भूषणान्वितम् ॥ १०१ ॥**
**गृही विवर्जयेद् यत्नाद् भुक्तिमुक्त्यर्थकामुकः ।**
**पूजितव्यं गृहस्थेन बाणं च भ्रमरोपमम् ॥ १०२ ॥**
**तत्रापि शिवपीठं स्यान्मन्त्रसंस्कारवर्जितम् ।**
**भुक्तिमुक्तिप्रदं बाणं सर्ववर्णोत्तमोत्तमम् ॥ १०३ ॥**

हेमाद्रि के कालोत्तर खण्ड में भी बतलाया गया है—हे मुनिसेवित! षडानन, नर्मदा, देविका और गङ्गा में असङ्ख्य पुण्य लिङ्ग प्राप्त होते हैं । वे तत्तच्चिह्नों से चिह्नित भी हैं और इन्द्रादि देवताओं से पूजित भी हैं । उसमें सर्वार्थसाधक

सदाशिव का निवास भी है । उन सब में पके हुये जामुन के फल के आकार तथा कुक्कुट के अण्डे के समान आकृति वाले भोग एवं मोक्षप्रद बाणलिङ्ग सर्वापेक्षया श्रेष्ठ हैं । यदि बाणलिङ्ग अत्यन्त दुबले पतले कृश हों तो उनके पूजन से पुत्र और स्त्री का नाश होता है । चिपटे बाणलिङ्ग के पूजन से घर का विनाश होता है। यह निश्चित है; कली से युक्त लिङ्ग के पूजन से पुजारी रोगी होता है । अतः मोक्ष की इच्छा रखने वाले मुनियों द्वारा कपिल वर्ण के लिङ्ग अर्चनीय हैं । गृहस्थ अत्यन्त छोटे अथवा कपिल वर्ण के अथवा अत्यन्त स्थूल वर्ण के बाणलिङ्ग की पूजा न करे । जिनका अग्रभाग तीक्ष्ण (तीखा नुकीला) हो, जिनका शिरोभाग वक्र हो, ऐसे बाणलिङ्ग की पूजा गृहस्थ न करे । अत्यन्त स्थूल, अत्यन्त कृश, स्वल्प भूषण भूषित, बाणलिङ्ग की पूजा भुक्ति-मुक्ति और अर्थ चाहने वाला गृहस्थ वर्जित करे । जो भौरे के समान हों, ऐसे बाणलिङ्ग की पूजा गृहस्थ करे । यदि उसमें शिव पीठ हो, ऐसा सर्ववर्णोत्तमोत्तम बाणलिङ्ग भोग और मोक्ष प्रदान करता है। अतः मन्त्र संस्कार से वर्जित भी उनकी पूजा करनी चाहिये ॥ ९६-१०३ ॥

**लिङ्गम्परीक्षा सूतसंहितायाम्—**

**सप्तकृत्त्वस्तुलारूढो वृद्धिमेति न हीयते ।**
**बाणलिङ्गं तदाख्यातं शेषं नार्मदमुच्यते ॥ १०४ ॥**
**त्रिपञ्चवारं यस्यैव तुलासाम्यं न विद्यते ।**
**तदा बाणं समाख्यातं शेषं पाषाणसम्भवम् ॥ १०५ ॥**
**नद्यां वा प्रक्षिपेद् भूयो यदा तदुपलभ्यते ।**
**बाणलिङ्गं तदा विद्धि चतुर्वर्गफलप्रदम् ॥ १०६ ॥**

अब सूत संहिता के अनुसार बाणलिङ्ग की परीक्षा कहते हैं—सात बार तौले जाने पर भी जो बढ़ते ही हैं, घटते नहीं हैं वे बाणलिङ्ग कहे जाते हैं । शेष नार्मद लिङ्ग कहे जाते हैं । तुला पर तीन या सात बार तौले जाने पर भी जो समान न होकर अधिक रहते हैं तब उन्हें बाणलिङ्ग कहा जाता है, शेष पाषाण सम्भव है। यदि ऐसे पाषाण लिङ्ग प्राप्त हो जावें तो उन्हें पुनः नदी में प्रक्षिप्त कर देवे । यह बाणलिङ्ग धर्म, अर्थ, काम और मोक्ष चारों पदार्थों को देने वाला बतलाया गया है। अतः उन्हीं की पूजा करे ॥ १०४-१०६ ॥

**केदारखण्डे—**

**रत्नलिङ्गं ततः स्थाप्यं बाणात् कोटिगुणं च यत्।**
**सिद्धयो रत्नलिङ्गेषु अणिमाद्याः सुसंस्थिताः ॥ १०७ ॥**
**रत्नधातुमयान्येव लिङ्गानि कथितान्यपि ।**
**प्रशस्तान्येव पूज्यानि सर्वकामप्रदानि च ।**
**एतेषामपि सर्वेषां काश्मीरश्च विशिष्यते ॥ १०८ ॥**

**काश्मीरादिषु लिङ्गेषु बाणलिङ्गं विशिष्यते ।**

केदारखण्ड में भी बतलाया गया है—बाणलिङ्ग की अपेक्षा जो करोड़ों गुणा फल देने वाले हैं ऐसे रत्नलिङ्ग की ही स्थापना करे । क्योंकि रत्नलिङ्ग में अणिमादि सिद्धियों का निवास रहता है । रत्नधातुमय लिङ्ग प्रशस्त हैं, पूज्य हैं और सर्वकामप्रद हैं; यह बात हम कह आये हैं । इन सभी लिङ्गों की अपेक्षा काश्मीर लिङ्ग विशिष्ट हैं ॥ १०७-१०८ ॥

काश्मीरादि लिङ्ग की अपेक्षा भी बाणलिङ्ग विशिष्ट हैं ।

**बाणलिङ्गात् परं नान्यत् पवित्रमिह विद्यते ।**
**ऐहिकामुष्मिकं सर्वं पूजाकर्तुः प्रयच्छति ॥ १०९ ॥**

बाणलिङ्ग से बढ़कर और कोई लिङ्ग पवित्र नहीं है जो पूजा करने वाले को ऐहिक आमुष्मिक सभी कामनायें प्रदान करता है ॥ १०९ ॥

**लिङ्गं मस्तकं पुष्पादि शून्यं न कुर्यात्, तच्चोक्तं लिङ्गपुराणे—**

**यस्य राष्ट्रे तु लिङ्गस्य मस्तकं शून्यलक्षणम् ।**
**तस्यालक्ष्मीर्महारोगो दुर्भिक्षं वाहनक्षयः ॥ ११० ॥**
**तस्मात्परिहरेद् राजा धर्मकामार्थमुक्तये ।**
**शून्ये लिङ्गे स्वयं राजा राष्ट्रं चैव प्रणश्यति ॥ १११ ॥ इति।**

लिङ्ग को पुष्पादि से शून्य न रखे जैसा कि लिङ्गपुराण का वचन है—जिसके राज्य में लिङ्ग का मस्तक शून्य रहता है वह दरिद्र और महारोगी रहता है । उसके वाहन नष्ट हो जाते हैं और राज्य में दुर्भिक्ष होता है । इसलिये धर्म, अर्थ, काम और मोक्ष के लिये राजा लिङ्ग को शून्य न रखे क्योंकि लिङ्ग के शून्य होने पर स्वयं राजा और राष्ट्र दोनों का नाश होता है ॥ ११०-१११ ॥

**चिह्नानि यथा वायवीयसंहितायाम्—**

**मधुपिङ्गलवर्णाभं कृष्णकुण्डलसंयुतम् ।**
**स्वयम्भूलिङ्गमाख्यातं सर्वसिद्धनिषेवितम् ॥ ११२ ॥**

अब लिङ्गों का चिह्न वायवीयसंहिता के अनुसार कहते हैं—१. मधु और पिङ्गल वर्ण की आभा (कान्ति) वाले काले-काले कुण्डलों से संयुक्त मूर्त्ति को **स्वयम्भू लिङ्ग** कहा जाता है जो सभी सिद्धियों से सेवित हैं ॥ ११२ ॥

**नानावर्णसमाकीर्णं जटाशूलसमन्वितम् ।**
**नीलकण्ठं समाख्यातं लिङ्गं पूज्यं सुरासुरैः ॥ ११३ ॥**

२. अनेक वर्णों से समन्वित जटा शूल धारण किये हुये, जो देवताओं द्वारा नित्य पूजित हैं, उन्हें **नीलकण्ठ** कहा जाता है ॥ ११३ ॥

**शुक्लाभं शुक्लकेशं च नेत्रत्रयसमन्वितम् ।**
**त्रिलोचनं च तल्लिङ्गं सर्वपापनिषूदनम् ॥ ११४ ॥**
**ज्वलत्पिङ्गजटाजूटं कृष्णाभं स्थूलविग्रहम् ।**
**कालाग्निरुद्रसञ्ज्ञं तल्लिङ्गं तत्त्वनिषेवितम् ॥ ११५ ॥**

३. जिनकी कान्ति शुक्ल वर्ण की है, केश शुक्ल हैं, तीन नेत्र हैं, जो सभी पापों को नष्ट करने वाले हैं, उस लिङ्ग को **त्रिलोचन** कहा जाता है । ४. जिनका जटाजूट जलती हुई अग्नि के समान देदीप्यमान है, कान्ति काले वर्ण की है और शरीर स्थूल है, जो सभी तत्त्वों से सेवित हैं ऐसे लिङ्ग को **कालाग्निरुद्र** कहा जाता है ॥ ११४-११५ ॥

**मधुपिङ्गलवर्णाभं श्वेतयज्ञोपवीतकम् ।**
**त्रिपुरारीति विख्यातं प्रलयाग्निसमन्वितम् ॥ ११६ ॥**
**शुभ्राभं पिङ्गलजटमिन्दुमालाधरं परम् ।**
**त्रिशूलधरमीशानं लिङ्गं सर्वार्थसाधकम् ॥ ११७ ॥**

५. जिनकी कान्ति मधु के समान पिङ्गल वर्ण की है, श्वेत यज्ञोपवीत से युक्त हैं, जो प्रलयकालीन अग्नि के समान हैं, वे **त्रिपुरारि** के नाम से विख्यात हैं । ६. जिनकी आभा शुभ्र है, पिङ्गल जटा है, जो चन्द्रमा और माला एवं त्रिशूल धारण किये हुये हैं और सभी कामनाओं को पूर्ण करने वाले हैं ऐसे लिङ्ग को **ईशान** कहा जाता है ॥ ११६-११७ ॥

**त्रिशूलं डमरुं चैव शुभ्रमर्धाङ्गभागकम् ।**
**अर्धनारीश्वराख्यातं सर्वदेवैरभिष्टुतम् ॥ ११८ ॥**
**ईषद्रक्तमयं कायं शूलदीर्घसमुज्ज्वलम् ।**
**महाकालं समाख्यातं धर्मकामार्थमोक्षदम् ।**
**इति ते कथितं गुह्यं लिङ्गचिह्नं महेशितुः ॥११९॥ इति ।**

७. जो त्रिशूल एवं डमरू धारण किये हुये हैं, जिनका आधा अङ्ग शुभ्र वर्ण का है, जिनकी सभी देवता स्तुति करते हैं, उन्हें **अर्धनारीश्वर** कहा जाता है । ८. जिनका शरीर ईषद्रक्तमय है, लम्बे शूल से देदीप्यमान हैं, जो धर्म, काम, अर्थ और मोक्ष देने वाले हैं, उन्हें **महाकाल** कहा जाता है । हे देवि! इस प्रकार हमने महामहेश्वर के गुप्तलिङ्ग चिह्नों को कहा । अष्टमूर्त्ति शिवजी हैं । इसलिये यहाँ आठ रूपों का वर्णन है ॥ ११८-११९ ॥

**विना भस्म त्रिपुण्ड्रेण विना रुद्राक्षमालया ।**
**पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः ॥ १२० ॥**

भस्म का त्रिपुण्ड्र बिना लगाये, बिना रुद्राक्ष माला धारण किये, पूजित होने पर भी महादेव उस पूजा का फल प्रदान नहीं करते ॥ १२० ॥

**व्रते पाशुपते नित्यं भस्मना यस्त्रिपुण्ड्रकम् ।**
**धारयेत् सततं मर्त्यः शिव एव न चापरः ॥ १२१ ॥**
**त्रिपुण्ड्रेण विना कुर्याद् यत्किञ्चिद् वैदिकीं क्रियाम्।**
**सा निष्फला भवत्येव ब्रह्मणा च कृता यदि ॥ १२२ ॥**
**शैवो वा वैष्णवो वापि शाक्तो वा सौर एव वा ।**
**त्रिपुण्ड्रेण विना पूजां कुर्वाणो यात्यधोगतिम्।**
**सर्वे त्रिपुण्ड्रकं कुर्युर्भस्मनापि च सर्वदा ॥१२३॥ इति ।**

पाशुपत व्रत में भस्म का त्रिपुण्ड्र जो मनुष्य धारण करता है वह साक्षात् शिव हैं; मनुष्य नहीं । बिना त्रिपुण्ड धारण किये जो साधक वैदिक क्रिया करता है; भले वे ब्रह्मा ही क्यों न हों, किन्तु वह पूजा निष्फल होती है । चाहे शैव हो, चाहे वैष्णव हो, चाहे शाक्त, अथवा सौर ही क्यों न हो । त्रिपुण्ड्र के धारण के बिना शिव पूजन करे तो उस भक्त की अधोगति होती ही है । इसलिये सभी शैव भक्त भस्म से त्रिपुण्ड्र धारण करें ॥ १२१-१२३ ॥

**ईशानसंहितायाम्, वायवीये च—**

**पञ्चभूतमयं भस्म तानि ब्रह्ममयानि च ।**
**तैरेव धारयन् मर्त्यस्तस्मिन् लीयेत वै ध्रुवम् ॥ १२४ ॥**
**सद्योजाताद् भवेत् पृथ्वी वामदेवाद् भवेज्जलम्।**
**अघोराच्च भवेदग्निस्तत्पुरुषाद् वायुरुच्यते ॥ १२५ ॥**
**ईशानाद् गगनाकारं पञ्चब्रह्ममयं जगत् ।**
**शिवाग्नेर्भस्म संग्राह्यमग्निहोत्रोद्भवं तु वा ॥ १२६ ॥**
**वैवाह्याग्न्युद्भवं वापि पक्वं शुचि सुगन्धि च।**
**कपिलायाः शकृत् शस्तं गृहीतं गगने पतत् ॥ १२७ ॥**
**न क्लिन्नं नातिकठिनं न दुर्गन्धि न चोषितम्।**
**उपर्यधः परित्यज्य गृह्णीयात् पतितं यदि ॥ १२८ ॥**
**यद्वा धरामसंस्पृष्टं सद्येनानीय गोमयम् ।**
**वामेन पीड्य संशोष्य ततोऽघोरेण निर्दहेत् ॥ १२९ ॥**
**तत्पुरुषेण समुद्धृत्य चेशानेन विशोधयेत् ।**
**इत्थं तु संस्कृतं भस्म मानस्तोकेन गृह्य च ॥ १३० ॥**
**पञ्चभिर्मन्त्रयेत् तच्च अग्निरित्यादि मन्त्रतः ।**

अब ईशानसंहिता और वायवीयसंहिता में भी बतलाया गया है—यतः पञ्चभूत

ब्रह्ममय है और भस्म पञ्चभूतमय है । अत: उस पञ्चभूत से निर्मित भस्म को धारण करने वाले मनुष्य पञ्चभूत में लीन होते हैं, यह निश्चित है । १. सद्योजात से पृथ्वी, २. वामदेव मन्त्र से जल, ३. अघोर से अग्नि, ४. तत्पुरुष से वायु, ५. ईशान से गगनाकार—इस प्रकार सारा जगत् पञ्चब्रह्ममय है । यह भस्म रुद्रयज्ञ से उद्भूत, अथवा अग्निहोत्रोद्भव ग्रहण करे, अथवा वैवाह्य अग्नि से उत्पन्न हो, उसे ग्रहण करे । जो पका हो, पवित्र हो, सुगन्धियुक्त हो । भस्म के लिये कपिला का गोमय प्रशस्त कहा गया है । जो पृथ्वी पर गिरने से पहले ही आकाश में ऊपर ही लोक ले, ऐसा गोमय ग्रहण करे । जो आर्द्र न हो, अत्यन्त कठिन भी न हो, दुर्गन्ध युक्त तथा वासी न हो, यदि पृथ्वी पर गोमय गिर भी गया हो तो उसका ऊपरी भाग और अधोभाग ग्रहण न करे । इस प्रकार जिसका स्पर्श पृथ्वी से न हुआ हो, ऐसे गोमय को शीघ्र लाकर बायें हाथ से दबाकर उसे सुखावे । फिर 'अघोर' मन्त्र से उसे अग्नि में जलावे और 'तत्पुरुष' मन्त्र से निकाल कर 'ईशान' मन्त्र से शोधन करे । इस प्रकार संस्कृत भस्म को 'मानस्तोके तनये' इस मन्त्र से ग्रहण करे । फिर 'भूरिति भस्म जलमिति भस्म' इत्यादि पाँच मन्त्रों से उसे अभिमन्त्रित करे ॥ १२४-१३१ ॥

विमृज्याङ्गानि संस्पृश्य पुनरादाय मन्त्रतः ॥ १३१ ॥  
तस्माद् ब्रह्मेति यजुषा मन्त्रयेद् रुद्रसंख्यया ।  
प्रणवाद्यै चतुर्थ्यन्तैर्हृदन्तैर्नाममन्त्रकैः ॥ १३२ ॥  
तथा पञ्चाक्षराद्यैश्च ललाटादिषु धामसु ।  
ललाटे ब्रह्म विज्ञेयो हृदये हव्यवाहनः ।  
नाभौ स्कन्दो गले पूषा रुद्रो दक्षिणबाहुके ॥ १३३ ॥  
आदित्यो बाहुमध्ये च शशी च मणिबन्धके ।  
वामदेवो वामबाहौ बाहुमध्ये प्रभञ्जनः ॥ १३४ ॥  
मणिबन्धे च वसवः पृष्ठदेशे हरः स्मृतः ।  
शम्भुः ककुदि सम्प्रोक्तः परमात्मा शिरः स्मृतः ॥ १३५ ॥  
मध्यमानामिकाङ्गुष्ठैरेतत्स्थानेषु धारयेत् ।  
त्र्यम्बकं च पठेदन्ते शिवस्मरणपूर्वकम् ॥ १३६ ॥  
वर्तुलेन भवेद् व्याधिर्दीर्घेण च तपक्षयः ।  
ललाटयुगमानेन त्रिपुण्ड्रं कारयेद् बुधः ॥ १३७ ॥  
आमध्याह्नं जलेनैव तदूर्ध्वं तु जलं विना ।  
अपक्वमतिपक्वं च संत्याज्यं भसितं सितम् ॥ १३८ ॥  
देवेऽनुद्वासिते यज्ञभस्मनो ग्रहणं मतम् ।  
उद्वासने कृते यस्माच्चण्डभस्म प्रजायते ॥१३९॥ इति ।

शरीर के अङ्गों को शुद्ध कर भस्म से स्पर्श करे । फिर मन्त्रपूर्वक हाथ में लेकर 'तस्माद् ब्रह्म' इस यजुर्वेद के मन्त्र से उस भस्म को ग्यारह बार अभिमन्त्रित करे । फिर नाम का चतुर्थ्यन्त कर, आदि में प्रणव और अन्त में नमः, अथवा पञ्चाक्षर से ललाटादि स्थानों में भस्म लगावे । ललाट में ब्रह्म नाम से, हृदय में हव्य वाहन नाम से, नाभि में स्कन्द नाम से, गले में पूषा नाम से, दाहिने हाथ में रुद्र नाम से, बाहुमध्य में आदित्य नाम से, मणिबन्ध में शशी नाम से, वाम बाहु में वामदेव नाम से, बाहुमध्य में प्रभञ्जन नाम से, मणिबन्ध में वसु नाम से, पृष्ठ देश में हर नाम से, ककुद में शम्भु नाम से, शिर में परमात्मा नाम से—इन स्थानों में मध्यमा अङ्गूठा और अनामिका अङ्गुलियों से भस्म लगावे । फिर अन्त में शिव का स्मरण करते हुये 'त्र्यम्बकम्' मन्त्र पढ़े । गोलाकार भस्म लगाने से व्याधि, बहुत लम्बा लगाने से तपःक्षय होता है । इसलिये बुद्धिमान् दोनों ओर के ललाट के प्रमाणानुसार त्रिपुण्ड्र लगावे । मध्याह्न पर्यन्त जल के साथ भस्म लगावे । मध्याह्न के बाद बिना जल के भस्मोद्धूलन करे । अपक्व अथवा अति-पक्व भस्म न लगावे किन्तु श्वेत भस्म लगावे । जब तक अग्निदेव का विसर्जन न हो, उसी समय तक अग्निकुण्ड का भस्म ग्रहण करे, क्योंकि विसर्जन करने के पश्चात् भस्म चण्ड का अंश हो जाता है ॥ १३१-१३९ ॥

**अथ रुद्राक्षधारणं यामले—**

**अरुद्राक्षधरो भूत्वा यद् यत् कर्म च वैदिकम् ।**
**करोति जपहोमादि तत्सर्वं निष्फलं भवेत् ॥ १४० ॥**

अब यामलतन्त्र के अनुसार रुद्राक्ष धारण के विषय में कहते हैं—जो साधक बिना रुद्राक्ष धारण किये ही वैदिक जप होमादि कर्म करता है उसकी सारी क्रिया व्यर्थ है ॥ १४० ॥

**निश्छिद्राश्च सुपक्वाश्च रुद्राक्षा धारणे स्मृताः ।**
**विना मन्त्रं न बिभृयाद् रुद्राक्षान् भुवि मानवः ॥ १४१ ॥**
**पञ्चामृते पञ्चगव्ये स्नापयित्वा तु धारयेत् ।**
**रूद्राक्षस्य प्रतिष्ठायां मन्त्रः पञ्चाक्षरः स्मृतः ॥ १४२ ॥**
**त्र्यम्बकादिस्तथा मन्त्रः प्रतिष्ठायां प्रयोजयेत् ।**
**प्रणवं च समुच्चार्य मायान्ते मातृकां तथा ॥ १४३ ॥**
**पञ्चाक्षरं त्र्यम्बकं च समुच्चार्य कुशोदके ।**
**पञ्चगव्ये च प्रक्षिप्य सद्योजातं पठेत्ततः ॥ १४४ ॥**
**शुद्धोदकेन प्रक्षाल्य वामेनालिप्य चन्दनैः ।**
**धूपयेत्तामघोरेण अन्यं तत्पुरुषेण च ॥ १४५ ॥**
**ईशानं प्रजपेद् विद्वान् दशधा च मणिं प्रति ।**

**अघोरेण तथा मेरुं शतधा मन्त्रयेत्सुधीः ॥ १४६ ॥**

जिसमें छिद्र न हों, जो अच्छी प्रकार से परिपक्व हो, ऐसा रुद्राक्ष धारण करना चाहिये । मनुष्य बिना मन्त्र के पृथ्वी पर रुद्राक्ष धारण न करे । पञ्चामृत में, पञ्चगव्य में स्नान करा लेने के पश्चात् ही रुद्राक्ष धारण करना चाहिये । रुद्राक्ष की प्रतिष्ठा में पञ्चाक्षर मन्त्र का उपयोग करे । प्रतिष्ठा में 'त्र्यम्बकादि' मन्त्र का प्रयोग करे, अथवा प्रणव (ॐ) उच्चारण कर, माया (ह्रीं), तदनन्तर मातृकाओं का उच्चारण करे । प्रथम 'पञ्चाक्षर' अथवा 'त्र्यम्बक' मन्त्र का उच्चारण करे । फिर कुशोदक में अथवा पञ्चगव्य में स्नान करा कर 'सद्योजातम्' मन्त्र का उच्चारण करे । फिर उसे शुद्धोदक से प्रक्षालन कर 'वामदेव' मन्त्र से चन्दन का आलेप करे । फिर उस रुद्राक्षमाला को 'अघोर' मन्त्र से धूपित करे । यदि अन्य प्रकार की माला हो, तब 'तत्पुरुष' मन्त्र से धूपित करे । फिर मनियाँ लेकर 'ईशान' मन्त्र का दश बार पाठ करे । तदनन्तर सुधी साधक 'अघोर' मन्त्र से दश बार उन्हें अभिमन्त्रित करे । तदनन्तर पञ्चोपचारों से पूजन कर देवता बुद्धि से उसे धारण करे ॥ १४१-१४६ ॥

**पूज्य पञ्चोपचारैस्तां धारयेद् देवताधिया ।**
**तुलसीकाष्ठजां चैव धारयेद् वैष्णवोत्तमः ॥ १४७ ॥**
**विष्णुमन्त्रमनुस्मृत्य वर्जयेदन्यकाष्ठजाम् ।**
**अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशदेव वा ॥ १४८ ॥**
**सप्तविंशतिमाना वा हीना माला न युज्यते ।**
**सप्तविंशतिरुद्राक्षमालया देहसंस्थया ॥ १४९ ॥**
**यः करोति नरः पुण्यं सर्वं कोटिगुणं भवेत् ।**
**शिखायां हस्तयोः कण्ठे कर्णयोश्चापि यो नरः ॥ १५० ॥**
**रुद्राक्षं धारयेद् भक्त्या शैवं लोकमवाप्नुयात् ।**
**नववक्त्रन्तु रुद्राक्षं धारयेद् वामके भुजे ॥ १५१ ॥**
**चतुर्दशमुखं चैव शिखायां धारयेद् बुधः ।**
**एकवक्त्रः शिवः साक्षाद् ब्रह्महत्यां व्यपोहति ॥ १५२ ॥**

उत्तम वैष्णव मन्त्र पढ़कर तुलसी की माला धारण करे । अन्य काष्ठ माला धारण न करे । माला में मणियों की संख्या १०८, ५४ अथवा २७ होनी चाहिये। इससे कम मनियों की माला धारण न करे । २७ मनियों की माला धारण कर मनुष्य जो कर्म करता है उसका करोड़ों गुना फल होता है । जो मनुष्य शिखा में, दोनों हाथों में, कण्ठ में और दोनों कानों में रुद्राक्ष भक्तिपूर्वक धारण करता है, वह शिवलोक प्राप्त करता है । नवमुख रुद्राक्ष बायीं भुजा में, चौदह मुख वाला रुद्राक्ष शिखा में बुद्धिमान् साधक धारण करे । एकमुखी रुद्राक्ष साक्षात्

शिव स्वरूप हैं जो ब्रह्महत्या भी दूर करता है ॥ १४७-१५२ ॥

**द्विवक्त्रो हरगौरी स्याद् गोवधाद्यघनाशकृत् ।**
**त्रिवक्त्रोऽग्निस्त्रिजन्मोत्थपापराशिं प्रणाशयेत् ॥ १५३ ॥**
**चतुर्वक्त्रः स्वयं ब्रह्मा ब्रह्महत्यां व्यपोहति ।**
**पञ्चवक्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् ।**
**षड्वक्त्रस्तु ग्रहः प्रोक्तो गर्भहत्यां व्यपोहति ॥ १५४ ॥**
**सप्तवक्त्रस्त्वनन्तः स्यात् स्वर्णस्तेयादिपापनुत् ।**
**विनायकोऽष्टवक्त्रः स्यात् सर्वाऽनृतविनाशकः ॥ १५५ ॥**
**भैरवो नववक्त्रस्तु शिवसायुज्यकारकः ।**
**दशवक्त्रः स्मृतो विष्णुर्भूतप्रेतपिशाचहा ॥ १५६ ॥**
**एकादशमुखो रुद्रो नानायज्ञफलप्रदः ।**
**द्वादशास्यो भवेदर्कः सर्वक्रतुफलप्रदः ॥ १५७ ॥**
**त्रयोदशमुखः कामः सर्वकामफलप्रदः ।**
**चतुर्दशास्यः श्रीकण्ठो वंशोद्धारकरः परः ॥ १५८ ॥**
**रुद्राक्षे देहसंस्थे तु कुक्कुरो म्रियते यदि ।**
**सोऽपि रुद्रपदं याति किं पुनर्मानवा गुह! ॥ १५९ ॥**
**यो ददाति द्विजातिभ्यो रुद्राक्षं भुवि षण्मुख! ।**
**तस्य प्रीतो भवेद् रुद्रः प्रयच्छति निजं पदम् ॥ १६० ॥**

द्विमुखी रुद्राक्ष हरगौरी कहा जाता है जो गोवधादि पापों को नष्ट करने वाला है । त्रिमुखी रुद्राक्ष साक्षात् अग्नि है जो तीन जन्म के पापों को नष्ट करता है । चतुर्मुखी रुद्राक्ष स्वयं ब्रह्मा है जो ब्रह्म हत्या दूर करता है । पञ्चमुखी रुद्राक्ष कालाग्नि है जो अगम्या गमन पाप से मुक्त करता है । षण्मुखी रुद्राक्ष ग्रह है जो गर्भ हत्या जैसे पाप को नष्ट करता है । सप्तमुखी अनन्त कहा जाता है जो स्वर्णस्तेयादि पापों को नष्ट करता है । अष्टमुखी रुद्राक्ष विनायक कहा जाता है जो समस्त झूठ का विनाश करता है । नवमुखी भैरव है जो शिवसायुज्य प्रदान करता है । दशमुखी रुद्राक्ष विष्णु कहा जाता है जो भूतप्रेत पिशाचों को दूर करता है। एकादशमुखी रुद्राक्ष अनेक प्रकार के यज्ञों का फल प्रदान करता है । द्वादशमुखी रुद्राक्ष सूर्य है जो समस्त यज्ञों का फल प्रदान करता है । त्रयोदशमुखी रुद्राक्ष काम है जो सारी 'कामनायें पूर्ण करता है । चतुर्दशमुखी रुद्राक्ष श्रीकण्ठ कहा जाता है जो वंशोद्धारक है । यदि रुद्राक्ष धारण किया हुआ कुक्कुर मर जावे तो वह साक्षात् रुद्र लोक चला जाता है । फिर 'हे स्कन्द!' मनुष्यों के विषय में क्या कहा जाये? 'हे कार्त्तिकेय! जो द्विजातियों को 'रुद्राक्ष' दान करता है उस पर रुद्र प्रसन्न होकर अपना लोक प्रदान करते हैं ॥ १५३-१६० ॥

अन्यच्च—

रुद्राक्षान् कण्ठदेशे दशनपरिमितान् मस्तके विंशतिर्द्वे
षट् षट् कर्णप्रदेशे करयुगलगता द्वादश द्वादशैव ।
बाह्वोरिन्दोः कलाभिर्नयनयुगकृते चैकमेकं शिखायां
वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः ॥ १६१ ॥
सोमवारे त्रयोदश्यां चतुर्दश्यां निशामुखे ।
संक्रान्तौ बिल्वपत्रं च नो छिंद्यान्मतिमान्नरः ॥ १६२ ॥

इति स्मृतिपुराणतन्त्रेभ्यः संगृहीतम् ।

रुद्राक्ष के विषय में और भी बतलाया गया है—कण्ठ में १० रुद्राक्ष, मस्तक में ४० रुद्राक्ष, कानों में ६-६ रुद्राक्ष, दोनों हाथों में १२-१२ रुद्राक्ष, दोनों बाहुओं में सोलह (विमर्श—उक्त १४१ श्लोक में दशन आर्ष प्रयोग है)

दोनों नेत्रों में दो-दो, शिखा में एक और वक्षःस्थल में एक—इस प्रकार जो रुद्राक्ष की एक-सौ आठ मनियों को धारण करता है वह साक्षात् नीलकण्ठ है । त्रयोदशी, चतुर्दशी को, सोमवार के दिन, सायङ्काल के समय तथा सङ्क्रान्ति काल में मतिमान् मनुष्य बिल्वपत्र न तोड़े ॥ १६१-१६२ ॥

यह रुद्राक्ष ज्ञान स्मृति, पुराण और तन्त्र से संगृहीत हैं ।

अथारिमन्त्रप्रायश्चित्तम्—

यद्यज्ञानादरिर्मन्त्रो गृहीतः साधकेन च ।
त्यागस्तस्य प्रकर्त्तव्यः शास्त्रप्रोक्तेन वर्त्मना ॥ १६३ ॥

अब अरिमन्त्र का प्रायश्चित्त बतलाते हैं—यदि मन्त्रज्ञ साधक ने बिना परीक्षा के अरिमन्त्र ग्रहण कर लिया हो तब शास्त्रप्रोक्त विधि से ही उसका त्याग भी करना चाहिए ॥ १६३ ॥

यथा मालिनीविजये—

अथारिमन्त्रत्यागस्य विधिः सम्यक् प्रकाश्यते ।
शुचिः समाहितो भूत्वा प्रारभेत् प्रवरे दिने ॥ १६४ ॥
अशेषदुःखनाशाय देशिकः प्रवरं विधिम् ।
तत्रादौ रम्यभवने कुम्भं दीक्षाविधिक्रमात् ॥ १६५ ॥
मण्डले स्थापयेद् विद्वान् पूरयेत् तं जलैः शुभैः ।
विलोममन्त्रपाठेन तत्राऽऽवाह्य तु देवताम् ॥ १६६ ॥
सकलीकृत्य सम्पूज्यावरणानि प्रपूजयेत् ।
एवं सावरणामिष्ट्वा मन्त्री मन्त्रस्य देवताम् ॥ १६७ ॥

**हुत्वा विलोममन्त्रेण सर्पिषा गोरपि द्विजः ।**
**अष्टोत्तरसहस्त्रं वा अष्टोर्ध्वं वा शतं सुधीः ॥ १६८ ॥**
**ब्रह्मार्पणेन मनुना तथान्ते तर्पयेत् प्रभुम् ।**
**ततो यथावद् दुग्धान्नैर्देवताभ्यो बलिं हरेत् ॥ १६९ ॥**
**विदिक्षु दिक्षु च तथा वक्ष्यमाणैर्मनूत्तमैः ।**

जैसा कि मालिनीविजयतन्त्र में कहा गया है—अब 'अरिमन्त्र' के त्याग की विधि सम्यक्तया प्रकाशित करते हैं । साधक स्नानादि से पवित्र और समाहित होकर किसी अच्छे दिन उसका प्रायश्चित्त प्रारम्भ करे । स्वयं आचार्य शिष्य के समस्त दुःखों का नाश करने के लिये इस प्रकार श्रेष्ठ विधि का अनुष्ठान करे । किसी अच्छे सुरम्य भवन में दीक्षाविधि के क्रमानुसार कुम्भ स्थापित करे, अथवा वह कलश किसी मण्डल में स्थापित कर उसे स्वच्छ जल से परिपूर्ण करे । तदनन्तर विलोम मन्त्र पढ़कर देवता का आवाहन करे । फिर सकलीकरण कर पूजा करने के पश्चात् उनके आवरणों की पूजा करे । इस प्रकार सावरण पूजन करने के पश्चात् मन्त्रज्ञ साधक मन्त्र देवता का विलोम मन्त्र से, गोघृत से होम १००८ की संख्या में अथवा एक-सौ आठ की संख्या में करे । ब्रह्मार्पण मन्त्र से ब्रह्मार्पण करे (द्र० ९.२३६-२३७)। अन्त में भगवान् का तर्पण करे । इसके बाद पायस की बलि देवताओं को प्रदान करे । यह बलि दिशाओं में चार कोणों में वक्ष्यमाण मन्त्रों से करे ॥ १६४-१७० ॥

**आयाहीन्द्र सुराधीश शतमन्यो शचीपते ॥ १७० ॥**
**नमस्तुभ्यं गृहाणेमं पुष्पधूपादिकं बलिम् ।**

'आयहि इन्द्र...........बलिम्' पर्यन्त श्लोक मन्त्र पढ़कर पूर्व दिशा में इन्द्र को बलि देवे ॥ १७०-१७१ ॥

**आयाहि तेजसां नाथ हव्यवाह वरप्रद ॥ १७१ ॥**
**गृहाण पुष्पधूपादिबलिमेनं सुपूजितम् ।**

फिर 'आयाहि तेजसां नाथ.....सुपूजितम्' पर्यन्त श्लोक मन्त्र पढ़कर आग्नेय कोण में अग्निदेव को बलि देवे ॥ १७१-१७२ ॥

**प्रेतराज समायाहि भिन्नाञ्जनसमप्रभ ॥ १७२ ॥**
**बलिं दत्तं गृहीत्वेमं सुप्रीतो वरदो भव ।**

फिर 'प्रेतराज.....वरदो भव' पर्यन्त श्लोक मन्त्र पढ़कर साधक दक्षिण दिशा में यम को बलि देवे ॥ १७२-१७३ ॥

**नमस्ते रक्षसां नाथ निर्ऋते त्वमिहागतः ॥ १७३ ॥**

**गृहाण बलिपूजादि मया भक्त्या निवेदितम् ।**

फिर 'नमस्ते रक्षसां नाथ........निवेदितम्' पर्यन्त श्लोक मन्त्र पढ़कर निर्ऋति कोण में निर्ऋति को बलि देवे ॥ १७३-१७४ ॥

**एहि पश्चिमदिक्पाल जलनाथ नमोऽस्तु ते ॥ १७४ ॥**
**भक्त्या निवेदितां पूजां गृहीत्वा प्रीतिमावह ।**

फिर 'ऐहि पश्चिम दिक्पाल.....प्रीतिमावह' पर्यन्त श्लोक मन्त्र पढ़कर पश्चिम दिशा में वरुण को बलि देवे ॥ १७४-१७५ ॥

**प्रभञ्जन प्राणपते त्वमेहि सपरिच्छदः ॥ १७५ ॥**
**मया प्रयुक्तं विधिवद् गृहाण् बलिमादरात् ।**

फिर 'प्रभञ्जन प्राणपते........बलिमादरात्' पर्यन्त श्लोक मन्त्र पढ़कर वायव्य कोण में वायु को बलि प्रदान करे ॥ १७५-१७६ ॥

**कुवेरतारकाधीशावागच्छेतां सुरोत्तमौ ॥ १७६ ॥**
**पुष्पधूपादिभिः प्रीतौ भवेतां वरदौ मम ।**

फिर 'कुबेर तारकाधीश........वरदौ मम' पर्यन्त श्लोक मन्त्र पढ़कर उत्तर दिशा में कुबेर और चन्द्रमा को बलि देवे ॥ १७६-१७७ ॥

**ईशत्वमेव भगवन् सर्वविद्याश्रय प्रभो ॥ १७७ ॥**
**पूजितः पुष्पधूपाद्यैः प्रीतो भव विभूतये ।**

फिर 'ईशत्वमेव भगवन्......विभूतये' पर्यन्त श्लोक मन्त्र पढ़कर ईशानकोण में शिव को बलि देवे ॥ १७७-१७८ ॥

**आयाहि सर्वलोकानां नाथ ब्रह्मन् समर्चनम् ॥ १७८ ॥**
**गृहाण सर्वान् विघ्नान् मे निवर्तय नमोऽस्तु ते ।**

फिर 'आयाहि सर्वलोकानां.............नमोऽस्तु ते' पर्यन्त श्लोक मन्त्र पढ़कर ईशान पूर्व के मध्य में ब्रह्मदेव को बलि देवे ॥ १७८-१७९ ॥

**आगच्छ वरदाव्यक्त विष्णो विश्वस्य नायक ।**
**पूजितः परया भक्त्या भव त्वं सुखदो मम ॥ १७९ ॥**

फिर 'आगच्छ........त्वं सुखदो मम' पर्यन्त श्लोक मन्त्र पढ़कर वायव्य और पश्चिम के मध्य में अनन्त को बलि देवे ॥ १७९ ॥

**ततः सपरिवारां च पूजयेन्मन्त्रदेवताम् ।**
**मन्त्रेण विपरीतेन पुष्पदीपोपचारकैः ॥ १८० ॥**

इसके पश्चात् परिवार सहित मन्त्र देवता का पूजन विपरीत मन्त्र से पुष्पधूप दीपादि उपचारों से करे ॥ १८० ॥

**ततस्तु प्रार्थयेद् विद्वान् पूजितां मन्त्रदेवताम् ।**
**आनुकूल्यमनालोच्य मया तरलबुद्धिना ॥ १८१ ॥**
**यदुपात्तं पूजितं च प्रभो मन्त्रस्वरूपकम् ।**
**तेन मे मनसः क्षोभमशेषं विनिवर्तय ॥ १८२ ॥**

इसके बाद विद्वान् साधक देवता से प्रार्थना करे—हे प्रभो! मैंने अपनी चञ्चल बुद्धि से आपकी अनुकूलता का विचार न कर जो मन्त्र स्वरूप का उच्चारण किया है और पूजा किया है । उससे जो मेरे मन में क्षोभ उत्पन्न हुआ है उसको दूर कीजिये ॥ १८१-१८२ ॥

**पापं प्रतिहतं चास्तु भूयात् श्रेयः सनातनम् ।**
**तनोतु मम कल्याणं भाविनी भक्तिरेव ते ॥ १८३ ॥**

मेरा पाप नष्ट हो जावे, मेरा सनातन श्रेय हो, मेरा कल्याण कीजिये और आगे मुझे भक्ति प्रदान कीजिये ॥ १८३ ॥

**इति सम्प्रार्थ्य मन्त्रेशं मन्त्रं पत्रे विलोमतः ।**
**लिखित्वाऽमलकर्पूरचन्दनेन समर्चयेत् ॥ १८४ ॥**
**कलशोपरि संस्थाप्य भक्त्या परमया युतः ।**
**तत्पत्रं मतिमान् पश्चाद् बद्ध्वा निजशिरस्यथ॥ १८५ ॥**
**स्नायात् पूजितकुम्भस्य तोयैर्मन्त्रमयैः शुभैः ।**
**पुनश्चान्येन तोयेन कुम्भमापूर्य संयतः ॥ १८६ ॥**
**तन्मध्ये मन्त्रपत्रं च निःक्षिप्याथ प्रपूजयेत् ।**
**तं कुम्भं निम्नगातीरे शुद्धे वाथ जलाशये ॥ १८७ ॥**
**निःक्षिपेदथ विप्रांश्च यथाशक्त्या प्रभोजयेत् ।**

इस प्रकार मन्त्रेश से प्रार्थना कर साधक किसी पत्ते पर विलोम मन्त्र लिखकर कलश पर स्थापित कर भक्तिपूर्वक कर्पूर चन्दन से पूजा करे । फिर मतिमान् उस पूजित पत्र को अपने शिर में बाँध कर पूजित कुम्भ के मन्त्रमय शुभजल से स्नान करे । फिर दूसरे घड़े में प्रयत्नपूर्वक जल भरकर स्नान करे । फिर उसी कुम्भ में मन्त्र पत्र रखकर उसकी पूजा करे । फिर पूजित मन्त्र पत्र युक्त कलश को किसी नदी में अथवा किसी शुद्ध जलाशय में फेंक देवे । फिर यथा शक्ति ब्राह्मण भोजन करावे ॥ १८४-१८८ ॥

**इत्थं कृतविधानस्य रिपुमन्त्रोद्भवा रुजः ॥ १८८ ॥**

**नश्यन्त्येव न सन्देहः क्रमाच्चित्तप्रसन्नता ।**
**जायतेऽतीव सम्पन्नो वर्धते तत्कुलं क्रमात् ॥ १८९ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे प्रायश्चित्तादिकथनं**
**नाम अष्टादशः पटलः ॥ १८ ॥**

...॰❀॰...

ऐसा विधिपूर्वक यत्न करने से शत्रु मन्त्र के द्वारा उत्पन्न समस्त रोग विनष्ट हो जाता है इसमें सन्देह नहीं । क्रमशः चित्त में प्रसन्नता भी होती है । वह कुल अत्यन्त सम्पन्न हो जाता है और दिनों दिन बढ़ता है ॥ १८८-१८९ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में प्रायश्चित्तादिकथन नामक अष्टादश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १८ ॥**



# एकोनविंशः पटलः

## मन्त्रदोषशोधनादिकथनम्

**अथ मन्त्रशुद्धिः । तद्यथा—**

**कुलाकुलं राशिताराकथहाकडमौ तथा ।**
**धनर्णं चेति षट्चक्रं प्रोक्तं वै मन्त्रशोधने ॥ १ ॥**

अब मन्त्रशुद्धि कहते हैं । वह इस प्रकार की जाती है—कुलाकुल चक्र, राशि चक्र, तारा चक्र, अकथह, अकडम तथा धनऋण—ये छह चक्र मन्त्र शोधन के लिये प्रशस्त कहे गये हैं ॥ १ ॥

**वाराहीतन्त्रे—**

**ताराशुद्धिर्वैष्णवानां कोष्ठशुद्धिः शिवस्य च ।**
**ताराशुद्धिस्त्रैपुरेऽपि गोपालेऽकडमः स्मृतः ॥ २ ॥**

वाराहीतन्त्र में भी बतलाया गया है—वैष्णवों के लिये ताराशुद्धि तथा शैवों के लिये कोष्ठशुद्धि कही गई है । त्रिपुरा मन्त्र में भी तारा शुद्धि का विधान है तथा गोपाल मन्त्र में अकडम शुद्धि कही गई है ॥ २ ॥

**तन्त्रान्तरे—**

**पिण्डे तारे स्वप्नलब्धे षडर्णे प्रासादार्कत्रैपुरे नारसिंहे ।**
**मालामायामातृवाराहकामास्त्रे नो दोषः स्त्र्याप्तवेदेषु रत्ने ॥ ३ ॥**

अन्य तन्त्रों में भी बतलाया गया है—पिण्ड मन्त्र में, तारा मन्त्र में, षडक्षर मन्त्र में, प्रसाद, सूर्य, त्रिपुरा, नारसिंह मन्त्र में, माला मन्त्र, मायामन्त्र, वाराह, काम तथा अस्त्र मन्त्र में, स्त्री से प्राप्त मन्त्र में, वेद मन्त्र में एवं रत्न प्राप्त मन्त्र में कोई दोष नहीं है । अतः उसके शोधन की आवश्यकता नहीं है ॥ ३ ॥

**अन्यच्च—**

**गारुडादिषु सौरेषु वैष्णवे बौद्धजैनयोः ।**
**महाकूटेषु मन्त्रेषु नैव सिद्धादिशोधनम् ॥ ४ ॥**

अन्य ग्रन्थों में भी बतलाया गया है—गारुड, सौर, वैष्णव, बौद्ध और जैन मन्त्रों में तथा महाकूट मन्त्रों में सिद्धादि शोधन न करे ॥ ४ ॥

**अन्यच्च—**

**आज्ञासिद्धास्तु ये मन्त्राः योगिनीनां प्रसादतः ।**
**लब्धा ये केऽपि ते मन्त्राः सर्वकामफलप्रदाः ॥ ५ ॥**

अन्य तन्त्रों में कहा है—आज्ञासिद्ध (वेदोक्त) मन्त्र और योगिनियों की प्रसन्नता से प्राप्त जितने मन्त्र हैं वे सभी मन्त्र सभी कामनायें पूर्ण करने वाले हैं ॥ ५ ॥

**एतद् व्यतिरिक्तेष्वावश्यकं शोधनम् । यदुक्तं कादिमते—**

**मन्त्रो वा यदि वा विद्या स्तवो वा सूक्तमेव वा।**
**अर्थबन्धुशरीराण्यशुद्धो नाशयति ध्रुवम् ॥ ६ ॥**
**तस्मात्सर्वप्रयत्नेन दुष्टं सर्वत्र वर्जयेत् ।**
**साधकस्य तु नामादि वर्णमारभ्य शोधयेत् ॥ ७ ॥**
**मन्त्राद्यक्षरपर्यन्तं सर्वत्रैष विनिश्चयः ।**
**जन्मोत्थं वा प्रसिद्धं वा नाम ग्राह्यं विचक्षणैः ॥ ८ ॥**

इनके अतिरिक्त मन्त्रों का शोधन आवश्यक है जैसा कि कादि मत में कहा है । मन्त्र, अथवा विद्या, अथवा स्तव, अथवा सूक्त, यदि शुद्ध नहीं होते तो वे अवश्य ही धन, बन्धु और शरीर का नाश करते हैं । इसलिये सब प्रकार के प्रयत्नों से दुष्ट मन्त्र वर्जित करे । साधक के नाम के आदि वर्ण से मन्त्र के आदि अक्षर पर्यन्त संशोधन करे, यही निश्चय है । साधक का जन्म नाम अथवा प्रसिद्ध नाम विचक्षण पुरुषों को ग्रहण करना चाहिये ॥ ६-८ ॥

**यच्च पिङ्गलामते—**

**प्रसिद्धं यद् भवेन्नाम किं वास्य जन्मनाम च ।**
**यतीनां पुष्पपातेन गुरुणा यत् कृतं भवेत् ।**
**नाम्नस्तस्यैव वर्णानि विभक्तानि च कारयेत् ॥ ९ ॥**

पिङ्गला मत में भी बतलाया गया है—जो नाम प्रसिद्ध हो, वही नाम मन्त्र शोधन में ग्रहण करे । जन्म नाम से क्या? अथवा यतियों की प्रसन्नता से किया गया नाम, अथवा गुरु के द्वारा निर्धारित नाम ग्रहण करे । उसी नाम के वर्णों को अलग कर परीक्षा करे ॥ ९ ॥

**अन्यत्रापि—**

**सुप्तो जागर्त्ति येनाऽसौ दूरस्थश्च प्रभाषते ।**
**वदत्यन्यमनस्कोऽपि तन्नाम ग्राह्यमत्र तु ॥ १० ॥**
**राश्यर्णादिकमन्त्राणां स राशिर्जन्मराशितः ।**
**विचार्यमनुराश्यन्तं रिपुहीनं मनुं जपेत् ॥ ११ ॥**

**यदि राशिप्रकरणपठितं न भवति, तदा पूर्वसम्मतमिति रहस्यम् ।**

अन्यत्र भी बतलाया गया है—जिस नाम के पुकारने से सोया पुरुष जाग जावे, अथवा दूर से बुलाने पर बोल देवे, अथवा जिस नाम से अन्य मनस्क होने पर भी उत्तर देवे, वही नाम शोधन में ग्रहण करना चाहिये । राश्यादिक मन्त्र में साधक की जन्मराशि से नाम ग्रहण करे । इस प्रकार अनुराशि पर्यन्त शुद्ध कर शत्रुहीन मन्त्र का जप करे ॥ १०-११ ॥

यदि राशि प्रकरण में साधक की राशि का नामाक्षर पठित न हो, तब पूर्व सम्मत प्रसिद्ध नाम ही ग्रहण करे ।

**तच्च सनत्कुमारीये—**

**मातृपितृकृतं नाम त्यक्त्वा शर्मादिसेवकान् ।**
**श्रीवर्णं च ततो विद्वान् चक्रेषु योजयेत् क्रमात् ॥ १२ ॥**

सनत्कुमार संहिता में भी बतलाया गया है—विद्वान् पुरुष शर्मा, सेवक, श्री इत्यादि विशेषणों को छोड़कर मन्त्र शोधन में मातृ-पितृ कृत नाम को ही ग्रहण करे ॥ १२ ॥

**तत्र—**

**कुलाकुलस्य भेदं हि वक्ष्यामि मन्त्रिणामिह ।**
**वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात् ॥ १३ ॥**
**पञ्च ह्रस्वाः पञ्च दीर्घा बिन्द्वन्ताः सन्धिसम्भवाः ।**
**कादयः पञ्चशः षक्षळसहान्ताः समीरिताः ॥ १४ ॥**

**कुलाकुलस्य भेदकथनम्**

**तद्यथा—**

| | पञ्च ह्रस्वाः | पञ्च दीर्घाः | पञ्च सन्धिसम्भवाः | कादयः पञ्चः | | | | | पञ्च यकारादि | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १. | अ | आ | ए | क | च | ट | त | प | य | षा | मारुताः । |
| २. | इ | ई | ऐ | ख | छ | ठ | थ | फ | र | क्षाः | आग्नेयाः । |
| ३. | उ | ऊ | ओ | ग | ज | ड | द | व | ल | ळाः | पार्थिवाः । |
| ४. | ऋ | ॠ | औ | घ | झ | ढ | ध | भ | व | शा | वारुणाः । |
| ५. | लृ | ल | अं | ङ | ञ | ण | न | म | स | हा | नाभसाः । |

**मन्त्रशोधने कुलाकुल-चक्रम्**

| अ | आ | ए | क | च | ट | त | प | य | ष | मारुताः |
|---|---|---|---|---|---|---|---|---|---|---|
| इ | ई | ऐ | ख | छ | ठ | थ | फ | र | क्ष | आग्नेयाः |
| उ | ऊ | ओ | ग | ज | ड | द | ब | ल | ळ | पार्थिवाः |
| ऋ | ॠ | औ | घ | झ | ढ | ध | भ | व | श | वारुणाः |
| ऌ | ॡ | अं | ङ | ञ | ण | न | म | स | ह | नाभसाः |

उसमें अब मन्त्रज्ञों के संशोधन के लिये कुलाकुल का भेद कहता हूँ वायु, अग्नि, भू, जल एवं आकाश—ये पचास लिपियाँ कही गई हैं। जिसमें पाँच ह्रस्व हैं, पाँच दीर्घ हैं, पाँच सन्धि वाले अक्षर हैं, जिसके अन्त में बिन्दु है। इसके बाद पाँच ककारादि वर्ण, फिर पाँच यकारादि एवं स, फिर षक्षळशह वर्ण—ये पचास लिपियाँ हैं ॥ १३-१४ ॥

**साधकस्याक्षरं पूर्वं मन्त्रस्यापि तदक्षरम्।**
**यद्येकभूतदैवत्यं जानीयात् स्वकुलं हि तत् ॥ १५ ॥**
**भौमस्य वारुणं मित्रमाग्नेयस्यापि मारुतम्।**
**मारुतं पार्थिवानां च शत्रुमाग्नेयमम्भसाम् ॥ १६ ॥**

**चकारात् आग्नेयं पार्थिवानां शत्रुः।**

यदि साधक के नाम का आद्य अक्षर और मन्त्र के वर्ण का अक्षर एक भूत दैवत्य हो तो उसे अपना कुल समझे। भौम के मित्र वरुण हैं, आग्नेय के मित्र मारुत हैं, पार्थिव के शत्रु मारुत हैं और जल के शत्रु अग्नि हैं ॥ १५-१६ ॥

पार्थिवों के शत्रु भी अग्नि ही हैं।

**तच्च रुद्रयामले—**

**पार्थिवे वारुणं मित्रं तैजसं शत्रुरीरितम्।**
**नाभसं सर्वमित्रं स्याद् विरुद्धं नैव शीलयेत् ॥ १७ ॥**

ऐसा ही रुद्रयामल में भी कहा गया है—पार्थिव वर्णों के वारुण अक्षर मित्र है, आग्नेय उसका शत्रु है और नाभस वर्ण सबका मित्र है, उसका किसी से कोई विरोध नहीं है। अतः उक्त चक्र में साधक के आदि नाम से शत्रु एवं मित्र की परीक्षा करे ॥ १७ ॥

अथ राशिचक्रं मन्त्रकल्पद्रुमे—

रेखाद्वयं पूर्वपरेण कुर्यात्
तन्मध्यतो यास्यकुबेरभेदात् ।
एकैकमीशाननिशाचरे तु
हुताशवाय्वोर्विलिखेत् ततोऽर्णान् ॥१८ ॥
वेदाग्निवह्नियुगलश्रवणाक्षिसंख्यान्
पञ्चेषुबाणशरपञ्चचतुष्टयार्णान् ।
मेषादितः प्रविलिखेत् सकलांस्तु वर्णान्
कन्यागतान्प्रविलिखेदथ शादिवर्णान्॥ १९ ॥

यथा—१. अ आ इ ई मेषः । २. उ ऊ ऋ वृषः । ३. ॠ ऌ ॡ मिथुनम् । ४. ए ऐ कर्कटः । ५. ओ औ सिंहः । ६. अं अः श ष स ह ळ क्षाः कन्यका । ७. कवर्ग; तुला । ८. चवर्गो वृश्चिकः । ९. टवर्गो धनुः । १०. तवर्गो मकरः । ११. पवर्गः कुम्भः । १२. यवर्गो मीनः ।

राशिचक्रम्

| मेषः | वृषः | मिथुनम् | कर्कटः | सिंहः | कन्यकाः |
|---|---|---|---|---|---|
| अ | उ | ॠ | ए | ओ | अं |
| आ | ऊ | ऌ | ऐ | औ | अः |
| इ | ऋ | ॡ | | | श |
| ई | | | | | ष |
| | | | | | स |
| | | | | | ह |
| | | | | | ळ |
| | | | | | क्ष |
| **तुला** | **वृश्चिकः** | **धनुः** | **मकरः** | **कुम्भः** | **मीनः** |
| क | च | ट | त | प | य |
| ख | छ | ठ | थ | फ | र |
| ग | ज | ड | द | ब | ल |
| घ | झ | ढ | ध | भ | व |
| ङ | ञ | ण | न | म | |

अब राशिचक्र मन्त्रकल्पद्रुम के अनुसार कहते हैं—पूर्व से पश्चिम उत्तर से दक्षिण दो रेखा खींचे । उसके मध्य में एक रेखा दक्षिण से उत्तर खींचे । फिर ईशान से नैर्ऋत्य तथा अग्नि से वायव्य कोण तक रेखा खींचे । तदनन्तर वर्णों

को लिखना चाहिए। १. वेद (= चार), २. अग्नि (= तीन), ३. वह्नि (= तीन), ४. फिर दो, फिर दो, ५. फिर दो, ६. फिर छह वर्णों को लिखे। फिर ५, ५, ५, ५, ५ तदनन्तर य र ल व आदि चार वर्णों को लिखे। इस प्रकार मेष राशि से लेकर मीन पर्यन्त बारह कोष्ठो में सभी वर्णों को लिखे। कन्या में शकारादि छह वर्णों को लिखे। यह राशि चक्र है ॥ १८-१९ ॥

**तन्त्रान्तरे राशीनां सञ्ज्ञा—**

**लग्नं धनं भातृबन्धुपुत्रशत्रुकलत्रकाः ।**
**मरणं धर्मकर्मायव्यया द्वादश राशयः ।**
**नामानुरूपमेतेषां शुभाशुभफलं दिशेत् ॥ २० ॥**

**वैष्णवे तु शत्रुस्थाने बन्धुः, बन्धुस्थाने शत्रुरिति पाठः ।**

**स्वराशेर्मन्त्रराश्यन्तं गणनीयं विचक्षणैः ।**
**राशीनां शुद्धता ज्ञेया त्यजेत् शत्रुं मृतिं व्ययम् ।**
**साध्याख्याक्षरराश्यन्तं गणयेत् साधकाक्षरात् ॥ २१ ॥ इति ।**

अन्य तन्त्रों के अनुसार इन बारह राशियों की बारह सञ्ज्ञाएँ इस प्रकार कही गई हैं—लग्न, धन, भाई, बन्धु, पुत्र, शत्रु, कलत्र, मरण, धर्म, कर्म, आय और व्यय—ये बारह राशियों की सञ्ज्ञायें हैं। इनका फल कोष्ठ में अपनी नाम राशि से मन्त्र राशि पर्यन्त गणना कर नामानुसार शुभाशुभ फल समझ लेवे। शत्रु, मरण एवं व्यय फल होने पर मन्त्र त्याग देवे। तब राशि की शुद्धि समझनी चाहिये, अथवा साधक के अक्षर से साध्य मन्त्र के अक्षर तक गणना कर उसका फल समझ लेवे ॥ २०-२१ ॥

**नारायणीये—**

**अज्ञाते राशिनक्षत्रे नामाद्यक्षरराशितः ।**

नारायणीय में भी बतलाया गया है—यदि राशि एवं नक्षत्र न ज्ञात हो, तब नामाक्षर के आदि अक्षर की राशि बनाकर गणना करे ॥ २२ ॥

**वैष्णवे तु रामार्चनचन्द्रिकायाम्—**

**एकपञ्चनवबान्धवाः स्मृताः द्वौ**
**च षट् च दशमाश्च सेवकाः ।**
**वह्निरुद्रमुनयस्तु पोषकाः**
**द्वादशाष्टचतुरस्तु घातकाः ॥ २२ ॥**

वैष्णव मत में रामार्चनचन्द्रिका के अनुसार कथन इस प्रकार है—पहला, पाँचवाँ और नवाँ स्थान बान्धव कहा जाता है। दो, छह एवं दशम स्थान सेवक

स्थान हैं । तीन, ग्यारह और सात स्थान पोषक कहा जाता है । चार, आठ और बारह स्थान घातक है । इसके अनुसार फल समझना चाहिए और घातक मन्त्र को त्याग देना चाहिए ॥ २२ ॥

**शाक्ते तु तन्त्रराजे—**

**तेन मन्त्रादिवर्णेन नाम्नश्चाद्याक्षरेण च ।**
**गणयेद् यदि षष्ठं वाप्यष्टमं द्वादशं तु वा ॥ २३ ॥**
**रिपुर्मन्त्राद्यवर्णं स्यात् तेन तस्याहितं भवेत् ।**
**षष्ठाष्टमद्वादशानि तस्माद् वर्ज्यानि यत्नतः ॥ २४ ॥**

शाक्त ग्रन्थ तन्त्रराज में भी बतलाया गया है—नाम के आद्य अक्षर से मन्त्र के आदि वर्ण पर्यन्त गणना करे । यदि मन्त्र का आदि वर्ण षष्ठ, अष्टम अथवा द्वादश में पड़े, तब वह शत्रु मन्त्र कहा जाता है । उसके ग्रहण से मन्त्री की हानि होती है । इसलिये मन्त्र चाहने वाला षष्ठ, अष्टम और द्वादशभाव के मन्त्रों को प्रयत्नपूर्वक त्याग देवे ॥ २३-२४ ॥

**अथ ताराचक्रं, पिङ्गलातन्त्रे—**

**उत्तराद् दक्षिणाग्रां तु रेखां कुर्याच्चतुष्टयीम् ।**
**दश रेखाः पश्चिमाग्रा कर्त्तव्या वरवर्णिनि ॥ २५ ॥**
**अश्विन्यादिक्रमेणैव विलिखेत्तारकाः पुनः ।**
**वक्ष्यमाणविधानेन तन्मध्ये वर्णकान् न्यसेत् ॥ २६ ॥**

अब ताराचक्र पिङ्गलातन्त्र के अनुसार कहते हैं—उत्तर से दक्षिण चार रेखा बनावे । फिर उसमें पश्चिम से पूर्व दश रेखा निर्माण करे । २७ कोष्ठ बनावे, फिर उसमें अश्विनी आदि के क्रम से रेवती नक्षत्र तक लिखे । उसमें वक्ष्यमाण विधान के अनुसार वर्णों को लिखे ॥ २५-२६ ॥

**पक्षैकत्र्यब्धिरूपावनिभुजशशियुग्युग्मभूयुग्मपक्षाः ।**
**युग्मैकद्वित्रिरूपानलशशिशशिभू द्व्येकपक्षाग्निचन्द्राः ॥**

प्रथम अश्विनी में अ आ दो वर्ण, भरणी में एक इ वर्ण, कृत्तिका में ई उ ऊ तीन वर्ण, रोहिणी में ऋ ॠ ऌ ॡ, मृगशिरा में एक ए, आर्द्रा में ऐ, पुनर्वसु में ओ औ, पुष्य में क, आश्लेषा में ख ग, मघा में घ ङ, पूर्वा फा० में च, उ०फा० में छ ज, हस्त में झ ञ, चित्रा में ट ठ, स्वाती में ड, विशाखा में ढ ण, अनुराधा में त थ द, ज्येष्ठा में ध, मूल में न प फ, पूर्वाषाढ में ब, उत्तराषाढ में भ, श्रवण में म, धनिष्ठा में य र, शतभिषा में ल, पूर्वाभाद्र० में व श, उत्तराभाद्र० में ष स ह, रेवती में क्ष अं अः—इस प्रकार रेवती कोष्ठ तक व्यवस्थित वर्णों को लिखे ॥

नक्षत्रशोधनचक्रम्

| अ<br>अ आ | भ<br>इ | कृ<br>ई उ ऊ | रो<br>ऋ ॠ ऌ<br>ॡ | मृ<br>ए | आ<br>ऐ | पुन<br>ओ औ | पु<br>क | आश्लेषा<br>ख ग |
|---|---|---|---|---|---|---|---|---|
| म<br>घ ङ | पू फा<br>च | उ फा<br>छ ज | ह<br>झ ञ | चि<br>ट ठ | स्वा<br>ड | वि<br>ढ ण | अनु<br>त थ द | ज्येष्ठा<br>ध |
| मू<br>न प फ | पू षा<br>ब | उ षा<br>भ | श्रवण<br>म | धनिष्ठा<br>य र | शत<br>ल | पू भा<br>व श | उ भा<br>ष स ह | रे<br>क्ष अं अः |

वर्णाः क्रमात्स्वरान्त्यौ तु रेवत्यंशगतावुभौ ।
जन्मसम्पद्विपत्क्षेमप्रत्यरिः साधको वधः ॥ २७ ॥
मित्रं परममित्रं च गणनीयं स्वनामभात् ।
रसाष्टनवभद्राणि युगयुग्मगतान्यपि ।
इतराणि न भद्राणि परित्याज्या मनीषिभिः ॥ २८ ॥

अत्र नक्षत्रात्मकत्वाद् गणयोनिमैत्र्योरावश्यकत्वम् ।

तदनन्तर अपने नाम नक्षत्र से प्रारम्भ कर अग्रिम ९ नक्षत्र तक क्रमशः जन्म, सम्पद्, विपद्, क्षेम, प्रत्यरि, साधक, वध, मित्र एवं परम मित्र सञ्ज्ञक समझना चाहिए । इनमें विपद्, प्रत्यरि एवं वध स्थान त्याज्य हैं, शेष नक्षत्र उत्तम कहे गये हैं ॥ २७-२८ ॥

पूर्वोत्तरात्रयं चैव भरण्यार्द्रा च रोहिणी।
इमानि मानुषाण्याहुर्नक्षत्राणि मनीषिणः ॥ २९ ॥
ज्येष्ठा शतभिषक् मूला धनिष्ठा कृत्तिका तथा।
चित्रा मघा विशाखाः स्युस्तारा राक्षसदेवताः ॥ ३० ॥
अश्विनी रेवती पुष्यः स्वाती हस्तः पुनर्वसुः ।
अनुराधा मृगशिरः श्रवणा देवतारकाः ॥ ३१ ॥
स्वजातौ परमा प्रीतिर्मध्यमा भिन्नजातिषु ।
देवराक्षसयोर्वैरं नाशं मानुषरक्षसोः ॥ ३२ ॥

इस प्रकार क्रमशः ९-९ नक्षत्रों के अनुसार गणना करे । निबन्ध ग्रन्थ में तीनों पूर्वा, तीनों उत्तरा, भरणी, आर्द्रा, रोहिणी—ये मानुष नक्षत्र कहे गए हैं । ज्येष्ठा, शतभिषा, मूल, धनिष्ठा, कृत्तिका, चित्रा, मघा और विशाखा—ये नक्षत्र राक्षस देवताक हैं । अश्विनी, रेवती, पुष्य, स्वाती, हस्त, पुनर्वसु, अनुराधा,

मृगशिरा और श्रवण—ये देव नक्षत्र बतलाये गये हैं । अपनी जाति में परम प्रीति होती है और भिन्न जाति में मध्यम प्रीति, देवता राक्षस में वैर और मनुष्य राक्षस में नाश होता है ॥ २९-३२ ॥

**अथ योनिमैत्री—**

**[1]अश्वेभाजि फणिद्वयं श्ववृषभुक् मेषौतवौ मूषकस्**
**चाखुर्गाः क्रमशस्ततोऽपि महिषी व्याघ्रः पुनः सैरभी।**
**व्याघ्रेणौ मृगमण्डलौ कपिरथो बभ्रुद्वयं वानरः**
**सिंहोऽश्वो मृगराट् पशुश्च करटी योनिश्च भानामियम् ॥ ३३ ॥**

अब योनि मैत्री कहते हैं—अश्व, हाथी, छाग, सर्प, सर्प, श्वान, मार्जार, मूषक, गौ, महिष, व्याघ्र, हरिण, वानर, नकुल एवं सिंह—ये योनियाँ कही गयी हैं । इनमें अश्विनी के अश्व, भरणी के गज, कृत्तिका के छाग, रोहिणी के सर्प,

**नक्षत्रचक्रम्**

| | | | |
|---|---|---|---|
| **१. अश्व** | अश्विनी | **१५. महिषी** | स्वाति |
| **२. हस्ती** | भरणी | **१६. व्याघ्र** | विशाखा |
| **३. मेष** | कृत्तिका | **१७. मृग** | अनुराधा |
| **४. सर्प** | रोहिणी | **१८. मृग** | ज्येष्ठा |
| **५. सर्प** | मृगशिरा | **१९. श्वान** | मूल |
| **६. श्वान** | आर्द्रा | **२०. वानर** | पू.षा. |
| **७. मार्जार** | पुनर्वसु | **२१. नकुल** | उ.षा. |
| **८. मेष** | पुष्य | **२२. नकुल** | अभिजित् |
| **९. विडाल** | आश्लेषा | **२३. वानर** | श्रवण |
| **१०. मूषक** | मघा | **२४. सिंह** | धनिष्ठा |
| **११. मूषक** | पू.फा. | **२५. अश्व** | शतभिषा |
| **१२. गौ** | उ.फा. | **२६. सिंह** | पू.भा. |
| **१३. महिषी** | हस्त | **२७. गौ** | उ.भा. |
| **१४. व्याघ्र** | चित्रा | **२८. हस्ती** | रेवती |

१. अत्र साभिजिताष्टाविंशतिः २८ । इभः = हस्ती, वृषभुक् = मार्जारः, ओतुः = विडालः । सैरभी = महिषी । मण्डलः = श्वा । पशुः = गौः । करटी = हस्ती । सर्पमूषकौ द्वौ द्वौ । मृगास्त्रयः । नकुलो द्वौ । अन्ये त्वेकैकाः ।

मृगशिरा के सर्प, आर्द्रा के श्वान, पुनर्वसु के मार्जार, पुष्य के छाग, आश्लेषा के मार्जार, मघा के मूषक, पू०फा० के मूषक, उ०फा० के गौ, हस्त के महिष, चित्रा के व्याघ्र, स्वाती के अश्व, विशाखा के गौ, अनुराधा और ज्येष्ठा के हरिण, मूल के श्वान, पू०षा० के वानर, उ०षा० के नकुल, श्रवण के वानर, धनिष्ठा के सिह, शतभिषा के अश्व, पू०भा० के सिंह, उ०भा० के गौ और रेवती की गज योनियाँ हैं ॥ ३३ ॥

**विरोधस्तु—**

**गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणं च बभ्रू रगम् ।**
**वैरं वानरमेषकं च सुमहत् तद्वद् बिडालोन्दुरम्॥ इति ।**

अब विरोध कहते हैं—गौ व्याघ्र का, गज सिंह का, अश्व महिष का, इसी प्रकार कुत्ता मार्जार का, वानर मेष का और बिडाल वानर का महान् वैर जानना चाहिये ॥ ३४ ॥

**यामले—**

**जन्मनक्षत्रयोन्या वै मारणानि यथातथम् ।**
**कृतानि न चिरेणैव सिद्धिदानि महेश्वरि ॥ ३४ ॥**

जैसा कि यामल में भी कहा गया है—जन्म नक्षत्र से योनि तथा मरण वाले ये मन्त्र बहुत काल तक भी सिद्धि प्रदान नहीं करते ॥ ३४ ॥

**अथ अकथहचक्रम्—**

**ऊर्ध्वगाः पञ्चरेखाः स्युः पञ्चतिर्यग्गताः पुनः ।**
**कोष्ठानि तत्र जायन्ते षोडशैवात्र संलिखेत्॥ ३५ ॥**

**अकथहचक्रम्**

| | | | |
|---|---|---|---|
| अ क<br>थ ह | उ ङ<br>प | आ ख<br>द | ऊ च<br>फ |
| ओ ड<br>व | ऌ ऊ<br>म | औ ढ<br>श | ॡ ञ<br>य |
| ई घ<br>न | ॠ ज<br>भ | इ ग<br>ध | ऋ छ<br>व |
| अः त<br>स | ऐ ठ<br>ल | अं ण<br>ष | ए ट<br>र |

अब अकथह चक्र कहते हैं—ऊपर से नीचे तक पाँच रेखा, फिर तिरछे पाँच रेखा खीचें। इस क्रम से कुल सोलह कोष्ठक बन जाते हैं ॥ ३५ ॥

**इन्द्वग्निरुद्रनवनेत्रयुगार्कदिक्षु**
**ऋत्वष्टषोडशचतुर्दशभौतिकेषु ।**
**पातालपञ्चदशविश्वमिते च कोष्ठे**
**वर्णान् लिखेल्लिपिभवान् क्रमशस्तु धीमान् ॥ ३६ ॥**

फिर इन्दु (१), अग्नि (३), रुद्र (११), नव (९), नेत्र (२), युग (४), अर्क (१२), दिक् (१०), ऋतु (६) और ८, १६, १४, फिर भौतिक (५), पाताल (७), एवं १५, विश्व (१), २७ इन कोष्ठों में भूतलिपियों में होने वाले वर्णों को बुद्धिमान् लिखे ॥ ३६ ॥

**नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।**
**कोष्ठैश्चतुर्भिरेकैकमिति कोष्ठचतुष्टयम् ॥ ३७ ॥**
**यस्मिन् चतुष्के नामार्णस्तत्स्यात् सिद्धिचतुष्टयम् ।**
**प्रादक्षिण्यात् द्वितीयं तत् साध्याख्यं तत् तृतीयकम् ॥ ३८ ॥**
**सुसिद्धाख्यं चतुर्थं तु सपत्नाख्यं स्मृतं बुधैः ।**

फिर नामाक्षर के आदि अक्षर से आरम्भ कर मन्त्र के आदि अक्षर पर्यन्त गणना करनी चाहिए। यह गणना चार-चार कोष्ठों के क्रम से एक-एक कोष्ठ की करे। जिस कोष्ठ में नाम का आदि अक्षर हो, वहीं से एक-एक कोष्ठ के अनुसार चार-चार कोष्ठ पर्यन्त प्रदक्षिण क्रम से गणना करे। उन कोष्ठों के नाम १. सिद्धि, २. साध्य, ३. सुसिद्ध और ४. सपत्न हैं ॥ ३७-३९ ॥

**सिद्धः सिद्ध्यति कालेन साध्यस्तु जपहोमतः ॥ ३९ ॥**
**सुसिद्धो ग्रहणादेव रिपुर्मूलं निकृन्तति ।**
**सिद्धार्णा बान्धवाः प्रोक्ता साध्यास्ते सेवकाः स्मृताः ॥ ४० ॥**
**सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातकाः स्मृताः ।**
**जपेन बन्धुसिद्धिः स्यात् सेवकोऽधिकसेवया ॥ ४१ ॥**
**पुष्णाति पोषकोऽभीष्टघातको नाशयेद् ध्रुवम् ।**

अब इनका फल कहते हैं—१. सिद्ध मन्त्र समय लगने पर सिद्ध होता है, २. साध्य मन्त्र जप एवं होम से सिद्ध होता है, ३. सुसिद्ध मन्त्र ग्रहण करते ही सिद्ध होता है और ४. सपत्न (अरि) मन्त्र समूल विनाश करता है। सिद्ध अक्षर बान्धव कहा जाता है। साध्य सेवक कहा जाता है। सुसिद्ध पोषक कहा जाता है और शत्रु वाला अक्षर घातक कहा जाता है। बान्धव मन्त्र जप मात्र से सिद्ध होता है। सेवक अधिक सेवा करने से सिद्ध होता है। पोषक अक्षर पुष्टि प्रदान करता

है और घातक अक्षर निश्चय ही विनाश करता है ॥ ३९-४२ ॥

**एककोष्ठे द्वयोर्वर्णे सिद्धसिद्धमुदाहृतः ॥ ४२ ॥**
**तद् द्वितीये मन्त्रवर्णे सिद्धसाध्य उदाहृतः ।**
**तृतीये सिद्धसुसिद्धः सिद्धारिः स्याच्चतुर्थके ॥ ४३ ॥**

यदि साधक के आदि अक्षर और मन्त्र का आदि अक्षर एक कोष्ठ में पड़े तब सिद्ध-सिद्ध कहा जाता है । साधक के नाम के प्रथमाक्षर वाले कोष्ठक से द्वितीय कोष्ठक के मन्त्राक्षर सिद्ध-साध्य, तृतीय सिद्ध-सुसिद्ध और चतुर्थ कोष्ठ में होने पर सिद्धारि कहा जाता है ॥ ४२-४३ ॥

**तथा च निबन्धे—**

**नामार्णयुक् चतुःकोष्ठान् मन्वर्णश्चेद् द्वितीयके ।**
**चतुष्के तत्र पूर्णं तु यत्र नामाक्षरं स्थितम् ॥ ४४ ॥**
**तच्च कोष्ठं समारभ्य गणयेद् दक्षमार्गतः ।**
**साध्यसिद्धः साध्यसाध्यस्तत्सुसिद्धश्च तद्रिपुः ॥ ४५ ॥**
**एवं ज्ञेयस्तृतीये चेच्चतुष्के मन्त्रवर्णकः ।**
**तदा पूर्वोक्तया रीत्या क्रमो ज्ञेयो विचक्षणैः ॥ ४६ ॥**
**सुसिद्धसिद्धस्तत्साध्यः तत्सुसिद्धश्च तद्रिपुः ।**
**चतुर्थे तु चतुष्के स्यादरिसिद्धोऽरिसाधकः ।**
**तत्सुसिद्धोऽर्य्यरिः पश्चादेवं मन्त्रं विचारयेत् ॥ ४७ ॥**
**सिद्धसिद्धो यथोक्तेन द्विगुणात् सिद्धसाधकः ।**
**सिद्धः सुसिद्धोऽर्धजपात् सिद्धारिर्हन्ति बान्धवान् ॥ ४८ ॥**

जैसा कि निबन्ध ग्रन्थ में कहा गया है—चारो कोष्ठों में जहाँ नाम का अक्षर हो, वहाँ से मन्त्राक्षर के कोष्ठ तक गणना करनी चाहिए । १. साध्य-सिद्धि, २. साध्य-साध्य, ३. साध्य-सुसिद्ध और ४. साध्यारि कहा जाता है । इस प्रकार प्रथम, द्वितीय, तृतीय और चतुर्थ कोष्ठों में मन्त्राक्षर की गणना करनी चाहिए । इस प्रकार पूर्वोक्त रीति से सुसिद्ध-सिद्ध, सुसिद्ध-साध्य, सुसिद्ध-सुसिद्ध और सुसिद्धारि समझे । इसी प्रकार चतुर्थ चतुष्क से गणना करने पर अरिसिद्ध, अरिसाधक, अरिसुसिद्ध और अरि-अरि कोष्ठ बनता है । तदनन्तर चारों प्रकार के गणनाओं से फल का विचार करना चाहिए । सिद्धसिद्ध शास्त्र कथित जप के अनुसार सिद्ध होता है । सिद्ध- साधक द्विगुणित जप से, सिद्ध-सुसिद्ध आधे जप से और सिद्धारि मन्त्र बान्धवों का नाश करता है ॥ ४४-४८ ॥

**साध्यसिद्धो द्विगुणतः साध्यसाध्यो निरर्थकः ।**
**द्विगुणजपात् तत्सुसिद्धः साध्यारिर्हन्ति गोत्रजान् ॥ ४९ ॥**

**सुसिद्धसिद्धोऽर्धजपात् तत्साध्यो द्विगुणाज्जपात् ।**
**तत्सुसिद्धो ग्रहादेव सुसिद्धारिः कुटुम्बहा ॥ ५० ॥**

साध्य-सिद्ध द्विगुणित जप से, साध्य-साध्य का कोई फल नहीं, निरर्थक है। साध्य-सुसिद्ध द्विगुणित जप से और साध्यारि गोत्रजों का विनाश करता है। सुसिद्ध-सिद्ध आधे जप से, सुसिद्ध-साध्य द्विगुणित जप से, सुसिद्ध-सिद्ध मन्त्र ग्रहण मात्र से और सुसिद्धारि कुटुम्ब मात्र का नाशक होता है ॥ ४९-५० ॥

**अरिसिद्धः सुतं हन्यादरिसाध्यस्तु कन्यकाम् ।**
**तत्सुसिद्धस्तु पत्नीघ्नस्तदरिर्हन्ति साधकम् ॥ ५१ ॥**

**पिङ्गलामते प्रत्यक्षरं सिद्धादि गणयेत् ।**

अरिसिद्ध पुत्र का, अरिसाध्य कन्या का, अरि सुसिद्ध पत्नी का, अरि-अरि स्वयं साधक का ही विनाश करता है ॥ ५१ ॥

पिङ्गला के मत में प्रत्येक अक्षर से सिद्धादि की गणना करे।

**तद्यथा—**

**मातृपितृकृतं नाम यच्चाप्यभिजनैः कृतम् ।**
**विश्लिष्य तस्य वै वर्णान् स्वरवर्णविभेदतः ॥ ५२ ॥**
**तथैव मन्त्रबीजानि ततः शोधनमाचरेत् ।**
**नमः प्रणवसंयोगावपभ्रंशाक्षराणि च ।**
**वर्जयित्वैव गणनं कर्त्तव्यं च सुरेश्वरि ॥ ५३ ॥**

जैसा कि कहा गया है—माता-पिता द्वारा किया गया नाम, अथवा पूर्व पुरुषों द्वारा किया गया नाम उसके स्वर वर्णों को अलग-अलग करे। इसी प्रकार मन्त्र बीज को भी अलग करे तदनन्तर उनका शोधन करे। हे सुरेश्वरि! नमः, प्रणव, संयुक्ताक्षर और अपभ्रंश अक्षरों को छोड़ देवे ॥ ५२-५३ ॥

**अन्यत्रापि—**

**बिन्दुद्विबिन्दुकोपध्मानीयजिह्वांघ्रिसम्भवान् ।**
**संहतोच्चारणप्राप्तमधिकाक्षरमेव च ॥ ५४ ॥**
**अपभ्रंशाक्षरं लक्षौ त्यक्त्वा षंढचतुष्टयम् ।**
**मन्त्राक्षरैः सहैकत्र नामवर्णान् विशोधयेत् ॥ ५५ ॥**
**व्यञ्जनैर्व्यञ्जनान्येव स्वरैः सार्धं स्वरांस्तथा ।**
**आद्यमाद्येन संशोध्य द्वितीयेन द्वितीयकम् ॥ ५६ ॥**

अन्यत्र भी इस प्रकार बतलाया गया है—बिन्दु, अनुस्वार, द्विबिन्दुक (विसर्ग) उपध्मानीय, जिह्वामूलीय, उपध्मानीय, उच्चारण में संयुक्त अक्षर, अधिकाक्षर,

अपभ्रंशाक्षर, ळ क्ष ष ढ इतने अक्षरों को छोड़कर मन्त्राक्षरों के साथ नाम वर्ण का व्यञ्जनों का व्यञ्जनों से एवं स्वरों का स्वरों से संशोधन करे। आद्य का आदि से तथा द्वितीय का द्वितीय से संशोधन करे ॥ ५४-५६ ॥

**मन्त्रे वाप्यथवा नाम्नि वर्णाः स्युर्विषमा यदा।**
**तदा मन्त्रं समारभ्य समं यावत् प्रयोजयेत् ॥ ५७ ॥**

मन्त्र और नामों की संख्या जब बराबर न होकर (विषम) न्यूनाधिक हो, तब मन्त्र को सम बनाकर संशोधन करे ॥ ५७ ॥

**आद्यन्तयोः सिद्धवर्णौ मन्त्रे यस्मिन् वरानने।**
**अचिरेणैव कालेन स तावत् सर्वसिद्धिदः ॥ ५८ ॥**
**साध्यन्तादियुतो यस्तु सोऽतिकृच्छ्रेण सिध्यति।**
**आदावन्ते सुसिद्धस्तु सर्वकामविभूतिदः ॥ ५९ ॥**
**आदावन्ते रिपुर्यस्य भवेत् त्याज्यः स मन्त्रकः।**
**आदौ सिद्धोऽन्त्यसाध्यो यो द्विगुणेन स सिध्यति॥ ६० ॥**

हे वरानने! जब मन्त्र के आदि और अन्त में गणना से सिद्ध वर्ण आवे, तब वह मन्त्र बहुत थोड़े ही काल में सिद्धि प्रदान करता है। जब मन्त्र के गणना के आदि अन्त में साध्य आवे तो बहुत कष्ट से सिद्धि होती है। जिसके आदि और अन्त में सुसिद्ध आवे तो वह सारी कामनायें तथा सारी विभूति प्रदान करता है। जिस मन्त्र के आदि में तथा अन्त में भी रिपु हो, वह मन्त्र त्याज्य है ॥ ५८-६०॥

**आदौ सिद्धः सुसिद्धान्तो यथोक्तात् सिध्यते जपात्।**
**आदौ सिद्धोऽन्त्यशत्रुर्यः स त्याज्यो मन्त्रवित्तमैः ॥ ६१ ॥**

जिस मन्त्र के आदि में सिद्ध और अन्त में साध्य हो वह द्विगुण जप से सिद्ध होता है। आदि में सिद्ध और अन्त में सुसिद्ध हो तो यथोक्त जप से सिद्धि प्राप्त हो जाती है। जिस मन्त्र के आदि में सिद्ध और अन्त में रिपु हो तो वह मन्त्र सर्वथा त्याज्य है ॥ ६१ ॥

**साध्यादिश्चैव सिद्धान्तस्त्रिगुणात् सिध्यते जपात्।**
**आदौ साध्यः सुसिद्धान्तः प्रोक्तमार्गेण सिध्यति ॥ ६२ ॥**
**आदौ साध्यस्त्वन्तशत्रुर्यत्नात् तं परिवर्जयेत्।**
**सुसिद्धादिस्तु सिद्धान्तो यथोक्तादेव सिध्यति ॥ ६३ ॥**

जिस मन्त्र का आदि साध्य, किन्तु अन्त सिद्ध होता है, वह त्रिगुण जप से सिद्ध होता है। आदि में साध्य एवं अन्त में सुसिद्ध मन्त्र शास्त्रोक्त जप मार्ग से सिद्ध हो जाता है। आदि में साध्य, किन्तु अन्त में शत्रु, ऐसा मन्त्र यत्नपूर्वक

त्याज्य है ॥ ६२-६३ ॥

**सुसिद्धादिस्तु साध्यान्तश्चतुर्गुणमपेक्षते ।**
**सुसिद्धादिश्चान्तशत्रुर्मध्यमः परिकीर्तितः ॥ ६४ ॥**
**आद्यादिस्त्वन्तसिद्धादिः सोऽपि त्याज्योऽत्र कर्मणि ।**
**आदौ मध्ये तथा चान्ते सिद्धः शुभफलप्रदः ।**
**सर्वसाध्य उदासीनः प्रोक्तस्तन्त्रे स्वयम्भुवा ॥ ६५ ॥**

सुसिद्ध-सिद्ध शास्त्र में कही गई जप संख्या से सिद्ध होते हैं । सुसिद्ध-साध्य चौगुने जप करने से, सुसिद्धारि मध्यम कहा जाता है और अरि-सिद्ध इस कर्म में सर्वथा त्याज्य है । आदि, मध्य और अन्त में सिद्ध का होना शुभदायक है । आदि, अन्त तथा मध्य सर्वत्र साध्य का होना-उदासीन है, ऐसा स्वयं स्वयम्भू ब्रह्माजी ने कहा है ॥ ६४-६५ ॥

**ईशानसंहितायामपि—**

**स्थानत्रितयसुसिद्धः सर्वानर्थांश्च साधयत्येव ।**
**स्थानत्रितयगतारिर्मन्त्रो मृत्युर्न सन्देहः ॥ ६६ ॥**

ईशानसंहिता में भी बतलाया गया है—तीन स्थान (आदि मध्य और अन्त) में आने वाला सुसिद्ध सभी अनर्थों को नष्ट करता है । इसी प्रकार आदि, मध्य और अन्त में आने वाला अरि मन्त्र अवश्य मृत्यु प्रदान करता है; इसमें कोई सन्देह नहीं ॥ ६६ ॥

**सिद्धादिः साध्ययुग्मान्तो व्यर्थ इत्युच्यते बुधैः ।**
**सिद्धादिर्द्विसुसिद्धान्तः सर्वकार्यार्थसाधकः ।**
**सिद्धादिररियुग्मान्तो नाशकः सम्प्रकीर्तितः ॥ ६७ ॥**

सुसिद्धारि और साध्यारि व्यर्थ हैं । सिद्धासिद्ध और साध्य-सुसिद्ध अवश्य ही सर्वकार्यार्थ साधक हैं । सिद्धारि और साध्यारि ये दोनों कार्य के नाशक हैं, ऐसा समझना चाहिये ॥ ६७ ॥

**शत्रुर्भवति यदादौ मध्ये सिद्धस्तदन्तके साध्यः ।**
**कष्टेन कार्यसिद्धिस्तस्य फलं स्वल्पमेव भवेत् ॥ ६८ ॥**

जिसके आदि में अरि हो एवं मध्य में सिद्ध हो और अन्त में साध्य हो, ऐसा मन्त्र कष्ट से कार्य सिद्धि करता है । उसका फल अत्यन्त स्वल्प है ॥ ६८ ॥

**अन्ते यदि भवति रिपुः प्रथमे मध्ये च भवति साध्ययुगम् ।**
**कार्यं विलम्बितं स्यात् प्रणश्यति क्षिप्रमेवान्ते ॥ ६९ ॥**

यदि अन्त में रिपु हो, प्रथम और मध्य में साध्य-सुसिद्ध हो तो कार्य में विलम्ब होता है । अन्त में शीघ्र कार्य का नाश होता है ॥ ६९ ॥

**आद्यन्तयोर्यदा साध्यो मध्ये सिद्धः प्रजायते ।**
**आद्यन्तयोर्यदा सिद्धो मध्ये साध्यः प्रजायते ॥ ७० ॥**
**तावुभौ साध्यसिद्धौ तु जपाधिक्येन सिद्ध्यतः ।**
**अरिसम्पुटितः सिद्धः सुसिद्धोऽपि तथा भवेत् ॥ ७१ ॥**
**सर्वनाशकरो ज्ञेयः साधकस्य न संशयः ।**
**सिद्धान्तरितसाध्यस्तु सुसिद्धान्तरितोऽथवा ।**
**शीघ्रं सिध्यति मन्त्रोऽयमीशानः स्वयमब्रवीत् ॥ ७२ ॥**

जब साध्य आदि अन्त दोनों में हो और मध्य में सिद्ध हो अथवा आदि अन्त में सिद्ध हो एवं मध्य में साध्य हो, तो वे दोनों साध्य-सिद्ध अधिक जप से सिद्ध होते हैं । अरि सम्पुटित सिद्ध एवं अरि सम्पुटित साध्य—ये दोनों ही साधक के विनाशकर्त्ता हैं । सिद्ध मन्त्र से सम्पुटित अथवा सुसिद्ध मन्त्र से सम्पुटित मन्त्र शीघ्र सिद्ध हो जाते हैं, ऐसा स्वयं शिव ने कहा है ॥ ७०-७२ ॥

**सिद्धान्तरितशत्रुश्च सुसिद्धेनापि चेद् भवेत् ।**
**नासौ रिपुर्भवेन्मन्त्रं किन्तु कृच्छ्रेण सिध्यति ॥ ७३ ॥**

सिद्ध से सम्पुटित अरि मन्त्र अथवा सुसिद्ध से सम्पुटित अरि मन्त्र, ऐसा मन्त्र शत्रु नहीं होता, किन्तु उसकी सिद्धि देर से होती है ॥ ७३ ॥

**साध्यान्तरितसिद्धस्तु सुसिद्धोऽपि तथा यदि ।**
**सिध्यत्यतीवकष्टेन साधकस्य न चान्यथा ॥ ७४ ॥**

साध्य सम्पुटित सिद्ध अथवा साध्य सम्पुटित सुसिद्ध बड़े कष्ट से सिद्ध होता है, यह अन्यथा नहीं है ॥ ७४ ॥

**रिपुणान्तरितः सिद्धः सुसिद्धोऽपि तथा यदि ।**
**ईदृशं लक्षणं दृष्ट्वा दूरतः परिवर्जयेत् ।**
**रिपुणा दूषितो मन्त्रो नैव देयः कदाचन ॥ ७५ ॥**

अरि मन्त्र से सम्पुटित सिद्ध और सुसिद्ध, ऐसे मन्त्र को दूर से ही त्याग देवे । जो मन्त्र अरि (शत्रु) से दूषित हो, वह कदापि शिष्य को न देवे ॥ ७५ ॥

**निबन्धे तु—**

**नाम्नो मन्त्रस्य वर्णांश्च लिखित्वा प्रतिवर्णकम् ।**
**सिद्धादिगणना कार्या यावन्मन्त्रसमापनम् ॥ ७६ ॥**

**नाम्नो यदि समाप्तिः स्यात् पुनर्नाम लिखेत् सुधीः ।**
**एवं संशोधितेऽपि स्युर्भूरयः साध्यवैरिणः ॥ ७७ ॥**

निबन्ध में तो कहा गया है—नाम और मन्त्र के वर्णों का प्रत्येक अक्षर लिखे । तदनन्तर सिद्धादि से गणना तब तक करे, जब तक मन्त्र की समाप्ति न हो । यदि नाम का अक्षर समाप्त हो जाय तो पुनः नाम लिखे । इस प्रकार संशोधन करने से भूःरय (सम्पत्ति) साध्य और वैरी के अनुसार करे ॥ ७६-७७॥

**अल्पाः सिद्धसुसिद्धाश्चेदशुभं व्युत्क्रमात् शुभम् ।**
**मतमित्थं तु केषाञ्चित् तदपि प्राज्यसम्मतम् ॥ ७८ ॥ इति ।**

यदि सिद्ध और सुसिद्ध कम संख्या में हों, तब अशुभ और व्युत्क्रम (अधिक) होने पर शुभ समझना चाहिये । ऐसा किसी का मत है वह भी प्राज्ञ सम्मत जानना चाहिये ॥ ७८ ॥

**अथ अकडमचक्रम्**

**यामले—**

**रेखाद्वयं पूर्वपरेण कुर्यात्**
**तन्मध्यतो याम्यकुवेरभेदात् ।**
**महेशरक्षोऽधिपतिक्रमेण**
**तिर्यक् तथा वायुहुताशनेन ॥ ७९ ॥**
**आदिहान्तान् लिखेद् वर्णान् क्लीबस्वरविवर्जितान् ।**
**पूर्वतो यावदीशान्तमङ्कानेकादिद्वादशान् ॥ ८० ॥**

**अकडमचक्रम्**

| | | |
|---|---|---|
| अः ठ भ / अं ट च | अ क ड म | आ ख ढ य / इ ग ण र |
| औ ज फ | | ई घ त ल |
| ओ र प ह / न स ऐ ज | ए छ ध ष | ड ङ थ व / ऊ द श |

अब अ क ड म चक्र कहते हैं । यामल में भी बतलाया गया है—पूर्व से पश्चिम, दक्षिण से उत्तर दो-दो रेखा करे । फिर मध्य में दक्षिण से उत्तर एक रेखा बनावे । तदनन्तर ईशान से नैर्ऋत्य तक एक रेखा, फिर वायव्य से आग्नेय तक एक रेखा खींचे । उन बारह कोष्ठो में नपुंसक (ऋ ॠ ऌ-ॡ) वर्णों को छोड़कर पूर्व से ईशानपर्यन्त शेष मातृका वर्ग अकार से लेकर हकार पर्यन्त ४-४ के क्रम से लिखे ॥ ७९-८० ॥

**तत्र नामार्णमारभ्य मन्त्राद्यर्णावधि क्रमात् ।**
**सिद्धः साध्यः सुसिद्धोऽरिः पुनः सिद्धादयः पुनः ॥ ८१ ॥**
**नवैकपञ्चके सिद्धः साध्यः षड्दशयुग्मके ।**
**सुसिद्धस्त्रिसप्तके रुद्रे वेदाष्टद्वादशे रिपुः ॥ ८२ ॥**

फिर नाम के आदि अक्षर से मन्त्र के आदि अक्षर पर्यन्त सिद्ध, साध्य, सुसिद्ध एवं अरि इस क्रम से गणना करे । पुनः इसी सिद्धादि क्रम से गणना करे। नव एक पाँच में सिद्ध, छह दश दो में साध्य, तीन सात ग्यारह में सुसिद्ध तथा चार, आठ और बारह कोष्ठों में अरिवर्ण होता है ॥ ८१-८२ ॥

**सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः ।**
**सुसिद्धः प्राप्तमात्रेण साधकं भक्षयेदरिः ॥ ८३ ॥**

सिद्ध मन्त्र यथोक्त काल में सिद्ध होता है । साध्य जप-होम से सिद्ध होता है । सुसिद्ध ग्रहण करते ही सिद्ध होता है और अरि मन्त्र स्वयं साधक को ही खा जाता है ॥ ८३ ॥

### प्रकारान्तरेण मन्त्रांशककथनम्

**अथवान्यप्रकारेण वच्मि मन्त्रांशकं मनाक् ।**
**अकारादि हकारान्तं मातृकाक्षरसञ्चयम् ॥ ८४ ॥**
**एकैकार्णं क्रमान् न्यस्य चतुष्कोष्ठेषु मन्त्रवित् ।**
**सिद्धं साध्यं सुसिद्धं च वैरिणं गणयेत् क्रमात् ॥ ८५ ॥**
**यत्र कोष्ठे भवन्त्यर्णा नाममन्त्रसमुद्भवाः ।**
**सिद्धसाध्यादिभेदेन वर्णैस्तैर्मन्त्रमादिशेत् ॥ ८६ ॥**

अथवा अन्य प्रकार से मन्त्रांशक को कहता हूँ । अकार से हकार पर्यन्त समस्त मातृकाक्षरों को एक-एक वर्ण के क्रम से चार-चार कोष्ठो में लिखे । उस सिद्ध, साध्य, सुसिद्ध एवं अरि नामक चार-चार कोष्ठों में नामाक्षर से क्रमशः गणना करे । जिस कोष्ठ में नाम के वर्ण और मन्त्र के वर्ण एकत्र मिलें, उन वर्णों से सिद्ध साध्यादि भेद से मन्त्र का फल समझे ॥ ८४-८६ ॥

मंत्राशकचक्रम्

| | |
|---|---|
| अ उ लृ ओ क ङ<br>र ड थ प म ब ह | आ ऊ ॡ औ ख च<br>ञ ढ द फ भ प श |
| ई ऋ ऐ अः घ<br>ज ठ त न भ ल स | इ ॠ ए अं ग छ<br>ट ण ध व र ष |

**अथवा मन्त्रनामार्णकृते राशौ चतुर्हृते ।**
**सिद्धः साध्यः सुसिद्धोऽरिर्मन्त्र एकादिशेषके ॥ ८७ ॥**
**सिद्धादिशोधनं त्वित्थमथार्णधनशोधनम् ।**

अथवा मन्त्राक्षर और नामाक्षर को एक में जोड़कर चार का भाग देवे । उसमें एकादि के शेष होने पर क्रमशः उसे सिद्ध, साध्य, सुसिद्ध एवं अरि फल समझे। इस प्रकार सिद्धादि से मन्त्रशोधन कहा गया । अब ऋण धन के अनुसार मन्त्र शोधन कहता हूँ ॥ ८७-८८ ॥

ऋण-धनशोधनकथनम्

**सप्त तिर्यग् लिखेद्रेखा द्वादशैवोर्ध्वगाः पुनः ॥ ८८ ॥**
**एवं कृते तु जायन्ते कोष्ठाः षट्षष्टिसंमिताः ।**
**आद्यपंक्तौ लिखेदङ्कान् ते कथ्यन्ते यथाक्रमात्॥ ८९ ॥**
**मनुनक्षत्रनेत्रार्कतिथिषड्वेदवह्नयः ।**
**सायका वसवो नन्दाः कोष्ठेषु क्रमतः स्थिता॥ ९० ॥**
**द्वितीयपंक्तौ संलेख्याः पञ्चदीर्घान् विना स्वरान् ।**
**तृतीयपंक्तौ काद्यर्णाष्टिकारान्ता शिवैर्मिताः ॥ ९१ ॥**
**ठादिफान्ताश्चतुर्थ्यान्तु पञ्चम्यां वादिहान्तिमाः ।**
**षष्ठ्यां पंक्तौ क्रमाल्लेख्या अङ्काः कथ्यन्त एवं ते॥ ९२ ॥**
**दिक्चन्द्रमुनिवेदाष्टगुणसप्तेषु सागराः ।**
**रसा रामाश्च विज्ञेयाः क्रमादङ्का उदीरिताः ॥ ९३ ॥**

सात रेखा उत्तर दक्षिण से तथा ग्यारह रेखा पूर्व पश्चिम से खींचे । इस प्रकार के रेखाओं से ६६ कोष्ठ बन जावेंगे । तदनन्तर प्रथम ११ पङ्क्ति से छह पङ्क्ति तक ६६ कोष्ठों में इस प्रकार अङ्कों को लिखे । १४, २७, २, १२, १५, ६, ४, ३, ५, ८, ९ दूसरी पङ्क्ति में पञ्च दीर्घ पर्यन्त 'अ इ उ ऋ लृ ए ऐ ओ औ अं अः' स्वरों को लिखे । तृतीय पङ्क्ति में क से ट पर्यन्त ११ वर्णों को लिखे ।

ऋणधनशोधनचक्रम्

| १४ | २७ | २ | १२ | १५ | ६ | ४ | ३ | ५ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | इ | उ | ऋ | लृ | ए | ऐ | ओ | औ | अं | अः |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |
| १० | १ | ७ | ४ | ८ | ३ | ७ | ५ | ४ | ६ | ३ |

चतुर्थ पङ्क्ति में ठ से लेकर फ पर्यन्त ११ व्यञ्जन वर्णों को लिखे। पञ्चम पङ्क्ति में ब से लेकर ह पर्यन्त वर्णों को लिखे ॥ ८८-९३ ॥

**मन्त्रवर्णान् पृथक् कुर्यात् स्वरव्यञ्जनरूपतः ।**
**कोष्ठे यावति वर्णः स्याद् गुणयेत् तावदन्तिकम् ॥ ९४ ॥**
**कोष्ठोपरिस्थेनाङ्केन सर्ववर्णेष्वयं विधिः ।**
**दीर्घाक्षराणामङ्कास्तु ज्ञेया लघ्वक्षरस्थिताः ॥ ९५ ॥**
**एकीकृत्त्वाखिलानङ्कानष्टभिर्विभजेत् पुनः ।**
**शेषोङ्को मन्त्रराशिः स्यान्नामवर्णेष्वयं विधिः ॥ ९६ ॥**
**अधः पंक्तिस्थितैरङ्कैर्गुणनीयास्तु तेऽखिलाः ।**
**अधमर्णोऽधिको राशिरूनोराशिर्धनी स्मृतः ।**
**मन्त्रो यदाऽधमर्णः स्यात् तदा ग्राह्यो धनी न तु ॥ ९७ ॥**

षष्ठ पङ्क्ति में जिन अङ्कों को लिखना चाहिये उसे कहता हूँ। १०,१,७,४, ८,३,७,५,४,६,३ अङ्कों को लिखे। इसके बाद मन्त्र के व्यञ्जनों और स्वरों को अलग कर लेना चाहिये। फिर जिन-जिन कोष्ठकों में जितने वर्ण हैं उनका अन्तिम अङ्क से गुणा करे। उनमें जो-जो स्वर व्यञ्जन अरि उनके ऊपर वाले कोष्ठकों के अङ्क लिख लेना चाहिये। मन्त्र में आये पाँच दीर्घ स्वरों के स्थान से ह्रस्व स्वरों के अङ्क ग्रहण करना चाहिये। इस प्रकार सभी स्वर व्यञ्जनों के अङ्कों को जोड़कर आठ का भाग देना चाहिये। जो शेष बचे उसे 'मन्त्रराशि' कहा जाता है। इसी प्रकार नाम के भी स्वर व्यञ्जनों को पृथक् कर उसके नीचे वाली पङ्क्ति में लिखे गये अङ्कों को ग्रहण करे। इस प्रकार जोड़कर ८ का भाग देवे। शेष को 'नामराशि' कहते हैं। जिसमें अधिक अङ्क बचें वह अधमर्ण, जिसमें कम बचें वह धनी होता है। यदि मन्त्र अधमर्ण हो, तब उसे ग्रहण करे। धनी मन्त्र ग्रहण नहीं करना चाहिए ॥ ९४-९७ ॥

अथवा—

**नामाद्यक्षरमारभ्य यावन्मन्त्रादिमाक्षरम् ।**
**गणयेन्मातृकावर्णक्रमेण गुणयेत् त्रिभिः ॥ ९८ ॥**
**विभक्ते सप्तभिः शिष्टो नामराशिरुदीरितः ।**
**एवं मन्त्रार्णमारभ्य यावन्नामादिमाक्षरम् ॥ ९९ ॥**
**गणयित्वा त्रिभिर्हत्वा विभजेत् सप्तभिः सुधीः ।**
**मन्त्रराशिः स्मृतः शिष्टः पूर्ववद् धनितर्णता ॥ १०० ॥**

इस प्रकार धन-ऋण के द्वारा मन्त्र शोधन विषय में कहा गया । अब दूसरी विधि कहता हूँ । नाम के प्रथम अक्षर से मन्त्र के प्रथम अक्षर मन्त्र वर्ण माला के क्रम से गणना करे । जो संख्या आवे, उसका तीन गुना कर सात का भाग देवे, जो शेष बचे उसे 'नामराशि' कही जाती है । इसी प्रकार मन्त्र के प्रथम अक्षर से वर्णमाला के क्रम से गणना करे । जो संख्या आवे, उसका तीन गुना कर ७ का भाग देवे । जो शेष आवे वह 'मन्त्रराशि' कही जाती है । पूर्वोक्त नियमानुसार अधिक राशि वाला ऋणी और अल्पराशि वाला धनी कहा जाता है । अतः ऋणी मन्त्र ग्रहण करे; धनी नहीं ॥ ९८-१०० ॥

**यद्वा मन्त्राक्षराणीह स्वरव्यञ्जनरूपतः ।**
**पृथक् कृत्य द्विगुणयेद् योजयेत् साधकाक्षरैः ॥ १०१ ॥**
**तादृशैरष्टभिर्भक्ते मन्त्रराशिरुदाहृतः ।**
**एवं नामार्णसङ्घोऽपि द्विगुणीकृत्य योजितः ॥ १०२ ॥**
**मन्त्रार्णैरष्टभिर्भक्ते नामराशिः स्मृतो बुधैः ।**
**ऋणिता धनिता चात्र पूर्ववत् परिकीर्तिता ॥ १०३ ॥**
**शून्ये तु मृत्युमाप्नोति धने च विफलं भवेत् ।**
**ऋणी तु प्राप्तिमात्रेण सर्वसिद्धिं प्रयच्छति ॥ १०४ ॥**

अब ऋण धन के प्रकार से संशोधन की तीसरी विधि कहते हैं—मन्त्र के स्वर व्यञ्जनों को पृथक् कर उनका योग करे । उसमें दो का गुणा कर गुणनफल में साधक के नामाक्षरों के भी स्वर-व्यञ्जन को पृथक् कर उसमें जोड़ देवे । इस योगफल में आठ का भाग देवे । जो शेष बचे वह 'मन्त्रराशि' हुई । इसी प्रकार नाम के स्वर-व्यञ्जन को पृथक् कर उनके योग में दो का गुणा करे । गुणनफल में मन्त्र के स्वर व्यञ्जनों को पृथक्-पृथक् कर जोड़ देना चाहिये । फिर उसमें ८ का भाग देने से जो शेष बचे वह 'नामराशि' हुई । यहाँ भी ऋण और धन के नियमानुसार इस प्रकार मन्त्र ग्रहण करना चाहिये । उक्त तीनों प्रकारों में किसी एक रीति से ऋण धन का शोधन करना चाहिये । प्रकृत में विधि इस प्रकार समझना चाहिये । शून्य बचे तो मृत्यु, कम बचे तो विफलता होती है और ऋणी

मन्त्र प्राप्त होते ही सारी सिद्धि प्रदान करता है ॥ १०१-१०४ ॥

**मन्त्रो यद्यधिकाङ्कः स्यात् तदा मन्त्रं जपेत् सुधीः ।**
**समेऽपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिकम् ।**
**शून्ये मृत्युं विजानीयात् तस्मात् शून्यं विवर्जयेत् ॥ १०५ ॥**
**उक्तान्यतममार्गेण शोधनीयमृणं धनम् ।**

जब मन्त्रराशि का अङ्क अधिक हो तभी बुद्धिमान् मन्त्र ग्रहण कर जप करे, अथवा ऋण धन बराबर होने पर भी मन्त्र जप करे किन्तु ऋणी मन्त्र का जप कदापि न करे । यतः शून्य शेष होने पर मृत्यु रूप फल होता है । अतः ऐसा मन्त्र ग्रहण न करे । ऊपर कहे गये तीनों प्रकारो में से किसी एक से ऋण धन का संशोधन करे ॥ १०५ ॥

ऋणिधनीफलश्रुतिकथनम्

**यो मन्त्रः पूर्वजनुषि सेवितो नो ददत्फलम् ॥ १०६ ॥**
**पापात् पापक्षये जाते फलावाप्तिरनेहसि ।**
**आयुःक्षयाद् गतो नाशं साधकोऽस्य भवान्तरे ॥ १०७ ॥**
**ऋणित्वात् प्राप्तमार्गेण मन्त्रोऽभीष्टं प्रयच्छति ।**
**समाङ्कौ यद्युभौ राशी तदा संसेवनात् फलम् ॥ १०८ ॥**
**धनीमन्त्रस्तु सम्प्राप्तः फलत्यधिकसेवया ।**

अब मन्त्रों के ऋणी और धनी होने की फलश्रुति कहते हैं—यदि पूर्वजन्म में उपासना के समय पापाधिक्य होने के कारण साधक की आयु समाप्त हो गई और मन्त्र अपना फल न दे सका, तो वह उपासक का ऋणी ही रहा । अतः इस जन्म में उसी मन्त्र के ग्रहण करने पर वह साधक को अभीष्ट फल देने में उन्मुख होगा । यदि नामराशि और मन्त्रराशि के अङ्क समान हों, तो भी उपासक को उसकी उपासना का फल मिलेगा ही । इतना अवश्य है कि धनी मन्त्र अधिक साधना से ही फलोन्मुख होगा ॥ १०६-१०९ ॥

**मन्त्राणां शोधने भूयः प्रकारान्तरमुच्यते ॥ १०९ ॥**
**षट्कोणेषु लिखेत् पूर्वकोणादेकैकवर्णकान् ।**
**अकारादिहकारान्तान् नपुंसकविवर्जितान् ॥ ११० ॥**
**नामाद्यक्षरमारभ्य मन्त्रार्णावधि शोधयेत् ।**
**प्रथमे सम्पदुद्दिष्टा द्वितीये धनसङ्क्षयः ॥ १११ ॥**
**तृतीये धनसम्प्राप्तिश्चतुर्थे बन्धुविग्रहः ।**
**पञ्चमे तु भवेदाधिः षष्ठे सर्वस्वसङ्क्षयः ।**
**एवं संशोधितं मन्त्रं दद्यात् शिष्याय मान्त्रिकः ॥ ११२ ॥**

**मन्त्रशोधनचक्रम्**




अब मन्त्र संशोधन की पुनः एक और विधि का प्रतिपादन करते हैं—षट्कोण चक्र में नपुंसक स्वरों को छोड़कर पूर्व से आरम्भ कर अकार से हकार पर्यन्त एक-एक वर्णों के क्रम से लिखना चाहिए। तदनन्तर नाम के प्रथम अक्षर से, मन्त्र के प्रथम अक्षर तक, इस प्रकार संशोधन करना चाहिये। नाम के प्रथमाक्षर से यदि मन्त्राक्षर पहले कोष्ठ में हो, तब सम्पत्ति लाभ, दूसरे में हो तो धन हानि, तीसरे में हो तो धन लाभ, चौथे में हो तब बन्धुओं में कलह, पाँचवें में हो तो आधि-व्याधि और षष्ठ में हो तो सर्वस्व नाश होता है। अतः मन्त्रवेत्ता गुरु को चाहिये कि इस प्रकार से संशोधित करके ही अपने साधक शिष्य को मन्त्र देवे ॥ ११०-११२ ॥

**वाराहीतन्त्रे—**

**ताराचक्रं राशिचक्रं नामचक्रं तथैव च ।**
**तत्र चेत् सगुणो मन्त्रो नान्यं चक्रं विचारयेत् ॥ ११३ ॥**

वराहीतन्त्र में भी बतलाया गया है—तारा चक्र, राशि चक्र तथा नाम चक्र से यदि मन्त्र परीक्षित कर आचार्य द्वारा शुद्ध कर लिया गया तो अन्य चक्र से संशोधन न करे ॥ ११३ ॥

एतदेव शारदायाम्—

स्वताराराशिकोष्ठानामनुकूलान् भजेन् मनून्।

सारसंग्रहेऽपि—

दुष्टर्क्षराशिभूतादिवर्णप्रचुरमन्त्रकम् ।
सम्यक् परीक्ष्य तं यत्नाद् वर्जयेन्मतिमान्नरः ॥ ११४ ॥
हंसस्याष्टाक्षरस्यापि तथा पञ्चाक्षरस्य तु ।
एकद्वित्र्यादिबीजस्य सिद्धादीन् नैव शोधयेत् ॥ ११५ ॥

यही बात शारदातिलक में भी बतलाया गया है—अपने नक्षत्र और अपनी राशि के द्वारा मन्त्र के अनुकूल न होने पर अन्य मन्त्र ग्रहण न करे ।

सारसंग्रह में भी कहा गया है—दुष्ट नक्षत्र एवं दुष्ट राशियों वाले, भूतादि वर्ण वाले, अनेक मन्त्रों को अच्छी प्रकार से परीक्षा कर प्रयत्न से उनको वर्जित करे । हंस मन्त्र, अष्टाक्षर मन्त्र, पञ्चाक्षर मन्त्र तथा एक, दो, तीन बीजों वाले मन्त्रों को सिद्धादि द्वारा संशोधन न करे ॥ ११४-११५ ॥

अन्यत्रापि—

एकत्रिपञ्चसप्तार्णनवरुद्रषडर्णके ।
द्वात्रिंशदक्षरे मन्त्रे नांशकं परिगणयते ।
छिन्नादिदुष्टा मन्त्रास्ते पालयन्ति न साधकम् ॥११६॥ इति ।

अन्यत्र भी बतलाया गया है—एकाक्षर, त्र्यक्षर, पञ्चाक्षर, सप्ताक्षर, नवाक्षर, एकादशाक्षर, षडक्षर तथा बत्तीस वर्ण वाले मन्त्रों की मन्त्रांशक द्वारा परीक्षा न करे। छिन्न दुष्टादि मन्त्र साधक की रक्षा नहीं कर सकते अतः उनकी परीक्षा आवश्यक है ॥ ११६ ॥

तच्व विश्वसारे शारदायां च—

छिन्नो रुद्धः शक्तिहीनः पराङ्मुख उदीरितः।
वधिरो नेत्रहीनश्च कीलितः स्तम्भितस्तथा ॥ ११७ ॥
दग्धस्त्रस्तश्च भीतश्च मलिनश्च तिरस्कृतः ।
भेदितश्च सुषुप्तश्च मदोन्मत्तश्च मूर्च्छितः ॥ ११८ ॥
हृतवीर्यश्च हीनश्च प्रध्वस्तो बालकः पुनः ।
कुमारस्तु युवा प्रौढो वृद्धो निस्त्रिंशकस्तथा ॥ ११९ ॥
निर्वीर्यः सिद्धिहीनश्च मन्दः कूटस्तथा पुनः ।
निरंशकः सत्त्वहीनः केकरो बीजहीनकः ॥ १२० ॥
धूमितालिङ्गितौ स्यातां मोहितश्च क्षुधार्त्तकः ।

**अतिदृप्तोऽगहीनश्च अतिक्रुद्धः समीरितः ॥ १२१ ॥**
**अतिक्रूरश्च सव्रीडः शान्तमानस एव च ।**
**स्थानभ्रष्टश्च विकलो निस्नेहश्च प्रकीर्तितः ॥ १२२ ॥**
**अतिवृद्धः पीडितश्च वक्ष्याम्येषां च लक्षणम् ।**

अब छिन्नादि मन्त्रों के नाम और लक्षण विश्वसारतन्त्र और शारदातिलक में कही गई रीति से कहते हैं—छिन्न, रुद्ध, शक्तिहीन, पराङ्मुख, बधिर, नेत्रहीन, कीलित, स्तम्भित, दग्ध, त्रस्त, भीत, मलिन, तिरस्कृत, भेदित, सुषुप्त, मदोन्मत्त, मूर्च्छित, हतवीर्य, हीन, प्रध्वस्त, बालक, कुमार, युवा, प्रौढ, वृद्ध, निस्त्रिंशक, निर्बीज, सिद्धहीन, मन्द, कूट, निरंश, सत्त्वहीन, केकर, बीजहीनक, धूमित, आलिङ्गित, मोहित, क्षुधार्त्तक, अतिदृप्त, अङ्गहीन, अतिक्रुद्ध, अतिक्रूर, सव्रीड, शान्त, मानस, स्थानभ्रष्ट, विकल, अतिवृद्ध, निःस्नेह और पीड़ित—मन्त्र में रहने वाले इतने दोष हैं ॥ ११७-१२३ ॥

**मनोर्यस्यादिमध्यान्ते चानिलं बीजमुच्यते ॥ १२३ ॥**
**संयुक्तं वा वियुक्तं वा स्वराक्रान्तं त्रिधा पुनः ।**
**चतुर्धा पञ्चधा वाऽथ स मन्त्रश्छिन्नसञ्ज्ञकः ॥ १२४ ॥**
**आदिमध्यावसानेषु भूबीजद्वयलाञ्छितः ।**
**रुद्धमन्त्रः स विज्ञेयो भुक्तिमुक्तिविवर्जितः ॥ १२५ ॥**

अब इनका लक्षण कहता हूँ—१. जिस मन्त्र के आदि और अन्त में अनिल बीज (यं) संयुक्त अक्षर के साथ अथवा केवल दो-दो बार उच्चारित हो, इस प्रकार का मन्त्र 'छिन्न' सञ्ज्ञक होता है । यह छिन्न मन्त्र संयुक्त, वियुक्त और स्वराक्रान्त भेदों से तीन प्रकार का कहा गया है अथवा चार या पाँच भेदों वाला होता है । ऐसा मन्त्र छिन्न सञ्ज्ञक होता है । २. जिस मन्त्र के आदि, मध्य एवं अवसान में भू-बीज दो बार लगाया गया हो उसे 'रुद्ध' मन्त्र कहा जाता है । यह न भोग प्रदान करता है, न मोक्ष प्रदान करता है ॥ १२४-१२५ ॥

**माया त्रितत्त्वश्रीबीजरावहीनस्तु यो मनुः ।**
**शक्तिहीनः स कथितो यस्य मध्ये न विद्यते ॥ १२६ ॥**
**कामबीजं मुखे माया शिरस्यंकुशमेव वा ।**
**असौ पराङ्मुखः प्रोक्तो हकारो बिन्दुसंयुतः ॥ १२७ ॥**

३. माया (भुवनेश्वरी बीज ह्रीं), त्रितत्त्व (हूं अथवा प्रणव), श्री बीज (श्रीं) राव (फ्रें) ये अक्षर जिस मन्त्र में नहीं हैं वे 'शक्तिहीन' कहे जाते हैं । ४. जिस मन्त्र के आदि में काम बीज (क्लीं), मध्य में माया (ह्रीं), अन्त में अङ्कुश (क्रौं) न हो, उसे 'पराङ्मुख' कहा जाता है ॥ १२६-१२७ ॥

**आद्यन्तमध्येष्विन्दुर्वा न भवेद् वधिरः स्मृतः ।**

५. जिस मन्त्र के आदि, मध्य अथवा अन्त में बिन्दु संयुक्त हकार न हो और बिन्दु संयुक्त प्रकार न हो वह मन्त्र 'वधिर' कहा जाता है ॥ १२८ ॥

**पञ्चवर्णो मनुर्यः स्याद् रेफार्केन्दुविवर्जितः ॥ १२८ ॥**
**नेत्रहीनः स विज्ञेयो दुःखशोकामयप्रदः ।**

६. पाँच अक्षर वाले जिस मन्त्र में रेफ अर्क (हकार) और इन्द्र (सकार) न हो उस मन्त्र को 'नेत्रहीन' कहा जाता है । ऐसा मन्त्र दुःख, शोक एवं रोग देने वाला होता है ॥ १२८-१२९ ॥

**आदिमध्यावसानेषु हंसप्रासादवाग्भवाः ॥ १२९ ॥**
**हकारो बिन्दुमान् जीवो रावश्चापि चतुष्कलः ।**
**माया नमामि च पदं नास्ति यस्मिन् स कीलितः ॥ १३० ॥**
**एकं मध्ये द्वयं मूर्ध्नि यस्मिन्नस्त्रपुरन्दरौ ।**
**न विद्येते स मन्त्रः स्यात् स्तम्भितः सिद्धिरोधकः ॥ १३१ ॥**

७. आदि, मध्य या अन्त में प्रासाद से युक्त हंस बीज (ह्सौं), वाग्भव (ऐं), बिन्दुमान् हकार (हं), जीव (सः), राव (फ्रें), चतुष्कल (हूं हूं), माया (ह्रीं) एवं नमामि इनमें से कोई पद न हो तो उसे 'कीलित' मन्त्र कहा जाता है । ८. जिस मन्त्र के मध्य में एक अस्त्र (फट्), एक पुरन्दर (ल) न हो, अथवा अन्त में दो फट्कार एवं दो ल न हो, उसे 'सम्मित' मन्त्र कहा जाता है क्योंकि ऐसे मन्त्र से सिद्धि नहीं होती । अपितु ऐसे मन्त्र सिद्धि को रोकते हैं ॥ १२९-१३१ ॥

**वह्निर्वायुसमायुक्तो यस्य मन्त्रस्य मूर्धनि ।**
**सप्तधा दृश्यते तं तु दग्धं मन्येत मन्त्रवित् ॥ १३२ ॥**

९. जिस मन्त्र के आदि में वह्नि र् तथा वायु (य) समवेत रूप से सात बार आया हो, वह मन्त्र 'दग्ध' समझना चाहिये ॥ १३२ ॥

**अस्त्रं द्वाभ्यां त्रिभिः षड्भिरष्टाभिर्दृश्यतेऽक्षरैः ।**
**त्रस्तः सोऽभिहितो यस्य मुखे न प्रणवः स्थितः ॥ १३३ ॥**
**शिवो वा शक्तिरथवा भीताख्यः सः प्रकीर्तितः ।**
**आदिमध्यावसानेषु भवेन्मार्णचतुष्टयम् ॥ १३४ ॥**
**यस्य मन्त्रः स मलिनो मन्त्रवित् तं विवर्जयेत् ।**

१०. दो, तीन, छह अथवा आठ अक्षरों से युक्त अस्त्र मन्त्र (हुं फट्) जिस मन्त्र में हो, उसे 'त्रस्त' कहा जाता है । ११. जिस मन्त्र के आदि में प्रणव एवं

शिव (हं), शक्ति (ह्रीं) न हो, वह मन्त्र 'भीत' कहा जाता है । १२. जिस मन्त्र के आदि, मध्य तथा अन्त इन तीनों स्थानों में चार प्रकार हो उसे मलिन कहा जाता है । अतः मन्त्रवेत्ता उसे त्याग देवे ॥ १३३-१३५ ॥

**यस्य मध्ये दकारोऽथ क्रोधो वा मूर्धनि द्विधा ॥ १३५ ॥**
**अस्त्रं तिष्ठति मन्त्रः स तिरस्कृत उदाहृतः ।**

१३. जिस मन्त्र के मध्य, अथवा अन्त में दकार अथवा क्रोध (हुं) आता हो, अथवा दो बार अस्त्र मन्त्र (हुं फट्) आता हो, तो उस मन्त्र को 'तिरस्कृत' कहा जाता है ॥ १३५-१३६ ॥

**भ्यो द्वयं हृदये शीर्षे वषट् वौषट् च मध्यतः ॥ १३६ ॥**
**यस्याऽसौ भेदितो मन्त्रस्त्याज्यः सिद्धिषु साधकैः ।**

१४. जिस मन्त्र के हृदय प्रदेश में दो बार 'भ्यो' कहा गया हो, अन्त में वषट् हो और अन्त में अस्त्र (हुं फट्) हो, तो उसे 'भेदित' कहा जाता है । बुद्धिमान सिद्धि कार्य में ऐसे मन्त्रों का त्याग कर देवे ॥ १३६-१३७ ॥

**वर्णत्रयं भवेद् यत्र हंसहीनं स शम्भुना ॥ १३७ ॥**
**सुषुप्त इति सिद्धान्ते प्रोक्तोऽभीष्टफलापहः ।**

१५. जिस मन्त्र में तीन अक्षर हो और जो हं सः इन दो अक्षरों से रहित हो, वह 'सुषुप्त' कहा जाता है । वह साधक के अभीष्ट फल का भी अपहरण करने वाला बतलाया गया है ॥ १३७-१३८ ॥

**विद्या वा मन्त्रराजो वा सप्ताधिकदशाक्षरः ॥ १३८ ॥**
**फट्काराः पञ्च पूर्वश्चेदुन्मत्तः सः प्रकीर्तितः ।**
**तद्वदस्त्रं स्थितं मध्ये यस्य, मन्त्रः स मूर्च्छितः ॥ १३९ ॥**

१६. जो विद्या मन्त्र अथवा मन्त्रराज सत्रह अक्षरों से अधिक हो और जो मन्त्र पाँच फट्कार से युक्त हो, वह 'मदोन्मत्त' कहा जाता है । १७. इसी प्रकार से जिस मन्त्र के मध्य में पाँच बार अस्त्र मन्त्र (हुं फट्) का प्रयोग हुआ हो तो, उसे 'मूर्च्छित' कहा जाता है ॥ १३८-१३९ ॥

**अस्त्रमन्त्रो भवेद् यस्य मध्ये प्रान्ते च शम्भुना।**
**हतवीर्य इति ख्यातः स मन्त्रो नैव सिध्यति ॥ १४० ॥**

१८. जिस मन्त्र के मध्य एवं अन्त में अस्त्र मन्त्र हो, वह 'हतवीर्य' कहा जाता है। उस मन्त्र की सिद्धि कदापि नहीं होती है ॥ १४० ॥

**आदावन्ते तथा मध्ये चतुर्धाऽस्त्रेण संयुतम् ।**

**अष्टादशाक्षरं मन्त्रं भीतं तं भैरवोऽब्रवीत् ॥ १४१ ॥**

१९. जिस मन्त्र के आदि, अन्त तथा मध्य में चार बार अस्त्र मन्त्र (हुं फट्) आया हो और मन्त्र के अक्षरों की संख्या अट्ठारह हो, उसे 'भीत' कहा जाता है। ऐसा भैरव ने कहा है ॥ १४१ ॥

**विमर्श**—इसके पहले १३४ श्लोक में भी भीत का लक्षण कहा गया है।

**विंशत्येकोनवर्णश्च मायोंकारांकुशान्वितः ।**
**प्रध्वस्त इत्यसौ मन्त्रः शम्भुदेवेन कीर्तितः ॥ १४२ ॥**

२०. उन्नीस अक्षर वाले जिस मन्त्र में माया (ह्रीं), ॐ, अङ्कुश (क्रौं) का प्रयोग हो, उसे शम्भुदेव ने 'प्रध्वस्त' कहा है ॥ १४२ ॥

**सप्ताक्षरो भवेद् बालः कुमारश्चाष्टवर्णकः ।**
**चत्वारिंशाक्षरः प्रौढस्तरुणः षोडशाक्षरः ॥ १४३ ॥**

२१. सात अक्षर का मन्त्र 'बाल' कहा जाता है। २२. आठ वर्ण का मन्त्र 'कुमार' कहा जाता है। २३. चालीस अक्षर का मन्त्र 'प्रौढ' तथा २४. सोलह अक्षर का मन्त्र 'तरुण' कहा जाता है ॥ १४३ ॥

**त्रिंशदर्णं शतार्णं वा चतुःषष्ट्यक्षरं तथा ।**
**चतुरूर्ध्वं शतं वापि वृद्ध इत्यभिधीयते ॥ १४४ ॥**

२५. तीस अक्षरों वाला, अथवा एक-सौ अक्षरों वाला, अथवा चौंसठ अक्षंरों वाला, एक-सौ चार अक्षरों वाला मन्त्र 'वृद्ध' कहा जाता है ॥ १४४ ॥

**नवाक्षरस्तु निस्त्रिंशो ध्रुवयुक्तोऽपि मृत्युदः ।**
**हृत् शिरोऽन्ते शिखावर्म मध्ये नेत्रास्त्रके तथा ।**
**शिवशक्त्यात्मकौ वर्णौ न स्तो यस्य स मन्त्रराट् ॥ १४५ ॥**

२६. नव अक्षर वाला मन्त्र जो 'ॐ' से युक्त हो, वह 'निस्त्रिंश' (घातक) कहा जाता है। वह प्रणव युक्त होने पर भी मृत्यु प्रदान करता है। २७. जिस मन्त्र के अन्त में हृत् (नमः) का प्रयोग न हो, मध्य में (शिर स्वाहा) का प्रयोग न हो, इसी प्रकार शिखा (वषट्) एवं वर्म (हुं), नेत्र (वौषट्), अस्त्र (फट्), शिर (हं), शक्ति वर्ण (सः) से हीन हो तो उसे 'निर्वीय' कहा जाता है ॥ १४५ ॥

**निर्वीर्यश्च समाख्यात आदावोंकारवर्जितः ।**
**एषु स्थानेषु फट्कारः षोढा यस्मिन् प्रदृश्यते ।**
**स मन्त्रः सिद्धिहीनः स्यान्मन्दः पंक्त्यक्षरो मनुः ॥ १४६ ॥**

२८. जिस मन्त्र के आदि में ॐकार न हो, आदि, मध्य एवं अन्त इन तीनों

स्थानों में तथा अन्यत्र तीन स्थानों में; इस प्रकार कुल छह स्थानों में फट्कार का प्रयोग हो तो वह मन्त्र 'सिद्धिहीन' कहा जाता है ॥ १४६ ॥

**कूट एकाक्षरो मन्त्रः स एवोक्तो निरंशकः ।**
**द्विवर्णः सत्त्वहीनः स्याच्चतुर्वर्णस्तु केकरः ।**
**षडक्षरो बीजहीनः सार्धसप्ताक्षरो मनुः ॥ १४७ ॥**
**सार्धद्वादशवर्णो वा धूमितः स तु निन्दितः ।**
**सार्धबीजत्रयस्तद्वदेकविंशतिवर्णकः ॥ १४८ ॥**
**विंशत्यर्णस्त्रिंशदर्णो यः स्यादालिङ्गितस्तु सः ।**
**द्वात्रिंशदक्षरो मन्त्रो मोहितः परिकीर्तितः ॥ १४९ ॥**

२९. दश अक्षर का मन्त्र 'मन्द' कहा जाता है । ३०. कूट अथवा एकाक्षर मन्त्र 'निरंशक' कहा जाता है । ३१. दो अक्षर वाला मन्त्र 'सत्त्वहीन' कहा जाता है । ३२. चार अक्षर वाला मन्त्र 'केकर' कहा जाता है । ३३. छह अक्षर वाला मन्त्र 'बीजहीन' तथा साढ़े सात अक्षर वाला अथवा साढ़े बारह अक्षर वाला मन्त्र 'धूमित' कहा जाता है, जो कि सर्वथा निन्दित बतलाया गया है । इसी प्रकार साढ़े तीन 'बीजाक्षरों' का तथा इक्कीस अक्षर वाला मन्त्र भी 'धूमित' कहा जाता है । ३४. बीस अक्षर एवं तीस अक्षर का मन्त्र 'आलिङ्गित' कहा जाता है और फिर ३५. बत्तीस अक्षर वाला मन्त्र 'मोहित' कहा जाता है ॥ १४७-१४९ ॥

**चतुर्विंशतिवर्णो यः सप्तविंशतिवर्णकः ।**
**क्षुधार्त्तः स तु विज्ञेयः चतुस्त्रिंशतिवर्णकः ॥ १५० ॥**
**एकादशाक्षरो वापि पञ्चविंशतिवर्णकः ।**
**त्रयोविंशतिवर्णो वा मन्त्रो दृप्त उदाहृतः ॥ १५१ ॥**

३६. चौबीस-चौबीस अक्षरों वाला, अथवा सत्ताइस अक्षरों वाला मन्त्र 'क्षुधार्त्त' कहा जाता है । ३७. इसी प्रकार चौंतीस अक्षरों का, ग्यारह अक्षरों का, पच्चीस वर्णों का और तेइस वर्णों का मन्त्र 'दृप्त' कहा जाता है ॥ १५०-१५१॥

**षड्विंशत्यक्षरो मन्त्रः षट्त्रिंशद्वर्णकस्तथा ।**
**त्रिंशदेकोनवर्णो वाप्यङ्गहीनोऽभिधीयते ॥ १५२ ॥**
**अष्टात्रिंशत्यक्षरो वा एकत्रिंशदथापि वा ।**
**अतिक्रूरः स कथितो निन्दितः सर्वकर्मसु ॥ १५३ ॥**

३८. छब्बीस अक्षरों वाला, छत्तीस एवं छह अक्षरों वाला और उन्नीस अक्षरों वाला मन्त्र 'अङ्गहीन' कहा जाता है । ३९. अट्ठाइस अक्षरों का और इकतीस अक्षरों का मन्त्र 'अतिक्रुद्ध' कहा जाता है जो सभी कार्यों में निन्दित कहा गया है । ४०. तीस अक्षरों वाला या तैतीस अक्षरों वाला 'अतिक्रूर' कहा जाता है ।

वह मन्त्र सभी कर्मों में निन्दित है ॥ १५२-१५३ ॥

**चत्वारिंशतमारभ्य त्रिषष्टिर्यावदापतेत् ।**
**तावत् संख्यासु गदिता मन्त्राः सव्रीडसञ्ज्ञकाः ।**
**पञ्चषष्ट्यक्षरा ये स्युर्मन्त्रास्ते शान्तमानसाः ॥ १५४ ॥**
**एकोनशतपर्यन्तं पञ्चषष्ट्यक्षरादितः ।**
**ये मन्त्रास्ते निगदिता स्थानभ्रष्टाह्वया बुधैः ॥ १५५ ॥**

४१. चालीस संख्या से आरम्भ कर एक-एक अङ्क की वृद्धि से तिरसठ संख्या तक जितने अङ्क हैं (अर्थात् ४०-६३)। उतने पर्यन्त अक्षरों वाले जितने मन्त्र हैं, वे सभी 'व्रीड' सञ्ज्ञक होते हैं । ४२. पैंसठ अक्षरों के जितने मन्त्र हैं, वे 'शान्तमानस' कहे जाते हैं । ४३. पैंसठ से लेकर ९९ (नवनवति) पर्यन्त अक्षरों वाले मन्त्रों को बुद्धिमानों ने 'भ्रष्ट' सञ्ज्ञक कहा जाता है ॥ १५४-१५५ ॥

**त्रयोदशाक्षरा ये स्युर्मन्त्राः पञ्चदशाक्षराः ।**
**विकलास्तेऽभिधीयन्ते शतं सार्धशतं तथा ॥ १५६ ॥**

४४. जो मन्त्र तेरह अक्षर वाले, अथवा पन्द्रह-पन्द्रह अक्षरों वाले हैं, अथवा सौ, अथवा डेढ़ सौ अक्षरों के हैं वे 'विकल' सञ्ज्ञक हैं ॥ १५६ ॥

**शतद्वयं द्विनवतिरेकहीनाऽथवापि सा ।**
**शतत्रयं वा यत् संख्या निस्नेहास्ते समीरिताः॥ १५७ ॥**

४५. दो-सौ अक्षरों वाले मन्त्र, एक-सौ अस्सी अक्षरों वाले मन्त्र, अथवा उस द्विनवति में एक हीन अर्थात् इक्यानबे अक्षरों वाले मन्त्र, अथवा तीन-सौ संख्या वाले मन्त्र 'निःस्नेह' बतलाये गये हैं । अतः बुद्धिमानों को उनका त्याग कर देना चाहिये ॥ १५७ ॥

**चतुःशतान्यथारभ्य यावद् वर्णसहस्रकम् ।**
**अतिवृद्धः स योगेषु परित्याज्यः सदा बुधैः ॥ १५८ ॥**
**सहस्राणाधिका मन्त्राः दण्डकाः पीडिताह्वयाः ।**
**द्विसहस्राक्षरा मन्त्राः खण्डशः शतधाकृताः ।**
**ज्ञातव्या स्तोत्ररूपास्ते मन्त्रा एते यथास्थिताः ॥ १५९ ॥**

४६. चार-सौ से लेकर एक हजार पर्यन्त वर्ण वाले मन्त्र 'अतिवृद्ध' कहे जाते हैं । ४७. एक हजार से अधिक अक्षर वाले मन्त्र 'दण्डक' कहे गये हैं । उनको 'पीड़ित' भी कहा गया है । ४८. दो सहस्र अक्षर वाले मन्त्रों को, सौ-सौ खण्डों में प्रविभक्त करने से स्तोत्र का रूप धारण करते हैं । वे भी सदोष हैं, जैसे मन्त्र सदोष होते हैं, वैसे ही स्तोत्र भी दोषयुक्त हैं ॥ १५८-१५९ ॥

**तथा विद्याश्च बोद्धव्या मन्त्रिभिः काम्यकर्मसु ।**
**दोषानिमानविज्ञाय यो मन्त्रं भजते जडः ।**
**सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥ १६० ॥**

४९. मन्त्रज्ञ साधक स्तोत्रों को तथा विद्या को भी मन्त्रों के समान ही काम्य कर्मों में प्रयोग करे । जो मूर्ख इन दोषों को बिना जाने मन्त्रों का काम्यादि कर्मों में प्रयोग करता है, उसे करोड़ों कल्पों में भी सिद्धि प्राप्त नहीं होती ॥ १६० ॥

**छिन्नादिदुष्टा ये मन्त्रास्तन्त्रे तन्त्रे निरूपिताः ।**
**ते सर्वे सिद्धिमायान्ति मातृकार्णप्रभावतः ॥ १६१ ॥**

जो छिन्नादि दुष्ट मन्त्र तन्त्रों में कहे गये हैं, वे सब मातृका वर्णों के प्रभाव से सिद्ध हो जाते हैं ॥ १६१ ॥

**मातृकार्णैः पुटीकृत्य मन्त्रं विद्यां विशेषतः ।**
**शतमष्टोत्तरं पूर्वं प्रजपेत् फलसिद्धये ॥ १६२ ॥**
**तदा मन्त्रोऽथवा विद्या यथोक्तफलदा भवेत् ।**
**मातृकापुटितं कृत्वा मध्ये वर्णं निधाय च ॥ १६३ ॥**
**मन्त्रवर्णान् ततः कुर्याद् बोधनं तन्त्रसम्मतम् ।**
**बद्ध्वा च योनिमुद्रां तां सङ्कोच्याधारपङ्कजम् ॥ १६४ ॥**
**तदुत्पन्नान् मन्त्रवर्णान् सर्वतश्च गतागतान् ।**
**ब्रह्मरन्ध्रावधि ध्यात्वा वायुमापूर्य कुम्भयेत् ॥ १६५ ॥**
**सहस्रं प्रजपेन् मन्त्रं मन्त्रदोषोपशान्तये ।**
**एषु दोषेषु प्राप्तेषु मायां काममथापि वा ॥ १६६ ॥**
**क्षिप्त्वा चादौ श्रियं चैव तद्दूषणविमुक्तये ।**
**तारसम्पुटितो वापि दुष्टमन्त्रोऽपि सिद्ध्यति ॥ १६७ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे मन्त्रदोषशोधनादिकथनं नाम एकोनविंशः पटलः ॥ १९ ॥**

...❦...

मन्त्रों को तथा विशेष रूप से विद्या को मातृका वर्णों से सम्पुटित करे । इस प्रकार फल प्राप्ति के लिये एक सौ आठ बार सम्पुट करे, तब वह मन्त्र अथवा विद्या फलवती होती है । मातृका अक्षरों के सम्पुट के मध्य में वर्ण को स्थापित कर तब मन्त्र वर्णों का बोधन करे । यह प्रक्रिया तन्त्रसम्मत है । योनिमुद्रा बाँधकर आधार पङ्कज को (गुदा स्थित) सङ्कुचित करे । उससे उत्पन्न वर्णों को यत्र तत्र ऊपर (षट् चक्रों से) ले जाते हुये ब्रह्मरन्ध्र का ध्यान कर पूरक द्वारा किये गये

प्राण को कुम्भक द्वारा रोके । इस प्रकार मन्त्रदोष की शान्ति के लिये एक सहस्र जप करे, अथवा इन दोषों के प्राप्त होने पर माया बीज (ह्रीं), काम बीज (क्लीं) तथा श्रीं बीज से मन्त्र को सम्पुटित करे, अथवा केवल प्रणव से सम्पुटित करे तो दुष्ट मन्त्र भी सिद्ध हो जाता है ॥ १६२-१६७ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में मन्त्रदोष-शोधनादिकथन नामक एकोनविंश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ १९ ॥**



# विंशः पटलः

## दीक्षाकथनम्

अथ दीक्षां प्रवक्ष्यामि वास्तुयागपुरःसरम् ।
कृतेन येन मन्त्रज्ञो दीक्षायाः फलमाप्नुयात् ॥ १ ॥

अब वास्तुयाग सहित दीक्षा के विषय में कहूँगा, जिसके करने पर दीक्षा का फल प्राप्त होता है ॥ १ ॥

### दीक्षाग्रहणदेशः कालश्च

**संहितायाम्—**

पञ्चाङ्गशुद्धदिवसे स्वोदये तिथिवारयोः ।
गुरुशुक्रोदये शुद्धलग्ने द्वादशशोधिते ॥ २ ॥
प्रवृद्धे सबलेऽनीचे शुक्रे देवगुरौ तथा ।
शुभे विधुसमायोगे शुभवर्गे शुभोदये ॥ ३ ॥
इत्यादौ सर्वमन्त्राणां संग्रहः सर्वसौख्यकृत् ।
पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये ।
प्रयागे श्रीपुरे काश्यां दीक्षा शस्ता सुसिद्धये ॥ ४ ॥

संहिता में भी बतलाया गया है—जो दिन पञ्चाङ्ग (तिथि, वार, नक्षत्रादि) से शुद्ध हो, तिथि एवं वार अपने अनुकूल हों, गुरु और शुक्र दोनों का उदय हो, चार, आठ, बारह से सर्वथा शुद्ध लग्न हों, बलवान् ग्रह का योग हो, शुक्र और बृहस्पति नीच में न पड़े हों, चन्द्रमा दाहिने हो, शुभ वर्ग शुभोदय हों इत्यादि का विचार करे । तभी सभी मन्त्रों का संग्रह सभी प्रकार का सौख्यकारक होता है । पुण्यतीर्थ में, कुरुक्षेत्र में, देवी के चार पीठ में, प्रयाग में, श्रीपुर में और काशी में सर्वप्रकार की सिद्धि के लिये दीक्षा ग्रहण प्रशस्त कहा गया है ॥ २-४ ॥

**योगिनीतन्त्रे—**

गङ्गायां भास्करक्षेत्रे विरजे चन्द्रपर्वणि ।
चट्टले च मतङ्गे च तथा कण्वाश्रमेषु च ॥ ५ ॥

न गृह्णीयात् ततो दीक्षां तीर्थेष्वेतेषु पार्वति ।
विषुवेऽप्ययनद्वन्द्वे आषाढ्यां दमनोत्सवे ।
दीक्षा कार्या तु कालेषु पवित्रारोपकर्मणि ॥ ६ ॥

योगिनीतन्त्र में भी बतलाया गया है—गङ्गा में, भास्कर क्षेत्र, विरजा क्षेत्र, (पुरुषोत्तम क्षेत्रादि), चन्द्रमा के पर्व, पूर्णमासी आदि चड्ल (नड्वल), मतङ्गक्षेत्र, कण्वाश्रम, हे पार्वति! इन तीर्थों में दीक्षा ग्रहण न करे । विषुव में, दोनों अयन उत्तरायण और दक्षिणायन में, आषाढ़ की पूर्णिमा, दमनोत्सव (= चैत्रादि मास में) एवं पवित्रारोपण (= श्रावण आदि मास) अच्छा समय का विचार कर गुरु दीक्षा प्रदान करे ॥ ५-६ ॥

कालोत्तरे च ।

दीक्षायामभिषेके च तथा मन्त्रपरिग्रहे ।
व्रतग्रहणमोक्षे च द्रव्यारम्भणकर्मणि ॥ ७ ॥
कार्तिक्यां चैव वैशाख्यां स्वर्भानोरपि दर्शने ।
चन्द्रसूर्योपरागे च षडशीतिमुखेषु च ॥ ८ ॥
ग्रहनक्षत्रयोगेषु विषुवेषूत्सवेषु च ।
अयनेषु च सर्वेषु योगः सर्वार्थसिद्धिदः ॥ ९ ॥

कालोत्तरतन्त्र में भी बतलाया गया है—दीक्षा ग्रहण में, अभिषेक में, मन्त्रपरिग्रह में, व्रत ग्रहण कर्म में, द्रव्यारम्भ कर्म में, कार्तिक पूर्णिमा, वैशाखी पूर्णिमा, चन्द्र सूर्यो पराग में, षडशीतिमुख में, ग्रह नक्षत्र का उत्तम योग उपस्थित होने पर, विषुव में, उत्सव में तथा दोनों अयनों में दीक्षायोग सर्वाथसिद्धि प्रदान करता है ॥ ७-९ ॥

यामले—

सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः ।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत् ॥ १० ॥

यामल में भी बतलाया गया है—सत्तीर्थ में, पवित्रारोपण में, दमनक महोत्सव में एवं सूर्य चन्द्र ग्रहण में मन्त्र दीक्षा देने वाले को मास, नक्षत्र, तिथि और दिन के संशोधन की आवश्यकता नहीं है ॥ १० ॥

सनत्कुमारीये मासाः—

मन्त्रारम्भस्तु चैत्रे स्यात् समस्तपुरुषार्थदः ।
वैशाखे रत्नलाभः स्याज्ज्येष्ठे तु मरणं भवेत् ॥ ११ ॥
आषाढे बन्धुनाशः स्यात् पूर्णार्थः श्रावणे भवेत् ।

पूजानाशो भवेद् भाद्रे आश्विने रत्नसञ्चयः ॥ १२ ॥
कार्तिके मन्त्रसिद्धिः स्यान्मार्गशीर्षे तथैव च ।
पौषे तु शत्रुपीडा स्यान्माघे मेधाविवर्धनम् ।
फाल्गुने सर्वकामाः स्युर्मलमासं विवर्जयेत् ॥ १३ ॥

अब सनत्कुमारसंहिता के अनुसार दीक्षा में मास कहते हैं—चैत्र मास में मन्त्रारम्भ (दीक्षा) समस्त पुरुषार्थप्रद है । वैशाख में दीक्षा से रत्नलाभ और ज्येष्ठ मास में दीक्षा से मरण होता है । आषाढ़ में बन्धुनाश, श्रावण मास की दीक्षा से कामना पूर्ण होती है । भाद्रपद में दीक्षा से पूजा नाश, आश्विन में रत्न सञ्चय, कार्त्तिक में मन्त्रसिद्धि, मार्गशीर्ष में भी वही, पौष में शत्रुपीड़ा, माघ में बुद्धि विवर्धन, फाल्गुन में सर्वकामावाप्ति और मलमास में दीक्षा विशेष रूप से वर्जित बतलायी गयी है ॥ ११-१३ ॥

**यच्च सिद्धान्तशेखरे—**

शरत्काले च वैशाखे दीक्षा श्रेष्ठफलप्रदा ।
फाल्गुने मार्गशीर्षे च ज्येष्ठे दीक्षा च मध्यमा ॥ १४ ॥
आषाढः श्रावणो माघः कनिष्ठः सद्भिरादृतः ।
निन्दितश्चैत्रमासस्तु पौषो भाद्रपदस्तथा ।
निन्दितेष्वपि मासेषु दीक्षोक्ता ग्रहणे शुभा ॥ १५ ॥

**मासस्तु सौर एव ।**

सिद्धान्तशेखर में भी बतलाया गया है—शरत्काल (आश्विन एवं कार्त्तिक) तथा वैशाख मास में ली जाने वाली दीक्षा श्रेष्ठ फल प्रदान करती है । फाल्गुन, मार्गशीर्ष और ज्येष्ठ महीनों में दीक्षा मध्यम कही गयी है । आषाढ़, श्रावण एवं माघ की दीक्षा कनिष्ठ बतलायी गयी है । चैत्रमास, पौषमास तथा भाद्रमास निन्दित कहे गए हैं । इन मासों के निन्दित होते हुये भी यदि ग्रहण लगे तो दीक्षा शुभप्रद कही गई है ॥ १४-१५ ॥

मास अर्थात् सौर मास में ।

**कालोत्तरे च—**

शरद्वसन्तयोर्योगो दीक्षाकर्मविधौ स्मृतः ।
तयोरसम्भवे वर्षां विनाऽन्यत्र प्रशस्यते ।
विना पर्व न दीक्षा स्याद् वर्षासु मधुपौषयोः ॥ १६ ॥

कालोत्तरतन्त्र में भी बतलाया गया है—दीक्षा कर्म के लिये शरत्काल एवं बसन्तकाल का समय विहित है । उनके सम्भव न होने पर वर्षा से अतिरिक्त अन्य ऋतु दीक्षा के लिये प्रशस्त कहे गये हैं । वर्षा में, चैत्र में एवं पौष में पर्व

के बिना दीक्षा ग्रहण न करे ॥ १६ ॥

**यत्तु गौतमीये—**

**सौरे मासि शुभा दीक्षा न चान्द्रे न च तारके । इति ।**

गौतमीयतन्त्र में भी बतलाया गया है—सौरमास में दीक्षा शुभ है । चन्द्र मास एवं तारक मास में दीक्षा शुभ नहीं होती ॥ १७ ॥

**पक्षस्तु कालोत्तरे—**

**भूतिकामैः सिते कार्या मुक्तिकामैस्तु कृष्णके ॥ १७ ॥**

पक्ष का विचार कालोत्तरतन्त्र के अनुसार इस प्रकार है—ऐश्वर्य चाहने वाला शुक्ल पक्ष में और मुक्ति चाहने वाला कृष्ण पक्ष में दीक्षा ग्रहण करे ॥ १७ ॥

**अथ तिथयः आगमकल्पद्रुमे—**

**प्रतिपदि कृता दीक्षा ज्ञाननाशकरी मता ।**
**प्रतिपत्तिर्द्वितीयायां तृतीया शोकदा भवेत् ॥ १८ ॥**
**चतुर्थ्यां वित्तनाशः स्यात् पञ्चम्यां बुद्धिवर्धनम् ।**
**षष्ठ्यां ज्ञानक्षयं सौख्यं लभते सप्तमीदिने ॥ १९ ॥**
**अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः ।**
**दशम्यां राजसौभाग्यमेकादश्यां शुचं भवेत् ॥ २० ॥**
**द्वादश्यां सर्वसिद्धिः स्यात् त्रयोदश्यां दरिद्रता ।**
**तिर्यग्योनिश्चतुर्दश्यां हानिर्मासावसानके ।**
**पक्षान्ते धर्मवृद्धिः स्यादस्वाध्यायं विवर्जयेत् ॥ २१ ॥**

तिथि का विचार आगमकल्पद्रुम के अनुसार इस प्रकार है—प्रतिपद् में की जाने वाली दीक्षा ज्ञान का नाश करती है । द्वितीया में विपत्ति, तृतीया में शोकप्रद, चतुर्थी वित्तनाशकरी, पञ्चमी बुद्धि बढ़ाने वाली, षष्ठी ज्ञान का क्षय करने वाली, सप्तमी सौख्य प्रदान करने वाली, अष्टमी की दीक्षा बुद्धिनाश करने वाली, नवमी की दीक्षा शरीर का क्षय करने वाली, दशमी की दीक्षा से राज्य और सौभाग्य की प्राप्ति और एकादशी की दीक्षा से शोक होता है । द्वादशी में सर्व प्रकार की सिद्धि, त्रयोदशी में दरिद्रता, चतुर्दशी में तिर्यग् योनि की प्राप्ति, मासान्त (पूर्णिमा) में हानि तथा पक्षान्त (अमावास्या) में धर्म वृद्धि होती है । इसके अतिरिक्त जिस दिन स्वाध्याय न हो वह दिन भी वर्जित है ॥ १८-२१ ॥

**सारसंग्रहे—**

**द्वितीया पञ्चमी वापि षष्ठी वापि विशेषतः ।**
**द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा ॥ २२ ॥**

द्वादशीविधानं विष्णुपरम् ।

सारसंग्रहतन्त्र में भी बतलाया गया है—द्वितीया, पञ्चमी अथवा विशेष रूप से षष्ठी, किं बहुना, द्वादशी तिथि में भी तथा त्रयोदशी में भी दीक्षा करे ॥ २२ ॥

यहाँ द्वादशी का विधान विष्णुपरक मन्त्र से है ।

**तत्त्वसारे तु—**

**तां तां तिथिं समालोच्य तद्भक्तांस्तत्र दीक्षयेत् ।**
**ब्रह्मणः पौर्णमास्युक्ता द्वादशी चक्रधारिणः ॥ २३ ॥**
**चतुर्दशी शिवस्योक्ता वाचः प्रोक्ता त्रयोदशी ।**
**द्वितीया तु श्रियः प्रोक्ता पार्वत्याश्च तृतीयका ॥ २४ ॥**
**चतुर्थी गणनाथस्य भानोः प्रोक्ता तु सप्तमी ।**
**नित्यामार्गेषु पार्वत्या अष्टमी च चतुर्दशी ।**
**दिनच्छिद्राणि मुक्त्वा च या च स्युस्त्रिदिनस्पृशः ॥ २५ ॥**

तत्त्वसारतन्त्र में कहा है—उन-उन देवताओं की तिथि का विचार कर उन-उन देवताओं के भक्तों को दीक्षा देनी चाहिये । ब्रह्मा की तिथि पौर्णमासी है उस तिथि में ब्रह्मदेव का, द्वादशी तिथि विष्णु की है उसमें विष्णु का, चतुर्दशी तिथि शिव की है उसमें शिव का, वाणी की तिथि त्रयोदशी है उसमें सरस्वती का, श्री की तिथि द्वितीया है उसमें महाश्री का, पार्वती की तिथि तृतीया है उसमें पार्वती का, गणेश की तिथि चतुर्थी है उसमें गणपति का, सूर्य की तिथि सप्तमी है उसमें सूर्य का, नित्या का मार्गशीर्ष पञ्चमी, पार्वती की तिथि अष्टमी एवं चतुर्दशी है उसमें पार्वती का मन्त्र देना चाहिए । इस प्रकार उन-उन तिथियों में जब भद्रादि दोष न हो, तब उन-उन देवताओं के उन-उन मन्त्रों को देवे; किन्तु त्रिस्पृशा तिथि में दीक्षा न देवे ॥ २३-२५ ॥

**रत्नावल्यां वारनियमः—**

**आदित्यं मङ्गलं सौरिं त्यक्त्वा वारास्तु भूतये।**

अब रत्नावली के अनुसार दीक्षा में वारों का नियम कहते हैं—रविवार, मङ्गल और शनि को छोड़कर शेष दिनों की दीक्षा ऐश्वर्यकारक कही गई है ॥ २६ ॥

**कालोत्तरे—**

**रवौ गुरौ सिते सोमे कर्त्तव्यं बुधशुक्रयोः ।**

कालोत्तरतन्त्र में भी बतलाया गया है—रविवार, बृहस्पतिवार, सोमवार, बुधवार और शुक्रवार के दिन शुक्ल पक्ष में दीक्षा प्रदान करनी चाहिए ॥ २६ ॥

**एतेषां फलं सनत्कुमारीये—**

**रविवारे भवेद् वित्तं सोमे शान्तिर्भवेत् किल ।**
**आयुरङ्गारको हन्ति तत्र दीक्षां विवर्जयेत्॥ २६ ॥**

अब वारों का फल सनत्कुमारतन्त्र के अनुसार इस प्रकार है—रविवार की दीक्षा से वित्तलाभ, सोमवार की दीक्षा से शान्ति एवं मङ्गल की दीक्षा से आयु का विनाश होता है । अतः उस दिन दीक्षा वर्जित करे ॥ २६ ॥

**बुधे सौन्दर्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ ।**
**शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥ २७ ॥**

बुधवार की दीक्षा से सौन्दर्य की प्राप्ति, बृहस्पतिवार की दीक्षा से ज्ञान की प्राप्ति होती है । शुक्रवार की दीक्षा से सौभाग्य की प्राप्ति तथा शनैश्चर की दीक्षा से यशोहानि होती है ॥ २७ ॥

**अथ नक्षत्रफलम्—**

**अश्विन्यां सुखमाप्नोति भरण्यां मरणं भवेत् ।**
**कृत्तिकायां भवेद् दुःखी रोहिण्यां वाक्पतिर्भवेत् ॥ २८ ॥**
**मृगशीर्षे सुखावाप्तिरार्द्रायां बन्धुनाशनम् ।**
**पुनर्वसौ धनाढ्यः स्यात् पुष्ये शत्रुविनाशनम् ॥ २९ ॥**
**आश्लेषायां भवेन्मृत्युर्मघायां दुःखमोचनम् ।**
**सौन्दर्यं पूर्वफाल्गुन्यां प्राप्नोति च न संशयः ॥ ३० ॥**
**ज्ञानं चोत्तरफाल्गुन्यां हस्ते चैव धनी भवेत् ।**
**चित्रायां ज्ञानसिद्धिः स्यात् स्वात्यां शत्रुविनाशनम् ॥ ३१ ॥**
**विशाखायां सुखं चानुराधायां बन्धुवर्धनम् ।**
**ज्येष्ठायां सुतहानिः स्यान्मूलायां कीर्तिवर्धनम् ॥ ३२ ॥**
**पूर्वाषाढोत्तराषाढे भवेतां कीर्तिदायिके ।**
**श्रवणे च भवेद् दुःखी धनिष्ठायां दरिद्रता ॥ ३३ ॥**
**बुद्धिः शतभिषायां स्यात् पूर्वाभाद्रे सुखी भवेत् ।**
**सौख्यं चोत्तरभाद्रे च रेवत्यां कीर्तिवर्धनम् ॥ ३४ ॥**

अब नक्षत्र फल कहते हैं—अश्विनी में दीक्षा ग्रहण से सुख, भरणी में मरण, कृत्तिका में दुःख, रोहिणी में वाक्पतित्व, मृगशिरा में सुखावाप्ति, आर्द्रा में बन्धुनाश, पुनर्वसु में धनाढ्य, पुष्य में शत्रुविनाश, आश्लेषा में मृत्यु, मघा में दुःख से छुटकारा, पूर्वाफाल्गुनी में दीक्षा से सौन्दर्य प्राप्ति, उत्तराफाल्गुनी में ज्ञान और हस्त में दीक्षा से धनी होता है । चित्रा में दीक्षा ग्रहण से ज्ञानसिद्धि, स्वाती में शत्रुविनाश, विशाखा में सुख, अनुराधा में बन्धु वृद्धि, ज्येष्ठा में पुत्रहानि, मूल में कीर्त्ति की अभिवृद्धि तथा पूर्वाषाढ और उत्तराषाढ दोनों में दीक्षा से कीर्त्ति प्राप्त

होती है। श्रवण में दीक्षा ग्रहण से दुःख, धनिष्ठा में दरिद्रता, शतभिषा में बुद्धि, पूर्वाभाद्रपद में सुखावाप्ति, उत्तराभाद्र पद में सौख्य तथा रेवती में कीर्त्ति की अभिवृद्धि होती है ॥ २८-३४ ॥

**रत्नावल्यां तु—**

**प्रतिपत् पूर्वाषाढा च पञ्चमी कृत्तिका तथा ।**
**पूर्वाभाद्रपदा षष्ठी दशमी रोहिणी तथा ॥ ३५ ॥**
**द्वादशी सार्पनक्षत्रमर्यम्णा च त्रयोदशी ।**
**नक्षत्रलुप्ता इत्येता देवानामपि नाशकाः ॥ ३६ ॥**

रत्नावली में भी कहा गया है—प्रतिपद् पूर्वाषाढा, पञ्चमी कृत्तिका, पूर्वाभाद्रपदा षष्ठी, दशमी रोहिणी, द्वादशी आश्लेषा, अर्यम्णा त्रयोदशी—ये नक्षत्रलुप्ता तिथि कही जाती हैं जो देवताओं को भी नष्ट कर देने वाली हैं ॥ ३५-३६ ॥

**अथ योगाः । रत्नावल्याम्—**

**योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः शुभः ।**
**सुकर्मा च धृतिर्वृद्धिर्ध्रुवः सिद्धिश्च हर्षणः ।**
**वरीयांश्च शिवः सिद्धो ब्रह्मा ऐन्द्रश्च षोडश ॥ ३७ ॥**

अब रत्नावली के अनुसार योग कहते हैं—१. प्रीति, २. आयुष्मान्, ३. सौभाग्य, ४. शोभन, ५. शुभप्रद, ६. सुकर्मा, ७. धृति, ८. वृद्धि, ९. ध्रुव, १०. सिद्धि, ११. हर्षण, १२. वरीयान्, १३. शिव, १४. सिद्ध, १५. ब्रह्मा और १६. ऐन्द्र—ये षोडश योग कहे गये हैं ॥ ३७ ॥

**अथ करणानि—**

**ववबालवकौलवतैतिलास्तदनन्तरम् ।**
**करणानि शुभान्येव सर्वतन्त्रेषु भामिनि ।**
**शकुन्यादीनि विष्टिं च विशेषेण विवर्जयेत् ॥ ३८ ॥**

अब करणों का विधान करते हैं—वव, वालव, कौलव एवं तैतिल—ये करण कहे गये हैं। हे भामिनि! ये करण सभी तन्त्रों में शुभ कहे गये हैं। शकुनी आदि करण तथा विष्टि (भद्रा) तिथि दीक्षा में विशेष रूप से वर्जित करे ॥ ३८ ॥

**अथ राशयः—**

**चरः सर्वैर्विवर्ज्यः स्यात् स्थिरराशिषु सिद्धिदः ।**

अब राशि कहते हैं—दीक्षा ग्रहण में सभी चर राशियाँ विवर्जित कही गई हैं। स्थिर राशियाँ सिद्धिप्रद कही गई है ॥ ३९ ॥

अथ लग्नशुद्धिः—

त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
दीक्षायां तु शुभाः सर्वे रन्ध्रस्थाः सर्वनाशकाः॥ ३९ ॥

अब लग्नशुद्धि कहते हैं—तीसरा, छठवाँ एवं ग्यारहवाँ लग्न पाप है । केन्द्र (१.४.७.१०) तथा त्रिकोण शुभकारक हैं । ये सभी दीक्षा में शुभ हैं । किन्तु रन्ध्र (९वाँ) सर्वनाशक है ॥ ३९ ॥

सन्ध्यागर्जितनिर्घोषभूकम्पोल्कानिपातने ।
एतानन्यांश्च दिवसान् श्रुत्युक्तान् परिवर्जयेत् ॥ ४० ॥ इति ।

सन्ध्याकाल, मेघगर्जन, बिजली की कड़कड़ाहट, भूकम्प और उल्कापात इतने काल तथा इसी प्रकार के अन्य दिन जो श्रुतियों में निषेध किये गये हैं उन्हें दीक्षा में भी वर्जित करे ॥ ४० ॥

अथ वास्तुस्वरूपं महाकपिलपञ्चरात्रे—

भूमेः परिग्रहे पूर्वं शिलायाः स्थापने तथा ।
जलाधारगृहार्थं च यजेद् वास्तुं विशेषतः ॥ ४१ ॥
वास्तुमण्डलकं कुर्यात् सूत्रयित्वा समं गुरुः ।
सुसमं सुखदं वास्तु विषमं न शुभावहम् ॥ ४२ ॥
ब्रह्माद्यदितिपर्यन्तास्त्रिपञ्चाशच्च देवताः ।
राक्षसं वास्तुनामानं हत्वा तद्देहसंस्थिताः ।
तेभ्योऽदत्त्वा बलिं मन्त्री मण्डपादीन् न कारयेत्॥ ४३ ॥

अब महाकपिल पञ्चरात्र के अनुसार वास्तुस्वरूप कहते हैं—भूमि को ग्रहण करते समय मूर्त्ति स्थापन के समय जलाधार (कुआँ) तथा गृह निर्माण में वास्तु का विशेष रूप से यजन करे । गुरु समतल भूमि बनाकर, सूत्र से नाप कर, स्वयं वास्तुमण्डल निर्माण करे । समतल भूमि पर निर्मित वास्तु सुखकारक होते हैं । विषम स्थल के वास्तु शुभावह नहीं होते । ब्रह्मा से लेकर अदिति पर्यन्त ५३ देवता उस वास्तु नामक राक्षस का वध कर उसके शरीर पर संस्थित हैं । उनको बिना बलि दिये मण्डपादि निर्माण न करे ॥ ४१-४३ ॥

वास्तुस्वरूपं तन्त्रान्तरे—

देवैः स वास्तुपुरुषः स्थापितश्चतुरस्त्रकः ।

सोमशम्भौ—

आकुञ्चितकरं वास्तुमुत्तानमसुराकृतिम् ।
स्मरेत् पूजासु कुट्यादिप्रवेशे त्वधराननम् ॥ ४४ ॥

**जानुनी कूर्पराशक्ते दिशि वातहुताशयोः ।**
**पैत्र्यां पादपुटौ रौद्र्यां शिरोऽस्य हृदयेऽञ्जलिः ॥ ४५ ॥**

अन्य तन्त्रों में वास्तु का स्वरूप इस प्रकार कहा गया है—देवताओं के द्वारा उस वास्तुपुरुष को चौकोर स्थापित किया गया । जैसा कि सोमशम्भु तन्त्र में भी कहा गया है । पूजा में हाथ को सिकोड़ कर उतान असुराकृति में वास्तु का ध्यान करे । कुट्यादि प्रवेश में नीचे की ओर मुख किये वास्तु का स्मरण करे । उसके वायव्य से अग्निकोण तक फैले हुये दोनों जानुओं पर उसका दोनों कूर्पर है, दक्षिण दिशा में दोनों पैर हैं । ईशानकोण में उसके शिर हैं और हृदय पर उसकी अञ्जलि है ॥ ४४-४५ ॥

**ईशानशिवेऽपि—**

**पूज्याश्चतुःषष्टिपदेषु विप्रैरेकोत्तराशीतिपदे नृपाद्यैः । इति ।**

ईशान शिव में भी बतलाया गया है—ब्राह्मणों को चौसठ कोष्ठों में तथा क्षत्रियादिकों को इक्यासी कोष्ठकों में वास्तु पूजा करनी चाहिये ॥ ४६ ॥

**हयग्रीवपञ्चरात्रे विशेषः—**

**एकाशीतिपदं वास्तु गृहकर्मणि शस्यते ।**
**चतुष्षष्टिपदं वास्तु प्रासादे ब्रह्मणा स्मृतः ॥ ४६ ॥**

हयग्रीव पञ्चरात्र में विशेष कथन इस प्रकार है—ब्रह्मा ने कहा है कि गृहारम्भ एवं गृह प्रवेश में ८१ कोष्ठों का वास्तु तथा मन्दिर आदि की प्रतिष्ठा में ६४ कोष्ठक का वास्तु निर्माण करना चाहिये ॥ ४६ ॥

**बलिमण्डलमाह शारदायाम्—**

**बलिमण्डलमेतेषां यथावदभिधीयते ।**
**पूर्वापरायतं सूत्रं विन्यसेदुक्तमानतः ॥ ४७ ॥**

**अस्यार्थः—उक्तमानतः वास्तुशास्त्रे यन्मानमुक्तं तेनेत्यर्थः । क्वचित् 'हस्तमानतः' इत्यपि पाठः ।**

अब शारदातिलक के अनुसार बलि मण्डल कहते हैं—अब इन देवताओं के बलिमण्डल के लिये ६४ कोष्ठकों की रचना का प्रकार कहते हैं । सर्वप्रथम पूर्व से पश्चिम की ओर वास्तुशास्त्र में कहे गये प्रमाण के अनुसार रेखा खींचे ॥ ४७॥

**तन्मध्यं किञ्चिदालम्ब्य द्वौ मत्स्यौ परितो लिखेत् ।**
**तयोर्मध्ये स्थितं सूत्रं विन्यसेत् दक्षिणोत्तरम् ॥ ४८ ॥**

**तन्मध्यमिति । तस्य मध्यं किञ्चिदालम्ब्य मध्यात् किञ्चिदधिकमवलम्ब्येत्यर्थः । कुत इत्यपेक्षायां सूत्राग्रादिति शेषः । एवं परित उभयतः उत्तरदक्षिणयोः प्राचीसूत्र-**

स्येति शेषः । मत्स्यौ द्वौ चिह्नद्वयं सम्पादयेत् । तत्र प्रकारः—प्राचीसूत्रप्रागग्रे सूत्रादिं निधाय मध्याधिकचिह्नात् सूत्राग्रं भ्रामयेत् । एवमपरादग्रादपि तत एको मत्स्यः । एवमपरत्रापीति द्वितीयो मत्स्य इति ।

द्वाभ्यां द्वाभ्यां तथाग्राभ्यां कोणेषु मकरान् लिखेत् ।

अस्यार्थः—तत्र द्वाभ्यामग्राभ्यामेकैकौ मत्स्यः । तथा पूर्ववत् । तद्यथा-प्राचीसूत्रार्धमितेन प्राचीसूत्राग्रस्थितेन सूत्रेण ईशे चाग्नेये चार्धचन्द्रं कुर्यात् । ततस्तेनैव सूत्रेणोत्तराग्रस्थितेन ईशे वायव्ये चार्धचन्द्रं कुर्यात् । एवमीशे मत्स्य उत्पन्नः । तथा पूर्ववत् । तत्सूत्रेण पश्चिमाग्रस्थितेन वायव्ये नैर्ॠत्ये चार्धचन्द्रं कुर्यात् । एवं वायव्ये मत्स्य उत्पन्नः । तत्सूत्रेण दक्षिणाग्रस्थितेन नैर्ॠत्ये चाग्नेये चार्धचन्द्रं कुर्यात् । उभयत्रापि मत्स्यद्वयं जायते । एवं मत्स्यचतुष्के जाते तन्मध्यमाग्रं सूत्रचतुष्कं दद्यात् ।

मत्स्यमध्ये स्थिताग्राणि तत्र सूत्राणि पातयेत् ॥ ४९ ॥
चतुरस्रं भवेत् तत्र चतुःकोष्ठसमन्वितम् ।

मत्स्येत्यादि । चतुरस्रेति वास्तुशरीरस्य चतुरस्राकृतित्वात् । चतुःकोष्ठसमन्वितमिति चतुरस्रमध्ये । अथ च कोणचतुष्के बहिः कोष्ठचतुष्कमपरं गुरुगणेशदुर्गाक्षेत्रेशपूजनार्थमुक्तम् ।

तत् पुनर्विभजेन्मन्त्री चतुःषष्टिपदं यथा ॥ ५० ॥

यथा चतुःषष्टिपदं भवेत्, तथा विभजेत् ।

फिर प्राची सूत्र के मध्य भाग से उत्तर और दक्षिण की ओर सूत्र घुमाकर दो चिन्ह बनावे । उसके मध्य में स्थित सूत्र को दक्षिण से उत्तर को मिला देवे । पूर्व की ओर दिये गये चिन्ह से ईशान और आग्नेय की ओर एक-एक चिन्ह लगावे । फिर उसी सूत्र से उत्तर की ओर दिये गये चिन्ह से ईशान और वायव्य में चिन्ह लगावे । ऐसा करने से ईशान में एक-एक रेखा बन जायेगी । इसी प्रकार पश्चिम की रेखा के वायव्य और नैर्ॠत्य में एक-एक बिन्दु लगावे । ऐसा करने से वायव्य में एक रेखा बन जायेगी । फिर दक्षिण की रेखा में नैर्ॠत्य और आग्नेय में चिन्ह लगावे । इसी प्रकार दोनों को मिला देने पर चतुष्कोण तैयार हो जायेगा । फिर उसके मध्य में दोनों ओर से एक समान रेखा खीचे । ऐसा करने से अष्ट कोष्ठक तैयार हो जायेगा । इस प्रकार रेखाओं के विभाग के माध्यम से ६४ कोष्ठों का मण्डल निर्माण करना चाहिये ॥ ४८-५० ॥

ईशानाद् रक्षसो यावद् यावदग्नेः प्रभञ्जनः ।
एवं सूत्रद्वयं दद्यात् कर्णसूत्रं समाहितः ॥ ५१ ॥

कर्णसूत्रसञ्ज्ञकं सूत्रद्वयम् । शिल्पे कोणसूत्रस्य कर्णसूत्रेति सञ्ज्ञा । समाहितः= सावधानः ।

फिर साधक ईशान से नैॠत्य तक एक रेखा और आग्नेय से वायव्यकोण

पर्यन्त एक रेखा खींचे । इस प्रकार उस चतुर्भुज के दो-दो कोनों को एक में मिला देने से कर्णसूत्र बन जाता है । शिल्पशास्त्र में कोणसूत्र की 'कर्णसूत्र' सञ्ज्ञा कही गई है ॥ ५१ ॥

**तत्र चतुःषष्टिकोष्ठोत्पादनप्रकारो यथा—चतुर्षु कोणसूत्रचतुष्टयमन्यद् दद्यात् । तन्मध्योत्पन्नमत्स्येषु पूर्वापरायते दक्षिणोत्तरायते च द्वे द्वे सूत्रे पातयेत् । एवं षोडश-कोष्ठानि सम्पद्यन्ते । ततः चतुर्षु कोणकोष्ठेषु पुनः कर्णसूत्रचतुष्टयं दद्यात् । तदुत्पन्न-मत्स्येषु पूर्वापरायते दक्षिणोत्तरायते च द्वे सूत्रे पातयेत् । ततः चतुर्षु मध्यकोष्ठेषु पुनः कर्णसूत्रचतुष्टयं दद्यात् । एवं च कृते मध्यकोष्ठेषु मत्स्या उत्पन्नाः । तेषु मत्स्येषु प्रागपरायते दक्षिणोत्तरायते च द्वे सूत्रे पातयेत् । एवं चतुःषष्टिकोष्ठानि सम्पद्यन्ते । तत्र ग्रन्थान्तरोक्तकर्णसूत्रद्वयातिरिक्तकर्णसूत्राणि मार्जयेदित्यर्थः ।**

**ब्रह्माणं पूजयेदादौ मध्ये कोष्ठचतुष्टये ।**
**दिक्चतुष्केषु पूर्वादि यजेदार्यमनन्तरम् ॥ ५२ ॥**
**विवस्वन्तं ततो मित्रं महीधरमतः परम् ।**
**कोणार्द्धकोष्ठद्वन्द्वेषु वह्न्यादि परितः पुनः ॥ ५३ ॥**
**सावित्रं सवितारं च शक्रमिन्द्रजयं पुनः ।**
**रुद्रं रुद्रजयं विद्वानापञ्चाप्यापवत्सकम् ॥ ५४ ॥**

सर्वप्रथम मध्य के चार कोष्ठकों में ब्रह्मदेव की पूजा करे । उसमें भी पहले 'सर्वज्ञानक्रियाव्यक्त कमलासनाय योगपीठाय नमः'—इस मूल मन्त्र से ब्रह्मदेव की पूजा करे । फिर उसके पूर्वादि दिशाओं में चार कोष्ठकों में क्रमशः पूर्व में आर्य, दक्षिण दिशा में विवस्वान्, पश्चिम दिशा में मित्र और उत्तर दिशा में महीधर की पूजा करे । तदनन्तर विद्वान् साधक ब्रह्मा से आग्नेय कोण में जहाँ कर्ण रेखा खींची गई है उसके आधे ऊपर वाले कोष्ठ में सावित्र की, नीचे वाले कोष्ठ में सविता की पूजा करे । इसी प्रकार नैर्ऋत्य में ऊपर और नीचे के क्रम से शक्र एवं इन्द्रजय की, पुनः वायव्य कोण में ऊपर के कोष्ठ में रुद्र की तथा नीचे में रुद्रजय की पूजा करे । ईशान कोण में ऊपर 'आप' की एवं नीचे आपवत्स की पूजा करे ॥ ५२-५४ ॥

**तत्कर्णसूत्रोभयतः कोष्ठद्वन्द्वेषु देशिकः ।**
**शर्वं ग्रहं चार्यमणं जम्भकं पिलिपिच्छकम् ॥ ५५ ॥**
**चरकीं च विदारीं च पूतनामर्चयेत् क्रमात् ।**
**अर्चयेद् दिक्षु पूर्वादि सार्धाद्यन्तपदेष्विमान् ॥ ५६ ॥**
**अष्टावष्टौ विभागेन देवान् देशिकसत्तमः ।**
**क्रमादीशानपर्जन्यजयन्ताः शक्रभास्करौ ॥ ५७ ॥**
**सत्यो वृषान्तरिक्षौ च दिशि प्राच्यामवस्थिताः ।**

**मानहीनाधिका या सा कर्तुः कर्मविनाशिनी ॥ ९ ॥ इति ।**

ऐसी वेदियों के न बनाने से क्रियासार में दोष कहा गया है—जिस वेदी का पार्श्वभाग टेढ़ा-मेढ़ा हो एवं मध्य भाग क्लिन्न (ओदा) हो, अथवा जो अत्यन्त कठिन हो, देखने में अच्छी न लगती हो, मानहीना, अथवा मानाधिका हो, ऐसी वेदी कर्त्ता के सारे कर्म को नष्ट करने वाली होती है ॥ ९ ॥

**एवं वेदिकां निर्माय अंकुरारोपणं कुर्यात् । यच्च संहितायाम्—**

**सर्वत्राभ्युदयश्राद्धमंकुरोत्पादनं तथा ।**
**आदावेव प्रकुर्वीत कर्मणोऽभ्युदयात्मनः ॥ १० ॥**

इस प्रकार वेदी का निर्माण कर अङ्कुरारोपण करे । जैसा कि संहिता में कहा गया है—सर्वत्र आभ्युदयिक श्राद्धों में अपने कर्म के अभ्युदय के लिये सर्वप्रथम अङ्कुरारोपण करे ॥ १० ॥

**यामले च—**

**गुरुर्विशुद्धः प्रागेव शुद्धाहात् प्रथमेऽहनि ।**
**सङ्कल्प्योपोष्य कर्त्तव्यमंकुरारोपणं शुभम् ॥ ११ ॥**
**कुर्यान् नान्दीमुखं श्राद्धं पूर्वेद्युः स्वस्तिवाचनम् ।**
**स्वगृह्योक्तप्रकारेण तदेतद् विदधीत वै ॥ १२ ॥**

यामल में भी बतलाया गया है—शुद्ध दिन से पहले, प्रथम दिन गुरु शुद्ध होकर सङ्कल्पपूर्वक उपवास करते हुये महामाङ्गलिक अङ्कुरारोपण का कार्य करे । पूर्व दिन ब्राह्मणों से स्वस्तिवाचन कराकर अपने गृह्यसूत्र के अनुसार नान्दीमुख श्राद्ध करे ॥ ११-१२ ॥

**कपिलपञ्चरात्रे—**

**पुण्याहघोषणं कृत्वा ब्राह्मणैः सह देशिकः ।**
**मङ्गलांकुरस्य वपनं कुर्यात् तत्रैव चाहनि ।**
**सप्तमाद् नवमाद् वापि प्रागेव यज्ञकर्मणः ॥ १३ ॥**

कपिलपञ्चरात्र में भी बतलाया गया है—आचार्य ब्राह्मणों के साथ पुण्याह-वाचन कर उसी दिन मङ्गलाङ्कुर का वपन करे । यह कार्य यज्ञकर्म के दिन से ७ दिन, अथवा ९ दिन पहले करे ॥ १३ ॥

**सिद्धान्तशेखरे—**

**प्रतिष्ठायां च दीक्षायां स्थापने चोत्सवे तथा ।**
**सम्प्रोक्षणे च शान्तौ च विवाहे मौञ्जिबन्धने ।**
**सर्वमङ्गलकार्येषु कारयेदंकुरार्पणम् ॥ १४ ॥**

सिद्धान्तशेखर में भी बतलाया गया है—प्रतिष्ठा में, दीक्षा में, स्थापन में, उत्सव में, सम्प्रोक्षण में, शान्ति में, विवाह और यज्ञोपवीत में इस प्रकार अन्य सभी माङ्गलिक कर्मों में अङ्कुरारोपण करावे ॥ १४ ॥

**शारदायाम्—**

**प्रागेव दीक्षादिवसात् सप्तभिर्विधिवद् दिनैः ।**
**सर्वमङ्गलसम्पत्त्यै विदध्यादंकुरार्पणम् ॥ १५ ॥**
**मण्डपस्योत्तरे भागे शालां पूर्वापरायताम् ।**
**गूढां कुर्यात् ततस्तस्यां मण्डलं रचयेत् सुधीः ॥ १६ ॥**

शारदातिलक (३.२८-२९) में भी बतलाया गया है—दीक्षा दिन के आरम्भ से सात दिन पहले अर्थात् आठवें दिन, पहले सम्पूर्ण मङ्गलों की सम्प्राप्ति के लिये अङ्कुरारोपण का विधान करे । मण्डप से उत्तरी भाग में दश हाथ लम्बी, पाँच हाथ चौड़ी पूर्व से पश्चिम की ओर लम्बी चौकोर वातरहित शाला, जिसका द्वार दक्षिणाभिमुख हो निर्माण करे । उसमें चटाई आदि से घेर कर उसे सुगुप्त कर देवे । तदनन्तर बुद्धिमान् शिष्य उसी में मण्डल का निर्माण करे ॥ १५-१६॥

**शालामानं तन्त्रान्तरे—**

**विंशत्या तु करैर्मानं दशायामेन विस्तृतिः ।**
**शालाया उत्तमं मानमर्धादौ मध्यमादिकम् ॥ १७ ॥**

उस शाला का प्रमाण बीस हाथ लम्बा दश हाथ चौड़ा होना चाहिये । यह शाला का उत्तम मान कहा गया । उसका आधा मान मध्यम और उसका भी आधा मान निकृष्ट कहा गया है ॥ १७ ॥

**मण्डलं शारदायाम्—**

**पञ्चहस्तप्रमाणानि पञ्चसूत्राणि पातयेत् ।**
**पूर्वापरायतान्येषामन्तरे द्वादशाङ्गुलम् ॥ १८ ॥**
**दक्षिणोत्तरसूत्राणि तद्वदेकादशार्पयेत् ।**
**पदानि तत्र जायन्ते चत्वारिंशत् प्रमार्जयेत् ॥ १९ ॥**

**अनयोरर्थः—पञ्चहस्तेति । शालाविस्तारमध्यभागे प्रागपरायतमेकं सूत्रं पञ्चहस्त-प्रमाणं दत्त्वा तत् सूत्रस्य दक्षिणोत्तरभागयोः द्वादश-द्वादशाङ्गुलान्तरे द्वे द्वे सूत्रे दद्यात् । ततस्तत्सूत्रव्यतिभेदीनि एकादशसूत्राणि पातयेत् । तद्वदिति । द्वादशाङ्गुलान्तराणीत्यर्थः । एवं पञ्चापि हस्ताः संगृहीताः । प्रमार्जयेदित्युत्तरत्रान्वेतीत्यर्थः ।**

**पङ्क्त्यां वीथीश्चतस्रोऽन्तश्चतुष्कोभयपार्श्वयोः ।**
**वीथ्यौ द्वे च चतुष्कोष्ठत्रयमत्रावशिष्यते ॥ २० ॥**

**अस्यार्थः—पङ्क्त्वेति । पङ्क्त्यां चतस्रो वीथीर्मार्जयेत् बाह्य इत्यर्थः । अन्तरिति वक्ष्यमाणत्वात् । पूर्वां चतुष्कोष्ठामेकां वीथीमष्टकोष्ठां दक्षिणवीथीं पुनश्चतुष्कोष्ठां पश्चिमवीथीमष्टकोष्ठामुत्तरवीथीं मार्जयेत् । तत अन्तश्चतुष्कस्योभयपार्श्वयोः पार्श्वद्वये द्वे वीथ्यौ द्विद्विकोष्ठरूपे चात्र मार्जयेदित्यनुषङ्ग इति ।**

मण्डल का प्रमाण शारदातिलक (३.३०-३३) में इस प्रकार है—उस शाला के मध्य भाग में पूर्व से पश्चिम की ओर पाँच हाथ का सूत्र देकर उसमें दक्षिण से उत्तर की ओर बारह-बारह अङ्गुल के दो-दो सूत्र के आधार से ग्यारह सूत्र लगावे। फिर उसके बाहर चारो ओर चार वीथी निर्माण करना चाहिए। पूर्व से चार कोष्ठ की एक वीथी, दक्षिण से आठ कोष्ठक की एक वीथी, पश्चिम से चार कोष्ठ की एक वीथी और इसी प्रकार उत्तर से आठ कोष्ठ की एक वीथी मार्जित करे। पुनः मध्य में रहने वाले चतुः कोष्ठ के दोनों पार्श्व में दो-दो कोष्ठक रूप दो वीथी का मार्जन करे। ऐसा करने से तीन-तीन चतुष्कोष्ठक अर्थात् बारह कोष्ठक शेष रह जायेंगे ॥ १८-२० ॥

**पदानि रञ्जयेत् तानि श्वेतपीतारुणासितैः ।**
**रजोभिः श्यामलेनाथ वीथीरापूरयेत् सुधीः ॥ २१ ॥ इति ।**

**तत्र श्वेतं वायुपदे । पीतमाग्नेये । अरुणं रक्षःपदे । असितमीशपदे च ।**

अब उन कोष्ठकों के रंगने का प्रकार कहते हैं। वायव्यकोण के चार कोष्ठों को श्वेत रङ्ग से, आग्नेय कोण के चार कोष्ठो को पीत रङ्ग से, नैर्ऋत्य कोण के चार कोष्ठों को लाल रङ्ग से और ईशानकोण के चार कोष्ठों को काले रंग से रंग देना चाहिए ॥ २१ ॥

इसमें श्वेत रंग वायु का स्थान है, पीला अग्नि का, लाल रक्ष (दक्षिण) का और काला ईश के लिए है।

**तदुक्तं प्रपञ्चसारे—**

**पीतारक्तसितासितप्रतिपदं बाह्यादि सर्वान्तकम् । इति ।**

यही बात प्रपञ्चसारतन्त्र में भी बतलाई गयी है—बाहरी भाग के आदि से लेकर सर्वान्त तक पीत, आरक्त, सित और असित रङ्ग से प्रत्येक कोष्ठ को रञ्जित करे ॥ २२ ॥

**अथांकुरार्पणपात्राणि शारदायाम्—**

**पात्राणि त्रिविधान्याहुरंकुरार्पणकर्मसु ।**
**पालिकाः पञ्चमुख्यश्च शरावाश्च चतुःक्रमात् ॥ २२ ॥**
**प्रोक्ताः स्युः सर्वतन्त्रज्ञैर्हरिब्रह्मशिवात्मकाः ।**
**एषामुच्छ्राय उन्नेयः षोडश द्वादशाष्टभिः ।**

**अङ्गुलैः क्रमशस्तानि शुभान्यावेष्ट्य तन्तुना ॥ २३ ॥ इति ।**

अब अङ्कुरारोपण का पात्र शारदातिलक (३.३४-३६) के अनुसार कहते हैं—अङ्कुरारोपण कर्म में तीन प्रकार के पात्र कहे गये हैं, जिनकी संख्या चार होनी चाहिये । १. पालिका (मोटी और ऊँचे प्रकार के शराव जिसे हाँडी कहते हैं), २. पञ्चमुखी (परई) और ३. शराव (पुरवा)। सभी तन्त्रज्ञों ने इतने ही पात्रों का विधान कहा है जो विष्णु, ब्रह्मा तथा शिव दैवत कहे गये हैं । इनकी ऊँचाई क्रमशः षोडश और बारह अङ्गुल कही गई है । इन शुभ पात्रों को अच्छी तरह देखभाल कर उनमें सूत्र लपेट देवे ॥ २२-२३ ॥

**सिद्धान्तशेखरे—**

**सम्पूजयेत् शरावेषु रुद्रं चन्दनपुष्पकैः ।**
**पालिकासु तथा विष्णुं ब्रह्माणं घटिकासु च ॥ २४ ॥**

सिद्धान्त शेखर में भी बतलाया गया है—शराव में चन्दन पुष्प द्वारा रुद्र की पूजा करे । पालिका (गमला या हाँडी) में श्रीविष्णु की और घटिका में ब्रह्माजी की पूजा करे ॥ २४ ॥

**अत्र पात्राणां त्रिदेवमयत्वात् पञ्चदेवदीक्षायां पात्रभेदो नास्ति ।**

**महाकपिलपञ्चरात्रे विशेषः—**

**पालिकाचक्रविस्तारः षोडशाङ्गुल उच्यते ।**
**भवेत् कण्ठबिलं वा स्यात् तदष्टाङ्गुलविस्तृतम् ॥ २५ ॥**
**पदपीठस्य विस्तारं षडङ्गुलमुदाहृतम् ।**
**चतुरङ्गुल उत्सेधस्तत्सन्धिश्चाङ्गुलं भवेत् ॥ २६ ॥**
**तत्सन्धिस्तु भवेन्नाहपादपीठार्धमेव च ।**
**भवेत् पञ्चमुखी चैवं घटिका सर्वकामदा ॥ २७ ॥**

यहाँ पात्र त्रिदेवमय कहे गये हैं । अतः पञ्चदेवमय दीक्षा में पात्रभेद न करे । महाकपिल पञ्चरात्र में विशेष कथन इस प्रकार है—पालिकाचक्र का विस्तार षोडश अङ्गुल कहा गया है । उसका कण्ठविल आठ अङ्गुल चौड़ा होना चाहिये । उसके नीचे पद-पीठ का विस्तार छह अङ्गुल, ऊँचाई चार अङ्गुल और उन दोनों की सन्धि एक अङ्गुल होनी चाहिये । पञ्चमुखी और घटिका की सन्धि एवं ऊँचाई पालिका के मान की आधी होना चाहिये । ये दोनों ही सर्वकामप्रद मान बतलाए गए हैं ॥ २५-२७ ॥

**चतुरङ्गुलविस्तारान्याहुर्वक्त्राणि पञ्च वै ।**
**चत्वारि च चतुर्दिक्षु ऊर्ध्वमेकं यथाविधि ॥ २८ ॥**

घटिकायाश्च विस्तारो द्वादशाङ्गुल उच्यते ।
आचार्याः कथयन्त्येके षोडशाङ्गुलमेव वा ॥ २९ ॥
द्वादशाङ्गुलविस्तारं शरावस्य मुखं स्मृतम् ।
चतुरङ्गुलविस्तारमधस्तान्मूल उच्यते ॥ ३० ॥ इति ।

पञ्चमुखी का विस्तार चार अङ्गुल, मुख का विस्तार पाँच अङ्गुल और चारों दिशाओं में इनकी संख्या चार होनी चाहिये । एक ऊपर के लिये अथवा जैसा विधान हो उतनी संख्या रखे । घटिका का विस्तार बारह अङ्गुल होना चाहिये । कोई-कोई आचार्य उसका विस्तार षोडश अङ्गुल कहते हैं । शराव के मुख का विस्तार द्वादशाङ्गुल होना चाहिये । नीचे उस शराव (पुरवा) का मूल चार अङ्गुल विस्तृत होना चाहिये ॥ २८-३० ॥

तन्त्रान्तरेऽपि—

तालमात्रमिह पञ्चमुखी स्याद्
व्यासतोच्छ्रयमिता घटिका स्यात् ।
दिक्षु तन्मुखचतुष्टयमेकं
मध्यतस्तु समवर्तितभागम् ॥ ३१ ॥

तन्त्रान्तर में भी बतलाया गया है—पञ्चमुखी एक ताल प्रमाण की और व्यास से कुछ ऊँची घटिका होनी चाहिये । यदि एक हो तो चारों दिशाओं में उसका एक-एक क्रम से चार मुख निर्माण करे । उसके मध्य का भाग समान करना चाहिये ॥ ३१ ॥

अन्यत्राऽपि—

तालविस्तृतमुखं तु शरावं व्यासतोच्छ्रयगतार्धमिताङ्घ्रि ।
दण्डमस्य चतुरङ्गुलनाहं कण्ठमस्य बिलवर्जमुदग्रम् ।
सम्भवे कनकरूप्यकताम्रतोमार्त्तिकान्यभिनवान्यथवा स्युः ॥ ३२ ॥

अन्यत्र भी कहा गया है—शराव के मुख एक ताल के प्रमाण का तथा व्यास की ऊँचाई का आधा प्रमाणं नीचे का पद भाग और इसका दण्ड चार अङ्गुल का होना चाहिए । इसका कण्ठ विल रहित, किन्तु ऊँचा अग्रभाग होना चाहिये । यदि सम्भव हो तब सुवर्ण, चाँदी, ताँबा, मृत्तिका अथवा अन्य पदार्थों से भी नवीनरूप में शराव निर्माण करे ॥ ३२ ॥

सिद्धान्तशेखरे तु—

यथासम्भवमानं वा पालिकादि समाचरेत् ।
कृष्णवर्णं तथा वक्त्रं व्रणयुक्तं विवर्जयेत् ।

**प्रक्षाल्य तन्तुनावेष्ट्य त्रिगुणेन समाहितः ॥ ३३ ॥**

**तत्रैवं क्रमः । पश्चिमचतुष्के पालिकाचतुष्टयं, मध्यचतुष्के पञ्चमुखीचतुष्टयं, पूर्वचतुष्के शरावचतुष्टयं निवेशयेत् ।**

सिद्धान्तशेखर में भी बतलाया गया है—सुविधानुसार मान में पालिकादि का निर्माण करे । कालावर्ण तथा व्रण युक्त पालिकादि वर्जित करे । पालिकाओं का पहले प्रक्षालन करे । फिर सूत्र को तिगुना कर उसमें बाँध देवे ॥ ३३ ॥

उसका क्रम इस प्रकार है—पश्चिम के चारों कोष्ठों में चार पालिकायें, मध्य के चारों कोष्ठों में चार पञ्चमुखी और पूर्व के चारों कोष्ठों में चार शराव पात्र स्थापित करे ।

**तन्निवेशनमुक्तं प्रयोगसारे, शारदायां च—**

**प्रक्षाल्य देशिकस्तेषु पदेष्वाहितशालिषु ।**
**सगन्धिदर्भकूर्चेषु पश्चिमादि निवेशयेत् ।**
**करीषवालुकामृद्भिस्तानि पात्राणि पूरयेत् ॥ ३४ ॥**

प्रयोगसार में और शारदातिलक (३.३६-३७) में भी उसके सन्निवेश का प्रकार कहा गया है—इस प्रकार आचार्य पात्रों का प्रक्षालन कर तन्तु से तीन बार लपेटकर गन्ध-पुष्पादि डालकर पश्चिमादि क्रम से उन पात्रों को चावल पर स्थापित करना चाहिए । पश्चिम के चार कोष्ठों में चार पालिका पात्र, मध्य के चार कोष्ठों में चार पञ्चमुखी पात्र और पूर्व के चार कोष्ठों में चार शराव पात्र स्थापित करे । तदनन्तर उनमें गोबर का चूर्ण (कर्सी) बालू और मिट्टी डालकर सभी पात्रों को भर देवे ॥ ३४ ॥

**सिद्धान्तशेखरे विशेषः—**

**गन्धादिभिश्च कुद्दालं पूजयित्वा दिनान्तरे ।**
**गीतनृत्यसमायुक्तो गजवाजिरथान्वितः ॥ ३५ ॥**
**गत्वा तीरं तडागस्य नद्याः पुष्पवनस्य वा ।**
**तत्र शुद्धं भुवो भागं दर्भैः सम्मृज्य चास्त्रतः ॥ ३६ ॥**
**अभ्युक्ष्य चार्घ्यतोयेन तत्तन्मन्त्रमनुस्मरन् ।**
**हृदा भूमिं समावाह्य गन्धपुष्पैः समर्चयेत् ॥ ३७ ॥**
**कुद्दाल्यामस्त्रमन्त्रेण खात्वा भूमिमथो मृदम् ।**
**गृहीत्वा वामदेवेन पूरयेत् कांस्यपात्रके ।**
**हृदा मृदं च सम्मृज्य वस्त्रेणाच्छाद्य धारयेत् ॥ ३८ ॥**
**पुरं वा निलयं वापि सर्वमङ्गलनिस्वनैः ।**
**गुरुः प्रदक्षिणं कृत्वा मण्डपं त्वानयेत् ततः ।**

**एतत् कर्म दिवाकाले कुर्याद् रात्रौ न बुद्धिमान् ॥ ३९ ॥**

सिद्धान्तशेखर में विशेष कथन इस प्रकार है—दिन में ही कुदारी की गन्ध पुष्पादि से पूजा करे । फिर गाजा-बाजा से संयुक्त हाथी, घोड़े और रथों के साथ, किसी तालाब के तट पर, अथवा किसी नदी के तट पर, अथवा किसी-किसी पुष्पवाटिका में जावे । वहाँ किसी शुद्धभूमि को अस्त्र मन्त्र पढ़ते हुये कुशा से साफ करे । अर्घ जल से, अर्घ का मन्त्र पढ़ते हुये, उस भूमि का प्रक्षालन करे और 'भूम्यै नमः' मन्त्र से पृथ्वी का आवाहन कर गन्ध-पुष्पादि से उसकी पूजा करे । अस्त्र मन्त्र से कुदारी को अभिमन्त्रित कर पृथ्वी को खन कर उसकी मिट्टी लेकर कांस्य पात्र में वामदेव मन्त्र से उस मिट्टी को पूर्ण करे । 'नमः' मन्त्र से मिट्टी को मलकर चूर्णकर वस्त्र से उसे आच्छादित करे । फिर अपने पुर नगर में माङ्गलिक गाजे-बाजे के साथ प्रवेश करे । फिर गुरु की प्रदक्षिणा कर उस मिट्टी को मण्डप में ले आवे । बुद्धिमान् साधक इतना कार्य दिन में ही कर लेवे; रात्रि में नहीं ॥ ३५-३९ ॥

**प्रयोगसारे—**

**वह्न्यादीशादिपर्यन्तं चतुष्केषु पृथक् पृथक् ।**
**मृद्वालुकाकरीषैश्चोर्ध्वतः पात्राणि पूरयेत् ॥ ४० ॥**
**सुधाबीजेन बीजानि दुग्धैः प्रक्षाल्य तन्त्रवित् ।**
**मूलमन्त्राभिजप्तानि पञ्चघोषपुरःसरम् ॥ ४१ ॥**

**पञ्चघोषास्तु पटहढक्कामृदङ्गमुखवाद्यशङ्खाः ।**

प्रयोगसार में भी बतलाया गया है—अग्निकोण से लेकर ईशानकोण पर्यन्त स्थापित चार पात्रों को अलग-अगल कर्सी (गोबर का चूर्ण), बालू और मिट्टी से भर देवे । अब बीज वपन का विधान कहते हैं—तन्त्रवेत्ता सुधाबीज (वं) पढ़कर गोदुग्ध से बीज का प्रक्षालन करे । फिर मूल मन्त्र से एक-सौ आठ बार जप करे । बीज उस समय शङ्ख को अभिमन्त्रित कर भेरी घण्टा आदि पाँच बाजों का घोष करावे ॥ ४०-४१ ॥

१. पटह, २. ढक्का, ३. मृदङ्ग, ४. मुखवाद्य और ५. शङ्ख—ये पञ्चवाद्य (घोष) हैं ।

**जपविषये कपिलपञ्चरात्रे—**

**संख्यानुक्तौ शतं साष्टं सहस्रं वा जपादिषु । इति ।**
**आशीर्वाग्भिर्द्विजातीनां मङ्गलाचारपूर्वकम् ।**
**निर्वपेत् तेषु पात्रेषु देशिको यतमानसः ॥ ४२ ॥**

जप विषय में कपिलपञ्चरात्र में भी बतलाया गया है—जहाँ जपादि की संख्या

न दी गई हो, वहाँ एक-सौ आठ अथवा सहस्र की संख्या समझे। फिर आचार्य एकाग्रचित्त हो, मङ्गलाचारपूर्वक ब्राह्मणों के आशीर्वाद को ग्रहण करते हुये तत्तत्पात्रों में बीज वपन करे ॥ ४२ ॥

**सिद्धान्तशेखरे—**

**बीजं मृखेन मूलेन प्राङ्मुखो वाप्युदङ्मुखः ।**
**वापयेत् सर्वबीजानि पालिकादिष्वनुक्रमात् ।**
**बीजानामधिपः सोमस्तस्माद् रात्रौ तु निर्वपेत्॥ ४३ ॥**

सिद्धान्तशेखर में भी बतलाया गया है—वपनकर्त्ता पूर्वाभिमुख अथवा उत्तराभिमुख होकर बीज का वपन उसके मुख भाग से अथवा उसके मूल भाग से करे और पालिकादि (पात्र) में क्रमशः सभी बीजों का वपन करे। यतः बीजों के स्वामी चन्द्रमा हैं। अतः रात्रि के समय बीज वपन न करे ॥ ४३ ॥

**सारस्वतमतेऽपि—**

**बीजेभ्यो दैवतेभ्यश्च स रात्रौ कान्तिमान् यतः ।**
**तस्माद् गुरुस्तु बीजानि निशायामेव वापयेत् ॥ ४४ ॥**

सारस्वतमत में भी बतलाया गया है—यतः बीजों से तथा देवताओं से चन्द्रमा कान्तिमान् होता है इसलिये गुरु रात्रिकाल में ही बीज वपन करे ॥ ४४ ॥

**शालिश्यामाढकीमुद्गतिलनिष्पावसर्षपाः ।**
**कुलत्थकङ्गुमाषाश्च बीजान्यङ्कुरकर्मणि ॥ ४५ ॥**
**हरिद्राद्भिः समभ्युक्ष्य वस्त्रैराच्छाद्य देशिकः ।**

शाली (हेमन्त में होने वाला विशेष धान्य), श्यामाक (साँवाँ), कङ्गु (काँक), आढकी, मुद्ग, तिल, निष्पाव (राजमाष = बोड़ा), सरसों, कुलथी की दाल, माष (उड़द), इतने बीजों को बीजाङ्कुर कर्म में हरिद्रा से प्रक्षालन कर स्वयं आचार्य वस्त्र से आच्छादित करे ॥ ४५-४६ ॥

**अन्यत्र—**

**निष्पावान् राजमाषांश्च देवे सुप्ते विवर्जयेत् ॥ ४६ ॥**

**प्रयोगसारे विशेषः—**

**त्रियम्बकाय शर्वाय शङ्कराय शिवाय च ।**
**सर्वलोकप्रधानाय शाश्वताय नमो नमः ॥ ४७ ॥**
**विकीर्यानेन मन्त्रेण हरिद्राचूर्णमिश्रितम् ।**
**तोयं प्रवर्षयेत् तेषु सिञ्चेत् तोयैर्दिनं प्रति ॥ ४८ ॥**

अन्यत्र—हरिशयन काल में निष्पाव और राजमाष (वोड़ा) का वपन न करे। प्रयोगसार में विशेष कथन इस प्रकार है—आचार्य 'त्रियम्बकाय से लेकर नमो नमः' पर्यन्त मन्त्र पढ़कर हरिद्राचूर्ण मिश्रित उपर्युक्त सभी बीजों का वपन करे। फिर उसको जल से सिञ्चन कर देवे। इस प्रकार जल से सिञ्चन प्रतिदिन करना चाहिए ॥ ४६-४८ ॥

**विमर्श**—विष्णुपुराण की श्रीधरी टीका में निष्पाव का अर्थ राजमाष (बोड़ा) दिया गया है। फिर से उसी की द्विरुक्ति में कोई बात नहीं है।

**सारस्वतमते प्रत्येकं बीजेषु देवतापूजोक्ता—**

**स्कन्दं प्रियङ्गौ निष्पावे वायुमग्निं कुलत्थके।**
**आढक्यां निर्ऋतिं सोमं मुद्गे वैवस्वतं तिले ॥ ४९ ॥**
**प्रजापतिं शालिबीजे त्वनन्तं सर्षपेऽर्चयेत्।**
**इन्द्रं श्यामे च माषे च वरुणं तु नगात्मजे ॥ ५० ॥**

सारस्वतमततन्त्र में प्रत्येक बीजों पर देवपूजन कहा गया है—प्रियङ्गु (ककुनी) पर स्कन्द का, निष्पाव पर वायु का, कुलत्थ पर अग्नि का, आढ़की पर निर्ऋति का, मूँग पर सोम का, तिल पर वैवस्वत का, शालिबीज पर प्रजापति का, सर्षप पर अनन्त का एवं श्यामाक पर इन्द्र का पूजन करें। इसी प्रकार राजमाष पर वरुण का, हे नगात्मजे! पूजन करे ॥ ४९-५० ॥

**महाकपिलपञ्चरात्रे—**

**ततो गन्धविमिश्रेण सिञ्चेद् वै शुद्धवारिणा।**
**त्रिरात्रं तु यथान्यायं पञ्चरात्रमथापि वा ॥ ५१ ॥**

महाकपिलपञ्चरात्र में भी बतलाया गया है—बीज वपन के बाद बीज को गन्ध मिश्रित शुद्ध जल से एक समान तीन रात्रि पर्यन्त अथवा पाँच रात्रि पर्यन्त सेचन करना चाहिए ॥ ५१ ॥

**शारदायाम्—**

**बलिं विविधपात्राणां दिक्षु पूर्वादितः क्षिपेत्।**
**प्रणवाद्यैर्नमोन्तैश्च रात्रौ रात्रीशनामभिः ॥ ५२ ॥**
**भूतानि पितरो यक्षा नागा ब्रह्मा शिवो हरिः।**
**सप्तानामपि रात्रीणां देवताः समुदीरिताः ॥ ५३ ॥**
**भूतेभ्यः स्युर्लाजतिलहरिद्रादधिसक्तवः।**

बलिद्रव्याणि

**सान्नाः पितृभ्यः सतिलास्तण्डुलाः परिकीर्तिताः ॥ ५४ ॥**

**करम्भलाजा यक्षेभ्यो नारिकेलोदकान्वितम् ।**
**सक्तुपिष्टं च नागेभ्यो ब्रह्मणे पङ्कजाक्षता: ॥ ५५ ॥**

**करम्भा दधिसक्तव: ।**

**सापूपमन्नं शर्वाय विष्णवे च गुडौदनम् ।**
**ततो लोकेश्वरेभ्योऽपि वितरेद् विधिवद् बलिम् ॥ ५६ ॥**
**दीक्षायामभिषेकेषु नववेश्मप्रवेशने ।**
**उत्सवेषु च सम्पत्त्यै विदध्यादंकुरार्पणम् ॥ ५७ ॥**

**अन्यत्रापि—**

**पायसं कृशरं वाथ वैष्णवे सत्प्रकीर्तित: ।**
**तत्तद्दिशि बलिर्देय: कर्मसाङ्गत्वसिद्धये ॥ ५८ ॥**

शारदातिलक (३.४१-४६) में भी बतलाया गया है—बीज वपन के पश्चात् आदि में प्रणव, अन्त में नम: लगाकर, रात्रीश के नाम में चतुर्थ्यन्त लगाकर, उन विविध पात्रों के पूर्वादि दिशाओं में बलिदान देवे । रात्रीशों के नाम—भूत, पितर, यक्ष, नाग, ब्रह्मा, शिव और हरि—ये सात रात्रियों के सात देवता कहे गये हैं । भूतों की बलि लावा, तिल, हरिद्रा एवं दधि और सत्तू से करे । पितरों को बलि अन्न एवं तिल सहित तन्दुल कहा गया है । यक्षों की बलि दधि मिश्रित सत्तू तथा लावा जो नारिकेल के जल से मिश्रित हो देवे । सक्तु पिष्ट से नागों को तथा ब्रह्मदेव को कमल और अक्षतों द्वारा बलि देनी चाहिये । पूआ सहित अन्न (भात) से शङ्कर को और गुड़ मिश्रित ओदन से विष्णु को बलि देवे । तदनन्तर लोकेश्वरों को भी विधिवत् बलि प्रदान करे । दीक्षा में, राज्याभिषेक में, नवीनगृह प्रवेश में, उत्सव में, सम्पत्ति प्राप्त होने के लिये अङ्कुरार्पण करे ।

अन्यत्र भी कहा गया है—वैष्णव याग में पायस और कृशर (तिल मिश्रित मूँग) की बलि प्रशस्त कही गई है । कर्म की साङ्गता सिद्धि के लिये तत्तद् दिशाओं में बलि देनी चाहिये ॥ ५२-५८ ॥

**विमर्श**—एक रात्रि में बलिदान के पश्चात् दूसरे दिन स्थान शुद्ध कर पुन: द्वितीय रात्रि में बलिदान करे । इसी प्रकार का क्रम सातों रात्रि में रखे । प्रतिदिन बलिदान का मन्त्र इस प्रकार है—ॐ भूतेभ्यो नम: (गन्धपुष्पधूपदीपनैवेद्यताम्बूल-सहितं बलिं गृह्णन्तु स्वाहा) यह प्रथम रात्रि में बलिदान का मन्त्र है । दूसरी रात्रि में 'भूतेभ्यो नम:' के स्थान पर 'पितृभ्यो नम:' मन्त्र का सन्निवेश करे । यह क्रम सर्वत्र आगे भी करे ।

**अथांकुरपरीक्षा सिद्धान्तशेखरे—**

**यजमानाभिवृद्ध्यर्थमंकुराणि परीक्षयेत् ।**

**सम्यगूर्ध्वं प्ररूढानि कोमलानि सितानि च ॥ ५९ ॥**
**धूम्रवर्णान्यपूर्णानि तथा तिर्यग्गतानि च ।**
**श्यामलानि तु कुब्जानि वर्जयेदशुभानि तु ॥ ६० ॥**
**अपुष्टिं कुरुते कृष्णं धूम्राभं कलहं तथा ।**
**अपूर्णं जननाशं च दुर्भिक्षं श्यामलांकुरम् ॥ ६१ ॥**
**तिर्यगाते भवेद् व्याधिः कुब्जे शत्रुभयं तथा ।**
**अशुभे चांकुरे जाते शान्तिहोमं समाचरेत् ॥ ६२ ॥**
**मूलमन्त्रेण जुहुयाद् गुरुर्मूर्तिधरैः सह ।**
**अघोरास्त्रेण चास्त्रेण शतं वाथ सहस्त्रकम् ॥ ६३ ॥**

अब सिद्धान्तशेखर के अनुसार अङ्कुर परीक्षा कहते हैं—यजमान की अभिवृद्धि के लिये अङ्कुरों की परीक्षा करनी चाहिये । जो अङ्कुर ठीक तरह से उत्पन्न ऊपर की ओर हों, कोमल और श्वेत वर्ण के हो वे सम्यक् कल्याणकारी हैं । जो धूम्रवर्ण के, पूर्व दिशा से अतिरिक्त मुख वाले तिरछे हैं, अथवा श्यामवर्ण के हैं, अथवा कुब्ज हैं, वे अशुभ हैं उन अङ्कुरों को वर्जित करे । कृष्णवर्ण का अङ्कुर अपुष्टिकारक है । धूम्रवर्ण का अङ्कुर कलह कारक है । अपूर्ण अङ्कुर जननाशक है । श्याम वर्ण का अङ्कुर दुर्भिक्ष प्रदान करता है । तिरछे उगने वाले अङ्कुर व्याधि उत्पन्न करते हैं । टेढ़े-मेढ़े अङ्कुर शत्रुभय प्रदान करते हैं । इस प्रकार यदि अशुभ अङ्कुर हो तब शान्ति होम करावे । उसे मूल मन्त्र से गुरु मूर्ति में रहने वाले देवता के साथ होम करे, अथवा अघोर मन्त्र से, अथवा अस्त्र मन्त्र से एक हजार आहुति देवे ॥ ५९-६३ ॥

**सारस्वतेऽपि—**

**प्ररूढैरंकुरैः कर्तुर्निर्दिशेच्च शुभाशुभम् ।**
**श्यामैः कृष्णैरंकुरैरर्थहानि**
**स्तिर्यग्रूढैर्व्याधिरांदोलितैस्तैः ।**
**कुब्जैर्दुःखं दुःप्ररूढैर्मृतिं च**
**रोगा भुग्नैः स्थानदेशेष्टहानिः ॥ ६४ ॥**

सारस्वतमततन्त्र में भी इस प्रकार बतलाया गया है—अङ्कुर के पुष्ट हो जाने पर गुरु उसका इस प्रकार शुभाशुभ फल निर्देश करे—श्याम एवं कृष्ण वर्ण के अङ्कुर से अर्थ हानि, तिरछे अङ्कुर से व्याधि, कुब्ज अङ्कुर से दुःख, उल्टे-पल्टे होने से मृत्यु, टेढ़े-मेढ़े से रोग और जैसे के तैसे रहने से इष्ट हानि समझनी चाहिये ॥ ६४ ॥

**अथ कुण्डानि शारदायाम्—**

**प्राक्प्रोक्ते मण्डपे विद्वान् वेदिकाया बहिस्त्रिधा।**

**क्षेत्रं विभज्य मध्यांशे पूर्वादि परिकल्पयेत् ॥ ६५ ॥**
**अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात् ।**

**चतुरस्रकुण्डमानम्**

**चतुरस्रं योनिमर्धचन्द्रं त्र्यस्रं सुवर्त्तुलम् ॥ ६६ ॥**
**षडस्रं पङ्कजाकारमष्टास्रं तानि मानतः ।**
**आचार्यकुण्डं मध्ये स्याद् गौरीपतिमहेन्द्रयोः ॥ ६७ ॥ इति ।**

अब शारदातिलक (३.४७-५०) के अनुसार कुण्डों के विषय में कहते हैं—विद्वान् पूर्व में कहे गये मण्डप में वेदिका से बाहर क्षेत्र का तीन विभाग करे। फिर उसके मध्य भाग में पूर्वादि दिशाओं में कुण्डादि निर्माण करना चाहिए। आठो दिशाओं में अत्यन्त सुन्दर चतुरस्र, योनि, अर्धचन्द्र, त्रिकोण, वृत्त, षट्-कोण, पद्म और अष्टकोण—इन आठ कुण्डों का मान के अनुसार निर्माण करे। इसके अतिरिक्त ईशान कोण और पूर्व दिशा के मध्य में आचार्य कुण्ड निर्माण करे ॥ ६५-६७ ॥

**अन्यच्च कुण्डसिद्धौ—**

**प्राच्याः चतुष्कोणभगेन्दुखण्ड**
**त्रिकोणवृत्ताङ्गभुजाम्बुजानि ।**
**अष्टास्त्रिशक्रेश्वरयोस्तु मध्ये**
**वेदास्त्रि वा वृत्तमुशन्ति कुण्डम् ॥ ६८ ॥**

**प्राचीत आरभ्य चतुरस्रयोनिवृत्तार्धत्रिकोणवृत्तषडस्रपद्माष्टास्त्रि कुण्डानि भवन्ति । प्राचीशानयोर्मध्ये नवममाचार्यकुण्डं स्यादित्यर्थः ।**

अन्यत्र तन्त्रों में कुण्ड निर्माण के विषय में भी बतलाया गया है—पूर्व दिशा से आरम्भ कर १. चतुरस्र, २. योनि, ३. अर्धचन्द्र, ४. त्रिकोण, ५. वृत्त, ६. षट्कोण, ७. पद्म और ८. अष्टकोण कुण्ड निर्माण करे। पूर्व और ईशानकोण में नवाँ आचार्य कुण्ड, जो चतुष्कोण हो, अथवा वृत्त हो, ऐसा निर्माण करे ॥ ६८ ॥

**एवं रहस्याम्नायेऽपि—**

**नवकुण्डविधानेन दिक्षु कुण्डाष्टके स्थिते ।**
**नवमं कारयेत् कुण्डं पूर्वेशानदिगन्तरम् ।**
**वृत्तं वा चतुरस्रं वाचार्यदैवं विचक्षणः ॥ ६९ ॥ इति ।**

इसी प्रकार रहस्याम्नाय में भी बतलाया गया है—आठो दिशाओं में आठ कुण्ड निर्माण करने के बाद एक नवीन कुण्ड विधान के अनुसार पूर्व और ईशान के मध्य में, चतुरस्र अथवा वृत्त रूप में बनावे। उसे आचार्य कुण्ड अथवा दैव-कुण्ड कहा जाता है ॥ ६९ ॥

कुण्डसिद्धौ तु—

**आशेशकुण्डैरिह पञ्चकुण्डी**
**चैकं यदा पश्चिमसोमशैवे ।**
**वेद्याः सपादेन करेण यद्वा**
**पदान्तरेणाखिलकुण्डसंस्था ॥ ७० ॥**

अस्यार्थः—आशा दिक् । तत्र कुण्डानि चतुरस्रवृत्तार्धवृत्तपद्मानि । ईशदिशि कुण्डं चतुरस्रं वृत्तं वा । तैः पञ्चकुण्डीनिवेशनं स्यात् । यदा च एकमेव कुण्डं तदा पश्चिमे वा उत्तरे ईशान्यां वा स्यात् । परन्तु चतुरस्रं वेद्याःसकाशात् । तानि सर्वाणि कुण्डानि सपादेन करेण त्रिंशदङ्गुलान्तरेण वा पादान्तरेण वा दशाङ्गुलान्तरेण भवतीति ।

पञ्चकुण्डीनिर्माण के विषय में कुण्डसिद्धि में भी बतलाया गया है—चारों दिशाओं में चतुरस्र, अर्धवृत्त, वृत्त और पद्म कुण्ड निर्माण करे । ईशानकोण में एक और कुण्ड जो चौकोर अथवा वृत्ताकार हो, उसे निर्माण करे । ऐसा करने से पञ्चकुण्डी का निर्माण हो जायेगा । अथवा यदि एक ही कुण्ड बनाना हो, तब पश्चिम में, उत्तर में, अथवा ईशान कोण में बनावे । किन्तु यदि चतुरस्र कुण्ड बनाना हो, तब वेदी के सन्निकट में ही निर्माण करना चाहिए । वे सभी कुण्ड सवा हाथ (३० अङ्गुल) के होने चाहिये और उनमें दश-दश अङ्गुल का अन्तर होना चाहिये ॥ ७० ॥

वसिष्ठसंहितायां तु—

**त्रयोदशाङ्गुलं त्यक्त्वा वेदिकायाश्चतुर्दिशम् ।**
**कुण्डानि स्वागमोक्तानि विदध्यात् विधिवद् बुधः ॥ ७१ ॥ इति ।**

वशिष्ठ संहिता में भी बतलाया गया है—वेदिका के चारो ओर तेरह अङ्गुल स्थान छोड़कर बुद्धिमान् पुरुष अपने आगम शास्त्रों के अनुसार विधिवत् कुण्ड बनावे ॥ ७१ ॥

नारदीये—

**यत्रोपदिश्यते कुण्डं चतुष्कं तत्र कर्मणि ।**
**वेदास्रमर्धचन्द्रं च वृत्तं पद्मनिभं तथा ॥ ७२ ॥**
**कुर्यात् कुण्डानि चत्वारि प्राच्यादिषु विचक्षणः ।**
**पञ्चमं कारयेत् कुण्डमीशदिग्गोचरं द्विजः ॥ ७३ ॥**

नारदीयसंहिता में भी कहा गया है—जहाँ कुण्ड बनाने का निर्देश कर्मों में किया जाता है वहाँ चतुरस्र, अर्धचन्द्र, वृत्त तथा पद्मकुण्ड विचक्षण पुरुष पूर्वादि दिशाओं में चार कुण्ड निर्माण करे । एक और पाँचवाँ कुण्ड ईशानकोण में निर्माण करे ॥ ७२-७३ ॥

**अयं मध्यमः पक्षः । कनिष्ठपक्षस्तु सोमशम्भौ—**

**एकं वा शिवकाष्ठायां प्रतीच्यां कारयेद् बुधः ।**

यह मध्यम पक्ष कहा गया कनिष्ठ पक्ष सोम शम्भु के अनुसार अथवा बुद्धिमान् साधक ईशानकोण में पूर्व दिशा में एक कुण्ड निर्माण करे ॥ ७४ ॥

**एतत् प्रपञ्चसारेऽपि—**

**अथवा दिशिकुण्डमुत्तरस्यां**
**प्रविदध्याच्चतुरस्रमेकमेव ॥ ७४ ॥ इति ।**

यही विचार प्रपञ्चसार में भी बतलाया गया है—अथवा उत्तर दिशा में 'चतुरस्र' एक ही कुण्ड बनावे ॥ ७४ ॥

**शारदायाम्—**

**विप्राणां चतुरस्रं स्याद् राज्ञां वर्त्तुलमिष्यते ।**
**वैश्यानामर्धचन्द्राभं शूद्राणां त्र्यस्रमीरितम् ॥ ७५ ॥**
**चतुरस्रं तु सर्वेषां केचिदिच्छन्ति तान्त्रिकाः ।**

ऐसा ही शारदातिलक (३.८७-८८) में भी कहा गया है—ब्राह्मणों के लिये चतुरस्र कुण्ड, राजाओं के लिये वृत्तकुण्ड, वैश्यों के लिये अर्धचन्द्र कुण्ड और शूद्रों के लिये त्रिकोण कुण्ड का विधान है । कुछ तान्त्रिक सभी के लिये चतुरस्र कुण्ड का ही विधान मानते हैं ॥ ७५-७६ ॥

**कुण्डानां फलं च तत्रैव—**

**सर्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतम् ॥ ७६ ॥**
**पुत्रप्रदं योनिकुण्डमर्धेन्द्वाभं शुभप्रदम् ।**
**शत्रुक्षयकरं त्र्यस्रं वर्त्तुलं शान्तिकर्मणि ॥ ७७ ॥**
**छेदमारणयोः कुण्डं षडस्रं पद्मसन्निभम् ।**
**पुष्टिदं रोगशमनं कुण्डमष्टास्रमीरितम् ॥ ७८ ॥**

अब कुण्डों का फल वहीं शारदातिलक (३.८५-८७) में कहते हैं—चतुरस्र कुण्ड सभी सिद्धियों को प्रदान करता है । योनि कुण्ड पुत्रप्रद है, अर्द्धचन्द्र कुण्ड कल्याण करता है, त्रिकोण कुण्ड शत्रुओं का क्षय करता है, वृत्त कुण्ड शान्तिकर्म के लिये प्रशस्त है, छेदन और मारण कर्म में षट्कोण कुण्ड प्रशस्त है तथा पद्म-कुण्ड पुष्टिप्रद है और अष्टकोण कुण्ड रोगशमन करता है ॥ ७६-७८ ॥

**मुष्टिमात्रमितं कुण्डं शतार्धे सम्प्रचक्षते ।**
**शतहोमेऽरत्निमात्रं हस्तमात्रं सहस्रके ॥ ७९ ॥**
**द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् ।**

**दशलक्षेषु षड्हस्तं कोट्यामष्टकरं स्मृतम् ॥ ८० ॥**

वहीं शारदातिलक (३.८२-८३) में उक्त है—शतार्ध (५०) संख्यक होम में मुष्टि मात्र कुण्ड कहा गया है। सौ संख्याक होम में अरत्नि प्रमाण का कुण्ड और सहस्र संख्याक होम में एक हाथ के प्रमाण का कुण्ड होना चाहिये। दश हजार संख्यक होम में दो हाथ का, एक लाख के होम में चार हाथ का, दश लाख के होम में छह हाथ का तथा कोटि संख्यक होम में आठ हाथ का कुण्ड बनाना चाहिये ॥ ७९-८० ॥

**अन्यच्च तत्रैव—**

**एकहस्तमितं कुण्डमेकलक्षे विधीयते ।**
**लक्षाणां दशकं यावत् तावद् हस्तेन वर्धयेत् ।**
**दशहस्तमितं कुण्डं कोटिहोमे विधीयते ॥ ८१ ॥ इति ।**

**एकहस्तमितं कुण्डं लक्षहोमेत्यत्र आज्यहोमे दूर्वाकरवीरादिहोमे च ज्ञेयम् ।**

अन्यत्र शारदातिलक (३.८४) में कहा है—एक लाख आहुति के होम में एक हाथ के कुण्ड का विधान है। इस प्रकार दश लाख के होम में क्रमशः एक-एक हाथ कुण्ड बढ़ाना चाहिये। अतः कोटि आहुति होम में दश हाथ का कुण्ड निर्माण करे ॥ ८१ ॥

यहाँ जो एक हाथ का कुण्ड कहा गया है वह एक लाख होम के विषय में अर्थात् आज्य होम में एवं दूर्वा और करवीर के होत में कहा गया है।

**मानं च सिद्धान्तशेखरे शारदायां च—**

**चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः ।**
**कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः ॥ ८२ ॥**
**मध्यस्य दीर्घमानेन मानाङ्गुलमुदीरितम् ।**
**यवानामष्टभिः क्लृप्तं मानाङ्गुलमुदीरितम् ॥ ८३ ॥ इति ।**

अब हाथ के मान के विषय में सिद्धान्तशेखर और शारदातिलक का वचन उद्धृत करते हैं—तन्त्रकारों ने चौबीस चौबीस अङ्गुल का हाथ होता है ऐसा कहा है। कर्त्ता (शिष्य) के दाहिने हाथ के मध्यमा अङ्गुलि के पर्व तक हाथ होता है। मध्यमा अङ्गुलि के पर्व तक हाथ का मान कह दिया गया। अब अन्य मान कह रहा हूँ। आठ यव का एक अङ्गुल होता है। इस प्रकार चौबीस अङ्गुल का हाथ होता है ॥ ८२-८३ ॥

**ग्रन्थान्तरे च—**

**जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः ।**

प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ ८४ ॥
त्रसरेणुस्तु विज्ञेयो ह्यष्टौ ते परमाणवः ।
त्रसरेणव एते स्युरष्टरेणुस्तु संस्मृतः ॥ ८५ ॥
ते रेणवस्तथा त्वष्टौ बालाग्रं तत् स्मृतं बुधैः ।
बालाग्राण्यष्टलिक्षा तु यूका लिक्षाष्टकं स्मृतम् ॥ ८६ ॥
अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकम् ।
रत्निस्त्वङ्गुलपर्वाणि विज्ञेयस्त्वेकविंशतिः ।
चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु ॥ ८७ ॥ इति ।

अन्य ग्रन्थों में भी बतलाया गया है—खिड़की के बीच में जो सूर्य किरणें आती हैं उसमें जो अत्यन्त सूक्ष्म रज दिखलाई पड़ता है, उसमें जो पहला रज है उसे त्रसरेणु कहा जाता है । जिसमें आठ परमाणु होते हैं । इस प्रकार आठ त्रसरेणु का एक बालाग्र और आठ बालाग्र का एक लिक्षा तथा आठ लिक्षा का एक यूक एवं आठ यूक का एक यव और आठ यव का एक अङ्गुल होता है । इस प्रकार इक्कीस अङ्गुल की एक रत्नि और चौबीस अङ्गुल का एक हाथ समझना चाहिये ॥ ८४-८७ ॥

**अतो मानाङ्गुलेनैव कुण्डं विधेयम् । सिद्धान्तशेखरे—**

**योन्यादिसर्वकुण्डानि चतुरस्राद् भवन्ति हि ।**
**लक्षणं चतुरस्रस्य पूर्वं तस्मान्मयोच्यते ॥ ८८ ॥**

**त्रिशत्यां श्रीधराचार्यः—**

**समलम्बकचतुरस्रे त्र्यस्त्रिक्षेत्रे च जायते करणम् ।**
**भूवदनसमासार्धं मध्यमलम्बेन सङ्गुणयेत् ॥ ८९ ॥**

**इत्यनेन प्रकारेण चतुर्विंशतिः चतुर्विंशत्या गुणिता पञ्चशतानि षट्सप्तत्यधिकान्यङ्गुलानि क्षेत्रफलम् । एतदेव क्षेत्रफलमष्टस्वपि कुण्डेषु ज्ञेयम् । अतः सर्वकुण्डानामेव प्रकृतिभूतम् ।**

**अथ चतुरस्रं कुण्डं, कुण्डसिद्धौ—**

**द्विघ्नं व्यासं तुर्यचिह्नं समांशं**
**सूत्रं शङ्कौ पश्चिमे पूर्वगेऽपि ।**
**दत्त्वा कर्षेत् कोणयोः पाशतुर्ये**
**स्यादेवं वा वेदकोणं समानम् ॥ ९० ॥**

**अस्यार्थः—इष्टव्यासाद् द्विगुणितं व्यासं तुर्यचिह्नं सपाशसूत्रं पूर्वपश्चिमस्थयोः शङ्कोर्दत्वा कोणयोः पाशचतुर्थांशे कर्षयेत् । एवं कृते समचतुरस्रं स्यात् । इदमेव सर्वेषां कुण्डानां मूलमिति ।**

अङ्गुलि के प्रमाण के अनुसार ही कुण्ड निर्माण करना चाहिये । जैसा कि सिद्धान्तशेखर में भी यही बतलाया गया है—यतः योन्यादि समस्त कुण्ड चतुरस्त्र कुण्ड से ही बनते हैं, इसलिये मैं सर्वप्रथम चतुरस्त्र कुण्ड का लक्षण कहता हूँ ।

त्रिशती में श्रीधराचार्य ने कहा है—चौबीस का चौबीस में गुणा करे । गुणन फल ५७६ अङ्गुल होगा । यही क्षेत्रफल है । यही क्षेत्रफल आठो प्रकार के कुण्डों में समझना चाहिये । यही क्षेत्रफल अथवा चतुरस्त्र समस्त कुण्डों की प्रकृति है। (इससे आया कि एक हाथ लम्बा एक हाथ चौड़ा और एक हाथ गहरा कुण्ड बनेगा । इस प्रकार का शुभावह कुण्ड चतुरस्त्र कहा जाता है।) ॥ ८८-९० ॥

**चतुरस्त्रकुण्ड**



**अथ योनिकुण्डं कुण्डसिद्धौ—**

**क्षेत्रे जिनांशे तु पुरः शरांशान्**
**संवर्द्ध्य च स्वीयरदांशयुक्तान् ।**
**कर्णाङ्घ्रिमानेन लिखेन्दुखण्डे**
**प्रत्यक् पुरोऽङ्गाद् गुणतो भगाभम् ॥ ९१ ॥**

**अस्यार्थः—चतुरस्त्रे क्षेत्रे चतुर्विंशतिभागे कृते सति पञ्चांशान् स्वीयद्वात्रिंशदंश-युक्तान् अङ्गुलानि ५।१।२ अग्रे संवर्ध्य ततश्चतुर्धा विभक्तस्य क्षेत्रस्य पश्चिमचतुरस्त्र-द्वयमध्याङ्कात् कर्णसूत्रस्य चतुर्थांशेन प्रत्यक् पश्चिमभागे इन्दुखण्डे वृत्तार्धद्वयं विद्वन् लिख । ततः पूर्वाकात् दक्षिणोत्तरसूत्रसंलग्नवृत्तार्धं यावत् नीयमानं गुणद्वयतो भगाकारं योनिकुण्डं स्यात् ।**

अब योनिकुण्ड के निर्माण का प्रकार कहते हैं—चौकोर क्षेत्र के चौबीस भाग कर लेने पर उसका पञ्चमांश ५।१।२ पाँच अङ्गुल दो यव एक यूका प्रमाण आगे बढ़ा देवे और उस शेष चार भाग में विभक्त क्षेत्र का, पश्चिम चतुरस्त्रद्वय के मध्याङ्क से, कर्ण सूत्र के चतुर्थांश से उत्तर पश्चिम भाग में अर्धचन्द्राकार में दो वृत्त बनावे । ऐसा करने से पूर्व से दक्षिणोत्तर सूत्र संलग्न वृत्तार्ध तक ले जाने पर दुगुने करने से वह भगाकार योनिकुण्ड बन जायेगा ॥ ९१ ॥

**योनिकुण्डं**



वृत्तार्धकुण्डम्—

स्वशतांशयुतेषु भागहीनस्व-
धरित्रीमितकर्कटेन मध्यात् ।
कृतवृत्तदलेऽग्रतश्च जीवां
विदधात्विन्दुदलस्य साधुसिद्ध्यै॥ ९२ ॥

अस्यार्थः—स्वीयशतांशेन युतो य इषुभागः पञ्चमांशः । अर्थात् क्षेत्रस्यैवानेनोना चासौ स्वभूमिः क्षेत्रं तन्मितेन कर्कटेन सूत्रेण वा मध्याङ्कात् कृतं यद् वृत्तार्धं तस्मिन् अग्रतः पूर्वापरां रेखां जीवारूपां वृत्तार्धस्य साधु सिद्ध्यै करोतु विद्वानित्यर्थः ।

वृत्तार्ध कुण्ड



अब वृत्तार्ध कुण्ड कहते हैं—अपने शतांश से युक्त जो पञ्चमांश उसके प्रमाण सूत्र से, मध्य रेखा से, वृत्तार्ध बनाकर उसके आगे पूर्व से पश्चिम जीवारूपा रेखा वृत्तार्ध की अच्छी तरह सिद्धि हेतु बनावे । यह वृत्तार्ध कुण्ड कहा गया ॥ ९२ ॥

अथ त्र्यस्त्रिवृत्तकुण्डे कुण्डसिद्धौ—

वह्न्यंशं पुरतो निधाय च पुनः श्रेण्योश्चतुर्थांशके
चिह्नेषु त्रिषु सूत्रदानत इदं स्यात् त्र्यस्त्रि कष्टोज्झितम् ।
विश्वांशैः स्वजिनांशकेन सहितैः क्षेत्रे जिनांशैः कृते
व्यासार्धेन मितेन मण्डलमिदं स्याद् वृत्तसञ्ज्ञं शुभम् ॥ ९३ ॥

अस्यार्थः—अथ पूर्वार्धेन त्र्यस्त्रि कुण्डं व्याख्यायते । क्षेत्रस्य तृतीयांशं पूर्वतो-निधाय तत उभयोः श्रेण्योः चतुर्थांशं निधाय दक्षिणत उत्तरतश्च दत्त्वा त्रिषु चिह्नेषु सूत्रदानात् कष्टरहितं त्र्यस्त्रि जायते इत्यर्थः । अथोत्तरार्धेन वृत्तमाह—क्षेत्रे चतुर्विंशति-भक्ते सति त्रयोदशांशैः स्वचतुर्विंशांशयुतैर्मितेन व्यासार्धेन मण्डलं यत् वृत्तसञ्ज्ञं तत् कुण्डं सुन्दरं स्यात् ।

अब कुण्डसिद्धि में बतलाये गए त्र्यस्त्रि कुण्ड और वृत्त कुण्ड की व्याख्या इस प्रकार करते हैं—

त्र्यस्त्रि कुण्ड



सर्वप्रथम चतुरस्त्र क्षेत्र का निर्माण करे । क्षेत्र का तृतीयांश पूर्व से रखकर उसके दोनों किनारे पर चतुर्थांश रखकर, इसी प्रकार दक्षिण और उत्तर भी रखकर, उन तीनों चिन्हों पर सूत्र लगाकर रेखा खींच देनी चाहिए । ऐसा करने से बिना कष्ट के त्रिकोण कुण्ड बन जायेगा ।

अब उत्तरार्ध श्लोक से वृत्त कुण्ड के निर्माण का विधान बतलाते हैं—बुद्धिमान साधक सर्वप्रथम चतुरस्र क्षेत्र का निर्माण करे। कुल क्षेत्र के चौबीस भाग करने पर उसके त्रयोदशांश एवं चतुर्विंशांश से व्यासार्ध से चारों ओर वृत्त रेखा खींच कर मण्डल बना देवे। तब वह वृत्त सञ्ज्ञक सुन्दर कुण्ड बन जायेगा ॥ ९३ ॥

**वृत्त कुण्ड**



**अथ षडस्रकुण्डं तत्रैव—**

**भक्ते क्षेत्रे जिनांशैर्धृतिमितलवकैः स्वाक्षिशैलांशयुक्तै-**
**र्व्यासार्धान्मण्डले तन्मितधृतगुणके कर्कटे चेन्दुदिक्तः ।**
**षट्चिह्नेषु प्रदद्याद् रसमितगुणकानेकमेकं तु हित्वा**
**नाशे सन्ध्यङ्गदोषामपि च वृतिकृतेर्नेत्ररम्यं षडस्रम् ॥ ९४ ॥**

**अस्यार्थः—क्षेत्रे चतुर्विंशतिधा भक्ते सति अष्टादशैः १८। खद्वासप्ततिमांश ०।२ युक्तैः तावता १८।२ व्यासार्धेन वृत्ते कृते सति उत्तरदिक्तः तेनैव व्यासार्धेन मिते धृते गुणके सूत्रे सति कर्कटे वा धृते सति परावर्तनेन षट् चिह्नानि भवन्ति। तेषु षट्चिन्हेषु षट्सूत्राणि एकान्तरेण परस्परलग्नानि दद्यात्। ततः सन्धौ ये दोषाः षड्भुजाः तेषां नाशे वृतिकृतेः मण्डलस्य विनाशे षडस्त्रि नेत्ररम्यं जायत इत्यर्थः।**

कुण्डसिद्धि में ही षडस्रकुण्ड इस प्रकार कहा गया है—सर्वप्रथम चतुरस्र क्षेत्र के मध्य से दोनों ओर की रेखा को आठ भागों में प्रविभक्त करे। तदनन्तर मध्य की उत्तर-दक्षिण और पूर्व-पश्चिम की रेखाओं को अष्टमांश बढ़ा देवे। फिर बढ़ी हुई रेखाओं से सम्बद्ध व्यास के केन्द्र से एक वृत्त का निर्माण करना। फिर बढ़ी हुई रेखा के दोनों ओर तन्त्रवेत्ता साधक चार चिन्ह लगावे। फिर छओं सूत्रों को मिला देवे तो षडस्रकुण्ड हो जाता है ॥ ९४ ॥

**षडस्रकुण्ड**



**अस्यैवापरः प्रकारः स्वल्पान्तरत्वात् तत्रैव—**

**अथवा जिनभक्तकुण्डमाने तिथि-**
**भागैः खखभूपभागहीनैः ।**
**इह कर्कटकोद्भवे तु वृत्ते**
**विधुदिक्तः समषड्भुजैः षडस्रम् ॥ ९५ ॥**

अस्यार्थः—अथ चतुर्विंशतिभक्ते कुण्डमाने सति स्वीयषष्ट्यधिकशतांशेन १६० हीनैः पञ्चदशभागैर्मितो यः कर्कटः १४।७।२ तदुद्भवे वृत्ते उत्तरदिक्तः सकाशात् समैः षड्भुजैर्दत्तैः परस्परलग्नैः षडस्त्रं वृत्तमार्जनेन भवतीत्यर्थः ।

अथ पद्मकुण्डं तत्रैव—

अष्टांशाच्च यतश्च वृत्तशरके तत्रादिमं कर्णिका
युग्मे षोडशकेशराणि चरमे स्वाष्टत्रिभागोनिते ।
भक्ते षोडशधा शरान्तरधृते स्युः कर्कटेऽष्टौ छदाः
सर्वांस्तान् खन कर्णिकां त्यज निजायामौच्यकं स्यात् कजम् ॥९६॥

अस्यार्थः—क्षेत्रस्याष्टमांशादष्टमांशवृद्ध्या च वृत्तपञ्चके कृते सति वृत्तपञ्चकमध्ये प्रथमे कर्णिका द्वितीये षोडश केशराणि स्युः । अन्तिमे पञ्चमवृत्ते स्वस्य अङ्गुलत्रयात्मकस्य एकोनविंशत्यंशे ऊने १।२।०।६ ऊनिते सति षोडश स्थानेषु दिक्षु विदिक्षु तदन्तराले च समतया विभाजिते तस्मिन् वृत्ते पञ्चकचिह्नान्तरे दिशि विदिशि कर्कटे धृते सति परावर्तनेन अष्टौ पत्राणि जायन्ते । सर्वान् तान् केसरादीन् केसरवृत्ततृतीयचतुर्थवृत्तानि पत्राणि च हे त्रिद्वन्! खन, कर्णिकां त्यज मा खन । कीदृशीम् निजः स्वीय आयामो विस्तारः, तत्तुल्यं औच्यकं यस्य तत् । कजं पद्मकुण्डं बहिर्वृत्तमार्जनेन स्यादित्यर्थः ।

पद्मकुण्ड



अब कुण्डसिद्धि में ही कहे गये पद्मकुण्ड के निर्माण का विधान करते हैं—बुद्धिमान साधक सर्वप्रथम चतुरस्त्र क्षेत्र का निर्माण करे । चतुरस्त्र क्षेत्र को १८ भागों में प्रविभक्त करना चाहिए । पुनः एक भाग बाहर छोड़कर चारों ओर गोल वृत्त बना देना चाहिए । पुनः कर्णिका के बाहर तीन वृत्त का निर्माण कर लेना चाहिए । तो देखने में अत्यन्त मनोहर पद्मकुण्ड बन जाता है ॥ ९६ ॥

अथाष्टास्त्रिकुण्डं तत्रैव—

क्षेत्रे जिनांशे गजचन्द्रभागैः
स्वाष्टाक्षिभागेन युतैस्तु वृत्ते ।
विदिग्दिशोरन्तरतोऽष्टसूत्रैः
तृतीययुक्तैरिदमष्टकोणम् ॥ ९७ ॥

अस्यार्थः—क्षेत्रे चतुर्विंशतिभागे कृते सति अष्टादशभागैः स्वीयाष्टाविंशांशेन युतैः कर्कटेन वृत्ते कृते सति अर्थात् व्यासो द्विगुणितः दिग्विदिशोर्मध्ये कृताष्ट-

चिह्नेभ्यः अष्टभुजैस्तृतीयमिलितैः चिह्नद्वयं विहाय तृतीयचिह्नेन योजिते अष्टकोणं वृत्तमार्जनात् मध्यस्याष्टदोःखण्डमार्जनाच्च भवतीत्यर्थः ।

अथ प्रकारान्तरेण समाष्टभुजमष्टास्त्रिकुण्डं तत्रैव—

मध्ये गुणे वेदयमै २४र्विभक्ते
शक्रैर्निजर्ष्यब्धिलवेन युक्तैः ।
वृत्ते कृते दिग्विदिशोऽन्तराले
लग्नैर्भुजैः स्यादथवाष्टकोणम् ॥ ९८ ॥

मध्यसूत्रे चतुर्विंशतिभक्ते स्वसप्तचत्वारिंशदंशसहितैः चतुर्दशभिः १४।२।३ व्यासार्धेन मण्डले कृते तत्र दिग्विदिशोर्मध्ये कृताष्टचिह्नेषु सूत्रैः परस्परलग्नैः अष्टकोणं कुण्डं वृत्तमार्जनाद् भवतीत्यर्थः । कुण्डेषु क्षेत्रसाधनोपपत्तौ चतुरस्त्रसिद्धम् । योनौ पञ्चलिक्षाचतुष्टययूकाधिकम् । वृत्तार्धेत्वेवम् । त्र्यस्त्रिकुण्डे किञ्चिद् भुजवैषम्यम् । वृत्तेऽतिस्वल्पमन्तरम् । षडस्त्रिकुण्डे यूकात्रयषड्यवाधिकम् । अथवा व्यासो यूकान्यूनः । षडस्त्रं सिद्धम् । पद्मनिभं पूर्णफलम् । अष्टास्त्रिकुण्डे यूकैकान्तरम् । अतः सर्वेष्वपि स्वल्पान्तरत्वात् ध्वजायस्य सिद्धत्वात् न दोषः ।

अब कुण्डसिद्धि में ही कहे गये अष्टास्त्र कुण्ड की व्याख्या करते हैं—पूर्वोक्त १८ अङ्गुल के चतुरस्त्र क्षेत्र को २४ भागों में प्रविभक्त करे । तदनन्तर चारों ओर एक भाग को बाहर से छोड़कर पुनः उसे चौकोर निर्माण करे। तदनन्तर अन्तस्थ चतुरस्त्र के कोण के आधे भाग से बाहर के चतुरस्त्र कोणों से मिला देवे। फिर आठों दिशाओं के आठों सूत्रों को एक में मिला देवे । तन्त्रवेत्ताओं ने इस प्रकार के बने हुये कुण्ड को अष्टास्त्र कुण्ड कहा है ॥ ९७-९८ ॥

अष्टास्त्रकुण्ड



यच्च सिद्धान्तशेखरे—

स्थापने सर्वकुण्डानां ध्वजायः सर्वसिद्धिदः ।
शतांशो वाधिकं न्यूनं ह्रासवृद्धो न दूषयेत् ।
आयदोषविशुद्ध्यर्थं क्रियते शास्त्रकोविदैः ॥ ९९ ॥ इति ।

जैसा कि सिद्धान्तशेखर में कहा गया है—सभी कुण्डों के स्थापन में ध्वजाय सर्वसिद्धिकारक होता है । क्षेत्र के शतांश के अधिक होने पर, अथवा कम होने पर उससे कोई हानि नहीं होती । शास्त्रकारों ने आयदोष की विशुद्धि के लिये यह

नियम बनाया है ॥ ९९ ॥

**अथ खातलक्षणं कण्ठलक्षणं च कुण्डसिद्धौ—**

**खातं क्षेत्रसमं प्राहुरन्ये तु मेखलां विना ।**
**कण्ठो जिनांशमानं स्यादर्कांश इति चापरे ॥ १०० ॥**

**अस्यार्थः—कुण्डखननं क्षेत्रसमम् । कुण्डस्य यावान् विस्तारः आयामश्च तावत् खननमायमेखलासहिते कुण्डे कार्यम् । योन्यादिकुण्डेषु विस्तारायामयोर्नानात्वात् । चतुरस्रस्यैवायामविस्तारौ ग्राह्यौ । अन्ये तु—मेखलां वर्जयित्वा भूमावेव खननं कार्यमित्याहुः । कण्ठोऽपि क्षेत्रचतुर्विंशत्यंशमानः । खाताद् वहिः समन्तात् एकाङ्गुलमितः। अन्ये तु क्षेत्रस्य द्वादशांशपरिमितं प्राहुरित्यर्थः ।**

अतः यहाँ चतुरस्र कोण का ही आयाम विस्तार ग्रहण करना चाहिये । कुण्ड की जितनी लम्बाई और जितनी चौड़ाई हो उतना ही खनना चाहिये । यह खनन आयाम मेखला सहित कुण्ड में करना चाहिये । योन्यादि कुण्ड में विस्तार और आयाम अनेक प्रकार के होते हैं । कुछ लोग कहते हैं कि मेखला के लिये स्थान छोड़कर भूमि का खनन करना चाहिये । कण्ठ भी चौबीसवें अंश का बनाना चाहिये, जो खात से बाहर एक अङ्गुल प्रमाण का हो । जबकि अन्य लोग क्षेत्र का द्वादशांश (दो अङ्गुल) कण्ठ का प्रमाण मानते हैं ॥ १०० ॥

**सिद्धान्तशेखरेऽपि—**

**खातः कुण्डप्रमाणं स्यादूर्ध्वमेखलया सह ।**
**पञ्चत्रिमेखलोच्छ्रायं ज्ञात्वा शेषमधः खनेत् ॥ १०१ ॥**

सिद्धान्तशेखर में भी बतलाया गया है—खात कुण्ड के प्रमाण के अनुकूल ही निर्माण करे । कुण्ड के ऊपर बनाई जाने वाली पाँच मेखला तथा तीन मेखला की ऊँचाई समझ कर शेष भाग में खात खनन करे ॥ १०१ ॥

**कालोत्तरे—**

**खातबाह्येंगुलः कण्ठः सर्वकुण्डेष्वयं विधिः।**
**चतुर्विंशतिमो भागः कुण्डानामङ्गुलं स्मृतम् ॥ १०२ ॥**

कालान्तर में भी बतलाया गया है—सभी कुण्डों में यही विधि है कि खात के बाहर कुण्ड का एक अङ्गुल कण्ठ निर्माण करे । कुण्ड का चतुर्थांश भाग एक अङ्गुल कहा जाता है ॥ १०२ ॥

**सोमशम्भुरपि—**

**बहिरेकाङ्गुलः कण्ठः स कण्ठो द्व्यङ्गुलः क्वचित्। इति ।**

सोमशम्भु में भी बतलाया गया है—कुण्ड से बाहर एक अङ्गुल का कण्ठ

बनाना चाहिये। किन्तु कोई-कोई आचार्य दो अङ्गुल का कण्ठ कहते हैं ॥१०३॥

**अथ मेखला कुण्डसिद्धौ—**

**अधमा मेखलैका स्यात् मध्यमं मेखलाद्वयम्।**
**श्रेष्ठास्तिस्रोऽथवा द्वित्रिपञ्चस्वधमतादिकम् ॥ १०३ ॥**

कुण्ड में मेखला विधान जैसे कुण्डसिद्धि में कहा है—कुण्ड में एक मेखला अधम होती है, दो मेखला मध्यम और तीन मेखला उत्तम कही जाती है, अथवा द्विमेखला अधम, त्रिमेखला मध्यम और पाँच मेखला उत्तम कही गई है ॥ १०३॥

**क्रियासारे—**

**नाभियोनिसमायुक्तं कुण्डं श्रेष्ठं त्रिमेखलम्।**
**कुण्डं द्विमेखलं मध्यं नीचं स्यादेकमेखलम् ॥ १०४ ॥**

क्रियासार में भी बतलाया गया है—नाभि एवं योनि से युक्त त्रिमेखला वाला कुण्ड श्रेष्ठ कहा गया है। दो मेखला वाला कुण्ड मध्यम और एक मेखला वाला कुण्ड अधम कहा गया है ॥ १०४ ॥

**सोमशम्भौ विशेषः—**

**त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलम्।**
**मेखलैकं तु वैश्यस्य प्रोक्तं कुण्डविशारदैः ॥ १०५ ॥**

सोमशम्भु में विशेष कथन इस प्रकार है—ब्राह्मण कुण्ड तीन मेखला वाला, क्षत्रिय कुण्ड दो मेखला वाला और वैश्य कुण्ड एक मेखला वाला होना चाहिये। ऐसा कुण्ड के विशेषज्ञों ने कहा है ॥ १०५ ॥

**कुण्डसिद्धौ—**

**अष्टधा विहितकुण्डशरांशैः**
**सङ्खनेद् भुवमुपर्यनलांशैः।**
**मेखला विरचयेदपि तिस्त्रः**
**षड्गजार्कलवविस्तृतिपिण्डाः ॥ १०६ ॥**

**अष्टधा भक्तस्य क्षेत्रस्य यः त्र्यङ्गुलात्मको भागस्तादृशैः पञ्चभिर्भागैर्भुवं खनेत्। उपरि तादृशैस्त्रिभिर्भागैः तिस्रो मेखला रचयेत्। कीदृश्यः षडष्टद्वादशांशाः, चतुस्त्रिंश-द्व्याङ्गुलमिताः तैः तुल्यं विस्तारो यासां ता इत्यर्थः।**

कुण्डसिद्धि में इस प्रकार कहा गया है—कुण्ड के क्षेत्र को आठ भागों में प्रविभक्त करे। उसमें जो तीन अङ्गुल का भाग है, उसके पाँचवें भाग में पृथ्वी का खनन करे। उसके ऊपर तीन भाग में तीन मेखला बनावे। विस्तार क्रमशः चार, तीन और दो अङ्गुल हो ॥ १०६ ॥

शारदातिलके—

**कुण्डानां यादृशं रूपं मेखलानां च तादृशम् ।**
**कुण्डानां मेखलास्तिस्रो मुष्टिमात्रे तु ताः क्रमात्॥ १०७ ॥**
**उत्सेधायामतो ज्ञेया द्व्येकार्धांगुलसंमिताः ।**
**अरत्निमात्रे कुण्डे स्युस्ताः त्रिद्व्येकाङ्गुलात्मिकाः ॥ १०८ ॥**
**एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः ।**

नेमिलक्षणम्

**मेखलानां भवेदन्तः परितो नेमिरङ्गुलात् ॥ १०९ ॥**

शारदातिलक में मेखला लक्षण और उसका मान बतलाया गया है—कुण्ड का जैसा स्वरूप हो, मेखला भी उसी प्रकार की होनी चाहिये अर्थात् चतुरस्र में चतुरस्र मेखला, योनिकुण्ड में योनि रूपा मेखला इत्यादि बनानी चाहिये । हर प्रकार के कुण्डों में तीन-तीन मेखलायें होनी चाहिये । त्रिमेखला पक्ष में उनकी ऊँचाई तथा चौड़ाई क्रमशः एक मुष्टि के बराबर होनी चाहिये । प्रथम मेखला दो अङ्गुल चौड़ी दो अङ्गुल ऊँची, दूसरी मेखला एक अङ्गुल चौड़ी एक अङ्गुल ऊँची और तीसरी मेखला आधा अङ्गुल चौड़ी आधा अङ्गुल ऊँची होनी चाहिये । यदि अरत्नि मात्र का कुण्ड हो, तब तीनो मेखलायें क्रमशः तीन, दो और एक अङ्गुल चौड़ी तथा ऊँची होनी चाहिये । यदि एक हाथ का कुण्ड हो, तो क्रमशः चार, तीन और दो अङ्गुल चौड़ी तथा ऊँची मेखला बनानी चाहिये ॥ १०७-१०९ ॥

**एकहस्तस्य कुण्डस्य वर्धयेत् तत्क्रमात् सुधीः ।**
**दशहस्तान्तमन्येषामर्धांगुलवशात् पृथक् ॥ ११० ॥**

अब कुण्ड के कण्ठ का मान कहते हैं—यदि एक हाथ का कुण्ड हो तो मेखला के भीतर चारो ओर एक अङ्गुल कण्ठ का निर्माण करे । इस प्रकार कुण्ड के विस्तार के अनुसार उसका कण्ठ भी बढ़ाते रहना चाहिये । इसी प्रकार दश हाथ के कुण्ड में पृथक्-पृथक् आधा अङ्गुल कण्ठ बढ़ाते रहना चाहिये ॥ ११०॥

**कुण्डे द्विहस्ते ता ज्ञेया रसवेदगुणाङ्गुलाः ।**
**चतुर्हस्तेषु कुण्डेषु वसुतर्कयुगाङ्गुलाः ॥ १११ ॥**
**कुण्डे रसकरे ताः स्युर्दशाष्टर्त्वंगुलान्विताः ।**
**वसुहस्तमिते कुण्डे भानुपंक्त्यष्टकाङ्गुलाः ॥ ११२ ॥**
**दशहस्तमिते कुण्डे मनुभानुदशाङ्गुलाः ।**
**विस्तारोत्सेधतो ज्ञेया मेखला सर्वतो बुधैः ॥ ११३ ॥**

यदि दो हाथ का कुण्ड हो तो मेखलायें क्रमशः छह, चार और तीन अङ्गुल चौड़ी और ऊँची बनानी चाहिए । यदि चार हाथ का कुण्ड हो तो मेखला आठ,

छह और चार अङ्गुल चौड़ी और ऊँची बनानी चाहिये । यदि कुण्ड छह हाथ का हो तो मेखला भी क्रमशः दश, आठ एवं छह अङ्गुल चौड़ी और ऊँची बनावे । यदि कुण्ड आठ हाथ का हो तो मेखला भी बारह, दश तथा आठ अंगुल चौड़ी और ऊँची बनानी चाहिए । यदि कुण्ड दश हाथ का कुण्ड हो तब मेखलायें भी क्रमशः १४, १२ और दश अङ्गुल चौड़ी और ऊँची होनी चाहिये । इस प्रकार बुद्धिमान् साधक कुण्ड के अनुसार मेखलाओं की ऊँचाई तथा चौड़ाई विचार कर बनावे ॥ १११-११३ ॥

**क्रियासारे—**

**प्रधानमेखलोत्सेधमुक्तमत्र नवाङ्गुलम् ।**
**तद्बाह्यमङ्गुलोत्सेधं पञ्चाङ्गुलमिदं स्मृतम् ॥ ११४ ॥**
**तद्बाह्यमङ्गुलोत्सेधमङ्गुलद्वितयं क्रमात् ।**
**चतुस्त्रिद्व्यङ्गुलव्यासो मेखलात्रितयस्य तु ॥ ११५ ॥**

क्रियासार में मान इस प्रकार कहा गया है—यहाँ प्रधान मेखला की ऊँचाई नव अङ्गुल कही गई है । उसके बाहर एक अङ्गुल की ऊँचाई कही गई है, इस प्रकार कुल पाँच अङ्गुल बनावे और उसके बाहर अङ्गुल की ऊँचाई दो अङ्गुल बनावे । इस प्रकार तीनों मेखलाओं का व्यास चार अङ्गुल, तीन अङ्गुल तथा दो अङ्गुल होगा ॥ ११४-११५ ॥

**प्रयोगसारे—**

**सात्त्विकी मेखला पूर्वा विस्तृत्या द्वादशाङ्गुला ।**
**द्वितीया राजसी प्रोक्ता मेखलाष्टाङ्गुलैस्ततः ।**
**तृतीया मेखला ख्याता तामसी चतुरङ्गुला ॥ ११६ ॥**

प्रयोगसार में भी बतलाया गया है—प्रथम सात्त्विकी मेखला विस्तार में द्वादश अङ्गुल की, द्वितीया राजसी मेखला विस्तार में आठ अङ्गुल की तथा तीसरी तामसी मेखला चार अङ्गुल की कही गई है ॥ ११६ ॥

**अपरं च कुण्डसिद्धौ—**

**रसांशकादुन्नतविस्तृताश्च**
**तिस्रोऽथवैकायुगभागतुल्याः ।**
**पञ्चाथवा षट् शरवेदराम**
**द्व्यंशैस्तु ताः स्युर्नवभागपिण्डाः ॥ ११७ ॥**

आगे और भी कुण्ड सिद्धि में कहा गया है—अथवा क्षेत्र के छठे अंश की उन्नत, अर्थात् छठे अंश में विस्तार और उतनी ही ऊँची वाली तीनो मेखलायें बनानी चाहिये । अथवा यदि एक ही मेखला बनानी है तो क्षेत्र का चतुर्थांश चौड़ी

और उतनी ही ऊँची बनावे। अथवा यदि पाँच मेखला बनानी है, तब क्रमशः ६, ५, ४, ३, २ अङ्गुल ऊँची और चौड़ी बनावे, यह पञ्चमेखला का उदाहरण हुआ अर्थात् कुण्ड में पञ्चमेखला की रीति वैदिकों मे प्रचलित नहीं है। किन्तु यहाँ यह उदाहरण हो गया कि पाँच मेखला का भी कुण्ड होता है ॥ ११७ ॥

**आद्या परस्तात् शरभागहीना**
**जिनांशकण्ठाद् बहिरेव सर्वाः।**
**कुण्डानुकारा अपि मेखलास्यु-**
**रर्कांगभागौच्य ततस्तु नाभिः ॥ ११८ ॥**

दूसरी मेखला पहली से पञ्चमांश छोटी होती हैं। (जैसे एक हाथ के कुण्ड में पहली मेखला नव अंगुल ऊँची होती है। इसका पञ्चमांश १।६।३।१५ है। द्वितीय मेखला की ऊँचाई ७।१।४।६।३ होगी।) वे सभी मेखलायें क्षेत्र के चौबीसवें भाग के नाप की कुण्ड के आकृति के समान कण्ठ से बाहर निर्मित होती हैं। (योनि आदि कुण्डों में योनि आदि कुण्डों के आकार वाली होती हैं)। नाभि भी द्वादशांश ऊँची और षडंश विस्तृत होती है जो कुण्ड के आकार की ही होती है ॥ ११८ ॥

**अथ नाभिः—**

**कुण्डाकारो नाभिरम्भोजसाम्यो**
**वाब्जेयं नेनांशहानिर्दलाग्रे।**
**शेषक्षेत्रे वह्निवृत्तैः समेते स्यु-**
**र्वैकर्णी केशराः पत्रकाणि ॥ ११९ ॥**

**अस्यार्थः—अथवा क्षेत्रषडंशादुन्नताः षडंशेनैव विस्तृताः तिस्रो मेखला भवन्ति। अथवैकमेखला क्षेत्रचतुर्थांशेनोच्चा विस्तृता च स्यात्। अथवा पञ्चमेखलाः कार्याः षट्पञ्चचतुस्त्रिद्व्यङ्गुलैः पारिभाषिकैर्विस्तृता। पञ्चमेखलानामुदाहरणं च। तत्रादिमान-भागपिण्डकौच्यं यस्याः सा पारिभाषिकनवाङ्गुलोच्चा स्यात्।**

**अपरा मेखला तस्याः शरांशः पञ्चमांशस्तेन हीना भवन्ति। यथा एकहस्ते कुण्डे प्रथममेखला नवाङ्गुलोच्चा। अस्याः पञ्चमांशः १।६।३।१५ एष एकद्वित्रिचतुर्गुणः प्रथममेखलामाने न्यूनः कृतः सन् तदधस्थानां मेखलानामौच्यं स्यात्। यथेदं द्वितीयमेखलाया औच्यं ७।१।४।६।३ एवमपराणामपि द्रष्टव्यम्। ताः मेखलाः सर्वा क्षेत्रचतुर्विंशतिभागमितात् कण्ठात् बहिरेव भवन्ति। कीदृश्यः कुण्डानुकाराः। योन्यादिकुण्डेषु योन्याद्याकारा एव स्युः। अपि एवार्थे।**

**अथ नाभिः। नाभिर्द्वादशांशेनोच्चः षडंशेन विस्तृतः कुण्डानुकारः। यादृशं चतुरस्राद्याकारवत् कुण्डं तादृशो नाभिः। चतुरस्राद्याकारवान्। अथवा नाभिः अम्भोजसमः कमलाकारः कार्यः। अयं नाभिः अब्जे पद्मकुण्डे न भवति। तत्र नाभि-**

**रूपायाः कर्णिकायाः सत्वात् । अथ पद्माकारकरणं नाभेरुच्यते । दलाग्रे दलाग्रनिमित्तं द्व्यङ्गुलविस्तारायामे नाभौ इनांशहानिः द्वादशांशत्यागः कार्यः । शेषं उर्वरित क्षेत्रं तस्मिन् वृत्तत्रयं समभागेन कार्यम् । तत्र मध्यचिह्नात् प्रथमं वृत्तं कर्णिकाद्वितीयं वृत्तं केशरस्थानं तृतीये पत्राणि कार्याणि । तद्बहिरवशिष्टद्वादशांशेन विस्तृतिः ।**

अब नाभि कहते हैं—अथवा कमल के आकार की नाभि बनानी चाहिए । किन्तु यह नाभि पद्मकुण्ड में नहीं होती है क्योंकि इसमें नाभिरूपा कर्णिका ही होती है । अब नाभि के पद्माकार बनाने की विधि कहते हैं । दलाग्र के लिए दो अंगुल विस्तार नाभि में द्वादशांश छोड़ देना चाहिए । शेष उर्वरित क्षेत्र है जिसमें सम भाग के तीन वृत्त का निर्माण करना चाहिए । उसमें मध्य चिह्न से प्रथम वृत्त केशर स्थान होगा और तृतीय वृत्त में पत्रों को बनाना चाहिए ॥ ११९ ॥

**यदुक्तं तन्त्रान्तरे—**

**चतुर्भिरङ्गुलैः स्वस्याश्चोन्नतिश्च समन्ततः ।**
**तस्याश्चोपरि वप्रः स्याच्चतुरङ्गुलमुन्नतः ॥ १२० ॥**
**अष्टाभिरङ्गुलैः सम्यक् विस्तृतं तु समन्ततः ।**
**तस्योपरि पुनः कार्यो वप्रः सोऽपि तृतीयकः ।**
**चतुरङ्गुलविस्तीर्णश्चोन्नतश्च तथाविधः ॥ १२१ ॥**

जैसा कि तन्त्रान्तर में भी कहा गया है—नाभि चारो ओर चार अंगुल उन्नत होनी चाहिए । उसके ऊपर चार अंगुल ऊँचा एक घेरा बनाना चाहिए । वह घेरा चारो ओर आठ अंगुल विस्तृत होना चाहिए । उसके ऊपर पुनः तीसरा घेरा भी बनाना चाहिए और वह भी उसी प्रकार चार अंगुल लम्बा तथा चार अंगुल ऊँचा होना चाहिए ॥ १२०-१२१ ॥

**अन्यच्च शारदायाम्—**

**योनिकुण्डे योनिमब्जकुण्डे नाभिं विवर्जयेत् ।**
**नाभिक्षेत्रं त्रिधा भित्वा मध्ये कुर्वीत कर्णिकाम् ॥ १२२ ॥**
**बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत् ।**
**कुण्डानां कल्पयेदन्तर्नाभिमम्बुजसन्निभम् ॥ १२३ ॥**
**तत्तत् कुण्डानुरूपं वा मानमस्य निगद्यते ।**
**मुष्ट्यरत्न्येकहस्तानां नाभिरुत्सेधतारतः ।**
**द्वित्रिवेदाङ्गुलोपेतो कुण्डेष्वन्येषु वर्धयेत् ॥१२४॥ इति ।**

शारदातिलक (३.७८-८१) में और भी विवेचन है—योनिकुण्ड में योनि का तथा पद्मकुण्ड में नाभि का निर्माण नहीं करना चाहिए । नाभि क्षेत्र का तीन भाग कर मध्य भाग में कर्णिका का निर्माण करना चाहिए । बाहर के दो भाग में आठ

कमल दल का निर्माण करना चाहिए । कुण्ड के भीतर कमल के आकार की नाभि बनानी चाहिए, अथवा कुण्ड की जैसी आकृति हो वैसी नाभि बनानी चाहिए । मुष्टि, अरत्नि तथा एक हाथ के कुण्ड में नाभि की ऊँचाई क्रमशः दो, तीन और चार अंगुल की होनी चाहिए । अन्य कुण्डों में उसकी ऊँचाई भी बढ़ाते रहना चाहिए ॥ १२२-१२४ ॥

**योनिलक्षणं कुण्डसिद्धौ—**

**योनिर्व्यासार्धदीर्घा विततिगुणलवादायताब्धिद्विभागा**
**तुङ्गा तावत् समन्तात् परिधिरुपरिगा तावदग्रेण रम्यम् ।**
**निम्नं कुण्डं विशन्ती वलयदलयुगेनान्विताऽधो विशाला**
**मूलात् सच्छिद्रनालान्तरवररुचिराश्वत्त्थपत्राकृतिः सा ॥ १२५ ॥**

**अस्यार्थः—योनिव्यासार्धेन दीर्घा विस्तारतृतीयांशेन विस्तीर्णा चतुर्विंशांशेनोच्चा चतुर्विंशांशेन परिधिर्मेखला यस्याः सा तावतैवाग्रेण चतुर्विंशांशेन निम्नं यथा स्यात् तथा कुण्डं प्रविशन्ती वलयदलयुगेन वृत्तार्धद्वयेन युता अधो विशाला अर्थादुपरि स्वल्पसङ्कोचवती मूलात् सकाशान्मध्ये सच्छिद्रं नालं यस्याः सा पद्मनालाकारत्वात् नालोक्तिः । अन्तर्मध्ये अवटो गर्त्तः घृतधारणार्थः यद् वृत्तेन रुचिरा सुन्दरा सा अश्वत्त्थपत्राकृतिर्यस्या इत्यर्थः ।**

कुण्डसिद्धि में योनि का लक्षण इस प्रकार है—अश्वत्थ पत्र की आकृति के समान रुचिर योनि का निर्माण करना चाहिए । नीचे की ओर कुण्ड में प्रवेश करती हुई कमलनाल के आकार की छिद्रयुक्त योनि वृत्तार्ध द्वय से युक्त अधोमुख विस्तृत होनी चाहिए । योनि की लम्बाई व्यासार्ध होनी चाहिए । तृतीयांश विस्तीर्ण होनी चाहिए और चौबीस अंश ऊँची होनी चाहिए । मेखला चौबीस अंश की परिधि वाली होनी चाहिए ॥ १२५ ॥

**शारदायाम्—**

**होतुरग्रे योनिरासामुपर्यश्वत्त्थपत्रवत् ।**
**मुष्ट्यरत्न्येकहस्तानां कुण्डानां योनिरीरिता ॥ १२६ ॥**
**षट्चतुर्द्व्यङ्गुलायामविस्तारोन्नतिशालिनी ।**
**एकाङ्गुलं तु योन्यग्रं कुर्यादीषदधोमुखम् ॥ १२७ ॥**
**एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्धयेत् ।**
**यवद्वयक्रमेणैव योन्यग्रमपि वर्धयेत् ॥ १२८ ॥**

**नाललक्षणम्, तन्मानञ्च**

**स्थलादारभ्य नालं स्यात्योन्या मध्ये सरन्ध्रकम् ।**
**नार्पयेत् कुण्डकोणेषु योनिं तां तन्त्रवित्तमः ॥ १२९ ॥ इति ।**

शारदातिलकतन्त्र (३.७४-७७) में भी योनि का लक्षण कहा गया है—होता के आगे उन मेखलाओं के ऊपर अश्वत्थ पत्र के समान योनि बनानी चाहिये। मुष्टि, अरत्नि और एक हाथ के कुण्डों की योनि कह आया हूँ। ६, ४, २, अङ्गुल विस्तार और उतनी ही ऊँचाई की योनि सर्वत्र बनानी चाहिए और एक अङ्गुल उस योनि का अग्रभाग हो एवं इस मान की अधोमुख योनि बनानी चाहिये। अन्य कुण्डों में एक-एक अङ्गुल के क्रम से योनि चढ़ाते रहना चाहिये। इसी प्रकार दो-दो यव के क्रम से योनि भी बढ़ावे। योनि के मध्य में स्थल (मेखला) से आरम्भ कर नाल निर्माण करे जो सछिद्र भी हो। उत्तम तन्त्रवेत्ता कुण्ड के कोणों पर योनि निर्माण कदापि न करें ॥ १२६-१२९ ॥

**त्रैलोक्यसारे—**

**दैर्घ्यात् सूर्यांगुला योनिस्त्र्यंशोना विस्तरेण तु।**
**एकाङ्गुलोच्छ्रिता सा तु प्रविष्टाभ्यन्तरे स्थिता ॥ १३० ॥**
**कुम्भद्वयार्द्धसंयुक्ता वाश्वत्थदलवन्मता।**
**अङ्गुष्ठमेखलायुक्ता मध्ये त्वाज्यधृतिः स्थिता ॥ १३१ ॥**

त्रैलोक्यसार में भी बतलाया गया है—योनि लम्बाई में बारह अङ्गुल तथा उसका तीसरा अंश चौड़ाई में कम होना चाहिये। उसकी ऊँचाई एक अङ्गुल होनी चाहिये। उसे भीतर प्रविष्ट कर स्थित करना चाहिये। वह दो कुम्भों के आधे-आधे भाग से संयुक्त होना चाहिये, अथवा अश्वत्थ दल के समान बनाना चाहिये। उसमें अङ्गुष्ठ के समान मेखला भी बनानी चाहिए, जिस पर घृत रखा जा सके ॥ १३०-१३१ ॥

**अत्र ग्रन्थगौरवभयाद् दशहस्तकुण्डान्तं प्रत्येकं योनिं तदग्रादीनां मानञ्च नोक्तम्। तथापि किञ्चिल्लिख्यते—**

**आयामश्चार्धविस्तृत्या सत्र्यंशोनोऽथ विस्तृतिः।**
**विस्तारतुर्योन्नतिः स्यादुन्नत्यर्धं तदग्रकम् ॥ १३२ ॥**
**एकैकाङ्गुलतो योनिं कुण्डेष्वन्येषु वर्धयेत्।**
**यवद्वयक्रमेणैव योन्यग्रमपि वर्धयेत् ॥१३३॥ इति।**

यहाँ ग्रन्थ के गौरव के भय से दश हस्त कुण्ड पर्यन्त प्रत्येक की योनि इसलिये नहीं कहा गया है कि ग्रन्थ बहुत विस्तृत हो जायेगा। फिर भी कुछ लिख रहा हूँ—योनि की लम्बाई आधा, उसका तृतीय अंश कम चौड़ाई होनी चाहिये। जितना विस्तार हो, उसका चतुर्थांश ऊँचाई हो और उसका अग्रभाग ऊँचाई का आधा होना चाहिये। अन्य कुण्डों में एक-एक अङ्गुल के क्रम से योनि बढ़ाते रहना चाहिये। इसी प्रकार दो-दो यव के क्रम से योनि का अग्रभाग भी बढ़ाते रहना चाहिये ॥ १३१-१३२ ॥

**इयं च योनिः कुण्डाकारैव होतुरग्रे । परं च वेदी यथा पृष्ठभागे न पतति, होतुश्च प्राङ्मुखता उदङ्मुखता वा भवति तथा केषाञ्चित् पश्चिममेखलोपरि केषाञ्चित् दक्षिणमेखलोपरि स्थापनीया ।**

**तदुक्तं सोमशम्भौ, त्रैलोक्यसारे च—**

**पूर्वाग्नियाम्यकुण्डानां योनिः स्यादुत्तरानना ।**
**पूर्वानना तु शेषाणामैशान्येऽन्यतरा तयोः ।**
**होमकृत्पुरतः स्थाप्या दक्षिणे पश्चिमेऽपि वा ॥ १३४ ॥**

यह योनि भी होता के आगे कुण्डाकार ही बनावे । किन्तु वेदी उसके पृष्ठभाग में न पड़े । होता या तो पूर्वाभिमुख बैठता हो, अथवा उत्तराभिमुख बैठता हो, अत: कहीं वह योनि पश्चिम मेखला पर बनावे, अथवा दक्षिण मेखला पर स्थापित करे ।

सोमशम्भु तथा त्रैलोक्यसार में भी यही बात कही गई है—पूर्व आग्नेय और दक्षिण के कुण्डों में योनि उत्तराभिमुख होनी चाहिये । शेष कुण्डों में पूर्वाभिमुख योनि बनावे, अथवा दोनों की योनि ईशान में ही निर्माण करे । अथवा होता के आगे, अथवा पश्चिम, अथवा दक्षिण दिशा में स्थापित करे ॥ १३४ ॥

**क्रियासारे—**

**स्थिरार्चने चरार्चायां नित्ये हवनकर्मणि ।**
**कुण्डमेककरं वृत्तं मेखला कण्ठनाभिमत् ।**
**चतुरस्त्रं च दीक्षायां शान्तौ पुष्टौ शुभं समम् ॥ १३५ ॥**

क्रियासार में भी बतलाया गया है—स्थिर कुण्ड में की जाने वाली अर्चा में अथवा चर में की जाने वाली अर्चा में, अथवा नित्य किये जाने वाले होमकर्म में कुण्ड एक हाथ का वृत्ताकार बनावे, जिसमें मेखला, कण्ठ और नाभि हो । किन्तु दीक्षा में, शान्ति और पुष्टि में चतुरस्त्र कुण्ड ही कल्याणकारक होता है ॥ १३५॥

**सिद्धान्तशेखरेऽपि—**

**हस्तमात्राणि सर्वाणि दीक्षासु स्थापनादिषु ।**
**नित्यं होमे च साहस्त्रे कुर्यात् कुण्डानि सर्वदा ॥ १३६ ॥**
**त्यक्त्वा सर्पस्य गात्रं च शिरोदेशं प्रयत्नतः ।**
**कुण्डानां खननं विद्वान् विदधीत यथातथम् ॥ १३७ ॥**
**शिरोघाते भवेन्मृत्युर्गात्रे च पितृघातनम्।**
**पृष्ठे च दुःखसम्भूतिः क्रोडे सर्वार्थसाधनम् ॥ १३८ ॥**

सिद्धान्तशेखर में भी बतलाया गया है—दीक्षा में, प्रतिष्ठा में, नित्य होम में और सहस्त्रसंख्यक होम में एक-एक हाथ का सभी कुण्ड निर्माण करे । विद्वान्

पुरुष कुण्ड खनते समय सर्प का गात्र तथा शिरोदेश प्रयत्नपूर्वक त्याग देवे और जैसा कुण्ड होना चाहिये, वैसा कुण्ड का खनन करे। सर्प के शिर पर खनने से मृत्यु और गात्र पर खनन से पिता का घात, पीठ पर खनने से दुःख और क्रोड पर खनने से सर्वार्थसाधन होता है ॥ १३६-१३८ ॥

**वास्तोरङ्गनिर्णयो यथा—**

**वास्तुप्रमाणेन तु गात्रकेन**
**वामेन शेते खलु नित्यकालम्।**
**त्रिभिस्तुमासैः परिवर्त्त्य भूमौ**
**तं वास्तुनागं प्रवदन्ति सन्तः ॥ १३९ ॥**
**भाद्रादिके वासवदिक्शिरः स्यान्**
**मार्गादिकेषु त्रिषु याम्यमूर्धा।**
**प्रत्यक् शिरा स्यात् खलु फाल्गुनादौ**
**ज्येष्ठादिकौवेरशिराः स नागः ॥ १४० ॥**

वास्तु में सर्प के अङ्ग का निर्णय इस प्रकार है—जितना वास्तु का प्रमाण है उतने प्रमाण का शरीर धारण कर, बायीं ओर, नित्य काल भूमि में शयन करता है और वह तीन-तीन मांस में करवट बदलता है ऐसा सन्त लोग कहते हैं। भाद्रादि तीन मास तक उसका शिर आग्नेयकोण में होता है। मार्गशीर्ष से तीन मास पर्यन्त उसका शिर दक्षिण की ओर होता है। फाल्गुन से तीन मास तक उसका शिर पश्चिम की ओर तथा ज्येष्ठ से तीन मास पर्यन्त उसका शिर उत्तर दिशा में होता है ॥ १३९-१४० ॥

**अथ कुण्डावयवकथनम्—**

**कुण्डरूपं तु जानीयात् परमं प्रकृतेर्वपुः।**
**प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः।**
**उदरं कुण्डमित्युक्तं योनिः पादौ च पश्चिमे ॥ १४१ ॥**

अब कुण्ड का शरीरावयव कहते हैं—कुण्ड के उस रूप को परम प्रकृति का शरीर समझना चाहिये। उसका शिर पूर्व में, बाहू दक्षिण और उत्तर में कुण्ड उसका उदर है, योनि और पैर पश्चिम में समझना चाहिये ॥ १४१ ॥

**क्रियासारेऽपि—**

**पूर्वोक्तलक्षणैर्युक्तं कुण्डं तालप्रमाणकम्।**
**उक्तं चरार्चने चैव न स्थिरे तु चतुर्मुख ॥ १४२ ॥**

क्रियासारतन्त्र में भी बतलाया गया है—पूर्वोक्त लक्षणों से युक्त कुण्ड ताल प्रमाण में बनाना चाहिये। यह प्रमाण चर कुण्ड में कहा गया है स्थिर (अचर में)

कुण्ड का प्रमाण चतुर्मुख वाला होता है ॥ १४२ ॥

**कुण्डमत्रोक्तमार्गेण निर्मायाथ सुलक्षणम् ।**
**क्षत्रियोऽपि समृद्धो वा शूद्रस्ताम्रेण बन्धयेत् ॥ १४३ ॥**
**तदलाभे त्विष्टिकाभिः सम्बध्य सुदृढं यथा ।**
**पूर्वोदितप्रकारेण लेपयेत् सुधया तथा ॥ १४४ ॥**
**ताम्रेण लक्षणोपेतं कुर्यान् मृत्तिकयापि वा ।**
**एतत्कुण्डं चरार्चायां गृह्णीयान्न स्थिरार्चने ॥ १४५ ॥**
**अम्लेन ताम्रकं कुण्डं मृण्मयं गोमयाम्भसा ।**
**सौधं च सुधया सम्यक् शोधयेदमरर्षभ ॥ १४६ ॥**
**मृण्मयानां तु कुण्डानां परितः सन्धिभिः सह।**
**रक्तमृच्छालिपिष्टाभ्यां भूषयेद् दृक्प्रियं यथा ॥१४७॥ इति ।**

इस प्रकार कहे गये नियम के अनुसार सुलक्षण कुण्ड का निर्माण कर समृद्ध क्षत्रिय अथवा समृद्ध शूद्र उसमें ताँबा बाँध देवे । यदि ताँबा प्राप्त न हो तब ईंटा ही बाँधकर उसे सुदृढ़ निर्माण करे । फिर पूर्व में कही गई रीति के अनुसार उसमें चूना का लेप करे, अथवा ताँबे से उसे सुलक्षण बनावे, अथवा मृत्तिका के लेप से उसे सुन्दर बनावे । ऐसा कुण्ड चरार्चा में ग्रहण करे, स्थिरार्चा में नहीं । ताँबे के कुण्ड को अम्ल से, मिट्टी के कुण्ड को गोमय से, सौधकुण्ड को सुधा से लेप कर हे अमरर्षभ! उसे मनोहर बनावे । मिट्टी के बने हुये कुण्ड को सन्धिस्थल के सहित लाल मिट्टी अथवा लाल चावल के पिष्ट से लीप कर उसे भूषित कर नेत्रों को सुन्दर लगने वाला बनावे ॥ १४३-१४७ ॥

**अत्रोक्तकुण्डानां न्यूनाधिक्येऽन्यथाभावे वा दोषमाह विश्वकर्मा—**

**खाताधिके भवेद् रोगी हीने धेनुधनक्षयः ।**
**वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले ॥ १४८ ॥**
**मेखलारहिते शोकोऽभ्यधिके वित्तसङ्क्षयः ।**
**भार्याविनाशनं कुण्डं प्रोक्तं योन्या विनाकृतम् ।**
**अपत्यध्वंसनं प्रोक्तं कुण्डं यत्कण्ठवर्जितम् ॥१४९॥ इति ।**

यहाँ जितने कुण्ड कहे गये हैं उनके न्यून या अधिक प्रमाण का निर्माण करने पर विश्वकर्मा दोष बता रहे हैं—खात के प्रमाण से अधिक होने पर कर्त्ता रोगी होता है । कम होने पर धेनु एवं धन का क्षय होता है । कुण्ड के टेढ़ा-मेढ़ा होने पर सन्ताप होता है । कुण्ड की मेखला के टूटने-फूटने से मरण होता है । मेखलारहित होने से शोक और अधिक मेखला से वित्त का सङ्क्षय और योनि निर्माण न करने से भार्या का क्षय होता है । जिस कुण्ड में कण्ठ नहीं बनाया

गया है वह अपत्य का विध्वंस करने वाला होता है ॥ १४८-१४९ ॥

**क्रियासारेऽपि—**

**न्यूनाधिकप्रमाणं यत् कुण्डं जर्जरमेखलम् ।**
**शृङ्गाररहितं यच्च यजमानविनाशकृत् ॥१५०॥ इति ।**

क्रियासार में भी बतलाया गया है—जिस कुण्ड का प्रमाण अधिक, अथवा कम है, अथवा जिसकी मेखला जर्जर है, अथवा जो शृङ्गाररहित है, ऐसा कुण्ड यजमान का विनाश करता है ॥ १५० ॥

**आगमान्तरेऽपि—**

**मानाधिके भवेन्मृत्युर्मानहीने दरिद्रता । इति ।**

**वसिष्ठसंहितायामपि—**

**अनेकदोषदं कुण्डमत्र न्यूनाधिकं यदि ।**
**तस्मात् सम्यक् परीक्ष्येदं कर्त्तव्यं शुभमिच्छता ॥१५१॥ इति ।**

अन्य आगमों में भी बतलाया गया है—कुण्ड मान से अधिक होने पर मृत्युकारक होता है और मान में न्यून होने पर दरिद्रता प्रदान करता है ।

वशिष्ठसंहिता में भी बतलाया गया है—यदि कुण्ड में न्यूनाधिक्य हुआ तो वह अनेक दोषप्रद होता है । इसलिये अपना कल्याण चाहने वाला पुरुष अच्छी प्रकार शास्त्र के अनुसार कुण्ड निर्माण करे ॥ १५१ ॥

**सिद्धान्तशेखरेऽपि—**

**मानहीने महाव्याधिरधिके शत्रुवर्धनम् ।**
**योनिहीने त्वपस्मारो वाग्दण्डः कण्ठवर्जिते ॥ १५२ ॥**

सिद्धान्तशेखर में भी बतलाया गया है—कुण्ड प्रमाण से कम होने पर महाव्याधि उत्पन्न करता है और प्रमाण से अधिक होने पर शत्रुवर्धन करता है । योनि हीन होने पर अपस्मार रोग उत्पन्न करता है और कण्ठहीन होने पर वाग्दण्ड प्रदान करता है ॥ १५२ ॥

**जयद्रथयामलेऽपि—**

**सूत्राधिके सुहृद्द्वेषो मानहीने दरिद्रता ।**
**वाग्रोधः कण्ठहीने स्यादसिद्धि न्यूनखातके ॥ १५३ ॥**

जयद्रथयामल में भी बतलाया गया है—सूत्र की अधिकता से मित्रद्वेष और मान हीन होने में दारिद्र्य एवं कण्ठहीन होने से मूकता तथा खात के न्यून होने से असिद्धि होती है ॥ १५३ ॥

**अधिके वासुरो भोगो मानेनाधिकमेखले ।**
**व्याधयः सम्प्रवर्धन्ते वीतोष्ठे स्यादपस्मृतिः ।**
**उच्चाटः स्फुटिते छिद्रसंकुले वाच्यता भवेत् ॥१५४॥ इति ।**

अधिक से आसुर शरीर होता है और मेखला के मान से अधिक होने से व्याधियों की अभिवृद्धि होती है । कण्ठ न होने से अपस्मृति होती है तथा मेखला के फूटने-टूटने से उच्चाटन होता है । छिद्र होने से निन्दा होती है ॥ १५४ ॥

**पूर्वोक्तः तत्तद्दिशिकुण्डकरणे एव ज्ञेयः । तदुक्तं सिद्धान्तशेखरे—**

**योन्याख्यमुच्यते कुण्डमाग्नेय्यामुत्तरामुखम् ।**
**प्रजावृद्धौ च तापे स्यादर्धचन्द्रमथोच्यते ॥ १५५ ॥**
**याम्ये तन्मारणे शस्तमुत्तराभिमुखं सदा ।**
**नैर्ऋत्ये त्र्यस्त्रिकुण्डं स्याद् विद्वेषे पूर्ववक्त्रकम् ॥ १५६ ॥**
**वृत्तं कुण्डमथो वक्ष्ये वारुण्यां शान्तिके हितम् ।**
**षडस्त्रमुच्यते कुण्डं वायावुच्चाटने पटुः ॥ १५७ ॥**
**पद्मकुण्डमथो वक्ष्ये सौम्ये तत्पुष्टिवर्धनम् ।**
**वक्ष्ये कुण्डमथाष्टास्त्रमीशान्ये सर्वकामदम् ॥१५८॥ इति ।**

यह पूर्वोक्त दोष उन-उन दिशाओं में कुण्ड बनाने में होता है । जैसा कि सिद्धान्तशेखर में कहा है—योनिकुण्ड आग्नेयकोण में प्रजा की वृद्धि करता है और उत्तराभिमुख बनावे तो ताप बढ़ता है । अब अर्द्धचन्द्र कुण्ड कहता हूँ । याम्य (दक्षिण) में मारण तथा उत्तराभिमुख प्रशस्त कहा गया है । नैर्ऋत्य में त्रिकोण कुण्ड विद्वेष उत्पन्न करता है । अतः उसे पूर्वाभिमुख बनावे । अब वृत्त कुण्ड कहता हूँ । वृत्त कुण्ड पश्चिम दिशा में शान्तिकारक और हितकारक है । अब षडस्त्र कुण्ड कहता हूँ । वह वायव्य में उच्चाटन करने में पटु है । अब पद्मकुण्ड कहता हूँ । वह उत्तर में पुष्टिवर्धन करता है । अब अष्टास्त्र कुण्ड कहता हूँ । वह ईशान में बनाने पर सारी कामनायें प्रदान करता है ॥ १५५-१५८ ॥

**क्रियासारे तु—**

**दिग्देशकुण्डनिर्मुक्तो योऽनलो लौकिको हि सः ।**
**तस्माद् दिग्देशकुण्डानि संग्राह्यान्युक्तलक्षणैः ।**
**कुण्डमेवंविधं न स्यात् स्थण्डिलं च समाश्रयेत् ॥ १५९ ॥**

क्रियासार में भी बतलाया गया है—जो अग्नि दिग्, देश, काल में निर्मित कुण्ड का नहीं है वह अग्नि लौकिक है, याज्ञिक नहीं । इसलिये ऊपर कहे गये लक्षणों के अनुसार दिग्देश में ही कुण्ड का निर्माण करे । यदि ऐसे कुण्ड का अभाव हो, तब स्थण्डिल का ही सहारा लेना चाहिये ॥ १५९ ॥

वसिष्ठसंहितायामपि—

**इषुमात्रं स्थण्डिलं वा सङ्क्षिप्ते होमकर्मणि ।**

वशिष्ठसंहिता में भी बतलाया गया है—सङ्क्षिप्त होम कर्म में इषु (= बाण) मात्र प्रमाण का स्थण्डिल निर्माण करना चाहिये ॥ १६० ॥

क्रियासारे तु स्थण्डिले देशविशेषोऽप्युक्तः—

**होमेऽष्टदिक्षु प्राक्प्रंहः प्रागुदक्प्रवणोऽथवा ।**
**उदक्प्रंहः प्रदेशो वा स्थण्डिलस्य स्थलं स्मृतम् ॥ १६० ॥**

क्रियासार में स्थण्डिल के विषय में देश विशेष कहा गया है—होमकर्म में आहो दिशाओं में प्राक प्रंह (?) पूर्व और उत्तर प्रवण (?) अथवा उदक् प्रंह (?) प्रदेश स्थण्डिल का स्थल कहा गया है ॥ १६० ॥

पिङ्गलामते तु विशेषः—

**होमे प्रशस्यते कुण्डं स्थण्डिलं वा हसन्तिका । इति ।**

पिङ्गला मत में विशेष कथन इस प्रकार है—होम के लिये कुण्ड स्थण्डिल, अथवा हसन्तिका (गोरसी) प्रशस्त कहा गया है ॥ १६१ ॥

वायवीयसंहितायामपि—

**अथाग्निकार्यं वक्ष्यामि कुण्डे वा स्थण्डिलेऽपि वा ।**
**वेद्यां वाप्यायसे पात्रे मृण्मये वा नवे शुभे ।**
**स्थण्डिलं बालुकाभिर्वा रक्तमृद्रजसापि वा ॥ १६१ ॥**

वायवीय संहिता में भी बतलाया गया है—अब अग्निकार्य कहता हूँ । कुण्ड में, स्थण्डिल में, वेदी में, लौहपात्र में और मिट्टी के नवीन पात्र में अग्निकार्य प्रशस्त है । स्थण्डिल बालु का बनावे, अथवा लाल मिट्टी का लाल वर्ण के चूर्ण से निर्माण करे ॥ १६१ ॥

शारदायामपि—

**नित्यं नैमित्तिकं होमं स्थण्डिले वा समाचरेत् ।**
**हस्तमात्रेण तत् कुर्याद् बालुकाभिः सुशोभनम् ।**
**अङ्गुलोत्सेधसंयुक्तं चतुरस्त्रं समन्ततः ॥१६२॥ इति ।**

शारदातिलकतन्त्र में भी बतलाया गया है—अथवा नित्य एवं नैमित्तिक होम स्थण्डिल पर ही करना चाहिए तथा वह स्थण्डिल एक हाथ प्रमाण का ही बनाना चाहिए और बालू से उसे सुशोभित करना चाहिए । उसे चौकोर एक अङ्गुल ऊँचाई का बनाना चाहिए ॥ १६२ ॥

कुण्डसिद्धावपि—

**अथवापि मृदा सुवर्णभासा**
**करमानं चतुरङ्गुलोच्चमल्पे ।**
**हवने विदधीत चाङ्गुलोच्चं विबुध-**
**स्थण्डिलमेव वेदकोणम् ॥ १६३ ॥ इति ।**

कुण्ड सिद्धि में भी निर्माण का प्रकार बतलाया गया है—अल्प हवन में एक अङ्गुल ऊँचा, एक हाथ लम्बा, एक हाथ चौड़ा, सुवर्ण के समान चमकती हुई मिट्टी से बुद्धिमान् चार कोणों वाला स्थण्डिल ही निर्माण करे ॥ १६३ ॥

तन्त्रान्तरे—

**मृदा स्वर्णाभया वापि सूक्ष्मबालुकयापि वा ।**
**अङ्गुलोच्चं तथा वेदाङ्गुलोच्चं स्थण्डिलं विदुः ॥ १६४ ॥**

अन्य तन्त्रों में भी कहा गया है—मिट्टी से, स्वर्ण के समान चमकदार पदार्थ से, अथवा महीन बालू से एक अङ्गुल ऊँचा, अथवा चार अङ्गुल ऊँचा, चौकोर स्थान को स्थण्डिल कहा जाता है ॥ १६४ ॥

**चतुःकोणमुद्रक्प्राचीप्लवमल्पाहुतौ शुभम् ।**
**पञ्चाङ्गुलोच्चमथवा वस्वङ्गुलसमुन्नतम् ॥१६५॥ इति ।**
**यथोक्तानि विज्ञायाथ कुण्डानि मण्डलान्यथ ।**
**रचयेदुक्तमार्गेण यागपूर्त्तिकराणि च ॥ १६६ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे कुण्डस्थण्डिलादिरचनाविधिर्नाम**
**एकविंशः पटलः ॥ २१ ॥**

...◆...

अल्पाहुति में ऐसा सम चतुष्कोण कुण्ड बनावे जो उत्तर और पूर्व में ढालू हो, अथवा वह पाँच अङ्गुल ऊँचा हो, अथवा आठ अङ्गुल ऊँचा हो । ऊपर कहे गये कुण्ड मण्डल के सभी लक्षणों को अच्छी तरह जानकर यज्ञ की पूर्त्ति करने वाले कुण्डों और मण्डलों का निर्माण करे ॥ १६५-१६६ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में कुण्डस्थण्डिलादि-रचनाविधि नामक एकविंश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ २१ ॥**



# द्वाविंशः पटलः

## मण्डलरचनाकथनम्

मण्डलानि च शारदायाम्—

**अथ वेद्यां प्रकुर्वीत मण्डलानि यथाक्रमात् ।**

इसके बाद पहले वेदी का और फिर सर्वतोभद्र आदि मण्डलों का यथाक्रम निर्माण करे ॥ १ ॥

आदौ सर्वतोभद्रम्—

**चतुरस्रे चतुष्कोष्ठे कर्णसूत्रसमन्विते ।**
**चतुर्ष्वपि च कोष्ठेषु कर्णसूत्रचतुष्टयम् ॥ १ ॥**

वास्तुमण्डलोक्तरीत्या कर्णसूत्रद्वयसहितं चतुष्कोष्ठयुक्तं चतुरस्रं कुर्यादित्यर्थः ।

**मध्ये मध्ये यथा मत्स्या भवेयुः पातयेत् तथा ।**
**पूर्वापरायते द्वे द्वे मन्त्री याम्योत्तरायते ।**
**पातयेत् तेषु मत्स्येषु समं सूत्रचतुष्टयम् ॥ २ ॥ इति ।**

षोडशकोष्ठोत्पादनप्रकारमाह—चतुर्षु कोष्ठेषु कोणसूत्रचतुष्कं तथा दद्याद् यथा मध्ये मध्ये मत्स्याभवेयुः । मन्त्री तेषु मत्स्येषु द्वे प्रागपरायते द्वे याम्योत्तरायते । इदं समं सूत्रचतुष्टयं पातयेदिति सम्बन्धः । एवं षोडशकोष्ठी सम्पन्ना भवतीत्यर्थः ।

**पूर्ववत् कोणकोष्ठेषु कर्णसूत्राणि पातयेत् ।**
**तदुद्भतेषु मत्स्येषु दद्यात् सूत्रचतुष्टयम् ।**
**ततः कोष्ठेषु मत्स्याः स्युस्तेषु सूत्राणि पातयेत् ॥ ३ ॥**
**यावत् शतद्वयं मन्त्री षट्पञ्चाशत् पदान्यपि ।**
**तावत् तेनैव विधिना तत्र सूत्राणि पातयेत् ॥ ४ ॥ इति ।**

चतुःषष्टिकोष्ठोत्पादनप्रकारमाह—पूर्ववदित्यादिना । कोणगतचतुःकोष्ठेषु पूर्ववत् कर्णसूत्रचतुष्कं दत्त्वा तदुत्पन्नमत्स्यचतुष्केषु पूर्ववत् प्रागग्रे उदगग्रे च द्वे सूत्रे दद्यात् । एतत् सूत्रचतुष्कपातोत्पन्नान्तरालकोष्ठमत्स्यचतुष्के पुनर्द्वे प्रागग्रे द्वे उदगग्रे सूत्रे

**दद्यात् । एवं चतुःषष्टिकोष्ठानि सम्पद्यन्ते । तेनैव विधिनेत्यस्यायमर्थः । कोणकोष्ठचतुष्के पूर्ववत् कर्णसूत्रचतुष्टयं दत्त्वा तदुत्पन्नमत्स्यचतुष्के द्वे प्रागग्रे द्वे उदगग्रे सूत्रे दद्यात् । तत एतत् सूत्रचतुष्कोत्पन्नान्तरालकोष्ठमत्स्येषु षट् प्रागग्राणि षडुदगग्राणि दद्यात् । एवं षट् पञ्चाशदुत्तरशतद्वयकोष्ठानि सम्पद्यन्त इत्यर्थः ।**

अब पहले सर्वतोभद्रमण्डल का प्रकार शारदातिलक (३.१०३-१०७) के अनुसार कहते हैं—दो-दो कर्णसूत्र से युक्त चार कोष्ठक का एक चौकोर बनावे । फिर उन चारों काष्ठों में प्रत्येक में चार-चार कोष्ठक, जिस प्रकार हो उस प्रकार दो पूर्व से पश्चिम तथा दो उत्तर से दक्षिण क्रम से मध्य-मध्य में चिन्ह लगा देवे । पुनः उन्हीं चिन्हों पर भी प्रत्येक कोण कोष्ठक में चार सूत्र लगा कर चार चिन्ह बना देवे । पुनः उसी प्रकार निष्पन्न प्रत्येक कोण कोष्ठक में चार-चार चिन्ह करे । इस प्रकार तब तक सूत्र से उसी विधि से चिन्ह लगावे, जब तक कुल दो-सौ छप्पन कोष्ठक नहीं बन जाते है ॥ १-४ ॥

**षट्त्रिंशता पदैर्मध्ये लिखेत् पद्मं सुलक्षणम् ।**
**बहिः पंक्त्या भवेत् पीठं पंक्तियुग्मेन वीथिका ।**
**द्वारशोभोपशोभास्त्रान् शिष्टाभ्यां परिकल्पयेत् ॥ ५ ॥ इति ।**

**कोष्ठानां विनियोगमाह—षट्त्रिंशतेति । पद्मलेखनप्रकारमनन्तरमेव वक्ष्यति । बहिरिति त्रिषु स्थानेष्वन्वेति । बहिः पङ्क्त्या परितः अष्टाविंशतिकोष्ठात्मिकया वक्ष्यमाणरीत्या पीठं कुर्यादित्यर्थः ।**

अब कोष्ठों की उपयोगिता कहते हैं—मध्य में रहने वाले ३६ कोष्ठकों में सुलक्षण कमल वक्ष्यमाण विधि से निर्माण करे । उसके बाहर पङ्क्ति से चारो ओर २८ कोष्ठकों में वक्ष्यमाण विधि के अनुसार पीठ निर्माण करे । उसके बाहर चारो ओर दो पङ्क्ति में अर्थात् ८० कोष्ठकों में वक्ष्यमाण विधि के अनुसार वीथि निर्माण करे । उसके बाहर शेष दो पङ्क्तियों में अर्थात् ११२ कोष्ठकों में द्वार शोभा, उपशोभा, अस्त्र तथा कोणों का निर्माण वक्ष्यमाण रीति से करे ॥ ५ ॥

**शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत् ।**
**पद्मक्षेत्रस्य संत्यज्य द्वादशांशं बहिः सुधीः ।**
**तन्मध्यं विभजेद् वृत्तैस्त्रिभिः समविभागतः ॥ ६ ॥**
**आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम् ।**
**तृतीयं तत्र पत्राणां मुक्तांशेन दलाग्रकम् ॥ ७ ॥ इति ।**

**पद्मकरणप्रकारमाह—शास्त्रेति । तत्र षट्त्रिंशत्पदात्मकं पद्मक्षेत्रं तद्दिक्सूत्रद्वयेन कर्णसूत्रद्वयेन चाष्टधा भेदितं वर्तते, तान्येव सूत्राणि यत्र मध्यसूत्राणि तत्र प्रकारः । पद्मक्षेत्रायामं द्वादशधा विभज्य एकांशं सर्वतो बहिस्त्यजेत् । ततो दश भागान् षोढा विभज्य मध्ये सूत्रादि संस्थाप्य अंशद्वयेनैकं वृत्तं तदुपर्यंशद्वयेनापर**

**तदुपर्यंशद्वयेनान्यदिति वृत्तत्रयं कुर्यात् । आद्यमित्याद्युक्तिस्तु वक्ष्यमाणाङ्गावरणादीनां स्थानसूचनायेत्यवधेयम् । मुक्तांशेनेति द्वादशांशेन तत्र वृत्तमग्रे वक्ष्यतीत्यर्थः ।**

अब शास्त्रोक्तविधि से पद्मनिर्माण प्रकार कहते हैं । बुद्धिमान् आचार्य पद्मक्षेत्र की लम्बाई को बारह भागों में प्रविभक्त कर एक अंश (बारहवाँ भाग) चारो ओर बाहर छोड़ देवे । शेष क्षेत्र को समविभाग के अनुसार तीन वृत्तों में प्रविभक्त करे (अर्थात् बारहवाँ भाग छोड़ने के बाद शेष दश भाग को छह भागों में प्रविभक्त कर, मध्य में सूत्रादि स्थापित कर, दो अंश में एक वृत्त, उसके ऊपर दो अंश में दूसरा वृत्त, उसके ऊपर दो अंश में तीसरा वृत्त, इस प्रकार कुल तीन वृत्त निर्माण करे)। उसमें आद्य वृत्त कर्णिका का स्थान है और द्वितीय वृत्त केशर का स्थान है तथा तृतीय वृत्त पद्मपत्र का स्थान है । शेष द्वादशांश में दलाग्र निर्माण करे यह बात आगे कहेंगे ॥ ६-७ ॥

**बाह्यवृत्तान्तरालस्य मानं यद्विधिना सुधीः ।**
**निधाय केसराग्रेषु परितोऽर्धनिशाकरान् ॥ ८ ॥**
**लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत् ।**

**बाह्येति । बाह्यं यत्पत्रवृत्तं तस्य यदन्तरालं तस्य मानेन सुधीः केसराग्रेषु केसरवृत्ताग्रे निधाय सूत्रादिमिति शेषः । विधिना परित उभयतः पद्ममध्यसूत्राणामिति शेषः । अर्धनिशाकरान् लिखित्वा सन्धिसंस्थानि अर्द्धनिशाकरसन्धिसंस्थानि चत्वारि सूत्राणि तत्र पातयेदिति सम्बन्धः । मानं यद्विधिनेति पाठे बाह्यवृत्तान्तरालस्य यन्मानं तेन विधिना तेन मानेनेत्यर्थः । तथायं विधिः—यत्र वृत्तान्तरालमितसूत्रं केसरवृत्त-दिक्सूत्रसम्पाते संस्थाप्य तद्दिक्सूत्रोभयतः यत्र वृत्तस्पर्धी केसरवृत्तलग्नान्तद्वयं अर्धचन्द्रं लिखेत्। एवं चतुर्षु दिक्सूत्रेषु चतुर्षु कोणसूत्रेषु च कृतेऽष्टावर्धचन्द्रा जायन्ते । एतच्च केसराग्रेष्विति बहुवचनादेव लभ्यते । यतोऽष्टपत्रमध्येऽष्टौ केसरस्थानानि ततोऽष्टदल सिद्धिरिति । ततोऽर्धचन्द्रयोः परस्परसम्पातरूपाष्टसन्धिषु सम्मुखीन-योरेकैकं सूत्रं दद्यात् । एवमष्टपत्राणामप्यष्टौ सीमारेखा उत्पद्यन्ते । सन्ध्यधोवर्त्तिसीमा-रेखोभयतः स्थितोऽर्धनिशाकरांशो मार्जनीय इति ।**

बुद्धिमान् आचार्य बाहरी पत्र वृत्त के मध्य में जितना अन्तराल हो उतने प्रमाण में केशर वृत्त के आगे सूत्र रखकर विधिपूर्वक दोनों ओर से अर्ध चन्द्राकार आकृति बनावे । इस प्रकार चतुर्दिकसूत्रों में चार, और चार कोणों में चार, कुल मिलाकर आठ अर्ध चन्द्राकार आकृति का निर्माण हो जायेगा । इसी प्रकार दो अर्धचन्द्रों के परस्पर सम्पात रूप अष्ट सन्धि पर सामने सामने एक सूत्र डाले ऐसा करने से वह अष्ट पत्र मनोहर बनकर आठ सीमा रेखा के रूप में उत्पन्न हो जायेगा ॥ ८-९ ॥

**दलाग्राणां च यन्मानं तन्मानाद् वृत्तमालिखेत् ॥ ९ ॥**
**तदन्तरालतन्मध्यसूत्रस्योभयतः सुधीः ।**

**आलिखेद् बाह्यहस्तेन दलाग्राणि समन्ततः ॥ १० ॥ इति ।**

**चतुर्थवृत्तमाह—दलाग्राणां यन्मानं बहिस्त्यक्त्वा द्वादशांशरूपं तन्मानं चतुर्थं वृत्तं कुर्यात् । दलाग्रकरणप्रकारं तु—तदिति । तदन्तराले कृतदलाग्रवृत्तान्तराले । तन्मध्यसूत्रस्य पत्रमध्यसूत्रस्योभयतः बाह्यहस्तेन समन्ततो दिक्षु विदिक्ष्वपि दलाग्राणि सुधीरालिखेदिति सम्बन्धः । तत्र प्रकारः—चतुर्थवृत्तान्तराले पत्रमध्यसूत्रोभयतः सन्धिसूत्रस्याग्रे सूत्रादि निधाय मध्यवृत्ततः दलाग्रवृत्तपत्रमध्यसूत्रसम्पातपर्यन्तं सूत्रद्वयं दद्यात् । तत्र सूत्रप्रान्त एकः, पत्रस्पर्शी द्वितीयः । दलाग्रमध्यसूत्रसम्पातस्पर्शी सूत्रद्वयाग्रभागश्च परस्पराभिमुखो यथा स्यादित्येतदर्थो बाह्यहस्तेनेत्युक्तः ।**

**तत्र कर्णिकावृत्तं त्यक्त्वा बाह्यस्थत्रीणि वृत्तानि पद्मपत्रमध्यरेखाश्च सम्यक् मार्जयेत् । यथाष्टदलपद्मं दृष्टिमनोहरं दृश्यत इत्यर्थः ।**

अब चतुर्थवृत्त कहते हैं । दलाग्रों का जितना मान है उतना बाहर छोड़कर चतुर्थवृत्त का निर्माण दलाग्र के मान के द्वादशांश मान से चतुर्थवृत्त निर्माण करे । उस चतुर्थवृत्त के अन्तराल में पत्र मध्य सूत्र के दोनों ओर बुद्धिमान् आचार्य बाह्य हस्त से चारो ओर दलाग्र इस प्रकार बनावे, जिस प्रकार मनोहर अष्टदल कमल का निर्माण हो जावे ॥ ९-१० ॥

**दलमूलेषु युगशः केसराणि प्रकल्पयेत् ।**
**एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः ॥ ११ ॥**

**केसरप्रकारमाह—दलेति । कर्णिकावृत्तस्पर्शी सन्धिगतपत्रसीमासूत्रान्तराले पत्रमध्यसूत्रस्योभयतः एकैकस्मिन् पत्रे द्वौ द्वौ केसरौ कर्णिकावृत्तलग्नमूलौ केसरवृत्तलग्नाग्रौ अग्रे किञ्चित् स्थूलौ परस्परसम्मुखौ कुर्यात् । उपसंहरति—एतदिति । यत्र कुत्रापि पङ्कजं कुर्यादिति वक्ष्यति तत्रायं प्रकारो ज्ञेय इति ।**

अब केशरों के रचना का प्रकार कहते हैं—प्रत्येक दल के मूल भाग में दो-दो केशरों का निर्माण करे । तन्त्रवेत्ताओं ने सामान्य रूप से इस प्रकार पङ्कज का निर्माण कहा है ॥ ११ ॥

**पदानि त्रीणि पीठार्थं पीठकोणेषु मार्जयेत् ।**
**अवशिष्टैः पदैर्विद्वान् गात्राणि परिकल्पयेत् ॥ १२ ॥**

अब पीठ रचना का प्रकार कहते हैं—पीठ के लिये स्थापित पङ्क्ति में कोण का एक एक कोष्ठ और उसके दोनों ओर के दो-दो कोष्ठ; इस प्रकार कुल तीन कोष्ठ पीठ के स्थान के लिये रंग देवे । पुनः आचार्य शेष चार कोष्ठक में पीठ के गात्र का निर्माण करे ॥ १२ ॥

**पदानि वीथीसंस्थानि मार्जयेत् पंक्त्यभेदतः ।**
**दिक्षु द्वाराणि रचयेद् द्विचतुःकोष्ठकैस्ततः ॥ १३ ॥**

पीठं कुर्यादिति यदुक्तं तत्प्रकारमाह—पदानीति । पीठार्थं स्थापितपंक्तौ एकैकं कोणकोष्ठं तदुभयपार्श्ववर्तिकोष्ठद्वयं च । एवं त्रीणि कोष्ठानि पदार्थं मार्जयेत् । अवशिष्टैश्चतुर्भिश्चतुर्भिः पदैः पीठगात्राणि कल्पयेत् । वीथ्यर्थं स्थापितपंक्तिद्वयस्यैकाकारेण मार्जनं कार्यम् । द्वाराण्याह-दिक्ष्विति । द्वाराद्यर्थं परितः स्थापितपंक्तिद्वयमध्ये चतुर्दिक्षु द्वारचतुष्टयार्थं आन्तरपंक्तिस्थं मध्यसूत्रोभयपार्श्ववर्त्तिकोष्ठद्वयं तथा बाह्यपंक्तिस्थमध्यसूत्रपार्श्ववर्त्तिकोष्ठचतुष्टयं मार्जयेत् । एवं चत्वारि द्वाराणि स्युरित्यर्थः ।

वीथी के लिये संस्थापित दोनों पङ्क्तियों को एक ही प्रकार के रंग से रंगे । पुनः साधक चारो दिशाओं में दो कोष्ठक तथा चार कोष्ठको में चार द्वार का निर्माण करे ॥ १३ ॥

**पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः ।**

शोभामाह—पदैरिति । अन्तः पंक्तिस्थानि द्वारपार्श्वद्वयगतानि त्रीणि कोष्ठानि बाह्यपंक्तिस्थद्वारपार्श्वद्वयगतमेकैकं कोष्ठं मार्जयेदेवमष्टौ शोभाः स्युरित्यर्थः ।

**उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम् ॥ १४ ॥**

उपशोभा इति । अन्तःपंक्तिस्थं शोभालग्नमेकैकं कोष्ठं त्रीणि त्रीणि बाह्यपंक्तिकोष्ठानि मार्जयेत् । एवमष्टावुपशोभाः स्युरित्यर्थः ।

**अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम् ।**

अवशिष्टैरिति । उभय उपशोभालग्नान्यन्तःपंक्तिस्थानि त्रीणि कोष्ठानि बाह्यपंक्तिस्थानि च त्रीणि कोष्ठानि मार्जयेत् । एवं चत्वारः कोणाः स्युरित्यर्थः ।

अब शोभा के विषय में कहते हैं—द्वार के भीतरी पार्श्वभाग में स्थित तीन-तीन कोष्ठ तथा बाह्यस्थित कोष्ठ का एक-एक कोष्ठ रंग देवे । इस प्रकार ८ कोष्ठक में शोभा के स्थान का निर्माण करे । पुनः पङ्क्ति के भीतरी भाग में शोभा स्थान से सटे हुये दोनों ओर एक-एक कोष्ठक तथा बाहर के तीन-तीन कोष्ठकों को रंग देवे । इस प्रकार आठ उपशोभा बनावे । पुनः भीतरी पङ्क्ति में उपशोभा से सटे हुये दोनों ओर तीन-तीन कोष्ठक तथा बाहर स्थित पङ्क्ति में भी तीन-तीन कोष्ठकों को रङ्ग देवे । ऐसा करने से चार कोण बन जायेंगे ॥ १४-१५ ॥

**रञ्जयेत् पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम् ॥ १५ ॥**
**पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम् ।**
**कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम् ॥ १६ ॥**
**बिल्वादिपत्रजं श्यामामित्युक्तं वर्णपञ्चकम् ।**

मण्डलरञ्जनार्थं पञ्चवर्णानाह—रञ्जयेदिति । पुलाकजं तुच्छधान्यजम् । 'पुलाकस्तुच्छधान्यं स्यात्' इति त्रिकाण्डशेषः । तत्प्रक्रिया यथा-तुच्छधान्यस्यार्धदाहावसरे दुग्धादिना सिक्त्वा ततो वस्त्रगालितं चूर्णं कुर्यात् । श्यामशब्देनात्र हरिद्वर्णो गृह्यत इत्यर्थः ।

**अङ्गुलोत्सेधविस्तारा: सीमारेखा: सिता: शुभा: ॥ १७ ॥ इति ।**

**सीमारेखा इति सर्वा: ।**

**कर्णिकां पीतवर्णेन केसराण्यरुणेन च ।**
**शुभ्रवर्णेन पत्राणि तत्सन्धि: श्यामलेन च ।**
**रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका ॥ १८ ॥ इति ।**

इस प्रकार सर्वतोभद्रमण्डल को पञ्चरंग से रंग देने पर वह अत्यन्त मनोहर बन जायेगा । हरिद्रा के चूर्ण का पीत रंग, चावल के चूर्ण का श्वेत रंग, कुसुम्भ पुष्प का अरुण रंग, जलाये गये पुलाक (तुच्छ धान्य) का काला रङ्ग तथा बिल्वादि पत्र को कूटकर श्याम रङ्ग बनाया जाता है । इस प्रकार पाँचों रंग का निर्माण करे । यहाँ तक हमने पञ्चरङ्ग का वर्णन किया । सर्वतोभद्रमण्डल की सीमा रेखा को एक अङ्गुल की ऊँचाई से चारो ओर श्वेत चावल के चूर्ण से रंग देना चाहिये । कर्णिकाओं को पीत रंग से रंगे तथा केशरों को लाल रंग से रंग देवे । अष्ट पत्रों को शुक्ल वर्ण से और उनकी सन्धियों को श्याम वर्ण से रंग देना चाहिये । इसी प्रकार कर्णिकाओं को लाल रंग से अथवा पीत वर्ण से मन्त्रज्ञ आचार्य रंग देवे ॥ १५-१८ ॥

**महाकपिलपञ्चरात्रे तु विशेष:—**

**पीतं क्षितिस्तु विज्ञेया शुक्लमाप: प्रकीर्तिता ।**
**तेजो वै रक्तवर्णं स्यात् श्यामं वायु: प्रकीर्तित: ॥ १९ ॥**
**आकाशं कृष्णवर्णं तु पञ्चमं तु महामुने ।**
**सितेऽधिदेवता रुद्रो रक्ते ब्रह्माधिदेवता ॥ २० ॥**
**पीतेऽधिदेवता विष्णु: कृष्णे चैवाच्युत: स्मृत: ।**
**श्यामेऽधिदेवता नाग: समाख्यातो मयाऽनघ ॥ २१ ॥**

महाकपिलपञ्चरात्र में विशेष—पृथ्वी का रंग पीत, जल का रंग शुक्ल, तेज का रंग रक्त, वायु का श्याम और आकाश का कृष्ण वर्ण समझना चाहिये । श्वेतवर्ण के अधिदेवता रुद्र हैं और रक्त के ब्रह्मदेव, पीत के विष्णु, कृष्ण वर्ण के अच्युत तथा श्याम के अधिदेवता नाग (अनन्त) हैं । हे अनघ! इस प्रकार हमने रंगों के अधिदेवताओं को कहा ॥ १९-२१ ॥

**शुक्लं गृहापदो हन्ति रक्तं क्रूरगणोद्भवम् ।**
**कृष्णं सर्वासुरोत्साहं नीलं वैनायकीं तथा ।**
**पैशाचीं राक्षसीं चैव निहन्ति हरितं रज: ॥ २२ ॥**
**तस्माद् होमेऽभिषेके च यागे चैव विशेषत: ।**

**रचयेन्मण्डलं तैस्तु देवसन्तुष्टिकारकम् ॥ २३ ॥ इति ।**

शुक्ल वर्ण घर की आपत्तियों का, रक्त वर्ण क्रूर गणों के उपद्रवों का, कृष्ण वर्ण असुरों के उत्साहों का, नील वर्ण विनायक जन्य उपद्रवों का और हरा वर्ण पैशाची राक्षसी उपद्रवों का नाश करता है । इसलिये मन्त्रज्ञ होम में अथवा अभिषेक में, विशेषकर याग में रंग युक्त मण्डल का निर्माण करे । जिससे सभी देवता सन्तुष्ट रहे ॥ २२-२३ ॥

**तन्त्रान्तरे तु विशेषः—**

**शक्तस्तु वाञ्छेद् यदि सिद्धिमुग्रां**
**तद्वर्णरत्नैरिह मण्डलानि ।**
**आभूषयेन्मौक्तिकपुष्यराग**
**माणिक्यनीलैर्हरितैश्च रत्नैः ॥ २४ ॥ इति ।**

अन्य तन्त्रों में भी विशेष बतलाया गया है—यदि शक्ति सम्पन्न साधक बहुत बड़ी सिद्धि चाहता हो, तब वर्ण रत्नों से मण्डलो को भूषित करना चाहिये, अथवा मोती, पुष्प राग, माणिक्य, नीलम एव हरित रत्नों से अलङ्कृत कर देना चाहिये ॥ २४ ॥

**शारदायाम्—**

**केसराः पीतरक्ताः स्युः अरुणानि दलानि च ।**
**सन्धयः कृष्णवर्णाः स्युः पीतेनाप्यसितेन वा॥ २५ ॥**
**रञ्जयेत् पीठगर्भाणि पादाः स्युररुणप्रभाः ।**
**गात्राणि तस्य शुक्लानि वीथीषु चतसृष्वपि ।**
**आलिखेत् कल्पलतिका दलपुष्पफलान्विता ॥ २६ ॥**

**पूर्वं श्वेतकमलमुक्त्वा रक्तकमलमाह—यद्वेति । विष्णुशक्तिशिवदीक्षादौ तु व्यवस्थितिविकल्पो ज्ञेयः । पीतैवेति—द्वितीयपक्षेऽपि । पक्षान्तरं समाप्य प्रकृतमाह—पीतेनेति स्वेच्छया विकल्पोऽयम् ।**

**पीठगर्भाणीति । कमलक्षेत्रकोणात् तत्र गर्भमेषामस्तीति गर्भं कोणस्थानम् । तस्येति पीठस्य । कल्पलतिकालेखनमुपदेशतो ज्ञेयम् । बहिरिति सर्वबाह्यकृतसीमा-रेखा या बाह्येत्यर्थः ।**

शारदातिलक (३.१२३-१२५) में भी बतलाया गया है—केशरों को पीतवर्ण से रंगे तथा पत्रों को लाल वर्ण से रंगे । सन्धियों को काले रंग से रंगे, अथवा पीत से, अथवा असित रंग से रंगे । पीठ के कोणों को तथा पादों को लाल वर्ण से रंगे । उसके समस्त गात्र शुक्ल रंग से रंगे होना चाहिए । चारों वीथीओं में पत्र पुष्प फलान्वित कल्पलतिका निर्माण करे ॥ २५-२६ ॥

**वसिष्ठसंहितायां तु विशेषः—**

**पूर्वे पीतं सितं देयं पश्चिमेऽप्युत्तरे तथा ।**
**रक्तं तु दक्षिणे कृष्णं पाटलं वह्निसंस्थितम् ॥ २७ ॥**
**नैर्ऋत्ये नीलवर्णं तु वायव्ये धूम्रवर्णकम् ।**
**ईशे गौरं विनिर्दिष्टमष्टपत्रेष्वयं क्रमः ॥ २८ ॥ इति ।**

वशिष्ठसंहिता में भी विशेष बतलाया गया है—पूर्व में पीत वर्ण का, पश्चिम में श्वेत वर्ण का, उत्तर में रक्त वर्ण का, दक्षिण में कृष्ण वर्ण का, आग्नेय में पाटल वर्ण का, नैर्ऋत्य में नील वर्ण का, वायव्य में धूम्र वर्ण का और ईशान में गौर वर्ण का प्रयोग करे । इस प्रकार आठो दिशाओं के आठ पत्रों पर वर्ण का प्रयोग क्रम विनिर्दिष्ट किया गया ॥ २७-२८ ॥

**शारदायाम्—**

**वर्णैर्नानाविधैश्चित्रैः सर्वदृष्टिमनोहराः ।**
**द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः ॥ २९ ॥**
**उपशोभाः पीतवर्णाः कोणान्यसितभांसि च ।**
**तिस्रो रेखाः बहिः कुर्यात् सितरक्तासिताः क्रमात्।**
**मण्डलं सर्वतोभद्रमेतत्साधारणं मतम् ॥३०॥ इति ।**

शारदातिलक (३.१२५-१२७) में भी बतलाया गया है—ऊपर बतलायी गई कल्पलता नाना प्रकार के वर्णों से चित्रित होनी चाहिये और सबकी दृष्टि में मनोहर होनी चाहिये । द्वार श्वेत वर्ण का, शोभा स्थान रक्त वर्ण का होना चाहिये । इसी प्रकार उपशोभा पीत वर्ण का तथा कोण काले रङ्ग का होना चाहिये । इसके बाद उस सर्वतोभद्र मण्डल के बाहर तीन रेखा और खींचे जो क्रमशः श्वेत वर्ण से, रक्त वर्ण से और काले वर्ण से रंगी हुई हो । इस प्रकार यह साधारण सर्वतोभद्रमण्डल निर्माण बतलाया गया ॥ २९-३० ॥

**अथ मण्डलान्तरम्, शारदायाम्—**

**चतुरस्त्रां भुवं भित्त्वा दिग्भ्यो द्वादशधा सुधीः ।**
**पातयेत् तत्र सूत्राणि कोष्ठानां दृश्यते शतम्॥ ३१ ॥**
**चतुश्चत्वारिंशदाढ्यं पश्चात् षट्त्रिंशताम्बुजम् ।**
**कोष्ठैः प्रकल्पयेत्पीठं पंक्त्यां नैवात्र वीथिका ।**
**द्वारशोभे यथा पूर्वमुपशोभा न दृश्यते ॥ ३२ ॥ इति ।**

**चतुरस्त्रामिति । अत्र मत्स्योत्पादनप्रकारासम्भवात् दिग्भ्यो द्वादशधेत्युक्तिः । तत्र चतुर्दिक्षु द्वादशधा भूमिं विभज्य तत्र सूत्राणि पातयेदिति । तत्र प्रकारः—पूर्ववत्**

षोडशकोष्ठानि कृत्त्वा तेष्वेकं कोष्ठं समांशेन त्रेधा विभज्य तच्चिह्नद्वये प्रागग्रं सूत्रद्वयं दद्यात् । एतत्सूत्रद्वयसम्पातोत्पन्नप्रतिकोष्ठमत्स्यद्वन्द्वेषु द्वे द्वे उदगग्रे सूत्रे । सूत्र एव उदगग्रामष्टसूत्रीं पातयेत् । ततः तत्सूत्रसम्पातोत्पन्नकोष्ठमत्स्यद्वन्द्वे प्रागग्रे । एवं प्रागग्रां षट्सूत्रीं दद्यात् । एवमेकशतचतुश्चत्वारिंशत्कोष्ठानि जायन्ते । कोष्ठैरिति— पूर्वत्रान्वेति । अम्बुजमुक्तप्रकारेणैव पंक्त्या पीठं पूर्ववदेव ।

**अवशिष्टैः पदैः कुर्यात् षड्भिः कोणानि तन्त्रवित् ।**
**विदध्यात् पूर्ववच्छेषमेवं वा मण्डलं शुभम् ॥३३॥ इति**

अवशिष्टैरिति । तत्रैकं पदमन्तःपंक्तिस्थं पञ्चकोष्ठानि बाह्यपंक्तिस्थानि, एवं षड्भिरित्यर्थः । शेषमिति रञ्जनबाह्यरेखात्रयकरणादि ।

अब शारदातिलक (३.१२८-१३०) के अनुसार अन्य मण्डल कहते हैं— विद्वान् चौकोर भूमि का विभाग बारह भागों में करे । उसमें सूत्र लगाकर १४४ कोष्ठक का निर्माण करे । तदनन्तर उसके बीच के ३६ कोष्ठकों में कमल निर्माण करे । इसमें वीथी न बनावे, पूर्ववत् द्वार शोभा बनावे । किन्तु उपशोभा न बनावे । शेष बचे हुये छह कोष्ठों का कोण बनाकर तन्त्रवेत्ता उन कोणों को रंग देवे । उसके बाहर तीन रेखा बना देवे । उसे श्वेत, रक्त और कृष्ण वर्ण से रंग देवे । इस प्रकार शुभ करने वाले अन्य मण्डल का निर्माण करे ॥ ३१-३३ ॥

**अथ नवनाभमण्डलम्—**

**चतुरस्रे चतुःषष्टिपदान्यारचयेत् सुधीः ।**
**पादैश्चतुर्भिः पद्मं स्यान्मध्ये तत्परितः पुनः ॥ ३४ ॥**
**वीथीश्चतस्रः कुर्वन्ति मण्डलान्तावसानिकाः ।**
**दिग्गतेषु चतुष्केषु पङ्कजानि समालिखेत् ॥ ३५ ॥**
**विदिग्गतचतुष्कानि भित्त्वा षोडशधा सुधीः ।**
**मार्जयेत् स्वस्तिकाकारान् श्वेतपीतारुणासितैः ॥ ३६ ॥**
**रजोभिः पूरयेत् तानि स्वस्तिकानि शिवादितः ।**
**प्राक् प्रोक्तेनैव मार्गेण शेषमन्यत् समापयेत् ॥ ३७ ॥**

नवनाभमण्डलमाह—चतुरस्रमिति । तत्र पूर्ववत् चतुःषष्टिकोष्ठानि कृत्त्वा तत्र मध्यचतुष्के पूर्ववत् पद्मं ततश्चतुर्दिक्षु अष्टाष्टकोष्ठिकाः चतस्रो वीथीः कुर्यात् । एवमष्टदिक्षु चतुष्कोष्ठाष्टकमवशिष्यते । तत् भित्वा षोडशधेति पूर्ववदेव मार्जयेत् । मार्जनप्रकारस्तु षोडशधेति कोष्ठेषु मध्यचतुष्कस्यैकैकं कोष्ठं परस्परविरुद्धैकैक-दिशि सम्मार्ज्य तत् संलग्नबाह्यवीथ्याः कोणकोष्ठादिकोष्ठत्रयं तद्दिक्स्थमेव मार्जयेत् । एवमुपशोभाकारवत् चत्वारि कोष्ठानि मार्जितानि स्वस्तिकाकाराणि सम्पद्यन्ते । केचित्वन्यथा मार्जनमाहुः—मध्यचतुष्कस्य पूर्वदिग्गतकोष्ठद्वयं पूर्वदिशि सम्मार्ज्य तल्लग्नं बाह्यवीथिस्थं दक्षिणदिक्पर्यन्तं कोष्ठद्वयं मार्जयेत् । एवं दक्षिणदिग्-गतकोष्ठद्वयं दक्षिणदिशि सम्मार्ज्य तल्लग्नं वीथिस्थं पश्चिमदिक्पर्यन्तं कोष्ठद्वयं

**पश्चिमदिशि सम्मार्ज्य तल्लग्नं वाह्यवीथिस्थं उत्तरान्तकोष्ठद्वयं मार्जयेत् । पक्षद्वयमपि साम्प्रदायिकमेव । शिवादित ईशानादित वायव्यान्तम् । शेषमिति पद्मरञ्जनादिवीथिषु कल्पलतालेखनं रेखात्रयं च स्वस्तिकवर्जमिति । स्वस्तिकचतुरस्त्रं मार्जयेदित्यर्थः । चतुष्टयमिति एषां विषय उक्तः ।**

अब नवनाभमण्डल (शारदातिलक ३.१३१-१३५) कहते हैं—पूर्ववत् चतुरस्त्र (चौकोर) रेखा खींच कर उसमें ६४ कोष्ठक निर्माण करे । उसके मध्य के चार-चार कोष्ठकों में पद्म का निर्माण करे । फिर उसके चारों ओर आठ-आठ कोष्ठक और चार वीथी बनावे । उसके बाद चारों दिशाओं में आठ-आठ कोष्ठ में चार वीथी बनावे । ऐसा करने से आठो दिशाओं में चार कोष्ठाष्टक शेष रहेगा । उसमें चारों दिशाओं में चार-चार कोष्ठों का चार कमल बनावे और कोणों में रहने वाले चार-चार कोष्ठों को लेकर सोलह कोष्ठकों को चावल से भर देवे । ऐसा करने से स्वस्तिकाकार मण्डल सम्पन्न हो जायेगा । ईशानकोण (=शिवादितः) से आरम्भ कर वायव्यकोण पर्यन्त सभी स्वस्तिक चिन्हों को पूर्व में कही गई विधि के अनुसार श्वेत, पीत, अरुण तथा काले रंग से रंग देवे । तदनन्तर (कमलों और वीथियों को रंग देवे । फिर वीथी में कल्पलतादि का निर्माण कर) इस कार्य को समाप्त कर देवे ॥ ३४-३७ ॥

**प्रयोगसारे नवनाभमुक्त्वा—**

**कलशानां नवानां तु प्रोक्तमेतत् परं पदम् ।**
**तथा प्राक् प्रस्तुते स्थाने पद्मं सङ्कल्प्य पूर्ववत् ॥ ३८ ॥**
**वीथीस्तद्वच्च संयोज्य चतुष्टयचतुष्टये ।**
**स्वस्तिकान्यालिखेद् दिक्षु कोणकोष्ठानि मार्जयेत्॥ ३९ ॥**
**पञ्चानां कलशानां च पदं स्यादेतदुत्तमम् ।**
**चतुरस्त्रोदितस्थाने तथा पद्मं समालिखेत् ॥ ४० ॥**
**कलशस्यैकदेवत्वं प्रोक्तं साधारणं पदम् ।**

प्रयोगसार में नवनाभ मण्डल कहकर आगे पञ्चाकृति वाला मण्डल कहते हैं । नव कलशों का यह सर्वोत्तम नवनाभपद कहा गया प्राक् अब और आगे कहते हैं—पूर्व में प्रस्तुत स्थान पर पूर्ववत् कमल का निर्माण कर, फिर चार-चार कोष्ठों में वीथी निर्माण कर दिशाओं में स्वस्तिक चिन्ह का निर्माण करे । फिर कोणों और कोष्ठों को रंग देवे । ऐसा करने से पाँच कलशों का यह श्रेष्ठ पद हो जावेगा पूर्वोक्त चतुरस्त्र के स्थान पर पद्म निर्माण करे । इस प्रकार कलश का साधारण पद एक दैवत्य हमने कहा ॥ ३८-४१ ॥

**नवनाभमिदं प्रोक्तं मण्डलं सर्वसिद्धिदम् ॥ ४१ ॥**
**पञ्चाब्जमण्डलं प्रोक्तमेतत् स्वस्तिकवर्जितम् ।**

**दीक्षायां देवपूजार्थं मण्डलानां चतुष्टयम् ।**
**सर्वतन्त्रानुसारेण प्रोक्तमेतच्चतुष्टयम् ॥ ४२ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे मण्डलरचनाकथनं**
**नाम द्वाविंशः पटलः ॥ २२ ॥**

...❧❀❧...

पहले नवनाभ मण्डल कहा जो सभी सिद्धियों को देने वाला है अब यहाँ स्वस्तिक वर्जित पञ्चाब्ज मण्डल कहा गया है। इस प्रकार दीक्षा में, पूजा में, यह चार मण्डल सर्वतोभद्रमण्डल, अन्य मण्डल, नवनाभमण्डल और पञ्चाब्ज मण्डल इन चार मण्डलों को हमने कहा ॥ ४१-४२ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में मण्डलारचनाकथन नामक द्वाविंश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ २२ ॥**



# त्रयोविंशः पटलः

## दीक्षाविधि

**एवं मण्डलमारच्य दीक्षां दद्याच्च श्रेयसे ।**

**तच्च प्रपञ्चसारे—**

**अथ प्रवक्ष्ये विधिवन्मनूनां**
**दीक्षाविधानं जगतो हिताय ।**
**यया विना नैव फलं लभन्ते**
**तेषां विधिज्ञा अपि साधकेन्द्राः ॥ १ ॥**

**मनूनामिति । मनुर्मन्त्रः ।**

इस प्रकार मण्डल की रचना कर शिष्य का कल्याण करने के लिय दीक्षा प्रदान करे । जैसा कि प्रपञ्चसारतन्त्र में बतलाया गया है—अब जगत् के कल्याण करने के लिये मन्त्रों का दीक्षाविधान विधिपूर्वक कहता हूँ । जिसके बिना दीक्षा विधानज्ञ साधकेन्द्र भी फल प्राप्त नहीं करते ॥ १ ॥

मनूनाम्, मनु = मन्त्र ।

**मन्त्रशब्दव्युत्पत्तिः पिङ्गलामते—**

**मननं विश्वविज्ञानं त्राणं संसारबन्धनात् ।**
**यतः करोति संसिद्धो मन्त्र इत्युच्यते ततः ॥ २ ॥**

अब पिङ्गलामततन्त्र के मतानुसार मन्त्र शब्द की व्युत्पत्ति कहते हैं—मन्त्र शब्द में 'म' का अर्थ है 'विश्वविज्ञान का मनन' और 'त्र' का अर्थ है संसार बन्धन से 'त्राण' । यतः सिद्ध किया गया मन्त्र 'विश्व विज्ञान' प्रदान करता है और संसार बन्धन से त्राण करता है, इसलिये उसे मन्त्र कहते हैं ॥ २ ॥

**यामलेऽपि—**

**मननात् त्राणनाच्चैव मद्रूपस्यावबोधनात् ।**
**मन्त्र इत्युच्यते सम्यक् मदधिष्ठानतः शिवे ॥ ३ ॥ इति ।**

**सा तु चतुर्विधा मन्त्रशिवशक्तिविष्णुभेदात् ।**

यामल में भी बतलाया गया है—मनन करने से, त्राण करने से, मेरे रूप का अवबोधन कराने से और मुझ में सम्यक् अधिष्ठित होने से, हे शिवे! उसे मन्त्र कहा जाता है ॥ ३ ॥

वह मन्त्र शक्ति १. मन्त्र, २. शिव, ३. शक्ति और ४. विष्णु भेद से चार प्रकार की कही गई है ।

**यदुक्तमीशानशिवेन—**

**सामान्यभूता खलु मान्त्रिकी स्याद्**
**दीक्षा स्मृता मन्त्रगणेषु तद्वत् ।**
**वर्णेषु चापि द्विजपूर्वकेषु**
**स्यात् शैवशाक्तेष्वपि वैष्णवेषु ॥ ४ ॥**

**तत्र शिव-विष्णु-शक्ति-दीक्षाः तत् तत् तन्त्रतो ज्ञेयाः ।**

ईशानशिव में भी कहा गया है—मन्त्रगणों में मान्त्रिकी-दीक्षा सामान्य भूत है । इसी प्रकार ब्राह्मण आदि वर्णों में तथा शैव, शाक्त एवं वैष्णवों में भी सामान्य दीक्षा होती है ॥ ४ ॥

**प्रयोगसारे च—**

**मन्त्रमार्गानुसारेण साक्षात् कृत्वेष्टदेवताम् ।**
**गुरुश्चोद्बोधयेत् शिष्यं मन्त्रदीक्षेति सोच्यते ॥ ५ ॥**

प्रयोगसार में भी बतलाया गया है—मन्त्रशास्त्र में कही गई विधि के अनुसार इष्ट देवता का साक्षात्कार गुरु उस शिष्य में उद्बोधित कर देवे । इसी को मन्त्रदीक्षा कहा जाता है ॥ ५ ॥

**षडन्वयमहारत्नेऽपि—**

**त्रिविधा सा भवेद् दीक्षा प्रथमा आणवी परा।**
**शाक्तेयी शाम्भवी चान्या सद्यो मुक्तिविधायिनी ॥ ६ ॥**

षडन्वयमहारत्न में भी बतलाया गया है—दीक्षा तीन प्रकार की कही गई । प्रथमा आणवी दीक्षा, द्वितीय शाक्तेयी दीक्षा और तीसरी शाम्भवी दीक्षा है । ये दीक्षायें सद्यः मुक्ति प्रदान करने वाली है ॥ ६ ॥

### १. आणवीदीक्षाकथनम्

**मन्त्रार्चनासनस्थानध्यानोपायादिभिः कृता ।**
**दीक्षा सा त्वाणवी प्रोक्ता यथाशास्त्रोक्तरूपिणी ॥ ७ ॥**

मन्त्रार्चन, आसन, स्थान, ध्यान और उपायों से की जाने वाली शास्त्रोक्तानुसारिणी दीक्षा 'आणवी दीक्षा' कही जाती है ॥ ७ ॥

२. शाक्तेयीदीक्षाकथनम्

**सिद्धौ स्वशक्तिमालोक्य तया केवलया शिशोः ।**
**निरुपायं कृता दीक्षा शाक्तेयी परिकीर्तिता ॥ ८ ॥**

मन्त्र की सिद्धि में अपनी शक्ति समझकर उस शक्ति के अनुसार और उपायों के अभाव में दी जाने वाली दीक्षा 'शाक्तेयी दीक्षा' कही जाती है ॥ ८ ॥

३. शाम्भवीदीक्षाकथनम्

**अभिसन्धिं विनाऽऽचार्यशिष्ययोरुभयोरपि ।**
**देशिकानुग्रहेणैव शिवताव्यक्तिकारिणी ।**
**सेयं तु शाम्भवी दीक्षा शिवादेशनकारिणी ॥ ९ ॥ इति ।**

आचार्य और शिष्य दोनों को कपटरहित देखकर केवल आचार्य के अनुग्रह से प्राप्त होने वाली दीक्षा 'शाम्भवी दीक्षा' कही जाती है । वह अव्यक्त स्वरूपा होती है और शिवजी की कृपा से प्राप्त होती है ॥ ९ ॥

**आणवी तु दशविधा । तच्च षडन्वयमहारत्ने—**

**आणवी बहुधा दीक्षा शाक्तेयी शाम्भवी पुनः ।**
**एकधैवेति विद्वद्भिः पठ्यते शास्त्रकोविदैः ॥ १० ॥**

आणवी दीक्षा दश प्रकार की षडन्वयमहारत्न में कही गई है । आणवी दीक्षा अनेक प्रकार की होती है । जब कि शाक्तेयी और शाम्भवी दीक्षा केवल एक ही प्रकार की कही गई है । ऐसा शास्त्रज्ञ विद्वानों ने कहा है ॥ १० ॥

आणवीदीक्षाप्रकारकथनम्

**आणवी बहुधा प्रोक्ता तद्भेदमधुनोच्यते ।**
**स्मार्ती मानसिकी योगी चाक्षुषी स्पर्शिनी तथा ॥ ११ ॥**
**वाचिकी मान्त्रिकी हौत्री शास्त्री चेत्यभिषेचिकी।**

आणवी दीक्षा बहुत प्रकार की कही गयी है उसका भेद अब बतला रहा हूँ । १. स्मार्त्त, २. मानसिकी, ३. योगी, ४. चाक्षुषी, ५. स्पर्शिनी, ६. वाचिकी, ७. मान्त्रिकी, ८. हौत्री, ९. शास्त्री और १०. अभिषेचिकी—ये आणवी दीक्षा के भेद हैं ॥ ११-१२ ॥

**विदेशस्थं गुरुः शिष्यं स्मृत्वा पाशत्रयं क्रमात् ॥ १२ ॥**
**विश्लेष्य लयभोगाङ्गविधानेन परे शिवे ।**
**सम्यग्योजनरूपैषा स्मार्ती दीक्षेति कथ्यते ॥ १३ ॥**

१. गुरु विदेशस्थ शिष्य का स्मरण कर उसके तीन पाशों को अलग-अलग

कर लय एवं भोगाङ्ग विधान से पर शिव में संयुक्त करना; यह 'स्मार्त्ती दीक्षा' कही जाती है ॥ १२-१३ ॥

**स्वसन्निधौ समासीनमालोक्य मनसा शुचिः ।**
**मलत्रयादुपायैर्या मोचिकी सा तु मानसी ॥ १४ ॥**

२. अपने सन्निकट में रहने वाले शिष्य को अपने मन से पवित्र जानकर उपायों के द्वारा तीनों प्रकार के मलों से युक्त करना यह 'मानसी' दीक्षा है ॥१४॥

**योगोक्तक्रमतो योगी शिष्यदेहं प्रविश्य तु ।**
**गृहीत्वा तस्य चात्मानं स्वात्मना योजनात्मिका॥ १५ ॥**
**योगदीक्षेति सा प्रोक्ता मलत्रयविनाशिनी ।**
**शिवोऽहमिति निश्चित्य वीक्षणं करुणार्द्रया ॥ १६ ॥**
**दृशा सा चाक्षुषी दीक्षा सर्वपापप्रणाशिनी ।**
**स्वयं परशिवो भूत्वा निःसन्दिग्धमना गुरुः ॥ १७ ॥**
**शिवहस्तेन शिष्यस्य समन्त्रं मूर्ध्नि संस्पृशेत् ।**
**स्पर्शदीक्षेति सा प्रोक्ता शिवाभिव्यक्तिकारिणी॥ १८ ॥**

३. योग मार्ग से आचार्य शिष्य के देह में प्रविष्ट होकर उसकी आत्मा पकड़कर उसे अपने आत्मा में मिला देना यह 'योगीदीक्षा' कही जाती है । जो तीनों प्रकार के मलों को दूर करती है । ४. मैं स्वयं शिव हूँ ऐसा सोचकर करुणार्द्र दृष्टि से शिष्य का वीक्षण करना यह 'चाक्षुषी दीक्षा' है जो समस्त पापों को विनष्ट करने वाली होती है । ५. गुरु स्वयं निश्चित एवं निःसन्देह रूप से अपने को पर शिव समझकर अपने शिवमय हाथ से मन्त्र पढ़ते हुये शिष्य के मस्तक का स्पर्श करे यह 'स्पर्श दीक्षा' कही जाती है जो शिव की अभिव्यक्ति कराने वाली है ॥ १५-१८ ॥

**शिवहस्तलक्षणं सोमशम्भौ—**

**गन्धैर्मण्डलकं स्वीये विदध्याद् दक्षिणे करे ।**
**विधिना चार्चयेद् देवमित्थं स्यात् शिवहस्तकम् ॥ १९ ॥ इति ।**

'शिवहस्त' का लक्षण सोमशम्भु ने इस प्रकार कहा है—अपने दाहिने हाथ में गन्ध से मण्डल बनावे । उस मण्डल पर विधिपूर्वक शिव का पूजन करे । उसे शिवहस्त कहते हैं ॥ १९ ॥

**शिष्यवक्त्रं निजं वक्त्रं विभाव्य गुरुरादरात् ।**
**गुरुवक्त्रप्रयोगेण दिव्यं मन्त्रादिकं शिशौ ।**
**मुद्रान्यासादिभिः सार्धं दद्यात् सेयं हि वाचिकी ॥ २० ॥**

६. गुरु आदरपूर्वक शिष्य का मुख और अपना मुख देख कर गुरु के मुख से प्रयुक्त मुद्रा एवं न्यास के साथ जो मन्त्रादि प्रदान शिष्य को किया जाता है, वह 'वाचिकी दीक्षा' कही जाती है ॥ २० ॥

**दीक्षा परा तथा मन्त्रन्यासससंयुक्तविग्रहः ।**
**स्वयं मन्त्रतनुर्भूत्वा सक्रमं मन्त्रमादरात् ॥ २१ ॥**
**दद्यात् शिष्याय सा दीक्षा मान्त्री मलविघातिनी ।**
**कुण्डे वा स्थण्डिले वापि निःक्षिप्याग्निं विधानतः ॥ २२ ॥**
**लययोगक्रमेणैव प्रत्यध्वानं यथाक्रमम् ।**
**मन्त्रवर्णकलातत्त्वपदविष्टरमेव च ॥ २३ ॥**
**शुद्ध्यर्थं होमरूपैषा हौत्री दीक्षा समीरिता ।**
**योग्यशिष्याय भक्ताय शुश्रूषार्चापराय च ॥ २४ ॥**
**सार्धं शास्त्रपदा त्रय्या शास्त्री दीक्षेति सोच्यते ।**
**शिवं च शिवपत्नीं च कुम्भे सम्पूज्य सादरम् ।**
**शिवकुम्भाभिषेकात् सा दीक्षा स्यादभिषेचिकी ॥ २५ ॥ इति ।**

७. परा दीक्षा और मन्त्रन्यास से संयुक्त शरीर वाला जो गुरु स्वयं मन्त्र शरीर होकर आदरपूर्वक शिष्य के शरीर में मन्त्र का संक्रमण करता है वह 'मान्त्रिकी दीक्षा' कही जाती है जो समस्त मल विधातिनी होती है । ८. कुण्ड में अथवा स्थण्डिल पर विधानपूर्वक अग्नि डालकर लय योग के क्रम से प्रत्येक अध्वा के अनुसार यथाक्रम मन्त्राध्वा, वर्णाध्वा, कलाध्वा, तत्त्वाध्वा, पदाध्वा और भुवनाध्वा पूर्वक शिष्य की शुद्धि के लिये जो होम कर दीक्षा दी जाती है, वह 'होत्री दीक्षा' कही जाती है । ९. जो शिष्य योग्य है और गुरु भक्त है शुश्रूषा अर्चापर है ऐसे शिष्य को शास्त्रपद के अनुसार वैदिक विधि के अनुसार जो दीक्षा दी जाती है वह 'शास्त्री दीक्षा' कही जाती है । १०. शिव और पार्वती की पूजा कलश में विधिपूर्वक सम्पादन कर शिव कुम्भ से अभिषेक कर जो दीक्षा दी जाती है वह 'अभिषेचिकी दीक्षा' कही जाती है ॥ २१-२५ ॥

**वायवीयसंहितायामपि—**

**शाम्भवी चैव शाक्ती च मान्त्री चैव शिवागमे ।**
**दीक्षोपदिश्यते त्रेधा शिवेन परमात्मना ॥ २६ ॥**

वायवीयसंहिता में भी बतलाया गया है—शिवागम में स्वयं परमात्मा सदाशिव ने शाम्भवी, शाक्ती और मान्त्री तीन प्रकार की दीक्षा कही है ॥ २६ ॥

**गुरोरालोकमात्रेण स्पर्शात् सम्भाषणादपि ।**
**सद्यः सञ्ज्ञा भवेज्जन्तोर्दीक्षा सा शाम्भवी मता ॥ २७ ॥**

१. गुरु के अवलोकन मात्र से, स्पर्श से तथा सम्भाषण से, जन्तु को जब शीघ्र ज्ञान हो जावे, तब उसे 'शाम्भवी दीक्षा' कही जाती है ॥ २७ ॥

**शाक्ती ज्ञानवती दीक्षा शिष्यदेहं प्रविश्य तु ।**
**गुरुणा योगमार्गेण क्रियते ज्ञानचक्षुषा ।**
**मान्त्री क्रियावती दीक्षाकुम्भमण्डलपूर्विका ॥ २८ ॥ इति ।**

२. गुरु शिष्य के देह में प्रविष्ट होकर योगमार्ग द्वारा ज्ञान-चक्षु से जो दीक्षा देता है वह ज्ञानमयी 'शाक्ती दीक्षा' कही जाती है । ३. 'मान्त्री दीक्षा' में क्रिया की आवश्यकता होती है जो मण्डल बनाकर कलशस्थापनपूर्वक दी जाती है ॥ २८ ॥

**दीक्षाशब्दव्युत्पत्तिः—**

**ददाति यस्मादिह दिव्यभावं**
**मायामले कर्म च सङ्क्षिणोति ।**
**सर्वं चतुर्वर्गफलं च यस्मात्**
**तस्मात्तु दीक्षेत्यभिधानमस्याः ॥ २९ ॥**

**दद्यात् क्षयमित्यनयोराद्यर्णमादायेयं निरुक्तिः । शारदायां च—**

**चतुर्विधा या सन्दिष्टा क्रियावत्यादिभेदतः ।**
**क्रियावती वर्णमयी कलात्मा वेधमय्यपि ॥ ३० ॥**

दीक्षा शब्द की व्युत्पत्ति कहते हैं—यतः दीक्षा दिव्यज्ञान प्रदान करती है और समस्त पापों का क्षय करती है । अतः आचार्यों ने उसे 'दीक्षा' कहा है । यह दीक्षा क्रियावती, वर्णमयी, कलात्मा तथा वेधमयी भेदों से चार प्रकार की बतलायी गई है ॥ २९-३० ॥

### सम्प्रदायानुसारेण दीक्षाक्रमकथनम्

**ताः क्रमेणैव कथ्यन्ते तन्त्रेऽस्मिन् सम्प्रदायतः ।**
**देशिको विधिवत्स्नात्वा कृत्त्वा पूर्वाह्निकी क्रियाः ॥ ३१ ॥**
**यायादलंकृतो मौनी यागार्थं यागमण्डपम् ।**
**आचम्य विधिवत् तत्र सामान्यार्घं विधाय च ॥ ३२ ॥**
**अस्त्रमन्त्राम्बुभिः प्रोक्ष्य द्वारपूजां समाचरेत् ।**
**ऊर्ध्वोदुम्बरके विघ्नं महालक्ष्मीं सरस्वतीम् ॥ ३३ ॥**

उन सभी दीक्षाओं को सम्प्रदायानुसार इस तन्त्र में क्रमशः कह रहा हूँ । आचार्य विधिपूर्वक स्नान कर, अपनी पूर्वाह्निकी क्रिया सम्पादन कर, अलङ्कार युक्त हो, मौन धारण करते हुये, याग के लिये यागमण्डप में पधारे और आसन पर आसीन होकर, विधिवत् स्नान कर, सामान्यार्घ स्थापित करे । अस्त्र मन्त्र से

द्वार का प्रोक्षण कर द्वारपूजा करे । उदुम्बर के ऊपर विघ्नराज, महालक्ष्मी और सरस्वती का पूजन करे ॥ ३१-३३ ॥

**ततो दक्षिणशाखायां विघ्नं क्षेत्रेशमन्ततः ।**
**तयोः पार्श्वयुगे गङ्गायमुने पुष्पवारिभिः ॥ ३४ ॥**

फिर दक्षिण शाखा में विघ्न एवं क्षेत्रेश की और दोनों पार्श्व में गङ्गा तथा यमुना की पुष्प और वारि से पूजा करे ॥ ३४ ॥

**धातारं च विधातारं शङ्खपद्मनिधी तथा ।**
**देहल्यामर्चयेदस्त्रं प्रतिद्वारमिति क्रमात् ॥ ३५ ॥**
**अनन्तरं देशिकेन्द्रो दिव्यदृष्ट्यवलोकनात् ।**
**दिव्यानुत्सारयेद् विघ्नानस्त्राद्भिश्चान्तरिक्षगान् ।**
**पार्ष्णिघातैस्त्रिभिर्विघ्नानिति विघ्नान् निवारयेत् ॥ ३६ ॥**

फिर धाता, विधाता, शङ्ख एवं पद्मनिधि का देहली पर अर्चन करे । इसी प्रकार प्रत्येक द्वार पर पूजन करे । इसके बाद आचार्य दिव्य-दृष्टि के अवलोकन से दिव्य विघ्नों का अस्त्र के जल से अन्तरिक्षगत विघ्नों का और तीन पार्ष्णिघात (पैर के धक्के) से भौमजन्य विघ्नों का उत्सारण करे ॥ ३५-३६ ॥

**किञ्चित् स्पृशन् वामशाखां देहलीं लङ्घयेद् गुरुः ।**
**अङ्गं सङ्कोचयन्नन्तः प्रविशेद्दक्षिणांघ्रिणा ॥ ३७ ॥**
**नैर्ऋत्यां दिशि वास्त्वीशं ब्रह्माणं च समर्चयेत् ।**
**पञ्चगव्यार्घ्यतोयाभ्यां प्रोक्षयेद् यागमण्डपम् ॥ ३८ ॥**
**चतुष्पथान्तं तत्शुद्धिं विदध्याद् वीक्षणादिभिः ।**

**चतुष्पथान्तं मण्डपद्वारात् तोरणस्तम्भहस्तमात्राव्यवहारभूः 'चतुष्पथ' शब्द-वाच्येत्यर्थः ।**

फिर गुरु कुछ वाम शाखा का स्पर्श करते हुये देहली का लङ्घन अपने अङ्गों को संकुचित करते हुये, दाहिने पैर से यज्ञ भूमि के भीतर प्रवेश करे । नैर्ऋत्यकोण में वास्त्वीश और ब्रह्मदेव की पूजा करे । फिर पञ्चगव्य और जल से यागमण्डप का प्रोक्षण करे । फिर वीक्षणादि से चतुष्पथान्त की शुद्धि करे । मण्डप द्वार से तोरण स्तम्भ पर्यन्त भूमि को 'चतुष्पथ' कहा जाता है ॥३७-३९॥

**वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ॥ ३९ ॥**
**तेनैव ताडनं कुर्याद् वर्मणाऽभ्युक्षणं मतम् ।**
**चन्दनागरुकर्पूरैर्धूपयेदन्तरं सुधीः ॥ ४० ॥**

आचार्य यागमण्डप का मूल मन्त्र से वीक्षण करे और अस्त्र (हुँ फट्) मन्त्र से

प्रोक्षण करे । फिर अस्त्रमन्त्र से ताडन करे और कवच मन्त्र से अभ्युक्षण करे । अनन्तर सुधी आचार्य चन्दन अगरु और कपूर का धूप प्रदान करे ॥ ३९-४० ॥

**विकिरान् विकिरेत् तत्र सप्त जप्तान् शराण्डना ।**

अस्त्रमन्त्र का सात बार जप कर विकिरों का प्रक्षेप करे ॥ ४१ ॥

**शराण्डना = अस्त्रमन्त्रेण । अण्डशब्दो मन्त्रपर्यायः आगमशास्त्रे ।**

**लाजाचन्दनसिद्धार्थभस्मदूर्वाकुशाक्षताः ॥ ४१ ॥**
**विकिरा इति सन्दिष्टाः सर्वविघ्नौघनाशनाः ।**
**अस्त्रजप्तेन दर्भाणां मुष्टिना मार्जयेच्च तान् ॥ ४२ ॥**

आगमशास्त्र में 'शराण्डना का अर्थ = अस्त्र मन्त्र है । अण्ड शब्द मन्त्र का पर्यायार्थक है । लाजा, चन्दन, श्वेत सर्षप, भस्म, दूर्वा, कुश और अक्षत इनको विकिरा कहा जाता है । ये सभी विघ्नों को शान्त करने वाले हैं । अस्त्र जप्त कुशा की मुष्टि से इन विकिरों का मार्जन करे ॥ ४१-४२ ॥

**सोमशम्भौ तु विशेषः—**

**विकिरान् शुद्धलाजान् वा सप्तशस्त्राभिमन्त्रितान् ।**
**अस्त्राम्बुप्रोक्षितानेतान् कवचेनावगुंठितान् ॥ ४३ ॥**
**नानाप्रहरणाकारान् विघ्नौघविनिवारकान् ।**
**दर्भाणां तालमानेन कृतां षट्त्रिंशता दलैः ॥ ४४ ॥**
**सप्तजप्तां शिवास्त्रेण मुष्टिं बोधासिमुत्तमम् ।**
**ईशस्य दिशि वर्धन्या आसनाय प्रकल्पयेत् ॥ ४५ ॥**

**तालं वितस्तिका । सनालं पात्रं वर्धनी, तस्याः आसनाय ईश-दिशि तान् विकिरान् प्रकल्पयेत् स्थापयेदिति ।**

सोमशम्भु में विशेष कथन इस प्रकार है—सात बार शास्त्राभिमन्त्रित अस्त्राम्बु से प्रोक्षित एवं कवच से अवगुण्ठित विकिरों को, अथवा शुद्ध लावा को, विघ्नों को वारण करने वाले अनेक प्रकार के शास्त्रकारों को तथा एक-एक वित्ते के ३६ कुशा के पत्रों की मुष्टि को जो शिवास्त्र से सात बार अभिमन्त्रित हों, उसको असि (= तलवार) के रूप में समझते हुये वर्धनी (टोटी युक्त कमण्डल) को आसन अर्थात् रखने के लिये ईशानकोण में स्थापित करे ॥ ४३-४५ ॥

ताल = एक वित्ता को कहते हैं । टोटी युक्त पात्र वर्धनी कही जाती है ।

**पुण्याहं वाचयित्वा च ब्राह्मणान् परितोष्य च ।**
**उक्तेषु मण्डलेष्वेकवेदिकायां समालिखेत् ॥ ४६ ॥**

**एकं मण्डलमिति ।**

आचार्य प्रथम पुण्याहवाचन कराकर, ब्राह्मणों को सन्तुष्ट कर, पूर्व में कहे गये चार मण्डलों में से कोई एक मण्डल (सर्वतोभद्र) वेदिका पर बनावे ॥ ४६ ॥

**विशेन् मृद्वासने मन्त्री प्राङ्मुखो वाप्युदङ्मुखः।**
**बद्धपद्मासनो मौनी समाहितजितेन्द्रियः ॥ ४७ ॥**

तदनन्तर मन्त्रज्ञ कोमल आसन पर पूर्वाभिमुख अथवा उत्तराभिमुख होकर पद्मासन पर मौन होकर इन्द्रियों को अपने वश में कर के बैठे ॥ ४७ ॥

**स्थापयेद् दक्षिणे भागे पूजाद्रव्याणि देशिकः।**
**सुवासिताम्बुसम्पूर्णं सव्ये कुम्भं सुशोभनम् ॥ ४८ ॥**

देशिक आचार्य अपने दक्षिण भाग में पूजा सामग्री स्थापित करे और अपनी बायीं ओर सुवासित जल से पूर्ण मनोहर कलश स्थापित करे ॥ ४८ ॥

**अत्रार्घ्यपाद्याचमनपात्राण्यपि सव्ये स्थापयेत् ।**

**प्रक्षालनाय करयोः पश्चात् पात्रं निवेशयेत् ।**
**घृतप्रज्वलितान् दीपान् स्थापयेत् परितः शुभान् ॥ ४९ ॥**
**दर्पणं चामरं छत्रं तालवृन्तं मनोहरम् ।**
**मङ्गलांकुरपात्राणि स्थापयेद् दिक्षु देशिकः ।**

**दिक्षु पूर्वादिषु ।**

इसी प्रकार अर्घ पात्र, आचमनपात्र भी बायीं ओर स्थापित करना चाहिए । हस्त प्रक्षालन के लिये पीछे की ओर पात्र रखे । अपने चारो ओर घृत से प्रज्वलित कल्याणकारी दीप स्थापित करे । मनोहर दर्पण, मनोहर चामर, मनोहर छत्र, मनोहर ताड़ का पङ्ख, मङ्गलाङ्कुर के पात्रों को आचार्य पूर्वादि दिशाओं में स्थापित करे ॥ ४९-५० ॥

**कृताञ्जलिपुटो भूत्वा वामदक्षिणपार्श्वयोः ॥ ५० ॥**
**नत्वा गुरून् गणेशं च भूतशुद्धिं समाचरेत् ।**
**करशुद्धिं समासाद्य पश्चात् तालत्रयं ततः ॥ ५१ ॥**
**ऊर्ध्वोर्ध्वमस्त्रमन्त्रेण दिग्बन्धमपि देशिकः ।**
**तेन सञ्जनितं तेजो रक्षां कुर्यात् समन्ततः ॥ ५२ ॥**

फिर हाथ जोड़कर वाम, दक्षिण पार्श्व में गुरु एवं गणेश को नमस्कार कर भूतशुद्धि करे । पहले करशुद्धि कर तीन बार ताली बजावे । फिर आचार्य अस्त्र मन्त्र से ऊपर नीचे और दिशाओं में दिग्बन्धन करे । फिर अस्त्र मन्त्र से उत्पन्न तेज से अपने चारो ओर रक्षा करे ॥ ५०-५२ ॥

**सुषुम्णा वर्त्मनात्मानं परमात्मनि योजयेत् ।**
**योगयुक्तेन विधिना चिन्मन्त्रेण समाहितः ॥ ५३ ॥**
**कारणे सर्वभूतानां तत्त्वान्यपि च चिन्तयेत् ।**
**बीजभावेन लीनानि व्युत्क्रमात् परमात्मनि ॥ ५४ ॥**

फिर योग की विधि से चिन्मन्त्र से समाहित होकर सुषुम्णा मार्ग से अपनी आत्मा को परमात्मा में संयुक्त करे। उन्हीं सर्वभूत कारण में तत्त्वों का भी ध्यान करे। व्युत्क्रम (उल्टे) से उस परमात्मा में बीजभाव से लीन है ॥ ५३-५४ ॥

**ततः संशोषयेद् देहं वायुबीजेन वायुना ।**
**वह्निबीजेन तेनैव सन्दहेत् सकलां तनुम् ॥ ५५ ॥**
**विश्लेषयेत् तदा दोषानमृतेनामृताम्भसा ।**
**आप्लाव्य प्लावयेद्देहमापादतलमस्तकम् ॥ ५६ ॥**

फिर वायु के वायुबीज (यं) से दोषों को विश्लिष्ट कर देह का शोषण करे। फिर अग्निबीज (रं) से समस्त शरीर को जला कर समस्त पापों को नष्ट कर देवे। तदनन्तर अमृत (जल) के अमृताम्भस (वं) से आपाद तल मस्तक एवं समस्त शरीर के भस्म को वहाँ आप्लावित कर देवे ॥ ५५-५६ ॥

**आत्मलीनानि तत्त्वानि स्वस्थानं प्रापयेत् तदा ।**
**आत्मानं हृदयाम्भोजमानयेत् परमात्मनः ॥ ५७ ॥**

आत्मा में लीन तत्त्वों को, अपने-अपने स्थान पर प्राप्त करा देवे। फिर परमात्मा से अपनी आत्मा को हृदयाम्भोज में ले आवे ॥ ५७ ॥

**मनुना हंसदेवस्य कुर्यान् न्यासादिकं ततः ।**
**ऋषिश्छन्दो दैवतानि न्यसेन्मन्त्रस्य मन्त्रवित् ॥ ५८ ॥**
**आत्मनो मूर्ध्नि वदने हृदये च यथाक्रमात् ।**
**विधाय मूलमन्त्रेण प्राणायामं यथाविधि ॥ ५९ ॥**
**विदध्यान् मातृकान्यासं मन्त्रन्यासमनन्तरम् ।**
**अङ्गुष्ठादिष्वङ्गुलीषु न्यसेदङ्गैः सजातिभिः ॥ ६० ॥**
**अस्त्रं तत् तलयोर्न्यस्य कुर्यात् तालत्रयादिकम् ।**
**दिशस्तेनैव बध्नीयात् छोटिकाभिः समाहितः ॥ ६१ ॥**

तदनन्तर बुद्धिमान साधक हंसदेव के मन्त्र से उसमें इस प्रकार न्यास करे। मन्त्रवेत्ता हंस मन्त्र के ऋषि, छन्द, देवता का न्यास करे। यह न्यास क्रमशः अपने शिर, मुख और हृदय स्थान में करे। फिर साधक को यथाविधि मूल मन्त्र से प्राणायाम कर, भुवनेश्वरी मातृका न्यास कर तदनन्तर मन्त्र न्यास करना चाहिए।

ॐ अङ्गुष्ठायां नमः इत्यादि मन्त्र से फिर अङ्गुष्ठादि अङ्गुलियों में सजातीय अङ्गों से न्यास करे ॥ ५८-६१ ॥

**हृदादिषु च विन्यस्येदङ्गमन्त्राँस्ततः सुधीः ।**
**हृदयाय नमः पूर्वं शिरसे वह्निवल्लभा ॥ ६२ ॥**
**शिखायै वषडित्युक्तं कवचाय हुमीरितम् ।**
**नेत्रत्रयाय वौषट् स्यादस्त्राय फडिति क्रमात् ॥ ६३ ॥**
**षडङ्गमन्त्रानित्युक्त्वा षडङ्गेषु नियोजयेत् ।**
**पञ्चाङ्गानि मनोर्यस्य तत्र नेत्रमनुं त्यजेत् ॥ ६४ ॥**

फिर सुधी साधक हृदयादि में अङ्गमन्त्रों का न्यास करे । पहले 'हृदयाय नमः' से हृदय में, फिर 'शिरसे स्वाहा' से शिर में, 'शिखायै वषट्' से शिखा में, 'कवचाय हुम्' से कवच में, 'नेत्रत्रयाय वौषट्' से दोनों नेत्रों में और 'अस्त्राय फट्' से अस्त्र न्यास करे । इस प्रकार छह अङ्ग मन्त्रों का षडङ्ग में न्यास करे । जहाँ मन्त्र के पाँच ही अङ्ग हो वहाँ नेत्र न्यास वर्जित करे ॥ ६२-६४ ॥

**अङ्गहीनस्य मन्त्रस्य स्वेनैवाङ्गानि कल्पयेत् ।**
**तत् तत् कल्पोक्तविधिना न्यासानन्यान् समाचरेत् ।**
**कल्पयेदात्मनो देहे पीठं धर्मादिभिः क्रमात् ॥ ६५ ॥**
**अंसोरुयुग्मयोर्विद्वान् प्रादक्षिण्येन देशिकः ।**
**धर्मं ज्ञानं सवैराग्यमैश्वर्यं न्यस्य तु क्रमात् ॥ ६६ ॥**
**मुखपार्श्वं नाभिपार्श्वेऽधर्मादींश्च प्रकल्पयेत् ।**
**धर्मादयः स्मृताः पादाः पीठगात्राणि चापरे ॥ ६७ ॥**

जिस मन्त्र में अङ्ग न कहा गया हो उसमें स्वयं षडङ्ग की कल्पना कर लेनी चाहिये । तत् तत् कल्पोक्त विधि से अन्य न्यासों को करे । फिर उस अपने शरीर रूप पीठ में ही विद्वान् साधक धर्म, ज्ञान, वैराग्य और ऐश्वर्य से दोनों कन्धों में तथा दोनों ऊरु में न्यास करे । अधर्म, अज्ञान, अवैराग्य और अनैश्वर्य का न्यास १. मुख, २. पार्श्व, ३. नाभि एवं ४. पार्श्व में न्यास करे । इस प्रकार धर्मादि आधार-पीठ के चार पाद हैं और अन्य पीठ के गात्र हैं ॥ ६५-६७ ॥

**अनन्तं हृदये पद्ममस्मिन् सूर्येन्दुपावकान् ।**
**एषु स्वस्वकला न्यस्येन् नामाद्यक्षरपूर्विकाः ॥ ६८ ॥**

हृदय में अनन्त नामक पद्म है । अतः उसमें सूर्य, चन्द्रमा और अग्नि की 'सूं सूर्यमण्डलं न्यसामि' आदि मन्त्रों से तत्तत्कलाओं का न्यास नाम के आदि अक्षरों से करे ॥ ६८ ॥

तन्न्यासस्थानं यथा—

**मूलाधारत्रिकोणेषु विन्यसेदग्निजाः कलाः ।**
**हृत्पङ्कजदलेष्वर्ककला द्वादशसंख्यकाः ॥ ६९ ॥**
**मूर्ध्नि षोडशपत्राणां मध्ये सोमभवाः कलाः ।**
**नादजास्तु स्वरस्थाने बिन्दुजाः पञ्चवक्त्रके ॥ ७० ॥**
**पूर्वदक्षिणसौम्येषु पश्चिमोर्ध्वमुखेषु च ।**
**हृद्गलांसेषु नाभौ च सोदरे पृष्ठवक्षसोः ॥ ७१ ॥**
**उरोजयोर्न्यसेच्चापि कला आक्षरसम्भवाः ।**
**पादे गुह्ये सोरुजानू जङ्घास्फिक्षु उकारजाः ॥ ७२ ॥**
**पादहस्ततलघ्राणकेषु बाह्वोश्च पादयोः ।**
**न्यसेन्मकारजा गुप्तकलाः पञ्च प्रविन्यसेत् ॥ ७३ ॥**

अब उनका न्यास स्थान कहते हैं—मूलाधार के त्रिकोण में अग्नि कला का न्यास करे । हृत्कमल के द्वादश पत्रों में द्वादश संख्याक सूर्य कला का न्यास करे । शिरःस्थ षोडश कमल पत्रों में षोडश संख्याक सोम कला का न्यास करे । स्वर स्थान में नादज कला का और पञ्चवक्त्र में बिन्दुजा कला का तथा पूर्व, दक्षिण, उत्तर एवं पश्चिम तथा ऊर्ध्व मुख में हृदय, गला, दोनों कन्धों में, नाभि, उदर, पृष्ठ और वक्षःस्थल में दोनों उरोज में, अकारज कला का न्यास करे । पाद एवं गुह्य, दो ऊरु, दो जानु, जङ्घा और नितम्ब में उकारज कला का न्यास करे । पाद, हस्त तल, घ्राण, दोनों बाहु और दोनों पैरों में मकारज पाँच गुप्त कलाओं का न्यास करे ॥ ६९-७३ ॥

**कास्यहृद्गुह्यपादेषु न्यसेत् साधकसत्तमः ।**
**सत्त्वादीन् त्रिगुणान् न्यस्येत् तथैवात्र गुरूत्तमः ॥ ७४ ॥**

शिर, मुख, हृदय, गुह्य और पाद में साधक श्रेष्ठ गुरु सत्त्वादि तीन गुणों का न्यास करे (ॐ सं सत्वाय नमः इत्यादि मन्त्र हैं) ॥ ७४ ॥

**आत्मानमन्तरात्मानं परमात्मानमत्र तु ।**
**ज्ञानात्मानं प्रविन्यस्य न्यसेत् पीठमनु ततः ॥ ७५ ॥**

इसके बाद आत्मा, अन्तरात्मा तथा परमात्मा का न्यास कर ज्ञानात्मा का न्यास करे । अपने शरीर रूपी पीठ में पीठ मन्त्र का न्यास करे ॥ ७५ ॥

**एवं देहमये पीठे चिन्तयेदिष्टदेवताम् ।**
**मुद्राः प्रदर्श्य विधिवदर्घ्यस्थापनमाचरेत् ॥ ७६ ॥**

तदनन्तर अपने देहमय पीठ में इष्टदेवता का ध्यान करे और विधिवत् मुद्रा प्रदर्शित कर अर्घ स्थापन करे ॥ ७६ ॥

**अग्रे त्रिकोणमालिख्य षट्कोणं च ततो बहिः ।**
**वर्त्तुलं चतुरस्त्रं च मध्ये मायां विलिख्य च ॥ ७७ ॥**
**शङ्खमुद्रां प्रदर्श्याथ कोणदिक्ष्वङ्गपूजनम् ।**
**शङ्खमस्त्राम्बुना प्रोक्ष्य वामतो वह्निमण्डले ॥ ७८ ॥**
**साधारं स्थापयेद् विद्वान् बिन्दुच्युतसुधामयैः ।**
**तोयैः सुगन्धिपुष्पाद्यैः पूरयेत् तं यथाविधि ।**
**आधारं पावकं शङ्खं सूर्यं तोयं सुधाकरम् ॥ ७९ ॥**
**स्मरेद् वह्न्यर्कचन्द्राणां कलास्तास्तेष्वनुक्रमात् ।**

फिर अपने आगे त्रिकोण लिखकर, उसके बाहर षट्कोण निर्माण करे । फिर वृत्त, फिर चतुरस्त्र निर्माण कर, मध्य में माया (ह्रीं) लिखकर शङ्ख मुद्रा प्रदर्शित करे । सभी कोणों में तथा दिशाओं में अङ्गपूजन करे । फिर शङ्ख को अस्त्राभिमन्त्रित जल से प्रोक्षण कर वह्निमण्डल के बायें भाग में कुशादि आधार पर उसे स्थापित करे । फिर चन्द्र बिन्दु च्युत सुधामय जल से तथा सुगन्धित पुष्पादि से उसे यथाविधि पूर्ण करे । आधार में पावक का, उसके ऊपर स्थापित शङ्ख में सूर्य का और शङ्खस्थित जल में चन्द्रमा का ध्यान करे । फिर उन पर क्रमशः अग्नि, सूर्य एवं चन्द्रमा की कला का ध्यान करे ॥ ७७-८० ॥

**मूलमन्त्रं जपेत् स्पृष्ट्वा न्यसेत् तस्याङ्गमङ्गवित् ॥ ८० ॥**
**हृन्मन्त्रेणाभिसम्पूज्य हस्ताभ्यां छादयन्नपः ।**
**जपेद् विद्यां यथान्यायं देशिको देवताधिया ॥ ८१ ॥**
**अस्त्रमन्त्रेण संरक्ष्य कवचेनावगुण्ठ्य च ।**
**धेनुमुद्रां समासाद्य रोधयेत् तत् स्वमुद्रया ॥ ८२ ॥**
**दक्षिणे प्रोक्षणीपात्रमाधायाद्भिः प्रपूरयेत् ।**
**किञ्चिदर्घाम्बु संगृह्य प्रोक्षण्यम्भसि योजयेत् ॥ ८३ ॥**
**अर्घस्योत्तरतः कार्यं पाद्यमाचमनीयकम् ।**
**आत्मानं यागवस्तूनि मण्डलं प्रोक्षयेद् गुरुः ॥ ८४ ॥**
**प्रोक्षणीपात्रतोयेन मनुनान्यदपि क्रमात् ।**
**न्यासक्रमेण देहे स्वे धर्मादीन् पूजयेत् ततः ॥ ८५ ॥**

फिर अङ्गवेत्ता शङ्ख का स्पर्श करते हुये 'नमः' मन्त्र से पूजन कर, हाथ से शङ्ख के जल का अच्छादन करते हुये, मूल मन्त्र का जप करे । फिर आचार्य देवता-बुद्धि से यथाविधि मूलविद्या (भुवनेश्वरी मन्त्र) का जप करे । पुनः अस्त्र मन्त्र (अस्त्राय फट) से छोटिका (चुटकी) बजाकर उसमें जप देवता को रोके और कवच मन्त्र (कवचाय हुं) पढ़कर उसके चारों ओर जल से घेर देवे । धेनुमुद्रा

प्रदर्शित कर उसे अमृत बनावे। फिर सन्निरोधिनी मुद्रा से उसको सन्निरुद्ध करे। पुनः शङ्ख के दक्षिण भाग में ताम्रादि निर्मित प्रोक्षणी पात्र रखकर उसमें जल भरे। पुनः शङ्ख स्थित अर्घजल लेकर उस प्रोक्षणी पात्र के जल में मिला देवे। अर्घ पात्र के उत्तर में पाद्य, आचमनीय का पात्र रखे। तदनन्तर गुरु स्वयं प्रोक्षणी के जल से मन्त्र पढ़ते हुये अपने को और यज्ञ की समस्त वस्तुओं को तथा मण्डल को प्रोक्षित करे। तदनन्तर अपने शरीर में न्यास के अनुसार धर्मादिकों की पूजा करनी चाहिए ॥ ८०-८५ ॥

**पुष्पाद्यैः पीठमन्वन्तं तस्मिंश्च परदेवताम्।**
**पञ्चकृत्वः पुनः कुर्यात् पुष्पाञ्जलिमनन्यधीः ॥ ८६ ॥**
**उत्तमाङ्गहृदाधारपादसर्वांगके क्रमात्।**
**विना निवेद्यं गन्धाद्यैरुपचारैः समर्चयेत्।**
**गुरूपदिष्टविधिना शेषमन्यत् समाचरेत् ॥ ८७ ॥**

तदनन्तर उस स्वदेहमय पीठ में गन्धपुष्पादि से पीठ शक्ति से लेकर पीठमन्त्र देवता पर्यन्त पूजा कर, एकाग्रचित्त हो, अपने शरीर रूपी पीठ में पाँच बार पुष्पाञ्जलि प्रदान करे। आचार्य आसन से लेकर दीप पर्यन्त समस्त उपचारों से स्वदेहमय पीठ के शिर, हृदय, आधार और पाद पर्यन्त पूजा करे। किन्तु नैवेद्य बाहर न देवे। अन्य शेष कार्य जैसे मानस धूप, दीप, नैवेद्य, जप-निवेदन एवं ब्रह्मार्पण आदि (विसर्जन को छोड़कर) सारा कार्य अपने गुरूपदिष्ट परम्परा के अनुसार सम्पादन कर समाप्त करे। यह सारा कार्य प्रोक्षणी के जल से ही करना चाहिये ॥ ८६-८७ ॥

**अन्यत् शेषं = मानसौ धूपदीपौ, मन्त्रजपः, जपनिवेदनं, ब्रह्मार्पणं, क्षमापनादि विसर्जनवर्जम्। यच्च—**

**ध्यात्वा यजेच्चन्दनाद्यैर्मानसैर्धूपदीपकैः।**
**भोजनावसरे किञ्चिज्जपं कृत्त्वा निवेदयेत् ॥ ८८ ॥**
**सर्वमेतत् प्रयुञ्जीत प्रोक्षणीस्थेन वारिणा।**
**विसृज्य तोयं प्रोक्षण्याः पूरयेत् तां यथा पुरा ॥ ८९ ॥**
**ततस्तन्मण्डलं मन्त्री गन्धाद्यैः साधु पूजयेत्।**

**तन्मण्डलं = सर्वतोभद्रमण्डलम्। 'ॐ श्रीसर्वतोभद्रमण्डलाय नमः' इत्यनेन पूजयेत्।**

अब अशक्त होने पर कहते हैं—इष्ट देवता का ध्यान कर मानस चन्दनादि, धूप, दीप से पूजा करे। भोजन करते समय कुछ जप इष्ट देवता को निवेदित करे। यह सब प्रोक्षणी के जल से ही करे। तदनन्तर प्रोक्षणी का जल गिरा कर,

उसे पुनः जल से पूर्ण करे । फिर मन्त्रज्ञ उस मण्डल की गन्धादि उपचारों से उत्तम प्रकार से पूजा करे ॥ ८८-९० ॥

**शालीस्तु कर्णिकायां च निक्षिप्याढकसंमितान् ।**
**तण्डुलांश्च तदष्टांशान् कूर्चं चोपरि विन्यसेत् ॥ ९० ॥**

**सप्तविंशतिसाग्रदर्भमयं वेण्याकारेण ग्रन्थितं विष्टरापरपर्यायं कूर्चम् ।**

यहाँ मण्डल का अर्थ सर्वतोभद्रमण्डल है । उसी की 'ॐ श्रीसर्वतोभद्र मण्डलाय नमः' से पूजा करे । आढक प्रमाण (चार प्रस्थ का एक आढक) में शाली धान्य कर्णिकाओं में भर कर, कूर्च के ऊपर, उसका अष्टमांश तण्डुल स्थापित कर, उस पर कूर्च स्थापित करे ॥ ९० ॥

अग्रभागयुक्त २७ कुशों को वेणी के आकार में गूँथ देने से कूर्च कहा जाता है । वह विष्टर का पर्यायवाची है ।

**यच्चोक्तं डामरे—**

**सप्तविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषिता ।**
**विष्टरे सर्वयज्ञेषु लक्षणं परिकीर्तितम् ॥ ९१ ॥**

जैसा कि डामरतन्त्र में कहा है—सत्ताइस कुशाओं के अग्रभाग से भूषित ग्रन्थि वेणी कही जाती है जो कि विष्टर का ही पर्याय है । यह कूर्च का लक्षण कहा गया है ॥ ९१ ॥

**अत्र प्रथमं गुरुगणपतिपूजनं कुर्यात् ।**

**वायव्यात्रादीशपर्यन्तमर्चा**
**पीठस्योदक् गौरवीपंक्तिरादौ ।**
**पूज्योऽन्यत्राप्याम्बिकेयः कराब्जैः**
**पाशं दन्तं श्रृण्यभीतीर्दधानः ॥ ९२ ॥ इति ।**

उसमें सर्वप्रथम गुरु की और गणपति की पूजा करे । यथा पीठ के उत्तर भाग में वायव्य से लेकर ईशान पर्यन्त कोणों में प्रथम गुरु पङ्क्ति की पूजा करे । इसके अतिरिक्त स्थल में अम्बिका पुत्र गणेश की पूजा करे जो अपने कर-कमलों में पाश, दन्त, अङ्कुश और अभय धारण किये हुये हैं ॥ ९२ ॥

**अन्यत्रापि—**

**पीठस्योत्तरभागे गुरुपंक्तिं पूजयेच्च मन्त्रवित् ।**
**यावद् गिरीशकोणं वायोः कोणं समारभ्य ॥ ९३ ॥**
**अथ गुरुपरमगुरू द्वौ परमेष्ठिगुरुं तथाभ्यर्च्य ।**

**परमाचार्यगुरुं चादिसिद्धगुरुमथार्चयेत् ॥ ९४ ॥**

**अत्र परमाचार्यगुर्वनन्तरं परापरगुरुपरमसिद्धगुरुरपि ज्ञेयः ।**

अन्यत्र भी बतलाया गया है—मन्त्रवेत्ता पीठ के उत्तर भाग में वायुकोण से ईशानकोण पर्यन्त भाग में गुरु पङ्क्ति की पूजा करे । गुरु एवं परमगुरु दोनों की, पुनः परम गुरु की अर्चना कर, परमाचार्य गुरु तथा परापर गुरु एवं परम गुरु आदि सिद्ध गुरुओं की अर्चना करनी चाहिए ॥ ९३-९४ ॥

यहाँ परमाचार्य गुरु के बाद परापर गुरु तदनन्तर परमसिद्धगुरु समझना चाहिये ।

**तेषां ध्यानं मन्त्रतन्त्रप्रकाशे—**

**श्वेताम्बरधरा गौरा गुरवः पुस्तकान्विताः ।**
**व्याख्यानमुद्रया युक्ता ध्यायन्तो वा हरिं निजम् ।**
**ध्यातव्याः पूजनादौ च तद्ध्यानाद् ज्ञानमान् भवेत् ॥ ९५ ॥**

अब मन्त्रतन्त्रप्रकाश के अनुसार उन गुरुओं का ध्यान कहते हैं—उक्त सभी गुरु श्वेताम्बर धारण किये हुये पुस्तकान्वित गौर वर्ण के हैं, जो व्याख्यान मुद्रा से युक्त हैं, अथवा अपने इष्ट देवता का ध्यान कर रहे हैं । पूजा के आदि में उनका ध्यान करना चाहिये जिससे ज्ञान प्राप्त हो ॥ ९५ ॥

**शाक्ते विशेषस्तन्त्रान्तरे—**

**ते रक्तमाल्याम्बरगन्धभूषिताः**
**स्वलंकृताः पङ्कजविष्टरस्थाः ।**
**सर्वे च सालम्बनयोगनिष्ठाः**
**प्राप्ताखिलैश्वर्यगुणाष्टकार्याः ॥ ९६ ॥**

**अत्र श्रीगुरुभ्यो नमः इत्यादिप्रयोगः ।**

शाक्त सम्प्रदाय में एवं तन्त्रान्तर में विशेष कथन इस प्रकार है—ये सभी गुरुगण रक्त माल्य एवं रक्ताम्बर धारण किये हुये चन्दनादि गन्धों से विभूषित हैं । ये अलङ्कार धारण किये हुये हैं, कमलासन पर आसीन हैं और सभी सालम्बयोग में निष्ठा रखने वाले तथा समस्त ऐश्वर्य प्राप्त किये हुये हैं और आठ गुणों का कार्य करते हैं ॥ ९६ ॥

**आधारशक्तिमारभ्य पीठमन्त्रमयं यजेत् ।**
**अधः कूर्मशिलारूढां शरच्चन्द्रनिभप्रभाम् ॥ ९७ ॥**
**आधारशक्तिं प्रयजेत् पङ्कजद्वयधारिणीम् ।**
**मूर्ध्नि तस्याः समासीनं कूर्मं नीलाभमर्चयेत् ॥ ९८ ॥**

**ऊर्ध्वं ब्रह्मशिलासीनमनन्तं कुन्दसन्निभम् ।**
**यजेच्चक्रधरं मूर्ध्नि धारयन्तं वसुन्धराम् ॥ ९९ ॥**

पूर्वोक्त कूर्च (द्र. ३.९०) पर अक्षत रख कर उसके ऊपर आधार-शक्ति से आरम्भ कर मन्त्रमय पीठ की पूजा करे । आसन के नीचे आधारभूत कूर्मशिला पर आरूढ शरच्चन्द्र की चन्द्रिका के समान शोभा वाली, दोनों हाथों में दो कमल धारण करने वाली, आधार-शक्ति का पूजन करे । उस आधार शक्ति के ऊपर पूर्व कथित कूर्मशिला से भिन्न नील वर्ण वाले कूर्म की पूजा करे । उसके ऊपर ब्रह्म शिला पर आसीन कुन्द के समान गौर वर्ण वाले अनन्त नामक आसन की 'अनन्ताय नमः' मन्त्र से पूजा करे ॥ ९७-९९ ॥

**तमालश्यामलां तत्र नीलेन्दीवरधारिणीम् ।**
**अभ्यर्चयेद् वसुमतीं स्फुरत्सागरमेखलाम् ॥ १०० ॥**
**तस्यां रत्नमयं द्वीपं तस्मिंश्च मणिमण्डपम् ।**
**यजेत् कल्पतरूंस्तस्मिन् साधकाभीष्टसिद्धिदान् ॥ १०१ ॥**
**अधस्तात्पूजयेत् तेषां वेदिकां मण्डपोज्ज्वलाम् ।**
**पश्चादभ्यर्चयेत् तस्यां पीठं धर्मादिभिः पुनः ॥ १०२ ॥**
**रक्तश्यामहरिद्रेन्द्रनीलाभान् पादरूपिणः ।**
**वृषकेसरिभूतेभरूपान् धर्मादिकान् यजेत् ॥ १०३ ॥**

उस अनन्त के शिर पर तमाल श्यामला, नीलेन्दीवर धारिणी वसुन्धरा को धारण करने वाले, चक्रधारी, वाराहरूप धारण करने वाले, महाविष्णु का 'वराह-रूप धारिणे नमः' इस मन्त्र से पूजन करे । फिर सागर रूप मेखला वाली वसुमती की 'वसुमत्यै नमः' इस मन्त्र से और तदनन्तर 'समुद्राय नमः' इस मन्त्र से सागर का पूजन करे । तदनन्तर पृथ्वी में रहने वाले रत्नमय सातों द्वीपों की पूजा करे । फिर मणिमय मण्डप की पूजा करे । पुनः-पुनः उसी मणिमण्डप में साधकों के अभीष्ट को पूर्ण करने वाले कल्पवृक्षों की पूजा करे । उस कल्पवृक्ष के नीचे मण्डप के समान उज्ज्वल वर्ण वाली वेदिका की 'वेदिकायै नमः' इस मन्त्र से पूजा करे । तदनन्तर धर्मादि सहित पीठ का पूजन करे । इसमें धर्म रक्त वर्ण का है, ज्ञान श्यामवर्ण का है और वैराग्य हरिद्रा वर्ण का पीत है तथा ऐश्वर्य इन्द्रनील वर्ण का है । ये पीठ के पाद हैं । इसमें धर्म का रूप वृष है, ज्ञान का रूप सिंह, वैराग्य का रूप भूत एवं ऐश्वर्य का रूप हाथी के समान कहा गया है, इनका यजन करे ॥ १००-१०३ ॥

**वृषेति । वृषः प्रसिद्धः । केसरी सिंहः । भूतो देवयोनिः । तत्स्वरूपञ्च—**

**रक्तवस्त्रधराः कृष्णनखदंष्ट्राः सुदंष्ट्रिकाः ।**

कर्त्री खट्वाङ्गहस्ताश्च राक्षसा घोररूपिणः ।
भूतास्तथैव दीनास्या......................॥ १०४ ॥

पीठ के चारो कोनों के अधर्मादि पाद का स्वरूप—ये सभी रक्त वस्त्र धारण किये हुये, काले नख एवं काले दाँत वाले हैं । सभी अत्यन्त चोख कैंची (चाकू) धारण करने वाले, हाथ में खट्वाङ्ग लिये हुये तथा भयानक स्वरूप वाले राक्षस हैं। इसी प्रकार का स्वरूप भूतों (= देवयोनियाँ) का भी है । किन्तु उनका मुख अत्यन्त दीन है ॥ १०४ ॥

अन्यत्रापि—

धर्मं रक्तं वृषरूपं च सिंह
ज्ञानं श्यामं दुष्टभूतं च पीतम् ।
वैराग्यं स्यात् गजरूपासिताङ्गम्
ऐश्वर्यं च क्रमतः पीठपादाः ।
पीठस्येषां स्युरधर्मादयो ये
चत्वारस्ते ह्युदिताकाररम्याः ॥ १०५ ॥

अन्यत्र भी धर्मादि का स्वरूप कहा गया है—धर्म का वर्ण रक्त है, उसका स्वरूप वृष के समान है, ज्ञान सिंह है, उसका वर्ण श्याम है, वैराग्य महादुष्ट भूत है, जिसका वर्ण पीत है । ऐश्वर्य का स्वरूप असित है, उसका स्वरूप हाथी के समान है इस प्रकार पीठ के चारो पाद कहे गये ॥ १०५ ॥

गात्रेषु पूजयेत् तांस्तु नञ्पूर्वानुक्तलक्षणान् ।
आग्नेयादिषु कोणेषु दिक्षु चाथाम्बुजं यजेत् ॥ १०६ ॥
आनन्दकन्दं प्रथमं संविन्नालमनन्तरम् ।
सर्वतत्त्वात्मकं पद्ममभ्यर्च्य तदनन्तरम् ।
मन्त्री प्रकृतिपत्राणि विकारमयकेसरान् ॥ १०७ ॥
पञ्चाशद्वर्णबीजाढ्यां कर्णिकां पूजयेत् ततः ।
कलाभिः पूजयेत् सार्धं तस्यां सूर्येन्दुपावकान्।
प्रणवस्य त्रिभिर्वर्णैरथ सत्त्वादिकान् गुणान् ॥ १०८ ॥

एतेन तत् तन्मण्डलाधिष्ठातृदेवताः ब्रह्मविष्णवीशीस्तत् तन्मण्डले पूजनीयाः ।
यदुक्तम्—

ब्रह्मविष्णवीश्वरास्त्वर्च्याः क्रमाद् वै मण्डलत्रये।

इस पीठ के जो चार (नञ् पूर्वक) अधर्म, अज्ञान, अवैराग्य और अनैश्वर्य हैं जिनका रूप ऊपर (३.१०४) में कहा जा चुका है उनका पूजन पीठ के गात्र में

करे । तदनन्तर आग्नेयादि कोणों में तथा दिशाओं में कमलों की पूजा करे । प्रथम आनन्द रूप कन्द की, तदनन्तर संवित् (ज्ञान) स्वरूप (कमल) नाल की पूजा करे । इस प्रकार सर्वतत्त्वात्मक कमल की पूजा कर, तदनन्तर मन्त्रज्ञ साधक प्रकृतिमय पत्रों की, विकारमय केशरों की और पचास वर्ण बीज वाली कर्णिका की पूजा करे । उस कर्णिका में कलाओं के साथ सूर्य, चन्द्रमा और अग्नि की पूजा करे । फिर उसी कर्णिका में प्रणव के आकार स्वरूप अकार, उकार, मकार तीन वर्णों की, उसके साथ सात्त्विकादि तीनों गुणों की पूजा करे । इससे यह सिद्ध हुआ कि तत्तन्मण्डलाधिष्ठातृ देवता ब्रह्मा, विष्णु और ईश्वर की उन तीनों मण्डलों में पूजा करे । जैसा कि कहा भी गया है—क्रमश: तीनों मण्डलों में ब्रह्मा, विष्णु और ईश्वर की पूजा करे ॥ १०६-१०८ ॥

**अन्यच्च—**

**सौरे बिम्बे चतुरास्य: किरीटी**
**हंसे सौधं कलशं चाक्षमालाम् ।**
**ब्रह्मा बिभ्रद् वरदं चाभयाख्यं**
**हस्तैर्ध्येय: सितवस्त्रश्चतुर्भि: ॥ १०९ ॥**

अन्य तन्त्रों में भी कहा गया है—सौर बिम्ब में चतुर्मुख ब्रह्मदेव, जो मुकुट धारण किये हुये, हंस पर सवार, अमृत कलश, अक्षमाला, वर और अभय अपने चारों हाथों में धारण किये हुये हैं; उनकी पूजा करे ॥ १०९ ॥

**सौम्ये बिम्बे गरुडे मेघनील-**
**श्चक्रं शङ्खं सद्गदाब्जं दधान: ।**
**हारी माली कटकी सत्किरीटी**
**विष्णु: पीतं वसनं कौस्तुभं च ॥ ११० ॥**
**अग्नेर्बिम्बे वृषभे चन्द्रमौलि-**
**श्वेतो रुद्रो दशबाहुस्त्रिनेत्र: ।**
**टङ्कैणाग्नित्रिशिखोद्यत्कपाल-**
**मुद्राक्षस्त्रक्वरदाभीतिपाणि: ॥ १११ ॥**
**आत्मानमन्तरात्मानं परमात्मानमर्चयेत् ।**
**ज्ञानात्मानञ्च विधिवत् पीठमन्त्रावसानकम् ॥ ११२ ॥**
**पीठशक्ती: केसरेषु मध्ये च सवराभया: । इति ।**

सौम्य मण्डल में, जो गरुड पर आसीन, मेघ के समान नील वर्ण वाले, अपने हाथों में शङ्ख, चक्र, गदा और कमल धारण किये हुये हैं, जो हार, माला, कटक तथा किरीट धारण किये हुये हैं, पीताम्बर तथा कौस्तुभ धारण किये हुये

हैं, उन विष्णु की पूजा करे । अग्नि मण्डल में, वृषभ पर आसीन, मस्तक पर चन्द्रमा धारण किये हुये, श्वेत वर्ण से युक्त, त्रिनेत्र, दश बाहुओं में १. कङ्कण, २. अग्नि, ३. डमरु, ४. त्रिशिख, ५. त्रिशूल, ६. कपाल मुद्रा, ७. परशु, ८. अक्षमाला, ९. वर और १०. अभय धारण किये हुये हैं, उन शिव की पूजा करे । तदनन्तर आत्मा, फिर अन्तरात्मा, फिर परमात्मा और ज्ञानात्मा की विधिवत् पूजा करे । केशरों में पीठ शक्तियों की और मध्य में वर सहित अभय की पूजा करनी चाहिए ॥ ११०-११३ ॥

**महाकपिलपञ्चरात्रे कलशशब्दव्युत्पत्तिः प्रमाणं च—**

**हेमादिरचितं कुम्भमस्त्राद्भिः क्षालितान्तरम् ॥ ११३ ॥**
**कलां कलां गृहीत्वा वै देवानां विश्वकर्मणा ।**
**निर्मितोऽयं सुरैर्यस्मात् कलशस्तेन चोच्यते ॥ ११४ ॥**
**पञ्चाशदङ्गुलं व्यास उत्सेधः षोडशाङ्गुलः ।**
**कलशानां प्रमाणं तु मुखमष्टाङ्गुलं भवेत् ॥ ११५ ॥**
**सौवर्णं राजतं ताम्रं मार्त्तिक्यं वा यथोदितम् ।**
**क्षालयेदस्त्रमन्त्रेण कुम्भं सम्यक् सुरेश्वरि ॥११६॥ इति ।**
**चन्दनागरुकर्पूरधूपितं शोभनाकृतिम् ।**
**आवेष्टिताङ्गं नीरन्ध्रं तन्तुना त्रिगुणात्मना ॥ ११७ ॥**
**अर्चितं गन्धपुष्पाद्यैः कूर्चाक्षतसमन्वितम् ।**
**नवरत्नोदरं मन्त्री स्थापयेत् तारमुच्चरन् ॥ ११८ ॥**

अब महाकपिलपाञ्चरात्र में कलश स्थापन का प्रकार और उसका प्रमाण व्युत्पत्तिपूर्वक कहते हैं—इस प्रकार पूजा समाप्त करने के बाद सुवर्णादि निर्मित देखने में मनोहर कुम्भ का अस्त्र (अस्त्राय फट्) मन्त्र से प्रक्षालन करे । तदनन्तर चन्दन, अगरु तथा कपूर का धूप देकर उसे सुवासित करे । यतः विश्वकर्मा ने देवताओं की एक-एक कला ग्रहण कर इसकी रचना की है, इसलिये इसे 'कलश' कहा जाता है । इस कलश का व्यास ५० अङ्गुल, ऊँचाई सोलह अङ्गुल, मुख आठ अङ्गुल होना चाहिये । वह कलश का प्रमाण कहा गया है । यह कलश सुवर्ण निर्मित अथवा रजत निर्मित मनोहर अथवा ताम्र निर्मित अथवा मृत्तिका निर्मित होना चाहिये । हे सुरेश्वरि! इस प्रकार के शोभन आकृति वाले कलश को अस्त्र मन्त्र से प्रक्षालन करे । चन्दन, अगरु एवं कपूर के धूप से सुवासित करे । पुनः छिद्ररहित इस कलश को त्रिगुणित सूत्र से आवेष्टित करे । वस्त्र से आच्छादित कर, गन्ध-पुष्पादि से पूजा कर उसे कूर्च (सत्ताइस कुशों के अग्रभाग से युक्त वेणी) से समन्वित करे । फिर 'ॐ' मन्त्र को पढ़कर उसे नव रत्नों से युक्त कर स्थापित करे ॥ ११३-११८ ॥

**नवरत्नानि यथा—**

**मुक्तामाणिक्यवैडूर्यगोमेदान् वज्रविद्रुमौ ।**
**पुष्यरागं मरकतं नीलं चेति यथाक्रमात् ॥ ११९ ॥**
**उक्तानि नवरत्नानि तेषु कुम्भेषु निःक्षिपेत् । इति ।**
**ऐक्यं सङ्कल्प्य कुम्भस्य पीठस्य च विधानवित्।**
**क्षीरद्रुमकषायेण पालाशत्वग्भवेन वा ॥ १२० ॥**

मुक्ता, मणिक्य, वैडूर्य, गोमेद, वज्र, विद्रुम, पुष्पराग, मरकत और नीलमणि —ये यथाक्रम नवरत्न हैं । ऊपर कहे गये इन नव रत्नों को कुम्भ में डाल कर फिर विधानवेत्ता आचार्य पीठ और कुम्भ में एकता की भावना करे । फिर उसमें क्षीरद्रुम का कषाय, अथवा पलाशत्वक् का कषाय डाल देवे । आयुर्वेद की रीति से क्वाथ का चतुर्थांश शेष 'कषाय' कहा जाता है ॥ ११९-१२० ॥

**अत्र केचित् पञ्चाशदौषधिक्वाथमिच्छन्ति । तदापादनाक्षमस्तु क्षीरद्रुमकषायेण । अश्वत्थोदुम्बरप्लक्षवटत्वक्कषायेणेत्यर्थः । आयुर्वेदोक्तरीत्या चतुर्थांशशेषः कषायो ग्राह्यः ।**

**तीर्थोदकैर्वा कर्पूरगन्धपुष्पसुवासितैः ।**
**आत्माभेदेन विधिवन्मातृकां प्रतिलोमतः ॥ १२१ ॥**
**जपन् मूलमनुं तद्वत् पूरयेद् देवताधिया ।**
**शङ्खे क्वाथाम्बुसम्पूर्णे गन्धाष्टकमभीष्टदम् ॥ १२२ ॥**
**विलोड्य पूजयेत् तस्मिन्नावाह्य सकलाः कलाः ।**
**दश वन्हेः कलाः पूर्वं द्वादश द्वादशात्मनः ।**
**कलाः षोडश सोमस्य पश्चात् पञ्चाशतं कलाः ॥ १२३ ॥**

यहाँ कोई विद्वान् पचास औषधियों का क्वाथ कहते हैं । किन्तु उसकी प्राप्ति अशक्य होने पर क्षीरद्रुम का क्वाथ ही बनावे (अश्वत्थोदुम्बरप्लक्षवट का कषाय) आयुर्वेद की रीति से चतुर्थांश शेष क्वाथ ग्राह्य है ।

उसके भी अभाव में तीर्थोदक, जो कपूर, गन्ध और पुष्पों से सुवासित हो, उसे ही विधिपूर्वक आत्मा से अभिन्न एवं प्रतिलोम क्रम से मातृकाओं का जप करते हुये और मूल मन्त्र का जप करते हुए देव बुद्धि से कलश को पूर्ण करे । फिर कलश भरने से शेष उस क्वाथ जल को शङ्ख में डालकर, उसमें गन्धाष्टक छोड़कर, विलोडन (मन्थन) करे । तदनन्तर 'गन्धद्वाराम' इस मन्त्र को पढ़ते हुये उसमें दश वह्नि की कला, बारह सूर्य की कला, सोलह चन्द्रमा की कला पश्चात् पञ्चाशत् कलाओं का पूजन करे ॥ १२१-१२३ ॥

**अकारजकलानन्तरं हंस इति । उकारजकलानन्तरं प्रतद्विष्णुरिति । मकार-**

जानन्तरं त्र्यम्बकमिति । बिन्दुजानन्तरं तत्पदादिकम् । नादजानन्तरं विष्णुर्योनिमिति । एवं प्रथममष्टात्रिंशत् कलाः, तत एकपञ्चाशत् कलाः । पश्चात् पञ्चगुप्तकलाश्च शङ्ख-जले पूजनीयाः । ताश्चेच्छाज्ञानक्रियाः चिदात्मानन्दात्मिकाः । एवं चतुर्नवतिसंख्याः ।

यथोक्तं प्रपञ्चसारे—

प्रथमं प्रकृतेर्हंसः प्रतद्विष्णुरनन्तरम् ।
त्रियम्बकस्तृतीयः स्याच्चतुर्थस्तत्पदादिकः ॥ १२४ ॥
विष्णुर्योनिमितीत्यादि पञ्चमः कल्प्यतां मनुः ।
चतुर्नवतिमन्त्रात्मदेवतावाह्य पूजयेत् ॥ १२५ ॥

जैसा कि प्रपञ्चसारतन्त्र में कहा गया है—अकारज कलानन्तर हंस इस मन्त्र से, उकारज कलानन्तर 'प्र तद्विष्णु' इस मन्त्र से, मकारज कलानन्तर 'त्रियम्बक' मन्त्र से, विन्दुज कलानन्तर 'तत्पदादिक' मन्त्र से, नादज कलानन्तर 'विष्णुयोनि' मन्त्र से, इस प्रकार प्रथम ३८ कला, इसके बाद ५१ प्रणव की कला, इसके बाद पाँच गुप्त कला इनका शङ्ख जल में पूजन करे । फिर इच्छा, ज्ञान, क्रियात्मक चिदात्मानन्दात्मिका इस प्रकार कुल चौरानवे कलाओं की आवाहन कर पूजा होती है (यथा ३८+५१+५ = ९४) ॥ १२४-१२५ ॥

अत्र याः पञ्च सम्प्रोक्ता ऋचस्तारस्य पञ्चभिः ।
कलाप्रभेदैश्च मिथः पूज्यन्ते ताः पृथक् पृथक् ॥ १२६ ॥
जपित्वा प्रतिलोमेन मूलमन्त्रं च मन्त्रवित् ।
समाहितेन मनसा ध्यायन् मन्त्रस्य देवताम् ।
प्राणप्रतिष्ठां कुर्वीत तत्र तत्र विचक्षणः ॥ १२७ ॥

यहाँ जो प्रणव के साथ पाँच ऋचायें कही गई हैं, कलाप्रभेद होने के कारण उनका पृथक्-पृथक् पूजन करे । तदनन्तर मन्त्रवेत्ता प्रतिलोम क्रम से मूलमन्त्र का एकाग्र बुद्धि से जप करते हुये, मन्त्र के देवता का ध्यान करते हुये, तत्र तत्र प्राण प्रतिष्ठा करे ॥ १२६-१२७ ॥

प्राणप्रतिष्ठाव्युत्पत्तिस्तु महाकपिलपञ्चरात्रे—

प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्वात्तु तिष्ठतेः ।
बह्वर्थत्वान् निपातानां संस्कारादौ प्रतेः स्थितिः ॥ १२८ ॥
अर्थस्तदयमेतस्य गीयते शाब्दिकैर्जनैः ।
विशेषसन्निधिर्या तु क्रियते व्यापकस्य हि ।
सन्मूर्तौ भावनामन्त्रैः प्रतिष्ठा साऽभिधीयते॥ १२९ ॥ इति
कलात्मकं शङ्खसंस्थं क्वाथं कुम्भे विनिःक्षिपेत् ॥ १३० ॥

प्राणप्रतिष्ठा शब्द की व्युत्पत्ति महाकपिलपञ्चरात्र में भी बतलाया गया है—

प्रति पूर्वक स्था धातु से घञ् प्रत्यय करने पर प्रतिष्ठा शब्द सिद्ध होता है । प्रति निपात है और निपात बह्वर्थक होते हैं । इसलिये उसका अर्थ होगा संस्कारपूर्वक 'ष्ठा' का अर्थ 'स्थिति' अर्थात् मन्त्रादि उपचारपूर्वक स्थापित करना, यही अर्थ शाब्दिकों ने कहा है । 'उत्तम मूर्त्ति में भावनात्मक मन्त्रों से सर्वव्यापक परमात्मा का विशेष सन्निधान के लिये स्थापित करना' उसका यही निष्कर्ष है । एक प्रतिष्ठा के बाद शङ्खस्थ कलात्मक क्वाथ कुम्भ में डाल देवे ॥ १२८-१३० ॥

प्राणप्रतिष्ठामन्त्रोद्धारः

**पाशादित्र्यक्षरात्मान्ते स्यादमुष्यपदं ततः ।**
**क्रमात् प्राणा इह प्राणास्तथा जीव इह स्थितः ॥ १३१ ॥**
**अमुष्य सर्वेन्द्रियाणि भूयोऽमुष्यपदं वदेत् ।**
**वाङ्मनोनयनश्रोत्रघ्राणप्राणपदान्यथ ॥ १३२ ॥**
**पश्चादिहागत्य सुखं चिरं तिष्ठतु ठद्वयम् ।**
**अयं प्राणमनुः प्रोक्तः सर्वजीवप्रदायकः ॥ १३३ ॥**

पाशादि तीन अक्षर (क्रों) उसके अन्त में आत्माक्षर यं रं लं वं शं षं सं हौं इसके अनन्तर 'अयुष्य' पद, तदनन्तर 'प्राणा इह प्राणा', इसके बाद 'जीव इह स्थित:', तदनन्तर 'अमुष्य सर्वेन्द्रियाणि', तदनन्तर पुन: 'अमुष्य' पद, पुन: 'वाङ मन्तेनयन श्रोत्र घ्राण प्राण पद', इसके पश्चात् 'इहागत्य सुखं चिरं तिष्ठन्तु' पद, तदनन्तर 'स्वाहा' पद का उच्चारण करे । यह प्राणप्रतिष्ठा मन्त्र है जो सर्वत्र जीवन प्रदान करने वाला है ॥ १३१-१३३ ॥

**अत्र प्रयोगस्तु—'धूम्रार्चिराहूता भव' इत्यावाहनाद्यष्टमुद्राः प्रदर्श्य 'यं धूम्रार्चिषे नम' इति सम्पूज्य प्राणमन्त्रेण अमुष्यपदस्थाने षष्ठ्यन्तं 'धूम्रार्चिः' पदं प्रक्षिप्य प्रतिष्ठां कुर्यात् । एवं सर्वास्वपि कलासु ।**

**अथवा—दशानामप्यग्निकलानां एकदैवावाहनादि कृत्त्वा प्रत्येकं पूज्य प्राणप्रतिष्ठामन्त्रे अमुष्यपदस्थाने सर्वासां षष्ठ्यन्तं नामोच्चार्य प्राणप्रतिष्ठां कुर्यादित्यर्थः ।**

**पश्चादश्वत्थपनसचूतकोमलपल्लवैः ।**
**इन्द्रवल्लीसमावद्धैः सुरद्रुमधिया गुरुः ॥ १३४ ॥**
**कुम्भवक्त्रं पिधायास्मिन् चषकं सफलाक्षतम् ।**
**संस्थापयेत् फलधिया विधिवत् कल्पशाखिनाम्॥ १३५ ॥**

इसके प्रयोग का विधान इस प्रकार है—जैसे प्रथम कला धूम्रार्चि है, उसकी प्राणप्रतिष्ठा करना है । अत: 'धूमार्चिराहूता भव' से आवाहनादि अष्टमुद्रा प्रदर्शित कर अमुष्य के स्थान पर 'यं धूम्रार्चिषे नम:' से पूजन करे । फिर उपर्युक्त प्राण मन्त्र से धूम्रार्चि को षष्ठ्यन्त प्रयोग करे । इसी प्रकार सभी ९४ कलाओं की प्राणप्रतिष्ठा करे ।

अथवा अग्नि की दशो कलाओं का एक साथ आवाहनादि कर, प्रत्येक की पूजा कर, प्रतिष्ठामन्त्र में सर्वत्र 'अमुष्य' पद के स्थान में षष्ठ्यन्त तत्तन्नामों का उच्चारण करते हुये प्राणप्रतिष्ठा करे ।

इस प्रकार प्राणप्रतिष्ठा कर लेने के पश्चात् स्वयं गुरु अश्वत्थ, पनस और आम के पल्लवों से जो इन्द्रनील से बँधे हों, उसमें कल्पवृक्ष की भावना करते हुये कुम्भ के मुख को ढक देवे । तदनन्तर फल सहित अक्षत से पूर्ण पात्र द्वारा उस कलश का मुख ढक देवे ॥ १३४-१३५ ॥

**ततः कुम्भं निर्मलेन क्षौमयुग्मेन वेष्टयेत् ।**
**मूलेन मूर्तिमिष्ट्वा तां छायायां कल्पशाखिनाम् ॥ १३६ ॥**
**आवाह्य पूजयेत् तस्यां मन्त्री मन्त्रस्य देवताम् ।**

इस प्रकार अपने फल की सिद्धि के लिये कल्पवृक्ष की भावना करते हुये आचार्य स्वयं मूल मन्त्र पढ़कर कलश स्थापन करे । फिर निर्मल अतसी निर्मित दो वस्त्रों से कलश को ढक देवे । इस प्रकार निष्पन्न हुये कल्पवृक्ष की छाया में मूल मन्त्र को पढ़कर मूर्त्ति में देवता का आवाहन करे । फिर आचार्य उस मन्त्र देवता का पूजन करे ॥ १३६-१३७ ॥

**मूलमन्त्रं समुच्चार्य सुषुम्णा वर्त्मना सुधीः ॥ १३७ ॥**
**आनीय तेजः स्वस्थानान् नासिकारन्ध्रनिर्गतम् ।**
**करस्थमातृकाम्भोजे चैतन्यं पुष्पसञ्चये ॥ १३८ ॥**

अब इष्टदेवता के आवाहन का प्रकार कहते हैं—आचार्य मूल मन्त्र का उच्चारण करते हुये सुषुम्णा मार्ग से वायु द्वारा हृदय स्थान स्थित तेज को उठाकर, नासिका के छिद्रों से निकलने वाले तेज को ब्रह्मरन्ध्र में लाकर, उसके द्वारा अपने हाथ में स्थित मातृका कमल रूप सञ्चित पुष्प में चैतन्य संयुक्त कर, ब्रह्मरन्ध्र से मूर्ति में इष्ट देवता का आवाहन करे ॥ १३७-१३८ ॥

**संयोज्य ब्रह्मरन्ध्रेण मूर्त्यामावाहयेत् सुधीः ।**
**संस्थापनं सन्निधानं सन्निरोधमनन्तरम् ॥ १३९ ॥**
**सकलीकरणं पश्चाद् विदध्यादवगुण्ठनम् ।**
**अमृतीकरणं कृत्त्वा कुर्वीत परमीकृतिम् ॥ १४० ॥**
**क्रमादेतानि कुर्वीत स्वमुद्राभिः समाहितः ।**

तदनन्तर उस मूर्त्ति में आवाहन के बाद इष्ट देवता का संस्थापन, सन्निधान और सन्निरोध करे । अनन्तर सकलीकरण और अवगुण्ठन करे । तदनन्तर अमृतीकरण और परमीकरण करे । इतनी क्रिया समाहित चित्त होकर तत्तन्मुद्राओं से करे ॥ १३९-१४१ ॥

**अथोपचारान् कुर्वीत मन्त्रवित् स्वागतादिना ।**
**स्वागतं कुशलप्रश्नं निगदेदग्रतो गुरुः ॥ १४१ ॥**
**पाद्यं पादाम्बुजे दद्याद् देवस्य हृदयाणुना ।**
**एतत् श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम् ॥ १४२ ॥**
**सुधामन्त्रेण वदने दद्यादाचमनीयकम् ।**
**जातीलवङ्गकक्कोलैस्तदुक्तं तन्त्रवेदिभिः ॥ १४३ ॥**
**अर्घं दिशेत् ततो मूर्ध्नि शिरोमन्त्रेण देशिकः ।**
**गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ॥ १४४ ॥**
**सदूर्वैं सर्वदेवानामेतदर्घ्यमुदीरितम् ।**
**सुधाणुना ततः कुर्यान्मधुपर्कं मुखाम्बुजे ॥ १४५ ॥**

आवाहन से लेकर अमृतीकरण पर्यन्त क्रिया कर लेने के पश्चात् गुरु षोडशोपचारों द्वारा इस प्रकार पूजन करे—सर्वप्रथम स्वागत (कुशल प्रश्न) पूछे । तदनन्तर 'देवाय नमः' इस मन्त्र से इष्ट देवता के चरण कमलों में श्यामाक, दूर्वा, कमल एवं विष्णुक्रान्ता मिश्रित पाद्य समर्पित करे । सुधा (वं) मन्त्र पढ़कर मुख में आचमन देना चाहिए । यह आचमन का जल जाती, लवङ्ग और कङ्कोल से मिश्रित होना चाहिये—ऐसा तत्त्ववेत्ताओं ने कहा है । फिर आचार्य 'अमुक देवाय देव्यै वा नमः' मन्त्र से इष्टदेवता के शिर पर गन्ध, पुष्प, अक्षत, यव, कुशाग्र, तिल, श्वेत सर्षप तथा दूर्वा से युक्त अर्घ देना चाहिये, जो सभी देवताओं के लिये प्रशस्त कहा गया है । तदनन्तर सुधा (वं) मन्त्र से मुख कमल में मधुपर्क प्रदान करना चाहिये ॥ १४१-१४५ ॥

**आज्यं दधिमधून्मिश्रमेतदुक्तं मनीषिभिः ।**
**तेनैव मनुना कुर्याददि्भराचमनीयकम् ॥ १४६ ॥**

**अन्यत्रापि विशेषः—अर्घ्यं त्रिर्ददाति, पाद्यं त्रिर्ददाति, आचमनं षट् ददाति ।**

मनीषी लोगों ने घी, दधि और मधु मिश्रित पदार्थ को मधुपर्क कहा है । पुनः 'देवाय नमः मधुपर्कं समर्पयामि' मन्त्र से मधुपर्क देकर आचमन करावे ॥ १४६ ॥

अन्यत्र कहा भी गया है अर्घ तीन बार, पाद्य तीन बार और आचमन छह बार देना चाहिए ।

**महाकपिलपञ्चरात्रे—**

**आगताय तथार्चायां स्नातुमोगमनाय च ।**
**पूजातो गन्तुकामस्य दद्यादर्घ्यर्सं विचक्षणः ॥ १४७ ॥**

महाकपिलपञ्चरात्र में कहा गया है—आने पर, अर्चा में, स्नान हेतु, आगमन करने पर, पुनः पूजा से जाते समय बुद्धिमान् पुरुष अर्घ प्रदान करे ॥ १४७ ॥

**आगते स्नानकाले च नैवेद्योपक्रमे तथा ।**
**पाद्यस्यापि समुद्दिष्टः समयस्त्रिविधो बुधैः ॥ १४८ ॥**
**पाद्ये च मधुपर्के च स्नाने वस्त्रोपवीतयोः ।**
**भोजने चाचमनं देयं षट्सु स्थानेषु देशिकः ॥ १४९ ॥**

आने पर स्नान के समय नैवेद्य के उपक्रम काल में बुद्धिमानों ने इन समयों में पाद्य देने का उपदेश दिया है । पाद्य में, मधुपर्क में, स्नान, वस्त्र और उपवीत तथा भोजन में—इन कुल छह कार्यों में आचमन का विधान मन्त्रज्ञ आचार्यों ने बतलाया है ॥ १४८-१४९ ॥

**अत्रार्घ्यादिषु प्रोक्तं तत्तद्द्रव्याभावे केवलं तण्डुलानेव क्षिपेत् ।**

**तच्च मन्त्रतन्त्रप्रकाशे—**

**द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः ।**

यहाँ अर्घ्यादि में जो-जो पदार्थ कहा गया है, उसके अभाव में केवल अक्षत ही डाले । जैसा कि मन्त्रतन्त्रप्रकाश में कहा गया है—पाद्यादि में तत्तद् द्रव्यों के अभाव में, उसके समान केवल प्रक्षालित तण्डुल डाले ॥ १५० ॥

**अन्यत्रापि—**

**तण्डुलान् प्रक्षिपेत् तेषु द्रव्यालाभेषु तत्समान् ॥१५०॥ इति ।**
**गन्धाद्भिः कारयेत् स्नानं वाससी परिधापयेत् ।**
**दद्याद् दिव्योपवीतं च हाराद्याभरणैः सह ॥ १५१ ॥**

अन्यत्र भी कहा गया है—तत्तद् द्रव्यों के अभाव में उनके समान मात्र चावल का प्रक्षेप करना चाहिए । फिर सुगन्ध पदार्थ मिश्रित जल से इष्ट देवता को स्नान करावे । धौतवस्त्र तथा उत्तरीय प्रदान करे और हारादि आभूषणों सहित यज्ञोपवीत पहनावे ॥ १५०-१५१ ॥

**न्यासक्रमेण मनुना पुटितैर्मातृकाक्षरैः ।**
**अभ्यर्च्य देवं गन्धाद्यैरङ्गादीन् पूजयेत् ततः ॥ १५२ ॥**

उपचार से पूर्व जो इष्टदेवता का न्यास कहा गया है मूल मन्त्र से सम्पुटित कर एक-एक मातृका वर्णों द्वारा इष्टदेवता का गन्धादि उपचारों से पूजन करे । पुनः तदङ्गभूत लोकपालों का पूजन करे और धूमादि प्रदान करे ॥ १५२ ॥

**गन्धश्चन्दनकर्पूरकालागरुभिरीरितः ।**
**यथोक्तानि सुगन्धीनि पत्रपुष्पाणि देशिकैः ।**
**उपदिष्टानि पूजायामाददीत विचक्षणः ॥ १५३ ॥**
**मलिनं भूमिसंस्पृष्टं कृमिकेशादिदूषितम् ।**

**अङ्गस्पृष्टं समाघ्रातं त्यजेत् पर्युषितं गुरुः ॥ १५४ ॥**

आचार्यों द्वारा उपदिष्ट चन्दन, कपूर, कालागुरु मिलाकर सुगन्ध प्रदान करना चाहिये और सुगन्धित पुष्प प्रदान करना चाहिये । पूजा में विचक्षण पुरुष शास्त्रविहित पदार्थों को ही ग्रहण करे, शास्त्र वर्जित नहीं । मलिन एवं भूमि पर गिरे हुये कृमि केशादि से दूषित, अपने अङ्ग से स्पृष्ट एवं सूँघे हुए बासी पुष्पों का गुरु त्याग करे ॥ १५३-१५४ ॥

**देवस्य मस्तकं कुर्यात् कुसुमोपहितं सदा ।**
**पूजाकाले देवताया नोपरि भ्रामयेत् करम् ॥ १५५ ॥**
**अगरूशीरगुगुलुशर्करामधुचन्दनैः ।**
**धूपयेदाज्यसंमिश्रैर्नाभिं देवस्य देशिकः ॥ १५६ ॥**
**वर्त्त्याकर्पूरगर्भिण्या सर्पिषा तिलजेन वा ।**
**आरोप्य दर्शयेद् दीपानुच्चैः सौरभशालिभिः ॥ १५७ ॥**

देवता के मस्तक को सदा पुष्पादि से भूषित रखे । पूजा करते समय इष्टदेवता के ऊपर हाथ न घुमावे । अगरु, उशीर, गुग्गुलु, शर्करा, मधु और चन्दन में घी मिलाकर तथा कस्तूरी से इष्टदेव की पूजा करे । कर्पूर मिश्रित बत्ती से युक्त घी से तथा तिल के तेल से किसी ऊँचे स्थान पर स्थापित एवं सुगन्ध निकलते हुये दीप प्रदर्शित कर पूजा करे ॥ १५५-१५७ ॥

**स्वादूपदंशं विमलं पायसं सह शर्करम् ।**
**कदलीफलसंयुक्तं साज्यं मन्त्री निवेदयेत् ॥ १५८ ॥**
**तत्र तत्र जलं दद्यादुपचारान्तरान्तरे ।**
**अङ्गादिलोकपालान्तं यजेदावरणान्यपि ॥ १५९ ॥**
**केसरेष्वग्निकोणादि हृदयादीनि पूजयेत् ।**
**नेत्रमग्रे दिशास्वस्त्रं ध्यातव्या अङ्गदेवताः ॥ १६० ॥**
**तुषारस्फटिकश्यामनीलकृष्णारुणार्चिषः ।**
**वरदाभयधारिण्यः प्रधानतनवः स्त्रियः ॥ १६१ ॥**
**पश्चादभ्यर्चनीयाः स्युः कल्पोक्तावृतयः क्रमात् ।**

तदनन्तर मन्त्री स्वादिष्ट विमल पायस लिए जो शर्करा मिश्रित हो, उसी प्रकार केले का फल तथा घी मिश्रित अन्य पदार्थों से युक्त नैवेद्य अपने इष्ट देवता को समर्पित करे । उपचारों के बीच-बीच में पुष्पाञ्जलि तथा जल भी देते रहना चाहिये । इस प्रकार इष्ट देवता की पूजा कर लेने के पश्चात् आदि में अङ्गवृत्ति के क्रम से लोकपाल पर्यन्त आवरणों की पूजा करनी चाहिये । केशर के अग्निकोण में हृदय की (ईशानकोण में शिर की, नैर्ऋत्य में शिखा की तथा वायव्य में कवच

की) पूजा करे । अपने अग्रभाग में नेत्र की दिशाओं में अस्त्र की पूजा करे और अङ्ग देवता का ध्यान करे । सभी अङ्ग देवता का स्वरूप तुषार, स्फटिक, श्याम, नील, कृष्ण और लाल है । ये वर तथा अभय मुद्रा धारण किये हुये हैं । मुख्य रूप से सभी स्त्री स्वरूपा हैं । इनकी पूजा कर लेने के पश्चात् कल्पोक्त आवरणों की पूजा करनी चाहिये ॥ १५८-१६२ ॥

**अन्ते यजेल्लोकपालान् मूलपारिषदान्वितान् ॥ १६२ ॥**
**हेतिजात्यधिपोपेतान् दिक्षु पूर्वादितः क्रमात् ।**

अब परिषद सहित लोकपालों की पूजा उनके आयुध, देवता, प्रेत, राक्षस, जल, प्राण, नक्षत्र, भूत तथा नागलोकादि जाति, उनके वाहन एवं उनके परिवारादि के साथ क्रमशः पूर्वादि दिशाओं में पूजा करनी चाहिये ॥१६२-१६३॥

**एवं सम्पूज्य विधिवन्निवेद्यान्तं ततो गुरुः ॥ १६३ ॥**
**दक्षिणे स्थण्डिलं कृत्वा तत्राधाय हुताशनम् ।**
**संस्कृत्य विधिवद् विद्वान् वैश्वदेवं समाचरेत् ॥ १६४ ॥**

इस प्रकार लोकपालों की विधिवत् नैवेद्यान्त पूजा करने के पश्चात् गुरु दक्षिण में स्थण्डिल निर्माण कर, उस पर अग्नि स्थापित कर, विधिवत् संस्कार कर, बलि वैश्वदेव करे ॥ १६३-१६४ ॥

**तत्र सम्पूज्य गन्धाद्यैर्देवतामुक्तविग्रहाम् ।**
**तारव्याहृतिभिर्हुत्वा मूलमन्त्रेण मन्त्रवित् ॥ १६५ ॥**
**सर्पिष्मता पायसेन पञ्चविंशतिसंख्यया ।**
**हुत्वा व्याहृतिभिर्भूयो गन्धाद्यैः पुनरर्चयेत् ।**
**तां योजयित्वा पीठस्थमूर्त्तौ वह्निं विसर्जयेत् ॥ १६६ ॥**

उस स्थण्डिल पर उग्र विग्रहधारी देवताओं की पूजा कर मन्त्रविद् ॐ व्याहृति पूर्वक मूलमन्त्र से हवन कर, पुनः घृत युक्त पायस से २५ संख्या में होम करे । पुनः सप्रणव व्याहृति युक्त मूल मन्त्र से होम करे और गन्धादि से पुनः पूजन करे। फिर मन्त्रज्ञ साधक उन देवता को पीठ मूर्त्ति में संयुक्त कर अग्नि का विसर्जन करे ॥ १६५-१६६ ॥

**अवशिष्टेन हविषा विकिरेत् परितो बलिम् ।**
**देवतायाः पार्षदेभ्यो गन्धपुष्पाक्षतान्वितम् ॥ १६७ ॥**
**मुख्यादीशानतः पात्रान् नैवेद्यांशं समुद्धरेत् ।**
**सर्वदेवस्वरूपाय पराय परमेष्ठिने ॥ १६८ ॥**
**श्रीरामसेनायुधाय विष्वक्सेनाय ते नमः ।**

**गणेशे वक्रतुण्डाय सूर्ये चण्डांशवेऽर्पयेत् ॥ १६९ ॥**
**शक्तावुच्छिष्टचाण्डाल्यै शिवे चण्डेश्वराय च ।**
**ततो निवेद्यमुद्धृत्य शोधयित्वा स्थलं पुनः ॥ १७० ॥**
**पञ्चोपचारैः सम्पूज्य दर्शयेत् छत्रचामरे ।**
**कर्पूरशकलोन्मिश्रं ताम्बूलं विनिवेदयेत् ॥ १७१ ॥**
**सहस्रावृत्य सञ्जप्य मूलमन्त्रमनन्यधीः ।**
**तज्जपं सर्वसम्पत्त्यै देवतायै निवेदयेत् ॥ १७२ ॥**
**ततः शम्भोर्दिशि गुरुर्विकिरेत् पूर्वसञ्चिते ।**
**हेमवस्त्रादिसंयुक्तां कर्करीं तोयपूरिताम् ॥ १७३ ॥**
**संस्थाप्य तस्यां सिंहस्थां खड्गखेटकधारिणीम् ।**
**घोररूपां पश्चिमास्यां पूजयेदस्त्रदेवताम् ॥ १७४ ॥**
**चलासनेन सम्पूज्य तामादाय गुरुः पुनः ।**

अवशिष्ट हवि से चारो ओर बलि विकीर्ण करे । देवताओं के पार्षदों को गन्ध, पुष्प, अक्षत से युक्त बलि प्रदान करे । फिर ईशानकोण के मुख्य पात्र से नैवेद्य अंश लेवे । फिर 'सर्वदेवस्वरूपाय........विष्वक्सेनाय ते नम:' से विष्वक्सेन को बलि देवे । गणेश पूजन में वक्रतुण्ड को, सूर्य में चण्डांश को, शक्ति में उच्छिष्टचाण्डाली को, शिव के पूजन में चण्डेश्वर को बलि देवे । इसके बाद पुन: नैवेद्य उठाकर उक्त स्थल संशोधन करे । पुन: देवता का पञ्चोपचार से पूजन करे और छत्र चामर प्रदर्शित करे । कपूर खण्ड मिश्रित ताम्बूल निवेदन करे । फिर एकाग्रचित्त हो एक सहस्र की संख्या में मूल मन्त्र का जप करे और उस जप को सब प्रकार की सम्पत्ति की प्राप्ति के लिये देवता को समर्पण करे । तदनन्तर ईशानकोण में जहाँ विकिर पर हेम तथा दो वस्त्रों से संयुक्त जल, सनाल जल पात्र स्थापित था, उस पर अस्त्र देवता को स्थापित कर उनकी पूजा करे । कर्करी पर स्थापित किये जाने वाली देवता का स्वरूप कहते हैं—जो खड्ग एवं खेटक धारण की हुई, सिंह पर आसीन हैं, जिनका रूप अत्यन्त भयानक है तथा जो पश्चिमाभिमुखी स्थित हैं । इस प्रकार के अस्त्र देवता का आसन से उठकर स्वयं आचार्य पूजन करे ॥ १६७-१७५ ॥

**रक्षेति लोकपालानां नालमुक्तेन वारिणा ॥ १७५ ॥**
**देवाज्ञां श्रावयन्नन्तः परिवृत्य प्रदक्षिणम् ।**
**अस्त्रमन्त्रं समुच्चार्य यथापूर्वं निवेशयेत् ॥ १७६ ॥**
**अभ्यर्च्य भूयो गन्धाद्यैरस्त्रं तत्र स्थिरासने ।**

फिर उस कर्करी को हाथ से उठाकर उसके नाल से जल गिराते हुये 'लोकपालानां रक्ष' इस देवाज्ञा को सुनाते हुये भीतर की वेदी के चारों ओर

प्रदक्षिणा कर अस्त्र मन्त्र (अस्त्राय फट्) पढ़कर कर्करी को यथानिर्दिष्ट स्थान पर स्थापित कर देवे। पुनः निश्चल रूप से आसन पर बैठकर गन्धादि द्वारा पुनः अस्त्र देवता की पूजा करे ॥ १७५-१७७ ॥

**ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् ॥ १७७ ॥**
**अस्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके ।**
**तण्डुलान् शालिसम्भूतान् मूलमन्त्राभिमन्त्रितान् ।**
**प्रसृतीनां पञ्चदश क्षिप्त्वा चास्त्रमनुं जपेत् ॥ १७८ ॥**
**प्रक्षाल्य पात्रवदनं पिधाय कवचाणुना ।**
**प्राङ्मुखो मूलमन्त्रेण देशिकेन्द्रश्चरुं पचेत् ॥ १७९ ॥**

तदनन्तर अस्त्र मन्त्र से धोये गये, नवीन ताम्रादि पात्र में गोदुग्ध स्थापित कर, सुसंस्कृत अग्नि में चरु का निर्माण करे। मूल मन्त्र से अभिमन्त्रित शाली नामक धान्य के १५ पसर चावल को धोकर, उसे गोदुग्ध युक्त पात्र में डालकर, अस्त्र मन्त्र का जप करते हुये चरु निर्माण करना चाहिये। कवच मन्त्र पढ़कर उस चरु पात्र का मुख ढक देना चाहिये। पुनः आचार्य पूर्वाभिमुख हो जप करते हुये चरु पकावे ॥ १७७-१७९ ॥

**स्रुवेणाज्येन संस्विन्ने दद्यात् तप्ताभिघारणम् ।**
**मूलेन पश्चात् तत्पात्रं कवचेनावधारयेत् ॥ १८० ॥**
**अस्त्रजप्ते कुशास्तीर्णे मण्डले विधिवद् गुरुः ।**
**तं विभज्य त्रिधा भागमेकं देवाय कल्पयेत् ॥ १८१ ॥**
**अन्यमग्नौ प्रजुहुयादपरं देशिकः स्वयम् ।**
**शिष्येण सार्धं भुञ्जीत विहिताचमनस्तथा ॥ १८२ ॥**
**आचान्तं शिष्यमानीय सकलीकृत्य देशिकः ।**
**तालप्रमाणं हृज्जप्तं क्षीरवृक्षादिसम्भवम् ॥ १८३ ॥**

चरु के पक जाने पर तप्त घृत स्रुवा में डालकर मूल मन्त्र पढ़कर उसे छौक देवे। पुनः कवच मन्त्र (कवचाय हुम्) पढ़कर चरु पात्र को नीचे उतार लेवे। चरु उतार लेने के पश्चात् आचार्य स्वयं अस्त्र मन्त्र से अभिमन्त्रित कुशा से आच्छादित मण्डल पर पात्र रख देवे। फिर उस चरु को निकाल कर तीन भागों में बराबर-बराबर प्रविभक्त करे। प्रथम भाग देवता के लिये रखे। अन्य भाग को अग्नि में होम कर देवे। तृतीय भाग आचार्य स्वयं शिष्य के साथ भोजन कर आचमनादि क्रिया सम्पादन करे। आचमन के बाद आचार्य शिष्य को अपने पास रख कर उसका सकलीकरण करे। फिर 'नमः' जप करते हुये ताल प्रमाण का दुधारु वृक्ष का दतुअन देवे ॥ १८०-१८३ ॥

**तालप्रमाणं तु—**

**अङ्गुष्ठमध्यमाङ्गुल्यौ ये हस्तस्य प्रसारिते ।**
**तदग्रयोरन्तरालं तालमाहुर्मनीषिणः ॥ १८४ ॥**

ताल का प्रमाण हाथ को फैला देने पर अङ्गुष्ठ और तर्जनी के मध्य में जितना अवकाश है उसे मनीषी लोगों ने 'ताल प्रमाण' कहा है ॥ १८४ ॥

**पिङ्गलामते—**

**माया दण्डिनि ठद्वन्द्वं प्रदद्यादमुना च तत् ।**
**दन्तान् विशोध्य स पुनस्तत् प्रक्षाल्य विसर्जयेत् ॥ १८५ ॥**

पिङ्गलामत में भी कहा गया है—आचार्य माया (ह्रीं), फिर 'दण्डिनि', फिर स्वाहा' (ॐ ह्री दण्डिनि स्वाहा)—इस मन्त्र से वह दन्तकाष्ठ शिष्य को देवे । शिष्य उस दन्तकाष्ठ से दाँतों का प्रक्षालन कर उसे फेंक देवे ॥ १८५ ॥

**नारायणीये विशेषः—**

**दन्तकाष्ठं हृदा जप्तं क्षीरवृक्षादिसम्भवम् ।**
**सम्मार्ज्य दन्तान् तच्छित्त्वा प्रक्षाल्यैतद् भुवि क्षिपेत्॥ १८६ ॥**
**दिक्षु पूर्वाद्यधोर्ध्वासु तस्याग्रपतनं क्रमात् ।**
**वृद्धिस्तापो मृतिर्वित्तं क्षयं शान्तिर्गदो धनम् ॥ १८७ ॥**
**सुखं वृद्धिः परं दुःखं फलान्येतानि शंसति ।**

नारायणीय में विशेष कहते हैं—नमः मन्त्र से अभिमन्त्रित क्षीर वृक्ष के दन्तकाष्ठों से शिष्य दाँतो को शुद्ध कर उसको चीर कर प्रक्षालन कर पृथ्वी पर फेंक देवे । यदि उस दन्तकाष्ठ का अग्रभाग पूर्वादि चारों दिशाओं में नीचे की ओर और ऊपर की ओर गिरे, तब वह क्रमशः १. वृद्धि, २. ताप, ३. मृत्यु, ४. वित्त, ५. क्षय, ६. शान्ति, ७. रोग, ८. धन, ९. सुख, १०. वृद्धि तथा दुःख—इस प्रकार दश दिशाओं का फल बताता है ॥ १८६-१८८ ॥

**वायवीये तु—**

**अशस्ताशामुखे तस्मिन् गुरुस्तद्दोषशान्तये ।**
**शतमर्धं तदर्धं वा जुहुयान् मूलमन्त्रतः ॥ १८८ ॥**

वायवीय में भी बतलाया गया है—यदि दातून का खण्ड अप्रशस्त आशा में गिरा हो, तब गुरु उसकी शान्ति के लिये एक-सौ आठ की संख्या में, अथवा उसकी आधी संख्या (५४) में, अथवा उसकी भी आधी संख्या (२७) में मूल मन्त्र से जप करे ॥ १८८ ॥

**नारायणीये—**

**पुनस्तं शिष्यमाचान्तं शिखाबन्धाभिरक्षितम् ।**

**कृत्वा वेद्यां सहानेन स्वपेत् दर्भास्तरे गुरुः ॥ १८९ ॥**

पुनः आचार्य यथाविधि शास्त्रीय रीति से शिष्य को आचमन कर मूलमन्त्र से, अथवा 'अघोराम्' इस मन्त्र से शिष्य की शिखा बाँधकर अभिरक्षित करे । तदनन्तर उस शिष्य के साथ वेदी पर, दर्भयुक्त आसन पर, उस रात्रि में शयन करे । इस प्रकार अधिवासन क्रिया कहा गई ॥ १८९ ॥

**सोमशम्भौ—**

**गृहस्थान् दर्भशय्यायां पूर्वशीर्षास्त्ररक्षितान् ।**
**हृदा सद्भस्मशय्यायां यतीन् दक्षिणमस्तकान् ॥ १९० ॥**

गृहस्थ शिष्य दर्भ शय्या पर पूर्व शीर्ष करके अस्त्र मन्त्र से अभिमन्त्रित कर शयन करे । यति शिष्य भस्म शय्या पर दक्षिण शीर्ष करके 'नमः' मन्त्र से अभिमन्त्रित कर शयन करे ॥ १९० ॥

**वायवीये तु—**

**देवस्य दक्षिणे भागे शिष्यं तमधिवासयेत् ।**
**आहतास्तरणास्तीर्णे सदर्भशयने शुचिः ॥ १९१ ॥**

वायवीयसंहिता में भी बतलाया गया है—देव के दक्षिण भाग में शिष्य का अधिवासन करे । दर्भ का शयन, जो कही से टूटा-फूटा न हो, उस पर पवित्र होकर शिष्य शयन करे ॥ १९१ ॥

**मन्त्रिते च शिवं ध्यायन् प्राक्शिरस्को निशि स्वपेत् ।**
**शिखाबद्धस्य सूत्रस्य शिखायास्तच्छिखां गुरुः ॥ १९२ ॥**
**आवेष्ट्याहतवस्त्रेण तमाच्छाद्य च वर्मणा ।**
**रेखात्रयं च परितो भस्मना तिलसर्षपैः ॥ १९३ ॥**
**कृत्वास्त्रजप्तैस्तद् बाह्ये दिगीशानां बलिं हरेत् ।**
**स्वप्नमन्त्रं स्मरन् सुप्यादविकल्पो जितेन्द्रियः ॥ १९४ ॥**

मन्त्र लेने वाला शिष्य शिव का ध्यान करते हुए रात्रि के समय पूर्व में शिर कर शयन करे । फिर गुरु शिखा मन्त्र से अभिमन्त्रित सूत्र के शिखा (अग्रभाग) से शिखा को मूलमन्त्र से आवेष्टित कर, नवीन वस्त्र से कवच मन्त्र पढ़कर ढक देवे । फिर उसके चारों ओर अस्त्र मन्त्र से अभिमन्त्रित तिल एवं सर्षप से तथा भस्म से तीन रेखा निर्माण करे । फिर उसके बाहर दिगीश्वरों को बलि देवे । फिर जितेन्द्रिय शिष्य स्वप्न मन्त्र पढ़ते हुये निर्भय होकर शयन करे ॥ १९२-१९४ ॥

**स्वप्नान् संवीक्षितान् शिष्यः प्रभाते श्रावयेद् गुरुम् ।**
**शुभे शुभं वदेत् तस्य जुहुयादशुभे शतम् ॥ १९५ ॥**

**अस्त्रमन्त्रेण कथितो विधिः शिष्याधिवासने ।**

शिष्य रात्रि में देखे गये स्वप्न को गुरु से निवेदन करे । गुरु भी यदि स्वप्न शुभ है तब शुभ कहे; यदि अशुभ है तब १०० की संख्या में अस्त्र मन्त्र से होम करे । यहाँ तक शिष्याधिवासन की विधि कही गई ॥ १९५-१९६ ॥

**पिङ्गलामते—**

**सद्योऽधिवासमथवा प्रकुर्वीत यथाविधि ।**

**मन्त्रतन्त्रप्रकाशेऽपि—**

**दिनद्वयेनैव कुर्याद् दीक्षाकर्म विचक्षणः ।**
**सद्योऽधिवासनं वा स्यादेकस्मिन् दिवसे यदि ॥ १९६ ॥**

पिङ्गलामत में कहा भी गया है—गुरु यथाविधि सद्यः अधिवास करे । मन्त्रतन्त्रप्रकाश में भी कहा गया है—विचक्षण आचार्य दो ही दिन में दीक्षा कर्म की समाप्ति करे । यदि एक ही दिन में दीक्षा कर्म समाप्त करना हो तब सद्यः अधिवासन करे ॥ १९६ ॥

**महाकपिलपञ्चरात्रे—**

**वसतेरधिपूर्वस्य भावे घञ्प्रत्यये कृते ।**
**अधिवास इति ह्येषः प्रयोगः सिद्धिमेति च ॥ १९७ ॥**
**गुर्वादिसहितो वासो रात्रौ नियमपूर्वकः ।**
**सोऽस्यार्थो हि निपातानामनेकार्थतया मतः ॥ १९८ ॥**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे दीक्षाविधौ नाम त्रयोविंशः पटलः ॥ २३ ॥**

...❧❀❧...

महाकपिल पञ्चरात्र में भी बतलाया गया है—अधिपूर्वक वस् धातु से भाव में घञ् प्रत्यय करने पर 'अधिवास' शब्द सिद्ध होता है । यतः निपात अनेकार्थक होते हैं अतः गुर्वादि सहित शिष्य का नियमपूर्वक रात्रि में वास करना यही 'अधिवास' शब्द उसका अर्थ है ॥ १९७-१९८ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में दीक्षाविधि नामक त्रयोविंश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ २३ ॥**



# चतुर्विंशः पटलः

### दीक्षाकथनम्

अथाग्नियजनं कुर्यादुक्तवर्त्मानुसारतः ।
आचार्यकुण्डे विधिवत्संस्कृते शास्त्रवर्त्मना ॥ १ ॥

अब अधिवासन के अनन्तर आचार्य कुण्ड में आवश्यक करणीय संस्कारों के तथा उसमें अग्निस्थापन की विधि कहते हैं ॥ १ ॥

### क्रियावतीदीक्षाकथनम्

अष्टादश स्युः संस्काराः कुण्डानां तन्त्रचोदिताः ।

### कुण्डसंस्कारविधिः

वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं मतम् ॥ २ ॥

तन्त्रशास्त्र के अनुसार कुण्डों के अट्ठारह प्रकार के संस्कार कहे गये हैं । मूल मन्त्र पढ़ कर कुण्ड का अवेक्षण प्रथम संस्कार कहा गया है । अस्त्र मन्त्र (अस्त्राय फट्) पढ़कर हाथ के अग्रभाग को उतान कर प्रोक्षण करना दूसरा संस्कार है ॥ २ ॥

तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणं मतम् ।
अस्त्रेण खननोद्धारौ हृन्मन्त्रेण प्रपूरणम् ॥ ३ ॥
समीकरणमस्त्रेण सेचनं वर्मणा मतम् ।
कुट्टनं हेतिमन्त्रेण वर्ममन्त्रेण मार्जनम् ॥ ४ ॥
विलेपनं कलारूपकल्पनं तदनन्तरम् ।
त्रिसूत्रीकरणं पश्चाद् हृदयेनार्चनं मतम् ॥ ५ ॥
अस्त्रेण वज्रीकरणं हृन्मन्त्रेण कुशैः शुभैः ।
चतुःपथं तनुत्रेण तनुयादक्षपाटनम् ॥ ६ ॥
यागे कुण्डानि संस्कुर्यात् संस्कारैरेभिरीरितैः ।

पुनः अस्त्र मन्त्र से दर्भ द्वारा कुण्ड का ताडन यह तीसरा संस्कार है 'वर्ममन्त्र' (कवचाय हुं) से मुट्ठी बाँधकर उसका सेचन कराना चौथा संस्कार है । अस्त्र मन्त्र से कुण्ड की मिट्टी खनना तथा उसे बाहर निकालना, पुनः अन्य मृत्तिका लेकर नमः मन्त्र से उस खात को पूर्ण करना यह पाँचवाँ, छठा तथा सातवाँ संस्कार है । अस्त्र मन्त्र पढ़कर मिट्टी को समतल बनाना, कवच मन्त्र पढ़कर उसका सेचन करना, अस्त्र मन्त्र से उसे कूटना, वर्म मन्त्र से उसे मार्जन करना ये आठ, नव, दश एवं ग्यारह संस्कार हुये । कुण्ड को लीपना, उसमें सूर्य चन्द्र और अग्नि की कला की कल्पना करना, तीन सूत्र कुण्ड में लपेटना, पुनः नमः मन्त्र पढ़कर उसका अर्चन करना—ये क्रमशः बारह, तेरह और चौदह संस्कार हुये । अस्त्र मन्त्र से कुण्ड को दृढ़ बनाना, नमः मन्त्र पढ़कर अच्छे कुशों से कुण्ड में चतुष्पथ निर्माण करना, वर्म मन्त्र पढ़कर इन्द्रियोच्चाटन करना तथा हुङ्कार से राक्षसों का अपसारण करना—ये क्रमशः पन्द्रह, सोलह और सत्रह तथा अट्ठारह संस्कार कुण्ड के कहे गये । इन मन्त्रों से कुण्ड का संस्कार करना चाहिये ॥ ३-७ ॥

**विमर्श**—यहाँ शारदातिलक (५.१-१२) के अनुसार 'अथवा तानि संस्कुर्याच्चतुर्भि र्वीक्षणादिभिः' छूट गया है ।

**तनुत्रेण कवचेनेत्यर्थः—**

**तिस्रस्तिस्रो लिखेद् रेखा हृदा प्रागुदग्रगाः ॥ ७ ॥**
**प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः ।**
**उदगग्राणां च रेखाणां ब्रह्मवैवस्वतेन्दवः ॥ ८ ॥**

पुनः उस कुण्ड में दक्षिण दिशा से आरम्भ कर पूर्वाभिमुख तीन रेखा तथा पश्चिम दिशा के क्रम से उत्तराभिमुख तीन रेखा का निर्माण करे । जिन तीन रेखाओं के अग्रभाग पूर्वाभिमुख हैं उनके मुकुन्द, ईश्वर तथा पुरन्दर देवता समझना चाहिये । जिन तीन रेखाओं के अग्रभाग उत्तराभिमुख हैं उनके ब्रह्म, वैवस्वत तथा चन्द्रमा देवता है ॥ ७-८ ॥

**सर्वाण्यभ्युक्ष्य तारेण योगपीठमथार्चयेत् ।**
**वागीश्वरीमृतुस्नातां नीलेन्दीवरसन्निभाम् ॥ ९ ॥**

**अग्निसंस्कारः**

**वागीश्वरेण संयुक्तामुपचारैः प्रपूजयेत् ।**
**सूर्यकान्तादिसम्भूतं यद्वा श्रोत्रियगेहजम् ।**
**आनीय चाग्निं पात्रेण क्रव्यादांशं परित्यजेत् ॥ १० ॥**

पुनः अस्त्र मन्त्र से अभ्युक्षण कर वागीश्वरी के योगपीठ की अर्चना करे ।

पुनः उस योगपीठ पर वागीश्वर से संयुक्त नील कमल के समान स्वरूप वाली ऋतुस्नाता वागीश्वर का उपचारों से पूजन करे । इतनी क्रिया कर लेने के पश्चात् सूर्यकान्तमणि से उत्पन्न अग्नि अथवा श्रोत्रिय के गृह की अग्नि अथवा अरणि सम्भूत अग्निपात्र में रख कर उसमें से क्रव्याद अंश को त्याग देवे ॥ ९-१० ॥

**विमर्श**—'ह्रीं वागीश्वरीवागीश्वरयोर्योगपीठाय नमः'—यह वागीश्वरी के योगपीठ की अर्चना मन्त्र है ।

**अन्यत्रापि—**

**अस्त्रेणाग्निं समाधाय कवचेन पिधाय च ।**
**क्रव्यादांशं तु चास्त्रेण नैर्ऋत्ये संत्यजेत् प्रिये ॥ ११ ॥**
**देवांशं मूलमन्त्रेण स्थापयेत् पुरतः सुधीः ।**
**संस्कुर्यात् तं यथान्यायं देशिको वीक्षणादिभिः ॥ १२ ॥**
**औदर्यवैन्दवाग्निभ्यां भौमस्यैक्यं स्मरन् वसोः ।**
**चैतन्यं पावके योज्यामृतीकृत्य च मुद्रया ॥ १३ ॥**

अन्यत्र भी बतलाया गया है—अस्त्र मन्त्र से अग्नि स्थापन करे, कवच मन्त्र से उसे ढक देवे और शेष देवांश को सुधी साधक अपने आगे स्थापित करे । फिर आचार्य वीक्षणादि से यथाविधि उसका संस्कार करे । तदनन्तर उस भौम अग्नि में औदर्य अथवा परमात्म रूप अग्नि से एकत्व की सम्भावना करते हुये 'रं' इस अग्नि मन्त्र को पढ़कर उस अग्नि में चैतन्य की स्थापना करे ॥११-१३॥

**रक्ष्यावगुण्ठ्य सम्पूज्य त्रिःपरिभ्राम्य तं पुनः ।**
**कुण्डस्योपरि दक्षेण तारं मूलमनुं स्मरन् ॥ १४ ॥**
**भूमिष्ठजानुको भूत्वा वागीशीगर्भगोचरे ।**
**शिवबीजधिया ध्यात्वा निक्षिपेदाशुशुक्षणिम् ॥ १५ ॥**

अस्त्र (रक्षा) मन्त्र से उसे घेर देवे । फिर उसको कुण्ड पर तीन बार घुमा कर ॐ पूर्वक मूल मन्त्र का स्मरण करते हुये दाहिने हाथ से कुण्ड पर रखे । फिर पृथ्वी पर जानु के बल बैठकर कुण्ड में वागीश्वरी के गर्भ की बुद्धि तथा अग्नि में शिवबीज (हं) की बुद्धि करते हुये अग्नि को कुण्ड में स्थापित करे ॥ १४-१५ ॥

**वैष्णवे तु संहितायाम्—**

**लक्ष्मीमृतुमतीं तत्र प्रभोर्नारायणस्य च ।**
**ग्राम्यधर्मेण सञ्जातमग्निं तत्र विचिन्तयेत् ॥ १६ ॥ इति ।**

वैष्णवसंहिता में भी बतलाया गया है—नारायण के ग्राम्य धर्म द्वारा ऋतुमती लक्ष्मी से उत्पन्न अग्नि को कुण्ड में स्थापित करे ॥ १६ ॥

**पश्चाद् देवस्य देव्याश्च दद्यादाचमनीयकम् ।**
**ज्वालयित्वा चोपतिष्ठेत् तत्तन्मन्त्रमनुस्मरन् ॥ १७ ॥**

इसके पश्चात् वागीश्वर और वागीश्वरी को आचमन देवे । फिर अग्नि को जलाकर तत्तन्मन्त्रों का स्मरण करते हुये अग्नि का उपस्थान करे ॥ १७ ॥

**जिह्वान्यासं विधायाथ तत्षडङ्गं समाचरेत् ।**
**मूर्तीरष्टौ प्रविन्यस्येदुक्ताङ्गे जातवेदसः ॥ १८ ॥**

अपने शरीर में पहले (अग्नि की सप्त) जिह्वा का न्यास करना चाहिए । फिर षडङ्गन्यास करे । फिर जातवेद अग्नि के उक्त अङ्ग में आठों मूर्त्तियों से न्यास करना चाहिए ॥ १८ ॥

**आसनं प्रविचिन्त्याग्नेर्मूर्त्तिं ध्यायेद् यथोदिताम् ।**
**ध्यात्वा सिञ्चेत् ततस्तोयैर्विशुद्धैर्मेखलोपरि ॥ १९ ॥**
**दर्भैरगर्भैर्मध्यस्थमेखलायां परिस्तरेत् ।**
**निक्षिपेद् दिक्षु परिधीन् प्राचीवर्ज्यान् गुरूत्तमः ॥ २० ॥**
**प्रदक्षिण्येन सम्पूज्य तेषु ब्रह्मादिमूर्तयः ।**
**ध्यातं वह्निं यजेन् मध्ये गन्धाद्यैरुक्तमन्त्रतः ॥ २१ ॥**
**मध्ये षट्स्वपि कोणेषु जिह्वांज्वालारुचो यजेत् ।**
**केसरेषूक्तमार्गेण पूजयेदङ्गदेवताः ॥ २२ ॥**
**दलेषु पूजयेन्मूर्त्तीः शक्तिस्वस्तिकधारिणीः ।**
**लोकपालाँस्ततो दिक्षु पूजयेदुक्तलक्षणान् ॥ २३ ॥**

अग्नि को मानसिक आसन देवे । फिर यथोदित प्रकार से मूर्त्ति का ध्यान करे। इस प्रकार ध्यान करने के बाद मेखला के ऊपर शुद्ध जल छिड़के । फिर गर्भहीन कुशों से मध्यस्थ मेखला का परिस्तरण करे । श्रेष्ठ गुरु पूर्व दिशा को छोड़ कर शेष सभी दिशाओं में परिधि का निक्षेप करे । इसके बाद प्रदक्षिण क्रम से उन परिधियों पर ब्रह्मादि की मूर्त्तियों का पूजन करे । (पलाश, बैकङ्कत, काश्मरी तथा विल्व वृक्ष की एक-एक हाथ लम्बी आर्द्र समिधाओं को परिधि कहते हैं) पुनः ध्यान की गई उस वह्नि का, कुण्ड के मध्य में गन्धादि उपचारों से पूजन करे। षट्कोणों के मध्य में अग्नि की छह जिह्वाओं का क्रमशः ईशानादि क्रम से पूजन करे । केशरों में पूर्वोक्त रीति से अङ्ग देवता का पूजन करे । अष्टदलों में शक्ति तथा स्वस्तिक धारण करने वाली मूर्त्तियों का यजन करे । तदनन्तर पूर्वोक्त लक्षण वाले लोकपालों का दिशाओं में पूजन करे ॥ १९-२३ ॥

**पश्चादादाय पाणिभ्यां स्रुक्स्रुवौ तावधोमुखौ ।**
**त्रिशः प्रतापयेद् वह्नौ दर्भानादाय देशिकः ॥ २४ ॥**

**तदग्रमध्यमूलानि शोधयेत् तैर्यथाक्रमात् ।**
**गृहीत्वा वामहस्तेन प्रोक्षयेद् दक्षिणेन तौ ॥ २५ ॥**
**पुनः प्रताप्य तौ मन्त्री दर्भानग्नौ विनिःक्षिपेत्।**
**आत्मनो दक्षिणे भागे स्थापयेत् तौ कुशास्तरे ॥ २६ ॥**

फिर दोनों हाथों में स्रुक स्रुवा लेकर उन्हें अधोमुख कर तीन बार अग्नि पर तपावे । फिर उसके मूल, मध्य और अग्रभाग को यथाक्रम कुशाओं से संशोधन करे । फिर बायें हाथ में लेकर दाहिने हाथ से उनका प्रोक्षण करे । फिर उनको अग्नि पर तप्त करे और मार्जन कुशाओं को अग्नि में प्रक्षिप्त करे । फिर उस स्रुक् और स्रुवा को अपने दक्षिण ओर कुशाओं पर स्थापित करे ॥ २४-२६ ॥

**आज्यस्थालीमथादाय प्रोक्षयेदस्त्रवारिणा ।**
**तस्यामाज्यं विनिःक्षिप्य संस्कृतं वीक्षणादिभिः ॥ २७ ॥**
**सन्दीप्य दर्भयुगलमाज्ये क्षिप्त्वानले क्षिपेत् ।**
**गुरुर्हृदयमन्त्रेण पवित्रीकरणं त्विदम् ॥ २८ ॥**
**दीप्तेन दर्भयुग्मेन नीराज्याज्यं सवर्मणा ।**
**अग्नौ विसर्जयेद् दर्भमभिद्योतनमीरितम् ॥ २९ ॥**

फिर आज्य स्थाली लेकर अस्त्र मन्त्र पढ़कर जल से उसका प्रोक्षण करे । उसमें आज्य (घी) रखकर वीक्षणादि से उसे सुसंस्कृत करे । आचार्य दो कुशा अग्नि में प्रतप्त कर उसे घी में डुबो कर नमः मन्त्र पढ़ते हुये अग्नि में प्रक्षिप्त कर देवे । इसे आज्य का पवित्रीकरण कहा है (यहाँ सम्पन्नाज्य नहीं कहा है) जलते हुये कुशा से कवच मन्त्र द्वारा आज्य की आरती कर उसे अग्नि में डाल देवे । इसे 'अभिद्योतन' कहते हैं ॥ २७-२९ ॥

**घृते प्रज्वलितान् दर्भान् प्रदर्श्यास्त्राणुना गुरुः ।**
**जातवेदसि तान् न्यस्येदुद्योतनमितीरितम् ॥ ३० ॥**

आचार्य जलते हुये कुशा को अणु मन्त्र से घृत में दिखाकर पुनः उसे अग्नि में डाल देवे । इसे 'उद्योतन' कहते हैं ॥ ३० ॥

**गृहीत्वा घृतमङ्गारान् प्रक्षिप्याग्नौ जलं स्पृशेत्।**
**अङ्गुष्ठोपकनिष्ठाभ्यां दर्भौ प्रादेशसम्मितौ ॥ ३१ ॥**
**धृत्योत्पुनीयादस्त्रेण घृतमुत्पवनं त्विदम् ।**
**तद्वद् हृदयमन्त्रेण कुशाभ्यामात्मसम्मुखम् ॥ ३२ ॥**
**घृते संप्लवनं कुर्युः संस्काराः षडुदीरिताः ।**
**प्रादेशमात्रं सग्रन्थिदर्भयुग्मं घृतान्तरे ॥ ३३ ॥**

**निःक्षिप्य भागौ द्वौ कृत्त्वा पक्षौ शुक्लेतरौ स्मरेत् ।**
**वामे नाडीमिडां ध्यायेत् पिङ्गलां दक्षिणे तथा ॥ ३४ ॥**
**मध्ये सुषुम्णां ध्यात्वैवं कुर्याद् होमं यथाविधि ।**
**दक्षाद्दक्षे तथा वामाद् वामे मध्याच्च भालगे ॥ ३५ ॥**

आज्यस्थाली को नीचे उतार कर उस अग्नि को कुण्ड की अग्नि में संयुक्त कर जल का स्पर्श करे । पुनः प्रादेश मात्र कुशा, अङ्गुष्ठ तथा अनामिका अङ्गुली में धारण कर, अस्त्र मन्त्र पढ़ते हुये घृत को पवित्र करना चाहिए । इसे घृत का 'उत्पवन' संस्कार कहते हैं । पुनः नमः मन्त्र पढ़ते हुये दो कुशाओं से घृत को अपने सम्मुख कर ऊपर उछाले इस क्रिया को 'उत्प्लवन' कहते हैं । यहाँ तक हमने आज्य के संस्कारों का वर्णन किया । प्रादेश मात्र के ग्रन्थि युक्त दो दर्भ, घृत के मध्य में डुबो कर उसके दो भाग कर बायीं तथा दाहिनी ओर फेंक देवे । तदनन्तर बाई ओर शुक्लपक्ष का तथा दाहिनी ओर कृष्ण पक्ष का ध्यान करे । पुनः बाई ओर इडा नाडी का और दाहिनी ओर पिङ्गला का, मध्य में सुषुम्णा नाडी का ध्यान कर स्रुवा से अपनी दाहिनी ओर से घृत लेकर मन्त्र पढ़ते हुये होम करे ॥ ३१-३५ ॥

**लोचने जुहुयाच्चैवमग्निसोमाग्निषोमकैः ।**
**दक्षिणोद्धृतस्रुवेणाज्यमादायाग्निमुखे हुनेत् ॥ ३६ ॥**

**हृदिति हृन्मन्त्रेण, अग्नये स्विष्टकृते स्वाहेति प्रयोगः ।**

**इति सम्पातयेद् भागेष्वाज्यास्याथाऽऽहुतिं क्रमात् ।**
**इत्यग्निनेत्रवक्त्राणां कुर्यादुद्घाटनं गुरुः ॥ ३७ ॥**

सर्वप्रथम 'अग्नये स्वाहा' इस मन्त्र से दाहिनी ओर से घृत लेकर अग्नि के दाहिने नेत्र में, फिर उसी मन्त्र से बाईं ओर से घृत लेकर अग्नि के वामनेत्र में, फिर उसी मन्त्र से मध्य भाग में घृत लेकर 'सोमाय स्वाहा' मन्त्र से अग्नि के भाल में होम करे । पुनः दक्षिण भाग से 'नमः' इस मन्त्र से घृत लेकर 'अग्नीषोमाभ्यां स्वाहा' 'हृदयाय नमः' मन्त्र से होम करे । फिर उसी प्रकार घृत लेकर 'अग्नये स्विष्टकृत स्वाहा' इस मन्त्र से अग्नि के मुख में आचार्य होम करे । इस प्रकार गुरु प्रत्येक आहुतियों से अग्नि के नेत्र, हृदय तथा मुख में आहुति प्रदान करे । फिर आचार्य अग्नि के नेत्र और मुख का उद्घाटन करे ॥ ३६-३७ ॥

**स ताराभिर्व्याहृतिभिराज्येन जुहुयात् पुनः ।**
**जुहुयादग्निमन्त्रेण त्रिवारं देशिकोत्तमः ॥ ३८ ॥**
**गर्भाधानादिका वन्हेः क्रिया निर्वर्त्तयेत् क्रमात् ।**

फिर प्रणव युक्त व्याहृतियों के द्वारा घृत से होम करे । पश्चात् 'अग्नये स्वाहा'

इस मन्त्र से तीन आहुती प्रदान करे। इतना कर लेने के पश्चात् क्रमशः अग्नि की गर्भधानादि क्रिया सम्पादन करे ॥ ३८-३९ ॥

**अष्टाभिराज्याहुतिभिः प्रणवेन पृथक् पृथक् ॥ ३९ ॥**
**गर्भाधानं पुंसवनं सीमन्तोन्नयनं पुनः ।**
**अनन्तरं जातकर्म स्यान्नामकरणं तथा ॥ ४० ॥**
**उपनिष्क्रमणं पश्चादन्नप्राशनमीरितम् ।**
**चौलोपनयनं भूयो महानाम्न्यं महाव्रतम् ॥ ४१ ॥**
**अथोपनिषदं पश्चाद् गोदानोद्वाहकौ तथा ।**

प्रणव मन्त्र के द्वारा प्रत्येक संस्कारों में घृत से पृथक्-पृथक् आठ आहुती प्रदान करे। गर्भाधान, पुंसवन, सीमन्तोन्नयन, जातकर्म, नामकरण, निष्क्रमण, अन्नप्राशन, चूडाकर्म, उपनयन, समावर्त्तन स्नातक होने पर गोदान और उद्वाह— ये संस्कारों के नाम हैं ॥ ३९-४२ ॥

**ततश्च पितरौ तस्य सम्पूज्यात्मनि योजयेत् ॥ ४२ ॥**
**समिधः पञ्च जुहुयान् मूलाग्रघृतसंप्लुताः ।**
**मन्त्रैर्जिह्वाङ्गमूर्तीनां क्रमाद् वह्नेर्यथाविधि ॥ ४३ ॥**

इतना संस्कार कर लेने के पश्चात् आचार्य अग्नि देव के माता-पिता की पूजा करे। फिर उस अग्नि को अपनी आत्मा में स्थापित करे और पाँच समिधायें मूल से लेकर अग्रभाग तक घृत में डूबो कर उनका होम करे। इसी प्रकार आचार्य यथाविधि अग्नि की जिह्वा, अग्नि के अङ्ग और अग्नि की मूर्तियों की तत्तन्मन्त्रों से एक-एक आहुति प्रदान करे ॥ ४२-४३ ॥

**प्रत्येकं जुहुयादेकामाहुतिं मन्त्रवित्तमः ।**
**अवदाय स्रुवेणाज्यं चतुः स्रुचि पिधाय ताम् ॥ ४४ ॥**
**स्रुवेण तिष्ठन्नेवाग्नौ देशिको यतमानसः ।**
**जुहुयाद् वह्निमन्त्रेण वौषडन्तेन सम्पदे ॥ ४५ ॥**
**विघ्नेश्वरस्य मन्त्रेण जुहुयादाहुतीर्दश ।**
**सामान्यं सर्वतन्त्राणामेतदग्निमुखं मतम् ॥ ४६ ॥**
**ततः पीठं समभ्यर्च्च्य देवताया हुताशने ।**
**अर्चयेद् वह्निरूपां तां देवतामिष्टदायिनीम् ॥ ४७ ॥**
**तन्मुखे जुहुयान्मन्त्री पञ्चविंशतिसंख्यया ।**
**आज्येन मूलमन्त्रेण वक्त्रैकीकरणं त्विदम् ॥ ४८ ॥**

पुनः आचार्य एकाग्रचित्त हो, स्रुवा से चार बार घृत लेकर, स्रुचा में स्थापित

कर, उस स्रुचा को स्रुवा से ढक कर, खड़े हो, वौषट् अन्त वाले अग्नि के मन्त्रों से हवन करे। इसके बाद महागणेश मन्त्र से पूर्व-पूर्व से मिलाते हुये दश आहुती प्रदान करे। सभी तन्त्रों के मत में इतना अग्निकार्य मुख्य रूप से होना चाहिये। पुनः आचार्य देवता की पीठ को उसी अग्नि में अर्चन करे। फिर इष्ट प्रदान करने वाली अग्निस्वरूपा देवता का पूजन करे। इस प्रकार मूल मन्त्र से आज्य और अग्नि का एकीकरण कहा गया। तदनन्तर उस अग्नि और प्रकृत इष्ट देवता का एकीकरण अपनी आत्मा में करे ॥ ४४-४८ ॥

**अन्यच्च शैवागमे—**

**इष्टवक्त्रेऽग्निवक्त्राणामन्तर्भावस्तु चैकता ।**
**अथवा कुण्डमानत्वं यदीष्टवदने स्मरेत् ॥ ४९ ॥**
**अन्तर्भाव्यानि वक्त्राणि तदेकीकरणं मतम् । इति ।**

शैवागम में भी ऐसा ही बतलाया गया है—इष्टदेवता के मुख में अग्नि के मुखों का अन्तर्भाव एकता कही जाती है, अथवा समस्त कुण्ड का मान इष्टदेवता के मुख में स्मरण करे। इसी प्रकार वक्त्रों का परस्पर अन्तर्भाव एकीकरण कहा जाता है ॥ ४९-५० ॥

**अतो नाडीसन्धानम् । अग्निदेवतात्मनां त्रयाणां नाड्येकीकरणम् । यच्च—**

**वह्निदैवतयोरैक्यमात्मना सह भावयन् ।**
**मूलमन्त्रेण जुहुयादाज्येनैकादशाहुतीः ॥ ५० ॥**
**नाडीसन्धानमुद्दिष्टमेतदागमवेदिभिः ।**
**जुहुयादङ्गमुख्यानामावृतीनामनुक्रमात् ॥ ५१ ॥**
**एकैकामाहुतिं सम्यक् सर्पिषा देशिकोत्तमः ।**
**मुख्याय जुहुयादेवमाहुतीनां दश क्रमात् ॥ ५२ ॥**

अब वक्त्रैकीकरण के पश्चात् नाडी सन्धान कहते हैं। अग्नि देवता और आत्मा इन तीनों नाडियों का एकीकरण 'नाडीसन्धान' कहा जाता है जैसा कि तन्त्रों में कहा गया है—तदनन्तर अग्नि और अग्निदेवता का आत्मा के साथ एकता की भावना करते हुये मूल मन्त्र से ग्यारह आहुती प्रदान करे। आगम शास्त्र के विद्वानों ने इसी को नाडी सन्धान कहा है। इसी प्रकार आचार्य अनुक्रम से अग्नि के अङ्ग देवताओं और परिवार देवताओं को भी मूल मन्त्र से घृत की एक-एक आहुती प्रदान करे। इसी प्रकार श्रेष्ठ आचार्य मुख्य-मुख्य देवताओं को क्रमशः दश आहुति प्रदान करे ॥ ५०-५२ ॥

**ततोऽन्येषु च कुण्डेषु संस्कृतेषु यथाविधि ।**
**आचार्यो वितरेदग्निं पूर्वादिषु समाहितः ॥ ५३ ॥**

तदनन्तर अन्य कुण्डों में जिनका संस्कार पूर्वोक्त रूप से भली प्रकार किया गया है, उन कुण्डों में पूर्वादि से ईशान पर्यन्त दिशाओं में आचार्य समाहित चित्त हो अग्नि स्थापन करे। (अर्थात् ऋत्विज अपने-अपने कुण्डों में अट्ठारह संस्कार विधि के अनुसार करे और आचार्य सर्वत्र अविच्छेद रूप से अग्नि स्थापन कर विहरण करे) ॥ ५३ ॥

**ऋत्विजो गन्धपुष्पाद्यैरङ्गाद्यावरणान्विताम् ।**
**तन्त्रोक्तदेवतामिष्ट्वा पञ्चविंशतिसंख्यया ॥ ५४ ॥**
**मूलेनाज्येन जुहुयुः साज्येन चरुणा तथा ।**

ऋत्विज गन्ध पुष्पादि उपचारों से अङ्गादि आवरणों से युक्त देवता का पूजन कर मूल मन्त्र पढ़ते हुये केवल आज्य अथवा आज्य-संयुक्त चरु से पच्चीस आहुति अग्नि में प्रदान करे ॥ ५४-५५ ॥

**प्रातरुत्थाय जुहुयुः पुनराज्यान्वितैस्तिलैः ॥ ५५ ॥**
**द्रव्यैर्वा कल्पविहितैः सहस्रं साष्टकं पृथक् ।**

पुनः दूसरे दिन प्रातःकाल उठकर आज्ययुक्त तिल की पच्चीस आहुती अग्नि में प्रदान करे, अथवा कल्प विहित हवनीय द्रव्यों से एक सहस्र अथवा एक-सौ आठ आहुति प्रदान करे ॥ ५५-५६ ॥

**अत्र वायवीयसंहितायां विशेषः—**

**स्रुवेणाज्यं समित् पाण्या स्रुचा शेषं करेण वा।**
**तत्र दिव्येन होतव्यं तीर्थेणास्त्रेण वा तथा ॥ ५६ ॥ इति ।**

वायवीयसंहिता में विशेष कथन इस प्रकार है—स्रुवा से घी की आहुति, हाथ से समिधा, शेष स्रुचा अथवा हाथ से, अथवा दिव्य से, अथवा तीर्थ से, अथवा अस्त्र से होम करना चाहिये ॥ ५६ ॥

**तत्र सुसमिद्धेऽग्नौ होतव्यम् । अन्यथा दोषदर्शनात् । महाकपिलपञ्चरात्रे—**

**अप्रदीप्ते न होतव्यं मध्यमेनाप्यनिन्धिते ।**
**प्रदीप्ते लेलिहाऽनेऽग्नौ होतव्यं कर्मसिद्धये ॥ ५७ ॥**

यह होम प्रज्वलित अग्नि में ही करना चाहिये । अन्यथा दोष होता है । महाकपिल पञ्चरात्र में भी बतलाया गया है—यदि अग्नि प्रदीप्त न हो, अथवा मध्यम प्रदीप्त हो, अथवा यदि इन्धन न हो तब होम न करे । यदि अग्नि प्रदीप्त हो लहलहा रही हो, तभी कर्म सिद्धि के लिये होम करे ॥ ५७ ॥

**बह्वृचे च—**

**अन्धे बुधः सधूमे च जुहुयाद् यो हुताशने ।**

**यजमानो भवेदन्धः सपुत्र इति च श्रुतिः ॥ ५८ ॥**

वह्वृच में कहा भी गया है—जो बुद्धिमान् पुरुष अप्रदीप्त अग्नि में या सधूम अग्नि में होम करता है उससे यजमान पुत्र सहित अन्धा होता है । ऐसा श्रुति कहती है ॥ ५८ ॥

**छन्दोगपरिशिष्टे—**

**योऽनर्च्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।**
**मन्दाग्निरामयावी च दरिद्रश्चोपजायते ॥ ५९ ॥**

छन्दोगपरिशिष्ट में भी बतलाया गया है—जो मानव ज्वालारहित अग्नि में अथवा अङ्गाररहित अग्नि में होम करता है, वह साधक मन्दाग्नि, रोगग्रस्त तथा दरिद्र होता है ॥ ५९ ॥

**तस्मात् समिद्धे होतव्यं नासमिद्धे कथञ्चन ।**
**आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीं तथा ॥ ६० ॥ इति ।**

इसलिये आरोग्य चाहने वाला, आयु चाहने वाला और श्री चाहने वाला पुरुष प्रदीप्त अग्नि में ही होम करे । अप्रदीप्त अग्नि में होम न करे ॥ ६० ॥

**अथ होमानन्तरकृत्यम्—**

**ततः सुधौतदन्तास्यं स्नातं शिष्यं समाहितम् ।**
**पाययित्वा पञ्चगव्यं कुण्डस्यान्तिकमानयेत् ॥ ६१ ॥**
**विलोक्य दिव्यदृष्ट्या तं तच्चैतन्यं हृदम्बुजात् ।**
**गुरुरात्मनि संयोज्य कुर्यादध्वविशोधनम् ॥ ६२ ॥**

अब होम के पश्चात् का कर्म कहते हैं—तदनन्तर दाँत एवं मुख धोकर स्नान किये हुये एकाग्रचित्त शिष्य को पञ्चगव्य पान कराकर कुण्ड के समीप आचार्य ले आवे । पुनः दिव्य दृष्टि से उसके हृत्कमल से चैतन्य निकाल कर अपनी आत्मा में उसे संयुक्त कर अध्व शोधन करे ॥ ६१-६२ ॥

**प्रयोगसारे—**

**पञ्चगव्यं यथा प्रोक्तं पीत्वा चान्तं यथाविधि ।**
**द्वारेण दक्षिणेनाथ यागस्थानं प्रवेशयेत् ॥ ६३ ॥**

**तच्चैतन्यमित्यस्यार्थः—तत् हृदो वहन्नाड्यांकुशमुद्रया चैतन्यमाकृष्य स्ववहन् नाडीमार्गेण स्वहृदि संयोजयेदित्यर्थः ।**

प्रयोगसारतन्त्र में भी बतलाया गया है—आचार्य उपर्युक्त शास्त्र रीति से बनाये गये पञ्चगव्य को यथाविधि शिष्य को पिलाकर दक्षिण द्वार से उसे याग मण्डप में ले आवे ॥ ६३ ॥

'तच्चैतन्यं' का अर्थ इस प्रकार है—हृदय की नाडी में रहने वाले चैतन्य को अङ्कुश मुद्रा से खींचकर अपनी नाडी में बहते हुये चैतन्य को हृदय में मिलावे।

**यच्चोक्तं यामले—**

**हृदि स्थितं तच्चैतन्यं प्रस्फुरत् तारकाकृति।**
**आदाय स्थापयेत् स्वीये हृदयेऽङ्कुशमुद्रया ॥ ६४ ॥ इति।**

जैसा कि यामल में भी कहा है—हृदय में रहने वाले तारे के समान स्फुरित होते हुये शिष्य के चैतन्य को अङ्कुश मुद्रा से खींचकर अपने हृदय में स्थापित करे ॥ ६४ ॥

**अध्वानश्च वायवीयसंहितायाम्—**

**तेऽत्र शब्दास्त्रयोऽध्वानस्त्रयस्त्वर्थाः समीरिताः।**
**मन्त्राध्वा च पदाध्वा च वर्णाध्वा चेति शब्दतः ॥ ६५ ॥**
**भुवनाध्वा च तत्त्वाध्वा कलाध्वा चार्थतः क्रमात्।**
**मन्त्राध्वा मन्त्रराशिः स्यात् पदाध्वा वर्णसङ्घकः ॥ ६६ ॥**
**आदिक्षान्ताश्च ये वर्णा वर्णाध्वेति प्रकीर्तिताः।**
**ईरितो भुवनाध्वेति भुवनानीह सूरिभिः ॥ ६७ ॥**

अब वायवीयसंहिता में प्रोक्त अध्वाओं को कहते हैं—वे अध्वा तीन शब्दगत हैं और तीन अर्थगत हैं। मन्त्राध्वा, पदाध्वा और वर्णाध्वा—ये तीन शब्दगत अध्वा है। भुवनाध्वा, तत्त्वाध्वा और कलाध्वा—ये तीन अर्थगत हैं। मन्त्राध्वा मन्त्र की राशि को, पदाध्वा वर्णसङ्घ को तथा आदि अकार से लेकर क्षान्त वर्ण वर्णाध्वा कहे जाते हैं। विद्वानों ने भुवनों को भुवनाध्वा कहा है ॥ ६५-६७ ॥

**तत्त्वाध्वा बहुधा भिन्नः शैवाद्यागमभेदतः।**
**षट्त्रिंशत् शिवतत्त्वानि द्वाविंश वैष्णवानि तु ॥ ६८ ॥**
**चतुर्विंशतितत्त्वानि मैत्राणि प्रकृतेर्विदुः।**
**उक्तानि दशतत्त्वानि सप्त च त्रिपदात्मनः ॥ ६९ ॥**

**एषां तत्त्वानां व्यक्तिः प्रथमपटले लिखितास्ति।**

शैवादि आगमों में भिन्न-भिन्न होने के कारण तत्त्वाध्वा नाना प्रकार के कहे गये हैं। शिवतत्त्व छत्तीस संख्याक हैं और वैष्णव तत्त्व बाइस संख्या में है। चौबीस तत्त्व मैत्र तत्त्व हैं तथा प्रकृति के दश तत्त्व एवं त्रिपदात्मा के सात तत्त्व कहे गये हैं ॥ ६८-६९ ॥

इन सभी तत्त्वों को स्पष्ट रूप से प्रथम पटल में ही लिख दिया गया है। (द्र० १.८८-९७)

**निवृत्त्याद्याः कलाः पञ्च कलाध्वेति प्रकीर्तिताः।**
**क्रमादेतान् पुनः षट् च शोधयेद् गुरुसत्तमः ॥ ७० ॥**
**पादाध्वंनाभिहृद्भालमूर्धस्वपि शिशोः स्मरेत् ।**

निवृत्ति आदि पाँच तत्त्व 'कलाध्वा' कहे गये हैं । इस प्रकार क्रमशः कहे गये छह तत्त्वों का अच्छा गुरु संशोधन करे । शिष्य के पाद, गुह्य, नाभि, हृदय, भाल एवं शिर में एक-एक अध्वा का ध्यान करावे ॥ ७०-७१ ॥

**तत्रायं शोधनप्रकारः—पादे कलाध्वानं स्मृत्वा यद् गुह्यहृद्वक्त्रशिरःसु स्वबीजादिकाः कलाः विन्यस्य पश्चात् कलाध्वविशोधनम् । एवं तत्त्वाध्वानं अधः स्मृत्वा विलोमेषु पूर्वस्थानेषु तान् विन्यस्य पश्चात् तत्त्वाध्वशोधनम् । एवं भुवनाध्वानं नाभौ स्मृत्वा अनन्तरस्थानेषु स्वबीजाद्यान् विन्यस्य पश्चात् तत् शोधनम् । एवं हृदि वर्णाध्वानं संस्मृत्य शुद्धान् वर्णान् तद्देहे विन्यस्य पश्चाद् वर्णाध्वशोधनम् । एवं भाले पदाध्वानं संस्मृत्य सविन्द्वर्णान् विन्यस्य तत्शोधनम् । एवं मूर्धनि मन्त्राध्वानं संस्मृत्य सप्तमन्त्रान् तत्तत्स्थानेषु व्याप्य पश्चात् मन्त्राध्वविशोधनमिति ।**

शोधन का प्रकार कहते हैं—१. शिष्य के पाद में कलाध्वा का स्मरण कर गुह्य, हृदय, वक्त्र एवं शिर में स्वबीजादि कला का न्यास कर पश्चात् उसका शोधन करे । २. इसी प्रकार भुवनाध्वा का नाभि में स्मरण कर उसके बीच-बीच स्थानों में स्वबीजादि का न्यास कर पश्चात् उसका शोधन करे । ३. इसी प्रकार हृदय में वर्णाध्वा का स्मरण कर शुद्ध वर्णों को शिष्य के शरीर में न्यास कर पश्चात् वर्णाध्वा का शोधन करे । ४. इसी प्रकार भाल में पदाध्वा का स्मरण कर बिन्दुसहित वर्णों का न्यास कर पदाध्वा का शोधन करे । ५. इसी प्रकार मूर्धा में मन्त्राध्वा का स्मरण कर सात मन्त्रों का तत्तत्स्थानों में न्यास कर मन्त्राध्वा का विशोधन करे ।

**शारदायाम्—**

**ततः कूर्चेन विधिवत् तं स्पृशन् जुहुयाद् गुरुः ।**
**आचार्यकुण्डे संशुद्धैस्तिलैराज्यपरिप्लुतैः ॥ ७१ ॥**
**शोधयाम्यमुमध्वानं स्वाहेति पृथगध्वनः ।**
**ताराद्यमाहुतीरष्टौ क्रमात् तां विलयं नयेत् ॥ ७२ ॥**
**शिवे शिवान्तसंलीलान् जनयेत् सृष्टिमार्गतः ।**

अब शारदातिलक (५.९३-९६) में कहते हैं—तदनन्तर आचार्य कूर्च (२७ कुशाग्रभाग की वेणी) से शिष्य का स्पर्श करते हुये आठ आहुती प्रदान करे । पुनः कुण्ड में शुद्ध किये गये तिलों को घृत से परिपूर्ण कर 'अध्वानं शोधयामि स्वाहा' इस मन्त्र से अध्वाओं के लिये पृथक् आहुति देवे । पुनः प्रणव के द्वारा आठ आहुति देकर संहार क्रम से उस अग्नि को शिव में विलीन कर देवे ।

तदनन्तर उस विलीन अग्नि को सृष्टि मार्ग से उत्पन्न करे ॥ ७१-७३ ॥

**विलोकयन् दिव्यदृष्ट्या तं शिशुं देशिकोत्तमः ।**
**आत्मस्थितं तच्चैतन्यं पुनः शिष्ये नियोजयेत् ॥ ७३ ॥**

शिष्य में आत्म चैतन्य का नियोजन गुरु इस प्रकार करे—आचार्य दिव्य दृष्टि से शिष्य की ओर देखते हुये आत्मगत चैतन्य शिष्य में स्थापित करे ॥ ७३ ॥

**नारायणीयेऽपि—**

**ध्यानेनात्मनि तं शिष्यं संहृत्य प्रलयक्रमात् ।**
**पुनरुत्पाद्य तत् पाणौ दद्याद् दर्भांश्च मन्त्रितान् ॥ ७४ ॥**

नारायणीयतन्त्र में भी बतलाया गया है—आचार्य प्रलयक्रम से शिष्य को ध्यान से अपनी आत्मा में समेट लेवे । फिर उत्पन्न कर उसके हाथ में मन्त्राभिमन्त्रित कुशा प्रदान करे ॥ ७४ ॥

**अनेनाध्वशोधनेन शरीरशुद्धिर्भवति । यतः षडध्वमेव शरीरम् । यच्च यामले—**

**शान्त्यतीतकलामूर्धा शान्तिवक्त्रशिरोवहा ।**
**निवृत्तिजानुजङ्घाङ्घ्रिर्भुवनाध्वशिरोरुहा ॥ ७५ ॥**
**मन्त्राध्वमांसरुधिरा पदवर्णशिरायुता ।**
**तत्त्वाध्वमज्जामेदोऽस्थिधातुरेतोयुता शिवे ॥ ७६ ॥ इति ।**

इस प्रकार अध्वशोधन से शरीर की शुद्धि होती है । क्योंकि शरीर षडध्वमय है । यामल में भी बतलाया गया है—शान्त्यतीत कला मूर्धा है, शक्ति कलामुख और ब्रह्मरन्ध्र है । निवृत्ति कला जानु एवं जङ्घा और भुवनाध्वा बाल है । मन्त्राध्वा मांस और रुधिर है । पद और वर्ण नाडियाँ हैं । तत्त्वाध्वा मज्जा, मेद, अस्थिधातु और वीर्य है ॥ ७५-७६ ॥

**वायवीये—**

**ततो होमावशिष्टेन घृतेनापूर्य वै स्रुवम् ।**
**निधाय पुष्पं तस्याग्रे स्रुवेणाधोमुखेन ताम् ॥ ७७ ॥**
**सदर्भेण समाच्छाद्य मूलेनाञ्जलिनोत्थितः ।**
**वौषडन्तेन जुहुयाद् धारां तु प्लवसन्निभाम् ॥ ७८ ॥**
**उद्वास्य देवतां कुम्भे साङ्गां सावरणां गुरुः ।**

वायवीयसंहिता में भी इस प्रकार बतलाया गया है—तदनन्तर आचार्य स्रुवा से होमावशिष्ट घृत स्रुचा में डाल देवे । फिर उसके आगे पुष्प रखकर, उसे दर्भ सहित स्रुवा से अधोमुख ढक देवे । तदनन्तर वौषडन्त मूल मन्त्र का उच्चारण करके अञ्जलि को ऊपर उठाते हुये, ढालू की तरह घृत धारा को बहाते हुये

पूर्णाहुती देना चाहिए । फिर गुरु द्वारा साङ्ग सावरण देवता को कुम्भ में उद्वासन करना चाहिए ॥ ७७-७९ ॥

**अत्र साम्प्रदायिकास्तु व्याहृतिशब्देन महाव्याहृतय उच्यन्ते । ताश्च यथा—ॐ भूरानये च पृथिव्यै महते च स्वाहा । ॐ भुवो वायवे चान्तरिक्षाय महते च स्वाहा । ॐ स्वरादित्याय दिवे च महते च स्वाहा । ॐ भूर्भुवः स्वश्चन्द्रमसे च नक्षत्रेभ्यश्च महते च स्वाहा । विभावसोर्जिह्वादीनामित्यादिशब्देनाधिदेवताङ्गमूर्तिलोकपालतदायुधानीत्यर्थः ।**

**शारदायाम्—**

**पुनर्व्याहृतिभिर्हुत्वा जिह्वादीनां विभावसोः ॥ ७९ ॥**
**एकैकामाहुतिं दत्त्वा परिषिच्याद्भिरात्मनि ।**
**पावकं योजयित्वा स्वे परिधीन् सपरिस्तरान् ॥ ८० ॥**

यहाँ साम्प्रदायिक लोग महाव्याहृतिपूर्वक इस प्रकार पूर्णाहुति करते हैं—'ॐ भूरानये च पृथिव्यै महते च स्वाहा' इत्यादि (दीक्षा देखिये) इस प्रकार व्याहृतियों से होम कर अग्नि जिह्वा से होम करे ।

जैसा कि शारदातिलक में कहा गया है—महाव्याहृतियों से होम करने के पश्चात् अग्नि की जिह्वाओं से एक-एक आहुति देवे । फिर प्रोक्षणी के जल से अग्नि को अभिषिक्त कर उस अग्नि को अपनी आत्मा में एकीकरण करे । परिधियों एवं परिस्तरणों को अग्नि में जला देवे ॥ ७९-८० ॥

**अग्नेरुद्वासनमन्त्रस्तु गणेश्वरविमर्शिन्याम्—**

**ॐ भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक ।**
**कर्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सादरम् ॥ ८१ ॥ इति ।**
**नैमित्तिके दहेन् मन्त्री नित्ये तु न दहेदिमान् ।**
**नेत्रे शिष्यस्य बध्नीयान्नेत्रमन्त्रेण वाससा ।**
**करे गृहीत्वा तं शिष्यं कुण्डतो मण्डलं नयेत् ॥ ८२ ॥**

अग्नि के उद्वासन का मन्त्र गणेश्वरविमर्शिनी में इस प्रकार है—ॐ भो भो वह्ने...........सान्निध्यं कुरु सादरम्' मन्त्र पढ़कर अग्नि का उद्वासन करे । आचार्य नैमित्तिक कर्म में ही सास्तरण परिधियों का दहन करे । किन्तु नित्य कर्म में इन परिधियों का दहन न करे । फिर नवीन वस्त्र से नेत्र मन्त्र (नेत्राभ्यां वौषट्) पढ़ते हुये आचार्य शिष्य के नेत्रों को बाँध देवे । फिर शिष्य का हाथ पकड़कर उसे कुण्ड के समीप ले आवे ॥ ८१-८२ ॥

**नारायणीये—**

**न्यासं शिष्यतनौ कृत्वा तं प्रदक्षिणमानयेत् ।**

पश्चिमद्वारमानीय क्षेपयेत् कुसुमाञ्जलिम् ॥ ८३ ॥

नारायणीयतन्त्र में भी कहा गया है—शिष्य के शरीर में न्यास कर उसे प्रदक्षिण ले आवे और पश्चिमद्वार पर लाकर कुसुमाञ्जलि को चढ़ा देवे ॥ ८३ ॥

**शारदायाञ्च—**

तस्याञ्जलिं पुनः पुष्पैः पूरयित्वा यथाविधि ।
कलशे देवताप्रीत्यै क्षेपयेन्मूलमुच्चरन् ॥ ८४ ॥

जैसा कि शारदातिलक (५.१०१) में भी कहा गया है—पुनः शिष्य की अञ्जलि को फूलों से विधिपूर्वक परिपूर्ण कर, मन्त्र पढ़ते हुये, पश्चिम द्वार पर उसे ले आकर, कलश पर उन फूलों को मूल मन्त्र पढ़कर चढ़वा देवे । जिससे कलशाधिष्ठातृ देवता प्रसन्न हो जावें ॥ ८४ ॥

**पिङ्गलामते तु विशेषः—**

पुष्पैरञ्जलिमापूर्य योगपीठे प्रदापयेत् ।
पश्चिमोत्तररुद्रेन्द्रे पुष्पपातः शुभोऽशुभे ।
अष्टोत्तरशतं शान्त्यै जुहुयादस्त्रमन्त्रतः ॥ ८५ ॥

पिङ्गलामत में विशेष रूप से बतलाया गया है—आचार्य शिष्य की अञ्जलि पुष्प से पूर्ण कर योगपीठ पर चढ़वा देवे । पश्चिम, उत्तर, ईशान तथा पूर्व की ओर पुष्पपात शुभावह होता है । अतः अशुभ होने पर अस्त्र मन्त्र से एक-सौ आठ आहुती प्रदान करे ॥ ८५ ॥

**शारदायाम्—**

व्यपोह्य तन्नेत्रबन्धमासीनं दर्भसंस्तरे ।
आत्मयागक्रमाद् भूयः संहृत्योत्पाद्य देशिकः॥ ८६ ॥ इति ।

अत्र साम्प्रदायिकास्तु आत्मयागः अन्तर्यागः । तत्क्रमात् तत्रोक्तभूतशुद्धिक्रमेणेत्यर्थः । यच्चोक्तं प्रयोगसारे मन्त्रतन्त्रप्रकाशेऽपि—

उपविश्यासने दिव्ये संहरेत् तस्य विग्रहम् ।
गुणांशेन पृथिव्यादिभूतानि विलयं नयेत् ॥ ८७ ॥
यथावत् पिण्डसंस्थानि संहारक्रमयोगतः ।
ततः सृष्टिक्रमेणैव पिण्डं सम्भावयेत् तदा ॥ ८८ ॥ इति ।

**शारदायाम्—**

तत्तन्मन्त्रोदितान् न्यासान् कुर्याद्देहे शिशोस्तदा ।
पञ्चोपचारैः कुम्भस्थां पूजयित्वेष्टदेवताम् ॥ ८९ ॥
तस्यां तन्त्रोक्तमार्गेण विदध्यात् सकलीकृतिम् ।

**मण्डलेऽलंकृते शिष्यमन्यस्मिन्नुपवेशयेत् ॥ ९० ॥**

**अन्यस्मिन् मण्डले इति मण्डलाद् बहिः ऐशान्याम् ।**

शारदातिलक (५.१०२) एवं प्रयोगसार में भी बतलाया गया है—इसके बाद शिष्य का नेत्र खोल देवे और सुखपूर्वक आसन पर बैठाकर, वक्ष्यमाण विधि के अनुसार (तन्त्रोक्त भूतशुद्धि) संहार क्रम से आत्मयाग (= अन्तर्याग) करावे । तदनन्तर सृष्टिक्रम से उसे पुनः उत्पन्न करे । फिर उस शिष्य रूप शिशु के शरीर में तत्तन्मन्त्रों से कहे गये न्यास करावे । फिर आचार्य कुम्भ पर स्थित इष्टदेवता का पञ्चोपचारों से पूजन करावे । तदनन्तर तन्त्रशास्त्र में कही गई विधि के अनुसार उसका सकलीकरण करे । फिर उस शिष्य को अन्य अलङ्कृत मण्डल में ईशानकोण में बैठावे ॥ ८६-९० ॥

अन्यस्मिन् मण्डले अर्थात् मण्डल से बाहर ईशानकोण में ।

**तदुक्तं सोमशम्भुना—**

**यागालयाद् दिगीशस्य रचिते स्नानमण्डपे ।**<br>
**कुर्यात् करद्वयायामां वेदीमष्टाङ्गुलोच्छ्रिताम् ॥ ९१ ॥**<br>
**श्रीपर्ण्याद्यासने तत्र विन्यस्यानन्तमासनम् ।**<br>
**शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् ॥ ९२ ॥**<br>
**स्नाने तूदङ्मुखं मुक्तौ भुक्तौ च पूर्ववक्त्रकम् ।**<br>
**ऊर्ध्वकायं समारोप्य तथा दर्भाग्रपाणिनम् ॥ ९३ ॥**<br>
**नदत्सु पञ्चवाद्येषु सार्धं विप्राशिषा गुरुः ।**<br>
**विधिवत् कुम्भमुद्धृत्य तन्मुखस्थान् सुरद्रुमान् ॥ ९४ ॥**<br>
**शिशोः शिरसि विन्यस्य मातृकां मनसा जपन् ।**<br>
**मूलेन साधितैस्तोयैरभिषिञ्चेत् तमात्मवित् ॥ ९५ ॥**

**मूलेन = विलोममूलेन ।**

जैसा कि सोमशम्भु ने कहा है—यज्ञ मण्डप से ईशानकोण में बनाये गये स्नान मण्डप में, दो हाथ लम्बी, दो हाथ चौड़ी और आठ अङ्गुल ऊँची वेदी बनावे । उस पर श्रीपर्णी का आसन रखकर उस पर अनन्तासन स्थापित करे । उस आसन पर शिष्य को पूर्वाभिमुख बिठाकर सकलीकरण कर पूजा करे । स्नान के लिये उत्तराभिमुख मुक्ति तथा भुक्ति में पूर्वाभिमुख, हाथ में कुशा लिये हुये, शिष्य को ऊर्ध्वकाय बिठावे । इसके बाद वेदवेत्ता गुरु पञ्चवाद्य के साथ तथा ब्राह्मणों के आशीर्वाद के साथ विधिवत् कलश को उठाकर उसमें डाले हुये क्षीरी वृक्षों के पत्ते को शिष्य के ऊपर रखकर, (विलोम) मूल मन्त्र से अभिमन्त्रित जल से उसे स्नान करावे ॥ ९१-९५ ॥

यच्च प्रपञ्चसारे—

**यथा पुरा पूरितमक्षरैर्घटं**
**सुधामयैः शिष्यतनौ तथैव सः ।**
**प्रपूरयेन्मन्त्रिवरोऽभिषेचये-**
**दवाप्तये मङ्क्षु यथेष्टसम्पदाम् ॥ ९६ ॥**

जैसा कि प्रपञ्चसार (६.१२०) में भी बतलाया गया है—जिस प्रकार पूर्वकाल में अमृत अक्षर से घट पूर्ण किया गया था, उसी प्रकार सुधामय जल से पूर्ण किये गये इस घट के जल से मन्त्रज्ञ आचार्य शिष्य के शरीर को यथेष्ट सम्पदा प्राप्ति के लिये अभिषिञ्चित करे ॥ ९६ ॥

**पूजितां पुनरादाय वर्धनीमस्त्ररूपिणीम् ।**
**तस्यां सुसाधितैस्तोयैः सिञ्चेद् रक्षार्थमञ्जसा ॥ ९७ ॥**

फिर पूर्व में पूजित अस्त्ररूपिणी वर्धनी को लेकर उसके मन्त्राभिषिक्त जल से शिष्य की रक्षा के लिये आचार्य उसका अभिषेचन करे ॥ ९७ ॥

**अवशिष्टेन तोयेन शिष्यमाचामयेद् गुरुः ।**
**ततस्तं सकलीकुर्याद्देवतात्मानमात्मवित् ॥ ९८ ॥**

वर्धनी के अवशिष्ट जल से शिष्य को आचमन करावे । फिर आत्मवेत्ता उस देवतात्मा का सकलीकरण करे ॥ ९८ ॥

**उत्थाय शिष्यो विमले वाससी परिधाय च ।**
**आचम्य वाग्यतो भूत्वा निषीदेत् सन्निधौ गुरोः ॥ ९९ ॥**
**देवतामात्मनः शिष्ये संक्रान्तां देशिकोत्तमः ।**
**पूजयेद् गन्धपुष्पाद्यैरैक्यं सम्भावयन् तयोः ॥१००॥ इति ।**

तदनन्तर शिष्य वहाँ से उठकर स्वच्छ और नवीन उत्तरीय तथा वस्त्र धारण करे । तत्पश्चात् आचमन कर, मौन होकर, पुनः गुरु के सन्निधान में बैठे । आचार्य शिष्य की आत्मा में देवता का संक्रमण जानकर देवता से अभिन्न शिष्य की गन्ध पुष्पादि से पूजा करे ॥ ९९-१०० ॥

**वसिष्ठसंहितायाम्—**

**ततस्तत् शिरसि स्वस्य हस्तं दत्त्वा शतं जपेत् ।**
**अष्टोत्तरशतं मन्त्रं दद्यादुदकपूर्वकम् ॥ १०१ ॥**

वसिष्ठसंहिता में भी कहा गया है—फिर आचार्य को उसके शिर पर अपना हाथ रखकर सौ संख्याक जप करना चाहिए । तदनन्तर जल के साथ एक-सौ

आठ बार उसे मन्त्रदान करना चाहिए ॥ १०१ ॥

**अत्र आचार्यो देवतां प्रार्थयेत् । तत्र मन्त्रः प्रपञ्चसारे—**

**ॐ कारुण्यनिलये देवि सर्वसम्पत्तिसंश्रये ।**
**शरण्यवत्सले मातः कृपामस्मिन् शिशौ कुरु ॥ १०२ ॥**
**आणवप्रमुखैः पाशैः पाशितस्य सुरेश्वरि ।**
**दीनस्यास्य दयाधारे कुरु कारुण्यमीश्वरि ॥ १०३ ॥**
**ऐहिकामुस्मिकैर्भोगैरपि सम्बध्यतामसौ ।**
**स्वभक्तिः सकला चास्मै दीयतां निष्कलां श्रये ॥ १०४ ॥**

फिर आचार्य देवता से प्रार्थना करे जैसा कि प्रपञ्चसारतन्त्र में मन्त्र है—'ॐ कारुण्य निलये देवि से लेकर दीयतां निष्कलां श्रये' पर्यन्त तीन श्लोकों से आचार्य शिष्य के लिये प्रार्थना करे ॥ १०२-१०४ ॥

**मन्त्रतन्त्रप्रकाशेऽपि—**

**विश्वात्मा स्वयमाचार्यस्तन्मूर्ध्नि स्वकरं न्यसेत् ।**
**ऋष्यादियुक्तं च मनुं त्रिर्ब्रूयाद् दक्षिणे श्रुतौ ॥ १०५ ॥**
**प्रसन्नवदनस्तस्य शिष्यस्य मुनिपुङ्गव ।**
**स्वतो ज्योतिर्मयीं विद्यां गच्छन्ती भावयेद् गुरुः॥ १०६ ॥**

मन्त्रतन्त्रप्रकाश में भी बतलाया गया है—आचार्य स्वयं विश्वात्मा है, वह शिष्य के शिर पर अपना हाथ रखे । फिर ऋषि, छन्द एवं देवता युक्त मन्त्र का शिष्य के दाहिने कान में तीन बार उपदेश करे । फिर हे मुनिपुङ्गव! उस शिष्य में अपने से निकल कर ज्योतिःस्वरूपा महाविद्या रूप मन्त्र को शिष्य के हृदय में प्रविष्ट होने की भावना करे ॥ १०५-१०६ ॥

**आगतां भावयेच्छिष्यं एवं तन्त्रविदो विदुः ।**
**विद्यां दत्त्वा सहस्रं वै स्वसिध्यै देशिको जपेत् ॥ १०७ ॥**

तन्त्रवेत्ता भी कहते हैं कि शिष्य भी गुरु से निकली हुई विद्या को अपने में प्रविष्ट होने की भावना करे । आचार्य मन्त्र देने के पश्चात् स्वयं अपनी सिद्धि के लिये सहस्र संख्याक मन्त्र का जप करे ॥ १०७ ॥

**अष्टोत्तरसहस्रं वा शक्तिहानानवाप्तये ।**
**देशिकं प्रार्थयेच्छिष्यश्चैनं मन्त्रमनूच्चरन् ॥ १०८ ॥**
**त्वत्प्रसादादहं देव कृतकृत्योऽस्मि सर्वतः ।**
**मायामृत्युमहापाशाद् विमुक्तोऽस्मि शिवोऽस्मि च ॥१०९॥ इति ।**

अथवा मन्त्र देने के कारण जो मन्त्र की हानियाँ हुई हैं, उसे पुनः प्राप्त करने के लिये सहस्त्र अथवा अष्टोत्तर संख्याक जप करे । फिर शिष्य मन्त्र का उच्चारण करते हुये देशिक की प्रार्थना 'त्वत्प्रसादादहं से लेकर शिवोऽस्मि च' पर्यन्त श्लोक से करे ॥ १०८-१०९ ॥

**शारदायाम्—**

**गुरोर्लब्ध्वा महाविद्यामष्टकृत्त्वो जपेत् सुधीः ।**
**गुरुदैवतविद्यानामैक्यं सम्भावयन् धिया ॥ ११० ॥**
**प्रणमेद्दण्डवद् भूमौ गुरुं तद् देवतात्मकम् ।**
**तस्य पादाम्बुजद्वन्द्वं निजमूर्धनि योजयेत् ॥ १११ ॥**
**शरीरमर्थं प्राणञ्च सर्वं तस्मै निवेदयेत् ।**

शारदातिलक (५.१११-११५) में भी बतलाया गया है—तदनन्तर विद्वान् शिष्य गुरु द्वारा मन्त्र ग्रहण कर आठ बार उस मन्त्र का जप करे । पुनः गुरु, मन्त्र तथा देवता में एकत्व की भावना करते हुये शिष्य देवतात्मक उस गुरु को साष्टाङ्ग प्रमाण करे । फिर गुरु के दोनों चरण कमलों को अपने शिर पर धारण करे । अपना शरीर, अपना समस्त धन और अपना प्राण गुरु को समर्पित कर देना चाहिए ॥ ११०-११२ ॥

**ततः प्रभृति कुर्वीत गुरोः प्रियमनन्यधीः ॥ ११२ ॥**
**ऋत्विग्भ्यो दक्षिणां दत्त्वा समग्रां प्रीतमानसः ।**
**ब्राह्मणांस्तर्पयेत्पश्चाद् भक्ष्यभोज्यैः सदक्षिणैः ॥ ११३ ॥**

उसी दिन से वह अनन्य बुद्धि होकर गुरु का समस्त प्रिय कार्य करे । तदनन्तर प्रसन्न चित्त हो, ऋत्विजों को दक्षिणा देवे । फिर भक्ष्य, भोज्य एवं दक्षिणा के साथ ब्राह्मणों को तृप्त करे ॥ ११२-११३ ॥

**ऋत्विग्भ्यो ब्रह्मादिभ्यः । तत्र प्रणीतामार्जनं कृत्त्वा ब्रह्मणे दक्षिणां दत्त्वा ब्रह्माणमुद्वास्य हुतचरुशेषं प्राशयेत् । तदुक्तं ब्रह्मसंहितायाम्—**

**प्रणीतामार्जनं कृत्त्वा दद्याच्च ब्रह्मदक्षिणाम् ।**
**स्वस्ववित्तानुसारेण लोभमोहविवर्जितः ॥ ११४ ॥**
**ततो ब्रह्माणमुद्वास्य ब्राह्मणान् भोजयेदथ ।**
**आशीर्वचोभिर्विदुषामेधमानः सुखीभवेत् ॥ ११५ ॥**

ऋत्विग्म्यः अर्थात् ब्रह्मादिकों को । ब्रह्मदेव को प्रणीता से मार्जन कर तदनन्तर उन्हें दक्षिणा देकर उनका विसर्जन कर हुतशेष चरु भोजन करावे । जैसा कि ब्रह्मसंहिता में भी बतलाया गया है—प्रणीता से मार्जन कर ब्रह्मदेव को अपने

वित्त के अनुसार लोभ और मोह से रहित होकर दक्षिण देवे । फिर ब्रह्मदेव का विसर्जन करना चाहिए । ब्राह्मणों को भोजन करा कर और उन विद्वान् ब्राह्मणों के आशीर्वाद से सुखी रहे ॥ ११४-११५ ॥

**हुतशेषं ततः प्राश्यं कुक्कुटाण्डप्रमाणकम् ।**
**मन्त्रितं मन्त्रगायत्र्या त्र्यायुषं चापि धारयेत् ॥ ११६ ॥**
**पूर्णपात्रं पूर्यतोयैः सप्तकृत्त्वोऽभिमन्त्रितैः ।**
**आत्मानमभिषिञ्चेत् कैः सदूर्वैस्तुलसीदलैः ॥ ११७ ॥**

फिर हुतशेष कुक्कुटाण्ड प्रमाण में भोजन कर मन्त्र गायत्री से मन्त्रित त्र्यायुष धारण करे । सात बार अभिमन्त्रित जल से पात्र को पूर्ण कर दूर्वा एवं तुलसी मिश्रित उस जल से अपने को अभिषिक्त करे ॥ ११६-११७ ॥

**अथ होमदक्षिणा प्रपञ्चसारे—**

**एकादशार्धकणिका वरकाञ्चनस्य**
**दद्यात् सदैव गुरवेऽथ सहस्रहोमे ।**
**अर्धार्धपञ्चकणिका द्विकणा च सार्धा**
**स्याद्, दक्षिणेति कथिता मुनिभिस्त्रिधैव ॥ ११८ ॥**

होम की दक्षिणा प्रपञ्चसार के अनुसार इस प्रकार है—गुरु को सहस्र होम में सुवर्ण की एकादश की आधी (५५०) कणिका (मुद्रा) प्रदान करनी चाहिये । उस साढ़े पाँच सौ कणिका की आधी सुवर्ण मुद्रा अर्थात् (२७५) मुद्रा शेष होता, ब्रह्मा और अन्य ऋत्विजों को देवे ॥ ११८ ॥

**एषा क्रियावती दीक्षा प्रोक्ता सर्वसमृद्धिदा ।**
**अथ वर्णात्मिकां वक्ष्ये दीक्षामागमचोदिताम् ॥ ११९ ॥**

यह सम्पूर्ण सिद्धिप्रदा क्रियावती दीक्षा हमने कही । अब आगमशास्त्र के अनुसार वर्णात्मिका दीक्षा कहता हूँ ॥ ११९ ॥

### वर्णात्मिकादीक्षाकथनम्

**पुम्प्रकृत्यात्मकाः वर्णाः शरीरमपि तादृशम् ।**
**यतस्तस्मात् तनौ न्यस्येद् वर्णान् शिष्यस्य देशिकः ॥ १२०॥**

मातृका वर्ण पुरुष और प्रकृत्यात्मक है, शरीर भी वैसा ही है । इसलिये आचार्य शिष्य के शरीर में मन्त्र के वर्णों को स्थापित करे ॥ १२० ॥

**तत्तत्स्थानयुतान् वर्णान् प्रतिलोमेन संहरेत् ।**
**स्वाज्ञया देवताभावाद् विधिना देशिकोत्तमः ॥ १२१ ॥**

पुनः शिष्यगत चैतन्य को परमात्मा में संयुक्त कर, स्वयं देव स्वरूप हो, अपनी इच्छा से प्रतिलोम क्रम से आगे-आगे के स्थान युक्त वर्णों को, पूर्व-पूर्व स्थान युक्त वर्णों में उपसंहत करे । इस प्रकार शिष्य के शरीर में वर्णों के विलीन कर देने से उसका शरीर देवमय हो जाता है ॥ १२१ ॥

**तदा विलीनतत्त्वोऽयं शिष्यो दिव्यतनुर्भवेत् ।**
**परमात्मनि संयोज्य तच्चैतन्यं गुरूत्तमः ॥ १२२ ॥**
**तस्मादुत्पाद्य तान् वर्णान् न्यस्येत् शिष्यतनौ पुनः।**
**सृष्टिक्रमेण विधिवच्चैतन्यं च नियोजयेत् ॥ १२३ ॥**
**जायते देवताभावः परानन्दमयः शिशोः ।**
**एषा वर्णमयी दीक्षा प्रोक्ता संवित्प्रदायिनी ॥ १२४ ॥**

फिर गुरु उसके चैतन्य को परमात्मा में संयुक्त कर उन वर्णों को शिष्य के शरीर से उत्पन्न कर, उन वर्णों से सृष्टि क्रम के अनुसार शिष्य के शरीर में न्यास करे । इस प्रकार चैतन्य के नियोजन करने से उसमें देवता भाव आता है और यह शुद्ध आनन्दमय हो जाता है । इस प्रकार हमने वर्णाध्वा की दीक्षा का विधान कहा, जो यह दीक्षा समस्त ज्ञान की जननी कही गई है ॥ १२२-१२४ ॥

### कलावतीदीक्षाकथनम्

**ततः कलावती दीक्षा यथावदभिधीयते ।**
**निवृत्त्याद्याः कलाः पञ्चभूतानां शक्तयो यतः ॥ १२५ ॥**
**तस्माद् भूतमये देहे ध्यात्वा तां वेधयेत् शिशोः।**
**निवृत्तिर्जानुपर्यन्तं तलादारभ्य संस्थिता ॥ १२६ ॥**
**जानुनोर्नाभिपर्यन्तं प्रतिष्ठा व्याप्य तिष्ठति ।**
**नाभेः कण्ठावधिव्याप्ता विद्या शान्तिस्ततः परम् ॥ १२७ ॥**
**कण्ठाल्ललाटपर्यन्तं व्याप्ता तस्मात् शिखावधि।**
**शान्त्यतीता कला ज्ञेया कलाव्याप्तिरितीरिता ॥ १२८ ॥**

अब कलावती दीक्षा का विधान कहता हूँ । यतः निवृत्ति आदि पाँच कलायें समस्त भूतों की शक्तियाँ हैं, अतः आचार्य उन कलाओं का ध्यान कर शिष्य के पञ्चभूतमयं शरीर का भेदन कर उसमें कलाओं का प्रवेश करावे । शरीर में पैर के तलवे से आरम्भ कर जानु पर्यन्त निवृत्ति कला स्थित है । जानु से नाभिपर्यन्त प्रतिष्ठा कला व्याप्त होकर स्थित है । नाभि से कण्ठ पर्यन्त 'विद्या कला', उसके बाद 'शान्ति कला' कण्ठ से ललाट पर्यन्त व्याप्त होकर स्थित है । फिर ललाट से शिखा पर्यन्त 'शान्त्यतीता कला' स्थित है । यहाँ तक हमने कलाव्याप्ति (कलाध्वा) का वर्णन किया ॥ १२५-१२८ ॥

**संहारक्रमयोगेन स्थानात् स्थानान्तरे गुरुः।**
**संयोज्य वेधयेद् विद्वानाज्ञया ताः शिखावधि।**
**इयं प्रोक्ता कलादीक्षा दिव्यज्ञानप्रदायिनी ॥ १२९ ॥**

गुरु इन पाँच कलाओं का वेधन संहार क्रम के अनुसार एक स्थान से दूसरे स्थान तक करे। इस प्रकार विद्वान् गुरु आज्ञा चक्र से शिखावधि संयुक्त कर वेधन करे। यह कला दीक्षा हमने कही जो दिव्य ज्ञान देने वाली है ॥ १२९ ॥

**वेधमयीदीक्षाकथनम्**

**ततो वेधमयीं वक्ष्ये दीक्षां संसारमोचिनीम्।**
**ध्यायेत् शिशुतनोर्मध्ये मूलाधारे चतुर्दले ॥ १३० ॥**
**त्रिकोणमध्ये विमले तेजस्त्रयविजृम्भिते।**
**वलयत्रयसंयुक्तां तडित्कोटिसमप्रभाम् ॥ १३१ ॥**
**शिवशक्तिमयीं देवीं चेतनामात्रविग्रहाम्।**
**सूक्ष्मात् सूक्ष्मतरां शक्तिं भित्वा षट्चक्रमञ्जसा ॥ १३२ ॥**
**गच्छन्तीं मध्यमार्गेण दिव्यां परशिवावधि।**

अब संसार से मुक्त करने वाली वेधमयी दीक्षा का वर्णन आपसे करता हूँ। आचार्य शिष्य के शरीर में मूलाधार स्थित त्रिकोण के मध्य स्थान में जहाँ स्वच्छ चतुर्दल कमल है, जो सूर्य, चन्द्र तथा अग्नि—इन तीनों के तेज से खिला हुआ है; वहाँ कुण्डलिनी का ध्यान करे। जो तीन वलयों से युक्त है और जिसका प्रकाश करोड़ों विद्युत् के प्रकाश के समान देदीप्यमान कहा गया है। उसका शरीर चैतन्य से युक्त है, वह सूक्ष्म से सूक्ष्म है। इस प्रकार शिव एवं उसकी शक्तिमयी कुण्डलिनी का ध्यान करना चाहिये। जो कुण्डलिनी अनायास मूलाधार, स्वाधिष्ठान, मणिपूर, अनाहत, आज्ञा तथा विशुद्ध—इन षट्चक्रों का भेदन कर सुषुम्ना के मध्य मार्ग से परशिव पर्यन्त जाती है, ऐसी दिव्य कुण्डलिनी का ध्यान करना चाहिए ॥ १३०-१३३ ॥

**वादिसान्तदलस्थार्णान् संहरेत् कमलासने ॥ १३३ ॥**
**तं षट्पत्रमये पद्मे वादिलान्ताक्षरान्विते।**
**स्वाधिष्ठाने समायोज्य वेधयेदाज्ञया गुरुः ॥ १३४ ॥**
**तान् वर्णान् संहरेद् विष्णौ तं पुनर्नाभिपङ्कजे।**
**दशपत्रे डादिफान्तवर्णाढ्ये योजयेद् गुरुः ॥ १३५ ॥**
**तान् वर्णान् संहरेद् रुद्रे तं पुनर्हृदयाम्बुजे।**
**कादिठान्तार्कवर्णाढ्ये योजयित्वेश्वरे गुरुः ॥ १३६ ॥**
**तान् वर्णान् संहरेदस्मिन् तं भूयः कण्ठपङ्कजे।**

**स्वराढ्ये षोडशदले योजयित्वा स्वरान् पुनः ॥ १३७ ॥**
**सदाशिवे तान् संहृत्य तं पुनर्भूसरोरुहे ।**
**द्विपत्रे हक्षलसिते योजयित्वा ततो गुरुः ॥ १३८ ॥**
**तदर्णौ संहरेद् विन्दौ कलायां तं नियोजयेत् ।**
**लं नादेऽनन्तरं नादं नादान्ते योजयेद् गुरुः ॥ १३९ ॥**
**तमुन्मन्यां समायोज्य विष्णुवक्त्रान्तरे च ताम् ।**
**तं पुनर्गुरुवक्त्रे तु योजयेद् देशिकोत्तमः ॥ १४० ॥**

व श ष स चार वर्ण वाले चतुर्दल कमल को आधार चक्र स्थित ब्रह्म में उपसंहार करे। फिर उनको ब म भ य र ल इन षड् वर्ण युक्त षड् दल कमल वाले स्वाधिष्ठान में उपसंहार कर फिर उसे विष्णु में उपसंहार करे। फिर उसे वहाँ से उठाकर ड ढ ण त थ द ध न प फ इन दश वर्ण युक्त कमल वाले मणिपूर चक्र में संयुक्त करे। पुनः उन वर्णों को रुद्र में उपसंहार करे। फिर उन्हें भी क ख ग घ ङ च छ ज झ ञ ट ठ रूप द्वादश कमल वाले हृदय स्थित अनाहत चक्र में स्थित करे। फिर उसे ईश्वर में उपसंहार करे। फिर उसे भी वहाँ से ऊपर उठाकर कण्ठ स्थित षोडश स्वरात्मक षोडश दल वाले विशुद्ध चक्र में स्थापित करे। उनको भी सदाशिव में उपसंहत करे। फिर उनको भी ह क्ष वर्ण वाले भ्रू स्थित आज्ञा चक्र में उपसंहार करे। फिर उन वर्णों को बिन्दु में उपसंहत करे। बिन्दु को कला में उपसंहृत करे। लं को नाद में तथा नाद को नादान्त में स्थापित करे। उसे उन्मनी में स्थापित करे और उसे विष्णु वक्त्र में स्थापित करे। फिर उसे गुरु मुख में देशिकोत्तम उपसंहृत करे ॥ १३३-१४० ॥

**कलादीनि भ्रूमध्यादुपर्युपरि तानि षट्चक्राणि ।**

**सहैवमात्मना शक्तिं वेधयेत् परमेश्वरे ।**
**गुर्वाज्ञया छिन्नपाशस्तदा शिष्यः पतेद् भुवि ॥ १४१ ॥**
**सञ्जातदिव्यवेधोऽसौ सर्वं विन्दति तत्क्षणात् ।**
**साक्षात् शिवो भवत्येष नात्र कार्या विचारणा ॥१४२॥ इति ।**

**छिन्नपाशः पाशत्रयविमुक्त इत्यर्थः ।**

उपर्युक्त कलादि भ्रूमध्य के ऊपर-ऊपर क्रमशः स्थित है। इस प्रकार आत्मा से शक्ति का भेदन कर उसे परमेश्वर में स्थापित करे। इस प्रकार छिन्नपाश होकर शिष्य पृथ्वी पर गिर कर गुरु को प्रणाम करे और शिष्य इस प्रकार दिव्य वेध से संयुक्त होकर सर्वज्ञ हो जाता है और सब कुछ उसी क्षण जान लेता है। किं बहुना, वह साक्षात् शिव हो जाता है इसमें सन्देह नहीं ॥ १४१-१४२ ॥

छिन्नपाश अर्थात् तीनों पाशों से विमुक्त होकर तीन पाश १. सहज पाश, २.

आगन्तुक भोगपाश, ३. संसर्गजन्य भोगपाश—इन तीनों पाशों से मुक्त हो जाने पर मुक्ति होती है ।

**यच्च प्रयोगसारे—**

**पाशस्तु सत्सु वाऽसत्सु कर्मस्वास्था समीरिता ।**
**त्रिविधः स तु विज्ञेयः पाशो बन्धैकसाधनः ॥ १४३ ॥**
**प्रथमः सहजः पाशस्तथा चागन्तुकः परः ।**
**प्रासङ्गिकस्तृतीयः स्यादिति पाशत्रयं स्मृतम् ॥१४४॥ इति ।**

प्रयोगसारतन्त्र में भी बतलाया गया है—पाश चाहे रहे चाहे न रहे कर्म में आस्था तो रहती ही है । पाश तीन प्रकार का होता है जो बन्धन का एक मात्र साधन है । प्रथम सहजपाश, द्वितीय आगन्तुक पाश तथा तीसरा संसर्गजन्य पाश—ये तीन पाश कहे गए हैं ॥ १४३-१४४ ॥

**वेधफलमाह श्रीकण्ठाचार्यः—**

**कालज्ञानं तथा कालवञ्चनान्यतनौ तथा ।**
**प्रवेशो वेध इत्यादि प्रसन्ने लभ्यते शिवः ॥१४५॥ इति ।**
**एषा वेधमयी दीक्षा सर्वसंवित्प्रदायिनी ।**
**क्रमाच्चतुर्विधा दीक्षा तन्त्रेऽस्मिन् समुदाहृता ॥ १४६ ॥**

**सदाचारकथनम्**

**दीक्षां प्राप्य सदाचारं पालयेत् सिद्धिहेतवे ।**
**द्रव्यार्धं गुरवे दद्याद् दक्षिणां वा तदर्धकम् ॥ १४७ ॥**

वेध का फल श्रीकण्ठाचार्य कहते हैं—कालज्ञान, कालवञ्चन या अन्य शरीर में प्रवेश इत्यादि ये तभी प्राप्त होते हैं, जब शिव प्रसन्न हों । यह वेधमयी दीक्षा सभी प्रकार की सम्पत्ति प्रदान करती है । हमने इस तन्त्र में यहाँ तक चारो प्रकार की दीक्षा कही । दीक्षा प्राप्त करने के बाद शिष्य सिद्धि के लिये सदाचार का पालन करे । अपने द्रव्य का आधा भाग दक्षिणा में गुरु को देवे अथवा उसका भी आधा भाग उन्हें देवे ॥ १४५-१४७ ॥

**मन्त्रतन्त्रप्रकाशे—**

**आचार्यादनभिप्राप्तः प्राप्तश्चादत्तदक्षिणः ।**
**सततं जप्यमानोऽपि मन्त्रः सिद्धिं न गच्छति ॥ १४८ ॥**
**सर्वस्वं वा तदर्धं वा वित्तशाठ्यविवर्जितः ।**
**गुरवे दक्षिणां दत्त्वा ततो मन्त्रग्रहो मतः ॥१४९॥ इति ।**

मन्त्रतन्त्रप्रकाश में भी बतलाया गया है—जो मन्त्र आचार्य से नहीं प्राप्त

हुआ, अथवा बिना दक्षिणा दिये हुये ही प्राप्त किया गया । वह मन्त्र सतत जपते रहने पर भी सिद्धि प्रदान नहीं करता । बुद्धिमान् शिष्य को वित्त शाठ्य से विवर्जित होकर अपना सर्वस्व, अथवा उसका आधा दक्षिणा देकर तब मन्त्र ग्रहण करना चाहिए ॥ १४८-१४९ ॥

**वायवीयसंहितायाम्—**

**मण्डपं गुरवे दद्याद् यागोपकरणैः सह ।**
**कृतकृत्यस्तथा शिष्यः सर्वं तस्मै निवेद्य च ॥ १५० ॥**
**यच्च यावच्च तद्भक्त्या गुरोराकृष्टचेतनः ।**
**गोभूहिरण्यं विपुलं गृहक्षेत्रादिकं बहु ॥ १५१ ॥**
**न चेदर्धं तदर्धं वा तद्दशांशमथापि वा ।**
**अक्लेशादन्नवस्त्रादि दद्यात् वित्तानुसारतः ॥ १५२ ॥**

वायवीयसंहिता में भी बतलाया गया है—यज्ञ के समस्त उपकरणों के साथ मण्डप गुरु को समर्पित करे । गुरु को अपना सर्वस्व देकर ही शिष्य कृतकृत्य (सफल) होता है । गुरु के द्वारा ज्ञान प्राप्त कर, शिष्य गुरु की भक्ति के वश होकर, गाय, हिरण्य, विपुल गृह क्षेत्र आदि जो कुछ भी हो, वह गुरु को समर्पित करे । यदि उतना न हो सके, तब आधा देवे, यदि उतना भी न हो सके तो उसका भी आधा देवे, यदि उतना भी न हो सके तो दशांश देना चाहिए । किं बहुना, प्रसन्नतापूर्वक बिना क्लेश के ही अपने वित्त के अनुसार अन्न वस्त्रादि प्रदान करे ॥ १५०-१५२ ॥

**तां गृहीत्वा तदाचार्यो बोधयेद् धर्मशाश्वतम् ।**
**स्नानसन्ध्ये सदाचारं नित्यं काम्यं तथैव च ॥ १५३ ॥**
**मन्त्रसिद्धिप्रकारांश्च शिष्यायाभिवदेत् तदा ।**
**श्रुत्वा प्रणम्य श्रीनाथं भक्तिनम्रस्तदाचरेत् ॥१५४॥ इति ।**

शिष्य से दक्षिणा प्राप्त कर गुरु (आचार्य) शाश्वत धर्म जैसे स्नान सन्ध्या सदाचार, नित्य कर्म, काम्य कर्म एवं मन्त्र की सिद्धि के प्रकार शिष्य को बतावे । गुरु के द्वारा उपदिष्ट धर्मशास्त्रों को सुनकर शिष्य श्रीनाथ गुरु को प्रणाम कर उसका पालन करे ॥ १५३-१५४ ॥

**सदाचारश्च प्रयोगसारे—**

**देवस्थाने गुरुस्थाने श्मशाने वा चतुष्पथे ।**
**पादुकासनविण्मूत्रमैथुनानि विवर्जयेत् ॥ १५५ ॥**

प्रयोगसार के अनुसार सदाचार इस प्रकार बतलाया गया है—देव स्थान, गुरु

स्थान, श्मशान अथवा चतुष्पथ में पादुका, आसन, मल-मूत्र और मैथुन वर्जित करना चाहिए ॥ १५५ ॥

**देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताः ।**
**सिद्धिं सिद्धाधिवासांश्च श्रीपूर्वं समुदीरयेत् ॥ १५६ ॥**

देवता, गुरु, गुरु स्थान, पूज्य क्षेत्र, क्षेत्राधिदेवता, सिद्धि तथा सिद्धाधिवास इनके नाम के आदि में श्री लगाकर तब उच्चारण करे ॥ १५६ ॥

**प्रमत्तामन्त्यजां कन्यां पुष्पितां पतितस्तनीम् ।**
**विरूपां मुक्तकेशीं च कामार्तां च न निन्दयेत् ॥ १५७ ॥**

पागल स्त्री, अन्त्यजा कन्या, ऋतुमती, पतितस्तनी (वृद्धा), विरूपा, मुक्तकेशी तथा कामार्त्ता स्त्री की निन्दा न करे ॥ १५७ ॥

**कन्यायोनिं पशुक्रीडां दिग्वस्त्रां प्रकटस्तनीम् ।**
**नालोकयेत् परद्रव्यं परदारांश्च वर्जयेत् ॥ १५८ ॥**

कन्या योनि, पशु क्रीड़ा, नग्ना स्त्री एवं खुले स्तन वाली स्त्री इनका अवलोकन न करे । परद्रव्य और परस्त्री वर्जित करे ॥ १५८ ॥

**धान्यगोगुरुदेवाग्निविद्याकोशनरान् प्रति ।**
**नैव प्रसारयेत् पादौ नैतानपि च लङ्घयेत् ॥ १५९ ॥**

धान्य, गौ, गुरु, देवता, अग्नि, विद्या (पुस्तक) एवं धनी व्यक्ति की ओर पैर न पसारे और पैर से इनका लङ्घन न करे ॥ १५९ ॥

**आलस्यमदसम्मोहशाठ्यपैशुन्यविग्रहान् ।**
**असूयामात्मसम्मानं परनिन्दां च वर्जयेत्॥ १६० ॥**

आलस्य, मद, सम्मोह, शठता, पैशुन्य (चुगली), लड़ाई-झगड़ा, निन्दा, आत्मसम्मान एवं दूसरों की निन्दा वर्जित करे ॥ १६० ॥

**लिङ्गिनं व्रतिनं विप्रं वेदवेदाङ्गसंहिताः ।**
**पुराणागमशास्त्राणि कल्पांश्चापि न दूषयेत् ॥ १६१ ॥**

ब्रह्मचारी, व्रतधारण करने वाला, ब्राह्मण, वेद, वेदाङ्ग, संहिता, पुराण एवं आगमशास्त्र तथा कल्पों को दूषित न करे ॥ १६१ ॥

**युगं मुसलमश्मानं दामचुल्लीमुलूखलम् ।**
**सूर्पं सम्मार्जनीं दण्डं ध्वजं वै तूर्यमायुधम् ॥ १६२ ॥**
**कलशं चामरं छत्रं दर्पणं भूषणं तथा ।**

**भोगयोग्यानि चान्यानि यागद्रव्याणि यानि च॥ १६३ ॥**
**महास्थानेषु वस्तूनि यानि वा देवतालये ।**
**दिव्योक्तानि पदार्थानि भूताविष्टानि यानि वै ।**
**लङ्घयेज्जातु नैतानि नैतानि च पदा स्पृशेत् ॥ १६४ ॥**

जोड़ा पदार्थ जैसे ओखली मुशल, दाम चुल्हा, उलूखल सूप, झाड़ू दण्ड, ध्वज वाद्य, आयुध, कलश, चामर, छत्र, दर्पण, भूषण, भोग योग्य पदार्थ, अन्य याग द्रव्यादि, महास्थान में स्थापित वस्तुयें, देवालय में स्थापित वस्तुयें, दिव्य पदार्थ तथा भूताविष्ट पदार्थों का मन्त्रज्ञ कदापि लङ्घन न करे और न इन्हें पैर से स्पर्श करे ॥ १६२-१६४ ॥

**या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी ।**
**परहिंसात्मिका या च न तामवतरेत् सदा ॥ १६५ ॥**
**प्रतिग्रहं न गृह्णीयादात्मभोगविधित्सया ।**
**देवतातिथिपूजार्थं यत्नतोऽप्यर्जयेद् धनम् ॥ १६६ ॥**

लोकविद्विष्ट गोष्ठी और स्वेच्छा मनमाना उपदेश करने वाली गोष्ठी या दूसरों की हिंसा के लिये की जाने वाली गोष्ठी में कदापि न उतरे । अपने भोग करने के लिये कदापि प्रतिग्रह न लेवे । देवता एवं अतिथि की पूजा के लिये प्रयत्नपूर्वक धन संग्रह करे ॥ १६५-१६६ ॥

**धारयेदार्जवं सत्यं सौशील्यं समतां धृतिम् ।**
**क्षान्तिं दयामनास्थां च दिव्यां शक्तिं च सर्वदा ॥ १६७ ॥**

आर्जव (कोमलता, करुणा) सत्य, शील, समता, धैर्य, क्षमा, दया, अनास्था (अनासक्ति) तथा दिव्य शक्ति सर्वदा धारण करे ॥ १६७ ॥

**अत्रोक्तान् यः सदा ह्येतानैहिकामुष्मिकोचितान् ।**
**आचारानादृते शान्तिं दीक्षितः सोऽधिगच्छति॥ १६८ ॥**
**विभीतकार्ककारञ्जस्नुहीछायां न चाश्रयेत् ।**
**स्तम्भदीपमनुष्याणामन्येषां प्राणिनां तथा ॥ १६९ ॥**
**नखाग्रकेशनिष्ठ्यूतस्नानवस्त्रघटोदकम् ।**
**एतत् स्पर्शं त्यजेद् दूरात् खरश्वाजरजस्तथा ॥१७०॥ इति ।**

जो दीक्षित पुरुष ऊपर कहे गये इस लोक और परलोक में हितकारी आचारों का आदर करता है वह शान्ति प्राप्त करता है । विभीतक (बहेड़ा), मन्दार, करञ्ज, स्नुही (?) की छाया में न बैठे । स्तम्भ, दीप, मनुष्य तथा अन्य प्राणियों की भी छाया वर्जित करे । नखाग्रकेश, थूक, स्नान, वस्त्र में लपेटे हुये घटोटक

का स्पर्श तथा गदहे, कुत्ते, बकरी, बकरे के रज (खुर की धूलि) वर्जित करना चाहिए ॥ १६८-१७० ॥

**सोमशम्भौ तु—**

**न निन्देत् कारणं देवं न शास्त्रं तेन निर्मितम् ।**
**न गुरुं साधकं चैव लिङ्गच्छायां न लङ्घयेत् ।**
**नाद्याल्लङ्घन्न निर्माल्यं न दद्यात् शिवदीक्षिते ॥ १७१ ॥**

सोमशम्भु में भी बतलाया गया है—देव को कारण मानकर निन्दा न करे । देव निर्मित शास्त्र की भी निन्दा न करे । गुरु साधक तथा सन्यासी की छाया का लङ्घन न करे तथा निर्माल्य का लङ्घन न करे और न उसे खावे, न उसे शिव दीक्षित को ही देवे ॥ १७१ ॥

**षडन्वयरत्नेऽपि—**

**न लङ्घयेद् गुरोराज्ञामुत्तरं न वदेत् तथा ।**
**रात्रौ दिवा च तस्याज्ञां दासवत् परिपालयेत् ॥ १७२ ॥**

षडन्वयरत्न में भी कहा है—गुरु की आज्ञा का उल्लङ्घन न करे । उनका उत्तर न देवे, रात-दिन उनकी आज्ञा का पालन दास के समान करे ॥ १७२ ॥

**असत्यमशुभं तद्वद् बहुवादं परित्यजेत् ।**
**अप्रियं च तथालस्यं कामक्रोधौ विशेषतः ॥ १७३ ॥**

असत्य, अशुभ एवं उसी प्रकार बहुवाद का भी परित्याग करे । किसी का अप्रिय न करे । विशेषकर आलस्य, काम एवं क्रोध वर्जित करे ॥ १७३ ॥

**अप्रच्छन्नमुखो ब्रूयाद् गुरोरग्रे कदापि न ।**
**अभिमानं न कुर्वीत धनजात्याश्रमादिभिः ॥ १७४ ॥**
**गुरुद्रव्यं न भोक्तव्यं तेनादत्तं कदाचन ।**
**दत्तं प्रसादवद् ग्राह्यं लोभतो न कदाचन ॥ १७५ ॥**

गुरु के आगे कदापि अप्रच्छन्न मुख न बोले । इतना ही नहीं अपनी जाति, धन और आश्रम आदि का अभिमान न करे । बिना दिये गये (चोरी से) गुरु के धन का भोग कदापि न करे । उनके देने पर प्रसाद की तरह उसे ग्रहण करे । लोभवश कदापि ग्रहण न करे ॥ १७४-१७५ ॥

**अद्वैतं देवपूजां च गुरोरग्रे परित्यजेत् ।**
**पादुकायोगपादादि गुरुचिह्नानि सादरम् ॥ १७६ ॥**
**न लङ्घयेत् स्पृशेन्नैव पादाभ्यां प्रणमेत् सदा ।**

अद्वैत देव पूजा गुरु के आगे न करे । पादुका या उपानहादि गुरु के चिह्नादि का लङ्घन न करे । उन्हें पैर से स्पर्श भी नहीं करना चाहिए । सदा उन्हें प्रणाम करना चाहिए ॥ १७६-१७७ ॥

**पर्यंकशयनं तद्वत् तथा पादप्रसारणम् ॥ १७७ ॥**
**अङ्गाभ्यङ्गं तथाश्लीलं न कुर्याद् गुरुसन्निधौ ।**
**गमनागमने कुर्यात् प्रणम्य गुरुपादुकाम् ॥ १७८ ॥**

गुरु के चारपाई पर शयन, गुरु की ओर पाद प्रसारण, शरीर में अभ्यङ्ग तथा अश्लील बातें गुरु के सन्निधान में न करे । गुरु की पादुका को प्रणाम कर जावे अथवा आने पर प्रणाम करे ॥ १७७-१७८ ॥

**विचार्य कार्यं कुर्वीत गुरुकार्यं प्रसादवान् ।**
**छायां न लङ्घयेत् तद्वन्न गच्छेत् पुरतो गुरोः ॥ १७९ ॥**

गुरु का कार्य प्रसन्नतापूर्वक अच्छी तरह विचार कर करे । गुरु की छाया का उल्लङ्घन न करे और न उनके आगे चले ॥ १७९ ॥

**पश्चात् पादेन निर्गच्छेत् प्रणम्य च गुरोर्गृहात् ।**
**गुरोरग्रे न कुर्वीत प्रभावं शिष्यसंग्रहम् ॥ १८० ॥**
**अहङ्कारं न कुर्वीत नोल्वणं धारयेद् वपुः ।**
**प्रगुरोः सन्निधौ नैव स्वगुरुं प्रणमेद् बुधः ॥ १८१ ॥**
**नमस्काराय चोद्युक्तं गुरुर्दृष्ट्या निवारयेत् ।**
**न नियोगं गुरोर्दद्याद् युष्मदा नैव भाषयेत् ॥१८२॥ इति ।**

गुरु के निवास स्थान से चलते समय प्रणाम करे और पीठ न दिखाते हुये तथा अपने पैरों को पीछे की ओर हटाते हुये जावे । गुरु के आगे कभी भी अपना प्रभाव प्रदर्शित नहीं करना चाहिए और न ही शिष्यसंग्रह (शिष्य बनाना) करना चाहिए । अहङ्कार नहीं करना चाहिए और भयानक वेशभूषा को प्रणाम कर वर्जित करना चाहिए । यदि गुरु के गुरु के रहते हुए शिष्य स्वयं गुरु को नमस्कार करने के लिए उद्यत हो तब गुरु स्वयं अपने दृष्टि के सङ्केत से उसे रोक देवे । गुरु को आज्ञा नहीं देना चाहिए और कभी भी तुम शब्द से सम्बोधित नहीं करना चाहिए ॥ १८०-१८२ ॥

**दशपटल्याम्—**

**शिष्येणापि प्रकर्त्तव्या शुश्रूषा च गुरोः सदा ।**
**शुश्रूषया विना विद्या न भवेत् सा फलप्रदा ॥ १८३ ॥**
**गुरौ तुष्टे शिवस्तुष्टः शिवे तुष्टे जगत्त्रयम् ।**

**गुरौ रुष्टे महेशानि नाहं त्राता त्वया सह ।**
**तस्मात् सर्वप्रयत्नेन गुरोः कोपं न कारयेत् ॥१८४॥ इति ।**

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे दीक्षाकथनं नाम चतुर्विंशः पटलः ॥ २४ ॥**

दशपटली में भी बतलाया गया है—शिष्य को गुरु की सेवा सदैव करनी चाहिये । बिना शुश्रूषा के विद्या फलप्रद नहीं होती । गुरु के सन्तुष्ट होने से शिव सन्तुष्ट होते हैं और शिव के सन्तुष्ट होने पर तीनों जगत् सन्तुष्ट रहता है । हे महेशानि! गुरु के रुष्ट होने पर हम (= शिव) तुम्हारी सहायता लेकर भी रक्षा नहीं कर सकते । इसलिये सब प्रकार से गुरु को क्रुद्ध न करे ॥ १८३-१८४ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में दीक्षाकथन नामक चतुर्विंश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ २४ ॥**



# पञ्चविंशः पटलः

## षट्कर्मनिरूपणम्

**एवं प्राप्तमनुर्मन्त्री समाराध्येष्टदेवताम् ।**
**पूर्वोक्तक्रमयोगेन नित्यानुष्ठानतत्परः ।**
**नैमित्तिकमथो कुर्वन् षट्कर्माणि च साधयेत् ॥ १ ॥**

मन्त्रज्ञ शिष्य इस प्रकार मन्त्र प्राप्त कर नित्यानुष्ठान में तत्पर होकर इष्ट देवता का आराधन करे । इसके अनन्तर नैमित्तिक कर्म भी करते हुये षट् कर्मों की सिद्धि करे ॥ १ ॥

**यदाह शारदायां, मन्त्रतन्त्रप्रकाशे च—**

**कर्मषट्कं ब्रवीम्यद्य साधकाभीष्टदं च यत् ।**
**शान्तिं वश्यं स्तम्भनं च द्वेष उच्चाटमारणे ॥ २ ॥**
**मनीषिणः प्रशंसन्ति तल्लक्षणमथोच्यते ।**
**रोगकृत्याग्रहादीनां निरासः शान्तिरीरिता ॥ ३ ॥**
**वश्यं जनानां सर्वेषां विधेयत्वमुदीरितम् ।**
**प्रवृत्तिरोधः सर्वेषां स्तम्भनं समुदाहृतम् ॥ ४ ॥**
**स्निग्धानां द्वेषजननं मिथो विद्वेषणं स्मृतम् ।**
**उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्तितम् ॥ ५ ॥**
**प्राणिनां प्राणहरणं मारणं समुदीरितम् ।**

शारदातिलक (२३.१२१-१३०) तथा मन्त्रतन्त्रप्रकाश में भी बतलाया गया है—अब साधकों को अभीष्ट फल देने वाले षट्कर्मों को कहता हूँ । शान्ति, वश्य, स्तम्भन, विद्वेष, उच्चाटन एवं मारण—ये षट्कर्म कहे जाते हैं । अब उनका लक्षण कहता हूँ । रोग कृत्या तथा गृहारिष्ट को दूर करना शान्ति कर्म है । सभी जनों को अपना विधेय (आज्ञापालक) बनाना 'वश्य' कहा जाता है । सबकी प्रवृत्ति को रोक देना 'स्तम्भन' कहा जाता है । परस्पर मित्र जनों में द्वेष उत्पन्न करना 'विद्वेषण' कहा जाता है । अपने रहने वाले स्थान देश से बाहर निकालना

'उच्चाटन' कहा जाता है । प्राणियों के प्राण का अपहरण करना 'मारण' कहा जाता है ॥ २-६ ॥

**देवता देवतावर्णान् ऋतुर्दिक्तिथिमासनम् ॥ ६ ॥**
**विन्यासा मण्डलं मुद्राक्षरं भूतोदयः समित् ।**
**मालाग्निर्लेखनद्रव्यं कुण्डं स्रुक्स्रुवलेखनीः ॥ ७ ॥**
**ज्ञात्वैतानि प्रयुञ्जीत षट्कर्माणि विचक्षणः ।**
**रतिर्वाणी रमा ज्येष्ठा दुर्गा कालीति देवताः ॥ ८ ॥**
**क्रमादेताश्च कर्मादौ पूजनीयाः फलार्थिभिः ।**
**सितारुणहरिद्राभमिश्रश्यामलधूसराः ॥ ९ ॥**
**ताः स्ववर्णाभपुष्पैश्च काले काले यथाविधि ।**

इन विचक्षण षट्कर्मों के देवता वर्ण, ऋतु, दिशा, तिथि, आसन, विन्यास, मण्डल, मुद्रा, अक्षरभूतोदय, समिधा, माला, अग्नि, लेखनद्रव्य, कुण्ड, स्रुक् स्रुवा एवं लेखनी इतनी वस्तुओं का ज्ञान कर ही प्रयोग करे । रति, वाणी, रमा, ज्येष्ठा, दुर्गा तथा काली—ये षट्कर्मों के देवता है । अतः फल की इच्छा रखने वाले साधकों को कर्म के आदि में इनकी पूजा अवश्य करनी चाहिये । श्वेत, अरुण, हरिद्रा मिश्रित श्यामल और धूसर—ये उन देवताओं के वर्ण हैं । मन्त्रज्ञ साधक को इनकी पूजा इनके वर्णो के अनुसार इनके समय-समय के अनुसार करनी चाहिये ॥ ६-१० ॥

**सूर्योदयं समारभ्य घटिकादशकं क्रमात् ॥ १० ॥**
**ऋतवः स्युर्वसन्ताद्या अहोरात्रं दिने दिने ।**
**वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः ॥ ११ ॥**
**हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि ।**
**शिशिरः स्तम्भने ज्ञेयो विद्वेषे ग्रीष्म ईरितः ।**
**प्रावृडुच्चाटने ज्ञेया शरन्मारणकर्मणि ॥ १२ ॥ इति ।**

सूर्योदय से लेकर दश घड़ी, दश घड़ी के क्रम से दिन-रात में क्रमशः वसन्त, ग्रीष्म, वर्षा, शरद्, हेमन्त और शिशिर—इन छह ऋतुओं का गतागत होता है । मन्त्रज्ञ साधक को हेमन्त में शान्तिक कर्म, वसन्त में वश्यकर्म, शिशिर में स्तम्भन, ग्रीष्म में विद्वेष, वर्षा में उच्चाटन तथा शरद् ऋतु में मारण कर्म करना चाहिये ॥ १०-१२ ॥

**पिङ्गलामते—**

**हेमन्तो धवलो वृद्धो वसन्तो लोहितो युवा ।**
**आरक्तधवलो बालः शिशिरः सम्प्रकीर्तितः ॥ १३ ॥**

**ग्रीष्मो धूम्रशरीरस्तु श्यामाङ्गो जलदागमः ।**
**शरत्कालः कृष्णवर्णः शान्त्यादावृतवस्त्विमे॥ १४ ॥**

पिङ्गला मत में भी बतलाया गया है—हेमन्त का वर्ण धवल है और ये अवस्था से वृद्ध हैं । बसन्त लाल वर्ण का है और ये युवा हैं । शिशिर रक्त और धवल दोनों वर्णों वाला है, ये अवस्था से बालक हैं । ग्रीष्म धूम्र वर्ण है तथा वर्षा का वर्ण काला है । शरद काल का वर्ण कृष्ण (काला) है । इस प्रकार इन ऋतुओं का प्रयोग क्रमशः शान्त्यादि कर्मों में करे ॥ १३-१४ ॥

**अत्र विशेषो वसिष्ठसंहितायाम्—**

**प्रसिद्धा ऋतवो ग्राह्या षट्कर्मादिकसाधने ।**
**यस्मिन् कस्मिनृतौ कार्यं मन्त्राणामपि साधनम् ॥ १५ ॥**
**पूर्वाह्ने वश्यपुष्ट्यादि ह्यपरञ्च पराह्निके ।**
**ईशचन्द्रनिर्ऋतिवाय्वग्नीनां दिशो मताः ॥ १६ ॥**
**तत् तत् कर्मसु तद्दिक्षु मुखं कृत्वा जपं चरेत्।**
**शुक्लपक्षे द्वितीया च तृतीया पञ्चमी तथा ॥ १७ ॥**
**बुधदेवगुरूपेता शान्तिके वाथ सप्तमी ।**
**षष्ठी त्रयोदशी चैव चतुर्थी नवमी तथा ॥ १८ ॥**
**सोमदेवगुरूपेता पौष्टिके शंसिता बुधैः ।**
**अष्टमी नवमी चैव दशम्येकादशी तथा ।**
**शुक्रभानुसुतोपेता शस्ता विद्वेषकर्मणि ॥ १९ ॥**
**अथो चतुर्दशीकृष्णा शनिवारे तथाष्टमी ।**
**उच्चाटनेऽथ शस्तोऽत्र जपः शङ्करभाषितः ॥ २० ॥**
**अमावास्याष्टमीकृष्णा तादृगेव चतुर्दशी ।**
**भानुना तत् सुतोपेता भूसुतेनापि संयुता ।**
**मारणे स्तम्भने चैव मोहे द्रोहे प्रशस्यते ॥ २१ ॥ इति ।**

वशिष्ठ संहिता में विशेष—षट्कर्मादि साधन में प्रसिद्ध ऋतुओं का ग्रहण करना चाहिये । किन्तु मन्त्र की सिद्धि जिस किसी ऋतु में करना चाहिये । वश्य, पुष्ट्यादि कर्म पूर्वाह्न में और शेष कर्म अपराह्न में करे । इस षट्कर्म में ईशान, उत्तर, निर्ऋति, वायु और आग्नेय दिशायें कहीं गई हैं । तत्तत्कर्मों में तत्तत् दिशाओं में मुख कर जप करना चाहिये । शुक्ल पक्ष में बुधवार युक्त द्वितीया, देवयुक्त तृतीया, गुरुयुक्त पञ्चमी शान्ति कार्य के लिये ग्राह्य है, अथवा सप्तमी, षष्ठी, त्रयोदशी, चतुर्थी, नवमी जो सोम, देव, गुरुवार से युक्त हो; ऐसे काल पौष्टिक कार्य के लिये ग्राह्य है । अष्टमी, नवमी, दशमी, एकादशी जो शुक्र और

शनि से युक्त हो; वे विद्वेष कर्म में ग्राह्य है । शनिवार के दिन कृष्ण पक्ष की चतुर्दशी तथा अष्टमी उच्चाटन कर्म में जप के लिये प्रशस्त है; ऐसा शङ्कर ने कहा है । अमावास्या, कृष्ण पक्ष की अष्टमी, चतुर्दशी जो रविवार, शनिवार, अथवा मङ्गल दिन से युक्त हो; वह मारण, स्तम्भन, मोहन एवं विद्वेषण में प्रशस्त कही गई है ॥ १५-२१ ॥

**पिङ्गलामतेऽपि—**

**पुष्ट्याकृष्टिशुभोच्चाटशान्तिस्तम्भनबोधनम् ।**
**गुरौ कुजे रवौ शुक्रे सोमे चन्द्रे बुधे क्रमात् ॥ २२ ॥**
**वश्यशान्त्योः स्मृता स्वाती स्तम्भे चित्रा भरण्यथ ।**
**द्वेषे पुनर्वसुस्तिष्यः स्वाती तूच्चाटने मता ।**
**मघार्द्रे मारणे स्यातामेवं नक्षत्रनिर्णयः ॥ २३ ॥**

पिङ्गला मत में भी बतलाया गया है—पुष्टि, आकर्षण, वश्य, उच्चाटन, शान्ति, स्तम्भन एवं विद्वेषण कर्मों में क्रमशः बृहस्पतिवार, मङ्गलवार, रविवार, शुक्रवार, सोमवार और बुधवार का दिन प्रशस्त बतलाया गया है । वश्य और शान्ति कर्म में स्वाती नक्षत्र, स्तम्भन में चित्रा नक्षत्र, द्वेष में भरणी नक्षत्र, पुनर्वसु, पुष्य और स्वाती नक्षत्र, उच्चाटन में मघा नक्षत्र और आर्द्रा नक्षत्र मारण में ग्राह्य हैं । इस प्रकार नक्षत्रों का निर्णय है ॥ २२-२३ ॥

**आसनानि, शारदायाम्—**

**पद्माख्यं स्वस्तिकं भूयो विकटं कुक्कुटं पुनः ।**
**वज्रं भद्रकमित्याहुरासनानि मनीषिणः ॥ २४ ॥**

**तत्राद्ययोरन्त्ययोश्च लक्षणं पुरश्चरणपटले प्रोक्तम् ।**

षट्कर्मों में प्रयुक्त होने वाले आसनों को शारदातिलक के अनुसार कहते हैं—पद्मासन, स्वस्तिकासन, विकटासन, कुक्कुटासन, वज्रासन और भद्रासन—ये आसन षट्कर्मों के लिये मनीषियों ने कहे हैं ।

इसमें आदि के दो तथा अन्त्य के दो आसनों का लक्षण पुरश्चरण पटल में कहा गया है ॥ २४ ॥

**विकट-कुक्कुटासनयोर्लक्षणं यथा—**

**जानुजङ्घान्तराले तु भुजयुग्मं प्रकाशयेत् ।**
**विकटासनमेतत् स्यादुपविश्योत्कटासने ॥ २५ ॥**
**कृत्त्वोत्कटासनं पूर्वं समपादद्वयं ततः ।**
**अन्तर्जानुकरद्वन्द्वं कुक्कुटासनमीरितम् ॥ २६ ॥ इति ।**

यहाँ विकट और कुक्कुटासन का लक्षण इस प्रकार है—१. जानु और जङ्घा के बीच में अपनी दोनों भुजाओं को स्थापित करे; इसे 'विकटासन' कहा गया है। २. उत्कटासन पर बैठकर उत्कटासन बना कर पहले दोनों पैरों को समतल बनावे। फिर दोनों जानुओं के भीतर दोनों हाथों को स्थापित करे; इसे 'कुक्कुटासन' कहा जाता है ॥ २५-२६ ॥

**गो खड्गगजफेरूणां मेषीमहिषयोस्तथा।**
**कृत्तौ निविश्य कुर्वीत जपं शान्त्यादिकर्मसु ॥ २७ ॥**
**ग्रथनं च विदर्भश्च सम्पुटो रोधनं तथा।**
**योगः पल्लव एते षड् विन्यासाः कर्मसु स्मृताः ॥ २८ ॥**

शान्त्यादि कर्मों में क्रमशः—गौ, गैंडा, हाथी, सियार, बकरी एवं भैंसा—इनके चर्म पर बैठकर जपादि कार्य करे। पुनः क्रमशः ग्रथन, विदर्भ, सम्पुट, रोधन, योग और पल्लव—ये छह विन्यास कहे गये हैं ॥ २७-२८ ॥

**प्रत्येकमेषां षण्णां तु लक्षणं विनिगद्यते।**
**एको मन्त्रस्य वर्णः स्यात् ततो नामाक्षरं वदेत् ॥ २९ ॥**
**मन्त्रार्णो नामवर्णश्चेदेतद् ग्रन्थनमीरितम्।**
**द्वौ द्वौ मन्त्राक्षरौ यत्र एकैकं साध्यवर्णकम् ॥ ३० ॥**
**विदर्भितं तत्प्रोक्तं च वश्यकर्मणि मन्त्रिभिः।**
**मन्त्रमादौ वदेत् सर्वं साध्यसञ्ज्ञामनन्तरम् ॥ ३१ ॥**
**विपरीतं पुनश्चान्ते मन्त्रं तत् सम्पुटं स्मृतम्।**
**नाम्न आद्यन्तमध्येषु मन्त्रः स्याद् रोधनं मतम् ॥ ३२ ॥**
**विद्वेषणविधानेषु प्रशस्तमिदमीरितम्।**
**अन्ते नाम्नो भवेन्मन्त्रो योगः प्रोच्चाटने मतः।**
**मन्त्रस्यान्ते भवेन्नाम पल्लवो मारणे मतः ॥ ३३ ॥**

अब इनमें प्रत्येक का लक्षण कहता हूँ। १. मन्त्र का एक वर्ण, फिर नाम का एक अक्षर, इस प्रकार मन्त्राक्षर और नामाक्षर लिखे तो उसे 'ग्रथन' कहते हैं। २. दो-दो मन्त्र के अक्षर और साध्यनाम के एक-एक अक्षर लिखे तो इसे 'विदर्भ' कहा जाता है। मन्त्रज्ञ को इसका प्रयोग शान्ति कर्म में करना चाहिए। ३. पहले सम्पूर्ण मन्त्र का उच्चारण करे, इसके बाद साध्य के नाम का उच्चारण करे। अन्त में इसके विपरीत करे तो इसे 'सम्पुट' कहा जाता है। ४. नाम के आदि में, मध्य में तथा अन्त में मन्त्रोच्चारण करे तो इसे 'रोधन' कहा जाता है। यह क्रिया विद्वेषण विधान में की जाती है। ५. नाम के अन्त में मन्त्रोच्चारण 'योग' कहा जाता है। ६. मन्त्र के अन्त में नामोच्चारण करे तो इसे 'पल्लव' कहा

जाता है । यह क्रिया मारण कर्म में की जाती है ॥ २९-३३ ॥

**योगपल्लवयोरन्यत्रापि विनियोगस्तन्त्रान्तरे—**

**शान्तिके पौष्टिके दिव्ये प्रायश्चित्तविशोधने ।**
**मोहने दीपने योगं प्रयुञ्जन्ति मनीषिणः ॥ ३४ ॥**
**मारणे विषनाशे च ग्रहभूतविनिग्रहे ।**
**उच्चाटने च विद्वेषे पल्लवं सम्प्रचक्षते ॥ ३५ ॥ इति ।**

तन्त्रान्तर में 'योग' 'पल्लव' इन दो विन्यासों का उपयोग अन्य कार्यों में भी कहा गया है—शान्तिक, पौष्टिक, दिव्य, प्रायश्चित्त, शोधन, मोहन और दीपन कार्यों में विद्वान् लोग 'योग' विन्यास का प्रयोग करते हैं । मारण, विषनाश, ग्रह एवं भूत-बाधा, निग्रह, उच्चाटन तथा विद्वेष में 'पल्लव' विन्यास का प्रयोग कहा गया है ॥ ३४-३५ ॥

**अन्यत्र विशेषः—**

**अर्धार्धेनादितोऽन्ते च मन्त्रं कुर्याद् विचक्षणः।**
**मध्ये चास्य भवेत् सञ्ज्ञा ग्रस्तं तं समुदाहृतम्॥ ३६ ॥**
**अभिचारादिसर्वेषु योजयेन्मारणादिषु ।**
**अभिधानं लिखेत् पूर्वं मध्ये वापि महामते ॥ ३७ ॥**
**मन्त्रमेवं द्विधा कृत्वा समस्तमभिधीयते ।**
**द्वेषोच्चाटनकार्येषु योजयेदविशङ्कितः ॥ ३८ ॥**

अन्यत्र विशेष कथन इस प्रकार है—विचक्षण पुरुष आदि से अन्त तक के मन्त्र वर्णों को आधा-आधा दो भागों में प्रविभक्त करे । इसके मध्य में साध्य नाम उच्चारण करे तो इसे 'ग्रस्त' कहा जाता है । इसका प्रयोग सभी प्रकार के अभिचारों में सभी प्रकार के मारणों में किया जाता है । हे महामते! पहले नाम और मध्य में नाम इसी प्रकार मन्त्र का भी दो भाग करे तब उसे 'समस्त' कहा जाता है । इसका उपयोग निःशङ्क होकर विद्वेष एवं उच्चाटनादि कार्यों में करना चाहिए ॥ ३६-३८ ॥

**अर्धार्धेनादितोऽन्ते च मन्त्रं कुर्याद् विचक्षणः।**
**मध्ये चान्ते च साध्याख्या मन्त्रिणा क्रियते यदा॥ ३९ ॥**
**आक्रान्तं तद् भवेन्मन्त्रं सदा सर्वार्थसिद्धिदम्।**
**स्तम्भस्तोभसमावेशवश्योच्चाटनकर्मणि ।**
**सकृत्पूर्वं लिखेन्मन्त्रमन्ते चैव त्रिधा पुनः ॥ ४० ॥**
**मध्ये चैव भवेत् सञ्ज्ञा आद्यन्तमिति तद् विदुः ।**
**परस्परप्रीतियुजोर्विद्वेषजननं परम् ॥ ४१ ॥**

विचक्षण पुरुष आदि में तथा अन्त में आधा-आधा उच्चारण करे, मध्य में तथा अन्त में साध्य का नाम लिखे; ऐसा करने से मन्त्र आक्रान्त कहा जाता है, जो सभी सिद्धियों को देने वाला होता है। स्तम्भन, स्तोभ (द्वेष), समावेश (सोहम), वश्य और उच्चारण कर्म में इसका प्रयोग करना चाहिये। पहले मन्त्र एक बार लिखे। फिर अन्त में तीन बार लिखे और मध्य में साध्य का नाम लिखे; उसे आद्यन्त कहा जाता है। यह एक दूसरे से प्रेम करने वालों में परस्पर विद्वेष कराता है॥ ३९-४१॥

**आद्यन्तं च तथा चार्द्धं त्रिधा मन्त्रं समालिखेत्।**
**साध्यनाम सकृन्मध्ये तं विदुः सर्वतोमुखम्॥ ४२॥**
**सर्वोपद्रवशमनं महामृत्युविनाशनम्।**
**सर्वसौभाग्यजननं मृतानाममृतप्रदम्॥ ४३॥ इति।**

आदि में तथा अन्त में मन्त्र के आधे भाग को लिखे। बीच में एक बार साध्य का नाम लिखे; उसे 'सर्वतोमुख' कहा जाता है। यह सभी प्रकार के उपद्रवों को तथा सभी प्रकार के महामृत्यु का विनाशक है। किं बहुना? सभी प्रकार के सौभाग्य का जनक है और मरे हुये (रोग से अभिभूत) को अमृत प्रदान करने वाला होता है॥ ४२-४३॥

**अथ मण्डलं गौतमीये—**

**अर्धचन्द्रनिभं पार्श्वद्वये पद्मद्वयाङ्कितम्।**
**जलस्य मण्डलं प्रोक्तं प्रशस्तं शान्तिकर्मणि॥ ४४॥**
**त्रिकोणं स्वस्तिकोपेतं वश्ये वह्नेऽस्तु मण्डलम्।**
**चतुरस्रं वज्रयुक्तं स्तम्भे भूमेऽस्तु मण्डलम्॥ ४५॥**

**त्रिषष्ठ्यंयकनिभं वज्रमिति।**

अब पञ्चभूतों का मण्डल गौतमीय तन्त्र के अनुसार कहते हैं—१. अर्धचन्द्र के समान 'जल का मण्डल' होता है, जिसके दोनों पार्श्व में कमल विद्यमान रहता है। इस प्रकार जल का मण्डल शान्ति कर्म में प्रशस्त कहा गया है। २. त्रिकोण जिसमें स्वास्तिक का चिन्ह होता है वह 'अग्नि का मण्डल' कहा जाता है। उसका प्रयोग वश्य कर्म में किया जाता है। ३. चौकोर वज्रयुक्त 'भूमि का मण्डल' कहा गया है। इसका प्रयोग स्तम्भन में किया जाता है॥ ४४-४५॥

६३ के समान चिन्ह वज्र कहा जाता है।

**वृत्तं दिवस्तद् विद्वेषे बिन्दुषट्काङ्कितं तु तत्।**
**वायुमण्डलमुच्चाटे मारणे वह्निमण्डलम्॥ ४६॥**

इसका प्रयोग विद्वेष में किया जाता है । ४. छह बिन्दुओं से युक्त 'वायु-मण्डल' कहा जाता है । इसका प्रयोग उच्चाटन में तथा 'वह्निमण्डल' का प्रयोग मारण में किया जाता है ॥ ४६ ॥

**विशेषस्तु ईशानशिवेनोक्तः—**

**उभयधरणिरिष्टं साधयेद् दीर्घकाले**
**उभयमरुति किञ्चित् कालपाकेन सिद्ध्येत् ।**
**उभयगगनवन्ह्योर्नैव सिद्धिर्न हानि-**
**स्तत उभयजलस्थः क्षिप्रमेवेष्टदः स्यात् ॥ ४७ ॥**

इस सम्बन्ध में विशेष कथन ईशानशिव ने इस प्रकार किया है—जब दोनों नासिका छिद्रों से धरणि तत्त्व का उदय हो, उस समय मन्त्रारम्भ किया गया हो, तब दीर्घकाल में मन्त्र सिद्ध होता है । जब दोनों नासिका छिद्रों से वायु तत्त्व का उदय हो, उस समय यदि मन्त्रारम्भ किया गया हो, तब कुछ ही काल के बाद मन्त्र सिद्ध होता है । जब दोनों नासिका छिद्रों से गगन (आकाश तत्त्व) अथवा अग्नि तत्त्व का उदय हो, तब न कोई सिद्धि होती है और न हानि होती है । यदि दोनों नासिका छिद्रों से जल तत्त्व का उदय हो, तब आरम्भ किया गया मन्त्र का जप शीघ्र ही मनोवाञ्छित पूरा करता है ॥ ४७ ॥

**शशिजलधरणिस्थे शान्तिकं पौष्टिकं वा**
**शशिमरुदनलाभ्यां वश्यमाकर्षणं च ।**
**दिनकरभुवि कुर्यात् स्तम्भनं त्वर्कतोये**
**वशमिनमरुदाविर्भ्रामिणोच्चाटने च ॥ ४८ ॥**
**दिनकरवियति स्यान्मोहनं त्वर्कवह्नौ**
**द्रुततरमरिवर्गान् साधयेत् मारयेच्च । इति ।**

जब चन्द्रनाडी (इडानाडी) जल अथवा धरणि तत्त्व का उदय हो, उस समय शान्तिक पौष्टिक कर्म आरम्भ करना चाहिये । इडा नाडी तथा वायु एवं अग्नि तत्त्व का उदय हो, तब वश्य आकर्षण कर्म आरम्भ करे । जब सूर्य नाडी (पिङ्गला) और भू तत्त्व का उदय हो, तब स्तम्भन क्रिया प्रारम्भ करे । पिङ्गला नाडी तथा जल तत्त्व का जब आरम्भ हो, तब वश्य कार्य का आरम्भ करे । जब पिङ्गला नाडी और मरुत तत्त्व का उदय हो, तब भ्रामण एवं उच्चाटन क्रिया प्रारम्भ करे । पिङ्गला नाडी एवं अग्नि आकाश तत्त्व का उदय हो, तब मोहन कर्म तथा जब पिङ्गला एवं अग्नि नाडी का उदय हो, तब मारण क्रिया का प्रारम्भ शीघ्र ही शत्रुवर्गों का विनाश कर देता है ॥ ४८-४९ ॥

**षण्मुद्राः क्रमतो ज्ञेयाः पाशपद्मगदाह्वयाः ।**

**मुशलाशनिखड्गाख्याः शान्तिकादिषु कर्मसु ॥ ४९ ॥ इति ।**

इन षट् कर्मों की क्रमशः पाश, पद्म, गदा, मुशल, वज्र और खड्ग मुद्रायें कही गई हैं ॥ ४९ ॥

**कुलप्रकाशतन्त्रे—**

**तिस्रो मुद्राः स्मृता होमे मृगी हंसी च शूकरी ।**
**शूकरी करसङ्कोची हंसी मुक्तकनिष्ठिका ॥ ५० ॥**
**मृगी कनिष्ठातर्जन्यौ मुक्ता मुद्रात्रयं मतम् ।**
**यज्ञे शान्तिककार्येषु मृगी हंसी प्रकीर्तिता ॥ ५१ ॥**
**आभिचारिककार्येषु शूकरी कीर्तिता बुधैः ।**

कुलप्रकाशतन्त्र में भी बतलाया गया है—होम में मृगी, हंसी एवं शूकरी—ये तीन मुद्रायें कही गई हैं । शूकरी मुद्रा हाथ को सङ्कुचित करने से, हंसी मुद्रा कनिष्ठा को छोड़कर अन्य के सङ्कोच से, मृगी मुद्रा कनिष्ठा और तर्जनी को छोड़कर अन्य के सङ्कोच से बनती है । इस प्रकार तीनों होम मुद्रायें कही गई हैं । यज्ञ में तथा शान्ति कार्य आदि होम में मृगी एवं हंसी मुद्रा का प्रयोग तथा अभिचारिक होम कार्यों में बुद्धिमानों ने शूकरी मुद्रा का प्रयोग कहा है ॥५०-५२॥

**पिङ्गलामते मुद्रान्तराण्यपि—**

**ततो द्रव्यस्य होमे तु तर्जन्यङ्गुष्ठयोगतः ।**
**ज्वरनाशारिसन्तापावुच्चाटो मोहनं क्रमात् ॥ ५२ ॥ इति ।**
**चन्द्रतोयधराकाशपवनानलवर्णकाः ।**
**षट्सु कर्मसु मन्त्रस्य बीजान्युक्तानि मन्त्रिभिः ॥ ५३ ॥**
**सर्वे स्वराश्चन्द्रवर्णा भूतवर्णा उदीरिताः ।**
**चन्द्रार्णहीनास्ते ग्राह्या वशीकृत्यादिकर्मसु ॥ ५४ ॥ इति ।**

**पृथिव्यादिपञ्चभूतानुगतं वर्णविभागचक्रम्**

| अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | ऌ | ॡ | ए | ऐ | ओ | औ | अं | अः | चन्द्र-वर्णाः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अ | आ | ए | क | च | ट | त | प | य | ष | वा | य | वः | | | | |
| इ | ई | ऐ | ख | छ | ठ | थ | फ | र | क्ष | आ | ग्ने | याः | | | | |
| उ | ऊ | ओ | ग | ज | ड | द | ब | ल | ज | पा | र्थि | वाः | | | | |
| ऋ | ॠ | औ | घ | झ | ढ | ध | भ | व | ल | वा | रु | णाः | | | | |
| ऌ | ॡ | अं | ङ | ञ | ण | न | म | श | ह | ना | भ | साः | | | | |

पिङ्गलामत में अन्य मुद्रायें भी कही गई हैं—ज्वर नाश, अरिसन्ताप, उच्चाटन और मोहन में द्रव्यों से किये जाने वाले होम में, तर्जनी और अङ्गुष्ठ के योग वाली मुद्रा का प्रयोग करे। मन्त्रवेत्ताओं ने उपर्युक्त षट् कर्मों में मन्त्र के बीज चन्द्रमा, जल, धरणि, आकाश, पवन एवं अनल के वर्णों को कहा है। (द्र० भूतलिपि पृ० २८६, १९.१४-१६) स्वर चन्द्रवर्ण हैं शेष भूतवर्ण हमने १९.१४-१६ श्लोकों में कह दिया है। उसमें चन्द्र वर्णों को छोड़कर शेष वशीकरण आदि प्रयोग में ग्राह्य हैं ॥ ५२-५४ ॥

**फलं च संहितायाम्—**

**रक्षा स्तम्भनकर्माणि वर्णैः कुर्याद् धरामयैः ।**
**शान्तिकं पौष्टिकं कर्माकर्षणं सलिलात्मकैः॥ ५५ ॥**
**दाहमोहाङ्गभङ्गानि चाकृष्टिं दहनात्मकैः ।**
**सेनाभङ्गभ्रमोच्चाटद्वेषकर्माणि वायुजैः ॥ ५६ ॥**
**कालभस्मादिचूर्णानि विविधान्यपि मारणम् ।**
**क्षुद्राणां स्थापने वर्णैर्नाभसैः पङ्क्तिसंख्यकैः ॥ ५७ ॥ इति ।**

अब उन-उन भूतलिपियों का फल कहते हैं—पृथिव्यात्मक वर्णों से स्तम्भन कर्म में रक्षा करे। सलिलात्मक वर्णों से शान्तिक पौष्टिक तथा आकर्षण कर्म करे। अग्न्यात्मक वर्णों से दाह, मोह तथा अङ्ग-भङ्ग आकर्षण कार्य करे। सेना भङ्ग, भ्रम, उच्चाटन और द्वेष कर्म वाय्वात्मक वर्णों से करे। काले वर्ण के भस्मादि चूर्णों से विविध कार्य तो करे ही और मारण भी करे। क्षुद्र वस्तुओं के स्थापन में १० संख्यक आकाश वर्णों का प्रयोग करे ॥ ५५-५७ ॥

**केचित्तु सवलहयरेफानाहुः । तच्चोक्तं महाकपिलपञ्चरात्रेऽपि—**

**लं पीता पृथिवी ज्ञेया वं शुक्लं कीर्तितं पयः ।**
**रं रक्तोऽग्निर्मरुत् कृष्णो यं हं शुक्लतरं वियत्॥ ५८ ॥ इति ।**

कोई-कोई षट्कर्मों में स व ल ह य र वर्णों का प्रयोग कहते हैं। यह बात महाकपिलपञ्चरात्र में भी कही गई है—पृथ्वी का वर्ण पीत है और लं उसका बीज है। जल का वर्ण श्वेत है और 'वं' उसका बीज है। अग्नि का वर्ण रक्त है और 'रं' उसका बीज है। मरुत् का वर्ण काला है और 'यं' उसका बीज है। वियत् का वर्ण श्वेत है और 'हं' उसका बीज है ॥ ५८ ॥

**नमः स्वाहा स्वधा वौषट् हुं फडन्ताश्च जातयः।**
**शान्तौ वश्ये तथा स्तम्भे विद्वेषोच्चाटमारणे॥ ५९ ॥ इति ।**

शान्ति, वश्य, स्तम्भन, विद्वेष, उच्चाटन तथा मारण में नमः, स्वाहा, स्वधा, वौषट् तथा 'हुं फट्' ये जातियाँ कही गई हैं ॥ ५९ ॥

अन्यत्रापि—

अर्चनक्रोधशान्त्यादौ नमः शब्दं प्रयोजयेत् ।
अग्निकार्ये च वश्यादौ स्वाहाशब्दं प्रयोजयेत् ॥ ६० ॥
मारणादिषु फट्कारं विद्वेषादौ तु हुं पदम् ।
वौषडाप्यायनादौ स्याद् द्वेषोत्सादे वषट् स्मृतम् ॥ ६१ ॥ इति ।

अन्यत्र तन्त्र में भी बतलाया गया है—अर्चन और क्रोध-शान्ति आदि में 'नमः' शब्द का प्रयोग करे । अग्निकार्य में, वश्यादि में 'स्वाहा' शब्द का प्रयोग करना चाहिए । मारणादि में फट्कार का और विद्वेषादि में 'हुं' पद का एवं आप्यायनादि में 'वौषट्' शब्द का तथा द्वेष और उच्चाटन में वषट् शब्द का प्रयोग करना चाहिए ॥ ६०-६१ ॥

तन्त्रान्तरेऽपि—

वश्याकर्षणसन्तापहोमे स्वाहां प्रयोजयेत् ।
क्रोधोपशमने शान्तौ पूजने च नमो वदेत् ॥ ६२ ॥
वौषट् सम्मोहनोद्दीपपुष्टिमृत्युञ्जयेषु च ।
हुङ्कारः प्रीतिनाशे च छेदने मारणे तथा ।
उच्चाटने च विद्वेषे तथा धीविकृतौ तु फट् ॥ ६३ ॥
विघ्नग्रहविनाशे च हुं फट्कारं प्रयोजयेत् ।
मन्त्रोद्दीपनकार्ये च लाभालाभे वषट् स्मृतम् ॥ ६४ ॥ इति ।

अन्य तन्त्र में भी बतलाया गया है—वश्य, आकर्षण एवं उच्चाटन कार्यों में 'स्वाहा' शब्द का प्रयोग करे । क्रोधोपशमन में, शान्ति में एवं पूजन में 'नमः' शब्द का प्रयोग करे । सम्मोहन एवं उद्दीपन में, पुष्टि तथा मृत्युजय में 'वौषट्' का प्रयोग करे । प्रीतिनाश, छेदन एवं मारण कर्म में 'हुं' शब्द का प्रयोग करे । विद्वेष में एवं बुद्धि की विकृति में 'फट्' का प्रयोग करे । विघ्न विनाश में तथा ग्रह कृत विनाश में 'हुँ फट्' का प्रयोग करे । मन्त्रोद्दीपन में एवं लाभालाभ में 'वषट्' शब्द का प्रयोग करे ॥ ६२-६४ ॥

अथ भूतोदयः—

नासापुटद्वयाधस्ताद् यदा प्राणगतिर्भवेत् ।
तोयोदयस्तदा ज्ञेयः शान्तिकर्मणि सर्वदा ॥ ६५ ॥
पुटोपरिष्टाद् गमने प्राणे स्यात् पावकोदयः ।
तदा कर्मद्वये सिद्धिर्मारणे च वशीकृतौ ।
नासादण्डाश्रितगतौ प्राणस्तम्भे धरोदयः ॥ ६६ ॥
पुटमध्यगतौ तस्मिन् द्वेषे व्योमोदयः स्मृतः ।

**प्राणेतिर्यग्गतौ ज्ञेय उच्चाटे मारुतोदयः ॥ ६७ ॥ इति ।**

अब भूतोदय का लक्षण कहते हैं—जब प्राणवायु की गति दोनों नासापुट के नीचे हो तब जलतत्त्व का उदय समझना चाहिये । उस समय शान्तिकर्म करे । जब नासापुट से ऊपर प्राणवायु की गति हो, तब अग्नितत्त्व का उदय समझना चाहिये । उस समय मारण और वशीकरण कर्म के आरम्भ करने से इन दोनों कर्म की सिद्धि होती है । दोनों नासा से दण्डे के समान नीचे गति से प्राणवायु के चलने पर पृथ्वीतत्त्व का उदय समझना चाहिये । तब स्तम्भन कार्य का आरम्भ करना चाहिए । जब प्राणवायु दोनों पुटों के मध्य से चले, तब व्योमतत्त्व का उदय समझना चाहिये । वह समय द्वेष कार्य के लिये प्रशस्त है । जब प्राणवायु तिरछे चले, तब वायुतत्त्व का उदय समझना चाहिये । तब उच्चाटन कार्य का आरम्भ करना चाहिए ॥ ६५-६७ ॥

**द्रव्यविशेषमाह शूरोत्तरे—**

**दूर्वाभवाश्च समिधो गोघृतेन समन्विताः ।**
**होतव्या शान्तिके देवि शान्तिर्येन भवेत् स्फुटम् ॥ ६८ ॥**

अब शूरोत्तरतन्त्र में षट्कर्मों में प्रयोग किये जाने वाले द्रव्यों को कहते हैं—हे देवि! शान्ति कार्य में गोघृत युक्त दूर्वा की समिधा से होम करना चाहिये जिससे स्पष्ट रूप में शान्ति प्राप्त हो जाती है ॥ ६८ ॥

**समिधो राजवृक्षोत्था होतव्या स्तम्भकर्मणि ।**
**मेषीघृतेन संयुक्ताः स्तम्भसिद्धिर्भवेद् ध्रुवम् ॥ ६९ ॥**

स्तम्भ कर्म में राजवृक्ष की समिधा को भेड़ी के घृत से संयुक्त कर हवन करे तो निश्चय ही शीघ्रतापूर्वक स्तम्भन हो जाता है ॥ ६९ ॥

**खादिरा मारणे प्रोक्ताः कटुतैलेन संयुताः ।**
**होतव्याः साधकेन्द्रेण मारणं येन सिध्यति ॥ ७० ॥**

कटुतैल से संयुक्त खैर की समिधा से होम मारण कर्म में प्रशस्त कहा गया है । अतः साधकेन्द्र उसी प्रकार से होम करे, जिससे मारण कार्य शीघ्र ही सिद्ध हो जावे ॥ ७० ॥

**उच्चाटे चूतजाताश्च कटुतैलेन संयुताः ।**
**उच्चाटयेत् महीं सर्वां सशैलवनकाननाम् ।**
**वश्ये चैव सदा होमः कुसुमैर्दाडिमोद्भवैः ॥ ७१ ॥**
**अजाघृतेन देवेशि वशयेत् सचराचरम् ।**
**विद्वेषे चैव होतव्या उन्मत्तसमिधो मताः ।**

**अतसीतैलसंयुक्ता विद्वेषणकरं परम् ॥ ७२ ॥ इति ।**

उच्चाटन में कटुतैल संयुक्त आम की समिधा का होम करे तो सशैलवन-कानना समस्त मही का उच्चाटन हो जाता है । वश्य कार्य में अनार के फूलों को बकरी के घृत में डुबोकर होम करने से समस्त चराचर वश में हो जाता है । विद्वेष कार्य में धतूर की समिधा को तीसी के तेल में डुबोकर हवन करने से अत्यन्त विद्वेषण हो जाता है ॥ ७१-७२ ॥

**अथ माला निबन्धे—**

**शङ्खजा पद्मबीजोत्था निम्बारिष्टफलोद्भवा ।**
**प्रेतदन्तभवा वाहरदोत्त्था। खरदन्तजा ।**
**जपमाला क्रमाद् ज्ञेया शान्तिमुख्येषु कर्मसु ॥ ७३ ॥**

अब निबन्ध ग्रन्थों के अनुसार माला के विषय में कहते हैं—षट्कर्मों में क्रमशः शङ्ख की, कवलगट्टा की, निम्ब की, प्रेत के दाँत की, घोड़े के दाँत की तथा गदहे के दाँत की माला प्रशस्त कही गई है ॥ ७३ ॥

**मध्यमायां स्थिता माला ज्येष्ठेनावर्तयेत् सुधीः ।**
**शान्तौ वश्ये तथा पुष्टौ भोगमोक्षार्थके जपे ॥ ७४ ॥**

माला को मध्यमा अङ्गुली पर रखे और अङ्गूठा से उसे घुमावे; ऐसा प्रयोग शान्ति, वश्य, पुष्टि, भोग और मोक्ष विषयक जप में करे ॥ ७४ ॥

**अनामाङ्गुष्ठयोगेन जपेत् स्तम्भनकर्मणि ।**
**तर्जन्यङ्गुष्ठयोगेन द्वेषोच्चाटनयोः पुनः ॥ ७५ ॥**
**कनिष्ठाङ्गुष्ठयोर्योगात् मारणे प्रजपेत् सुधीः ।**
**अष्टोत्तरशतं संख्या तदर्धं च तदर्धकम् ।**
**मणीनां शुभकार्ये स्यात् तिथिसंख्याऽभिचारके ॥ ७६ ॥**

स्तम्भन कर्म में अनामिका और अङ्गूठे को मिलाकर जप करे । पुनः द्वेष उच्चाटन में तर्जनी-अङ्गुष्ठ के योग से जप करे । मारण में सुधी साधक कनिष्ठा और अङ्गूठे के योग से जप करे । शुभ कार्य में मनियों की संख्या एक-सौ आठ अथवा उसका आधा (५४) अथवा उसका आधा (२७) कहा गया है । अभिचार (मारण) में तिथि (१५) संख्या कही गई है ॥ ७५-७६ ॥

**अथ अग्निस्तन्त्रान्तरे—**

**लौकिकाग्नौ शान्तिकं स्यात् पौष्टिकं च शुभं तथा ।**
**वटजे स्तम्भनं मोहः श्मशानस्थेऽपि मारणम् ।**
**विभीतकाग्नौ विद्वेषः षट्कर्मण्यग्नयो मताः ॥ ७७ ॥**

अब अग्नि का विचार तन्त्रान्तर के अनुसार कहते हैं—शान्तिक, पौष्टिक तथा समस्त शुभ कार्य लौकिक अग्नि में करे । वट की समिधा की अग्नि में स्तम्भन और वश्य कार्य करे तथा श्मशान की अग्नि में मारण कर्म करे । बहेड़ा की अग्नि में विद्वेष का कार्य करे । इस प्रकार षट्कर्म की अग्नि के विषय में कहा गया है ॥ ७७ ॥

**अन्यत्र च—**

**बिल्वार्ककिंशुकजदुग्धतरुप्रदीप्ते**
**सौम्यं चिकीर्षुरथ कर्म हुनेद् हुताशे।**
**रौद्रं विषद्रुमकलिद्रुमशेलुनिम्ब-**
**धत्तूरकाष्ठचयसन्निचितेऽथ मन्त्री ॥ ७८ ॥ इति ।**

मन्त्रज्ञ साधक बेल, अर्क, पलाश तथा दुधारु वृक्ष की अग्नि में सौम्य कार्य करने की इच्छा से होम करे । रौद्र कर्म करने के लिये साधक विषद्रुम (कुचिला), बहेड़ा की समिधा, वृक्ष शेलु, निम्ब एवं धत्तूर के काष्ठ समूह से बनी अग्नि में होम करे ॥ ७८ ॥

**अग्निमुखनियमस्तु सोमशम्भौ—**

**कुण्डं स्वसम्मुखं ध्यात्वा हृदाहुतिभिरीप्सितम् ।**
**पश्चिमे शिष्यसंस्कारनित्यहोमौ समाचरेत् ॥ ७९ ॥**

अब सोमशम्भु के अनुसार अग्नि के मुख का नियम कहते हैं—नमः पद से आहुति देकर मनोहर अभीष्ट कुण्ड को अपने सामने करे । कुण्ड के पश्चिम में शिष्य का संस्कार तथा नित्य होम करे ॥ ७९ ॥

**वश्याकर्षणसौभाग्यपुष्टिभाग्याधिरोपणे ।**
**शान्तिके पाशशुद्धौ च वामे होमः प्रशस्यते ॥ ८० ॥**

वश्य, आकर्षण, सौभाग्य, पुष्टि एवं भाग्य की वृद्धि में तथा शान्ति एवं वश्य में बायें होकर होम करे ॥ ८० ॥

**गुटिकाञ्जननिस्त्रिंशपादलेपजिगीषया ।**
**शिष्यसञ्जननार्थं च प्राचीनवदनो यजेत् ॥ ८१ ॥**
**मारणोच्चाटनद्वेषस्तम्भनार्थं च दक्षिणे ।**
**प्रायश्चित्तं तु तत्रैव पश्चिमे तु विमुक्तये ॥ ८२ ॥ इति ।**

गुटिका, अञ्जन, खड्ग या पादलेप से विजय प्राप्त करने के लिये अथवा शिष्य बनाने के कार्य में पूर्वाभिमुख होकर यजन करे । मारण, उच्चाटन, द्वेष एवं स्तम्भन कार्य में दक्षिणाभिमुख यजन करे । प्रायश्चित्त भी दक्षिणाभिमुख होकर

करे। विमुक्ति के लिये पश्चिमाभिमुख होकर यजन करे ॥ ८१-८२ ॥

**वह्नेर्जिह्वां सुप्रभाख्यां शान्तिकर्मणि पूजयेत् ।**
**वश्यकार्ये हि रक्ताख्यां स्तम्भने कनकाभिधाम् ॥ ८३ ॥**
**विद्वेषे गगनां जिह्वामुच्चाटेऽप्यतिरक्तिकाम् ।**
**कृष्णां तु मारणे चेत् स्याद्बहुरूपां तु सर्वदा ॥ ८४ ॥**

शान्ति कर्म में सुप्रभा नाम वाली अग्नि की जिह्वा का पूजन करना चाहिए । वश्य कार्य में रक्ता नाम की, स्तम्भन में कनका की, विद्वेष में गगना की, उच्चाटन में भी आरक्तिका की और मारण कर्म में कृष्णा की तथा बहुरूपा की सर्वदा ही पूजा करे ॥ ८३-८४ ॥

**भोज्ये संख्याविशेषोऽपि ज्ञेयः शान्त्यादिकर्मसु ।**
**शान्तौ वश्ये भोजयेत्तु होमाद् विप्रान् दशांशतः ॥ ८५ ॥**
**उत्तमं तद् भवेत् कर्म तत्त्वांशेन तु मध्यमम् ।**
**होमात् शतांशतो विप्रभोजनं त्वधमं हि तत् ॥ ८६ ॥**

शान्त्यादि कर्म में या भोज्य विषय में, संख्या विशेष ब्राह्मणों को भोजन करावे । शान्ति कार्य में होम के दशांश ब्राह्मणों को भोजन करावे । यह कर्म सर्वोत्तम हैं । २४वें अंश में भोजन कराना मध्यम है किन्तु शतांश ब्राह्मण भोजन अधम कहा गया है ॥ ८५-८६ ॥

**शान्तेर्द्विगुणितं विप्रभोजनं स्तम्भने मतम् ।**
**त्रिगुणं द्वेषणोच्चाटे मारणे होमसम्मितम् ॥ ८७ ॥**

शान्ति में द्विगुणित विप्रभोजन, स्तम्भन में त्रिगुणित, द्वेषण उच्चाटन और मारण में होम संख्यक ब्राह्मण भोजन करावे ॥ ८७ ॥

**अतिशुद्धकुलोत्पन्नाः साङ्गवेदविदोऽमलाः ।**
**सदाचाररता विप्रा भोज्या भोज्यैर्मनोहरैः ॥ ८८ ॥**
**पूज्यास्ते देवताबुद्ध्या नमस्कार्याः पुनः पुनः ।**
**सम्भाष्या मधुरैर्वाक्यैर्हिरण्यादिप्रदानतः ॥ ८९ ॥**
**अचिराल्लभतेऽभीष्टं गृहीतायां तदाशिषः ।**
**एनोऽभिचारकर्मोत्थं नश्यन्ति द्विजवाक्यतः ॥ ९० ॥**

अब ब्राह्मणों के विषय में कहते हैं—अत्यन्त शुद्ध कुल में उत्पन्न, साङ्गवेद के विद्वान्, सदाचारी ब्राह्मणों को सुस्वादिष्ट मनोहर पदार्थों से भोजन करावे । उन ब्राह्मणों की पूजा देवता बुद्धि से करे और उन्हें बारम्बार नमस्कार करे । उन्हें सुवर्णादि प्रदान कर मधुर भाषण करे । उनका आशीर्वाद प्राप्तकर यजमान थोड़े

ही समय में सिद्धि प्राप्त कर लेता है । ब्राह्मणों के वाक्य से अभिचार (मारण) कर्म से उत्पन्न समस्त पाप नष्ट हो जाते हैं ॥ ८८-९० ॥

**यन्त्राणां लेखनद्रव्यं चन्दनं रोचना निशा ।**
**गृहधूमचिताङ्गारो मारणेऽष्टविषाणि च ॥ ९१ ॥**
**श्येनाग्निलोणपिण्डानि धत्तूरकरसं ततः ।**
**गृहधूमस्त्रिकटुकं विषाष्टकमुदाहृतम् ॥ ९२ ॥**

**श्येनः श्येनविष्ठा । अग्निः चित्रकः । लोणपिण्डं लीणमलम् । त्रिकटुकं शुण्ठी-पिप्पलीमरिचानि ।**

चन्दन, गोरोचन तथा हरदी—ये लेखन द्रव्य कहे गये हैं । गृह धूम, चिता का अङ्गार, बाज की विष्ठा, अग्नि (चित्रक), लोण पिण्ड (लोध का मल), धतूर का रस, गृहधूम और त्रिकटुक (शुण्ठी पिप्पली और मरीच)—ये विषाष्टक कहे गये हैं । इन आठ विषों का प्रयोग मारण कर्म में कहा गया है ॥ ९१-९२ ॥

**अथ साधारणलेखनद्रव्यम्—**

**काश्मीररोचनालाक्षामृगेभमदचन्दनैः ।**
**विलिखेद् हेमलेखन्या यन्त्राण्येतानि देशिकः॥ ९३ ॥**

अब साधारण लेखन द्रव्य कहते हैं—केशर, हल्दी, लाक्षा, कस्तूरी, हाथी का मद और चन्दन—इन लेखनी द्रव्यों से सुवर्ण की लेखनी से आचार्य इन मन्त्रों को लिखे ॥ ९३ ॥

**पिङ्गलामते लेखनीविशेषः—**

**दूर्वा मयूरपिच्छानि विभीतकरनरास्थिजा ।**
**ताम्रतारत्रिलोहोत्त्था हेमरौप्यार्कसम्भवा ॥ ९४ ॥**
**लेखनी वश्य आकृष्टौ सन्तापे स्तम्भमारणे ।**
**सर्वोपद्रवनाशाय शान्तौ पुष्टौ च जातिजा ॥ ९५ ॥**

पिङ्गलामत में विशेष लेखनी—दूर्वा, मोर का पिच्छ, विभीतक (बहेड़ा) और मनुष्य की अस्थि, ताँबे का तार, त्रिलोह (ताँबा, सोना एवं रजत मिश्रित), सुवर्ण एवं चाँदी की लेखनी क्रमशः वश्य, आकर्षण, सन्ताप, स्तम्भन, मारण में तथा सर्वोपद्रव नाश के लिये कही गई है । शान्ति एवं पुष्टि कर्म में जाति की लकड़ी प्रशस्त है ॥ ९४-९५ ॥

**अन्यत्रापि—**

**लेखिन्या विलिखेद् यन्त्रं वश्ये दूर्वांकुरोत्त्थया ।**
**आकर्षे शिखिपिच्छोत्त्था स्तम्भने मुनिसम्भवा ॥ ९६ ॥**

**हेमजा रौप्यजा वाऽन्या सर्वरक्षाविधौ प्रिये ।**
**करञ्जाक्षमयी द्वेषोच्चाटेऽन्त्येऽपि नरास्थिजा ॥ ९७ ॥**

अन्यत्र भी बतलाया गया है—वश्यकार्य में दूर्वाङ्कुर की लेखनी से यन्त्र लिखे । आकर्षण में मोर के पिच्छ की लेखनी से, स्तम्भन में अगस्त्य की लेखनी से, हे प्रिये! सर्वरक्षाविधि में सोने या चाँदी की लेखनी से यन्त्र निर्माण करे, अथवा अन्य लेखनी से भी यन्त्र लिखे, जैसे द्वेष एवं उच्चाटन में करञ्ज की लेखनी अथवा बहेड़ा की लेखनी का तथा मारण में मनुष्य के अस्थि की लेखनी का उपयोग करना चाहिए ॥ ९६-९७ ॥

**वश्यकर्मणि विज्ञेया राजवृक्षसमुद्भवा ।**
**शान्तिके पौष्टिके चैव आयुःकर्मविधौ तथा ॥ ९८ ॥**
**सर्वोपसर्गशमने कर्त्तव्या जातिसम्भवा ।**
**अपामार्गोद्भवा वापि शुभकर्मसु सर्वदा ॥ ९९ ॥**

वश्यकर्म में राजवृक्ष की लेखनी का, शान्ति, पौष्टिक, आयु, वृद्धि तथा सभी प्रकार के दैवी उपद्रव के नाश के लिये जाति की लेखनी से लिखना चाहिये । शुभकर्म में सर्वदा अपामार्ग की लेखनी का उपयोग करे ॥ ९८-९९ ॥

**आसुरेषु च सर्वेषु शस्यते तीक्ष्णलोहजा ।**
**विष्ट्यङ्गारदिने घोरे यदि चोत्पादिता च सा ।**
**कालखड्गसमा ज्ञेया सर्वभूतनिकृन्तनी ॥१००॥ इति ।**

सभी आसुर कर्म में तीखे लोहे की लेखनी विहित है । यदि तीखे धारा वाली वह लोह की लेखनी भद्रा युक्त मङ्गल के दिन निर्मित हो, तब उसे समस्त भूतों को काटने के लिये काल के खड्ग के समान समझे ॥ १०० ॥

**आधारविशेषः—**

**शान्तौ वश्ये लिखेद् भूर्जे स्तम्भने द्वीपिचर्मणि ।**
**खरचर्मणि विद्वेषे उच्चाटे ध्वजवाससि ॥ १०१ ॥**
**नरास्थ्नि विलिखेद् यन्त्रं मारणे मन्त्रवित्तमः ।**
**वृत्तं पद्मं चतुःकोणं त्रिषट्कोणेन्दुयुङ्मतम् ॥ १०२ ॥**
**तोयेशसोमशक्राणां यातुवायोर्यमस्य च ।**
**आशासु क्रमतः कुण्डं शान्तिमुख्येषु कर्मसु ॥१०३॥ इति ।**

अब यन्त्र लिखने का आधार कहते हैं—शान्ति और वश्य कार्यों में भूर्ज पत्र पर यन्त्र बनावे । स्तम्भन में द्वीपि (चीता) के चर्म पर, विद्वेष में गदहे के चर्म पर, उच्चाटन में ध्वज वस्त्र पर, मारण में मन्त्रवेत्ता मनुष्य की हड्डी पर यन्त्र

बनाना चाहिए। वृत्त, पद्म, चतुःकोण तथा त्रिकोण यन्त्र में उत्तराभिमुख होकर लिखना चाहिए। १. पश्चिम, २. उत्तर, ३. पूर्व, ४. नैर्ऋत्य, ५. वायव्य एवं ६. दक्षिण दिशा में क्रमशः शान्ति आदि छह कर्मों के लिये कुण्ड बनाना प्रशस्त कहा गया है ॥ १०१-१०३ ॥

**स्रुक् स्रुवौ, वायवीयसंहितायाम्—**

**आयसौ स्रुक् स्रुवौ कार्यौ मारणादिषु कर्मसु ।**
**तदन्येषु तु सौवर्णौ शान्तिकाद्येषु कृत्स्नशः ॥ १०४ ॥**

स्रुक एवं स्रुवा के विषय में वायवीयसंहिता में इस प्रकार कहा गया है— मारणादि कर्म में लोहे के स्रुक् स्रुवा का निर्माण करे और अन्य शान्ति आदि कार्यों में केवल सुवर्ण के बने स्रुक् स्रुवा का निर्माण करे ॥ १०४ ॥

**अन्यत्रापि—**

**सौवर्णौ यज्ञवृक्षोत्त्थौ स्रुक्श्रुवौ शान्तिवश्ययोः ।**
**स्तम्भनादिषु कार्येषु स्मृतौ लोहमयौ हि तौ ॥ १०५ ॥**
**वश्यशान्त्योर्हविष्यान्नं स्तम्भने पायसं मतम् ।**
**विद्वेषे माषमुद्गाः स्युर्गोधूमा भ्रंशने स्थलात् ॥ १०६ ॥**
**श्यामाकान्नं मसूरान्नं शाल्यजादुग्धपायसम् ।**
**मारणे भक्ष्यमेतत् स्यादित्युक्तो भक्ष्यसंयमः ॥ १०७ ॥**

अन्यत्र भी बतलाया गया है—शान्ति, वश्य कार्य में सुवर्ण का अथवा क्षीरी वृक्ष के स्रुक् स्रुवा का निर्माण करावे। स्तम्भनादि कार्य में वे स्रुक स्रुवा लोहे के बने हुये होने चाहिये। वश्य शान्ति में हविष्यान्न का भोजन करे। स्तम्भन में पायस का, विद्वेष में उर्द और मूँग का, उच्चाटन में गोधूम का, मारण में साँवा, मसूर शाली चावल, बकरी के दुग्ध में बना हुआ पायस प्रशस्त कहा गया है। इस प्रकार हमने षट् कर्मों में भक्ष्य कहा ॥ १०५-१०७ ॥

**वश्यशान्त्योः स्वर्णपात्रं मृत्पात्रं स्तम्भने मतम् ।**
**विद्वेषे खादिरं पात्रमुच्चाटे लोहनिर्मितम् ॥ १०८ ॥**
**मारणे कुक्कुटाण्डं स्यात् पात्राणीमानि तर्पणे।**

अब पात्र का विचार कहते हैं—वश्य, शान्ति में सुवर्ण पात्र, स्तम्भन में मिट्टी का पात्र, विद्वेष में खैर का पात्र, उच्चाटन में लोह निर्मित पात्र, मारण में कुक्कुटाण्ड का पात्र षट् कर्मों में होना चाहिये ॥ १०८-१०९ ॥

**शान्तौ वश्ये च सम्प्रोक्ता हरिद्रा जलसंयुता ॥ १०९ ॥**
**उष्णोदकं तु मरिचं मारणस्तम्भयोर्मतम् ।**

द्वेषोच्चाटनयोः प्रोक्तं जलं मेषासृजा युतम् ॥ ११० ॥
तर्पणद्रव्यमाख्यातमेतदागमपारगैः ।
सौम्यकर्मणि मन्त्रज्ञः सुखासीनः प्रतर्पयेत् ॥ १११ ॥
जानुभ्यामवनीं गत्वा तर्पणं स्तम्भने मतम् ।
द्वेषादावेकचरणस्तर्पयेत् साधकोत्तमः ॥ ११२ ॥

अब तत्तत् कर्मों में मन्त्र का तर्पण द्रव्य कहते हैं—शान्ति एवं वश्य कर्म में जल संयुत हरिद्रा, मारण और स्तम्भन कर्म में उष्णोदक मरिच, द्वेष और उच्चाटन कर्म में मेष के खून से मिश्रित जल का प्रयोग करना चाहिए। आगम के पारदर्शी विद्वानों ने इस प्रकार तर्पण द्रव्य बतलाया है—मन्त्रज्ञ साधक सौम्य कर्म में सुखासीन होकर तर्पण करे। किन्तु स्तम्भन कार्य में जानु के बल पृथ्वी को टेक कर तर्पण करने को कहा गया है। उत्तम साधक द्वेषादि कर्म में एक चरण से तर्पण करे ॥ १०९-११२ ॥

सौम्ये सुवर्णदुर्वर्णयज्ञसूत्र उदाहृते ।
स्तम्भविद्वेषयोः प्रोक्तं मार्जारान्त्रसमुद्भवम् ॥ ११३ ॥
कुक्कटान्त्रसमुद्भूतं यज्ञसूत्रं मनीषिभिः ।
उच्चाटने वकान्त्राणामुपवीतमुदाहृतम् ॥ ११४ ॥
उल्लूकान्त्रसमुद्भूतं यज्ञसूत्रं हि मारणे ।

सौम्यकार्य में सुवर्ण या चाँदी का यज्ञोपवीत, स्तम्भन एवं विद्वेष कर्म में विडाल के आँत का तथा मुर्गे के आँत का यज्ञोपवीत और उच्चाटन कर्म में वगुले के आँत का यज्ञोपवीत कहा गया है। मारण कर्म में उल्लू के आँत का यज्ञोपवीत कहा गया है ॥ ११३-११५ ॥

### षट्कर्मस्थानकथनम्

वशीकरणकर्म स्याद्देवतायतने शुभे ॥ ११५ ॥
शान्तिकर्म भवेद् गेहे श्मशाने क्रूरकर्म च ।
अथवा सर्वकर्माणि भवेयुर्देवतागृहे ॥ ११६ ॥
सम्यक् कृत्वा न्यासजालमात्मरक्षां विधाय च ।
काम्यकर्म प्रकर्त्तव्यमन्यथाऽमिभवो भवेत् ॥ ११७ ॥
शुभं वाप्यशुभं वापि काम्यं कर्म करोति यः ।
तस्यारित्वं व्रजेन् मन्त्रो न तस्मात् तत्परो भवेत् ॥ ११८ ॥

वशीकरण कर्म किसी उत्तम देवस्थान में करे। शान्ति कर्म अपने घर में, मारणादि क्रूर कर्म श्मशान में करे, अथवा सभी षट् कर्म देवता गृह में ही करे।

साधक सर्वप्रथम अपने शरीर में समस्त न्यास कर आत्म रक्षा करने के बाद ही काम्य कर्म करे, अन्यथा हानि होती है । जो मनुष्य अच्छा या बुरा काम्य कर्म करता है मन्त्र उसका शत्रु बन जाता है । इसलिये काम्य कर्म में प्रवृत्त नहीं होना चाहिये ॥ ११५-११८ ॥

**विषयासक्तचित्तानां सन्तोषाय प्रकाशितम् ।**
**पूर्वाचार्योदितं काम्यकर्म नैतत् शुभावहम् ॥ ११९ ॥**
**काम्यकर्मप्रसक्तानां तावन्मात्रं भवेत् फलम् ।**
**निष्कामं भजतां देवमखिलाभीष्टसिद्धयः ॥ १२० ॥**

हमने यह षट् कर्म विषयासक्त चित्त वालों के लिये प्रकाशित किया है जो प्रथम पूर्वाचार्यों द्वारा भी कहा गया है । किन्तु काम्य कर्म कदापि शुभावह नहीं होता । काम्य कर्म में प्रसक्त होने वाले साधकों को केवल उतना ही फल प्राप्त होता है । किन्तु निष्काम देव पूजा कर्म करने वाले को समस्त अभीष्ट प्राप्त हो जाते हैं ॥ ११९-१२० ॥

**प्रतिमन्त्रं समुदिता ये प्रयोगाः सुखाप्तये ।**
**तदासक्तिं विहायैव निष्कामो देवतां स्मरेत् ॥ १२१ ॥**
**वेदे काण्डत्रयं प्रोक्तं कर्मोपासनबोधनम् ।**
**साधनं काण्डयुग्मोक्तं तृतीयं साध्यमीरितम् ॥ १२२ ॥**
**तस्मात् वेदोदितं कुर्यादुपासीनश्च देवताः ।**
**शुद्धान्तः करणस्तेन लभते ज्ञानमुत्तमम् ॥ १२३ ॥**

हमने प्रत्येक मन्त्र के प्रयोगों को सुखाप्ति के लिये कहा है । किन्तु उत्तम साधक को उस आसक्ति का त्याग कर निष्काम दृष्टि से देवता का स्मरण करना चाहिये । वेद में कर्म, उपासना और ज्ञान तीन काण्ड कहे गये हैं । जिसमें दो काण्ड साधन कहे गये हैं । तीसरा ज्ञान काण्ड साध्य है । इसलिये वैदिक रीति से शुद्ध अन्तःकरण से देवता की कर्म और उपासना रूप दो साधन करे । ऐसा करने से उत्तम ज्ञान रूप साध्य अवश्य प्राप्त हो जायेगा ॥ १२१-१२३ ॥

**कार्यकारणसङ्घातं प्रविष्टश्चेतनात्मकः ।**
**जीवो ब्रह्मैव सम्पूर्णमिति ज्ञात्वा विमुच्यते ॥ १२४ ॥**

यह चेतनात्मक जीव कार्य कारण सङ्घात रूप शरीर में प्रविष्ट हो गया है । वह सम्पूर्ण ब्रह्म ही है । इस प्रकार मन्त्रज्ञ साधक ज्ञान प्राप्त कर जीव जीवन्मुक्त हो जाता है ॥ १२४ ॥

**मनुष्यदेहं सम्प्राप्य उपासीनश्च देवताः ।**

**यो न मुच्येत संसारात् महापापयुतो हि सः ॥ १२५ ॥**

मनुष्य देह प्राप्त कर जो देवता की उपासना कर संसार से मुक्त नहीं होता, वह महा पापी है ॥ १२५ ॥

**आत्मज्ञानाप्तये तस्माद् यतितव्यं नरोत्तमैः ।**
**कर्मभिर्देवसेवाभिः कामाद्यरिगणक्षयात् ॥१२६॥ इति ।**

इसलिये उत्तम मनुष्यों के लिये और आत्मज्ञान की प्राप्ति के लिये, सत्कर्म से देवता की उपासना द्वारा कामादि शत्रुओं का नाशपूर्वक सतत यत्न करते रहना चाहिये ॥ १२६ ॥

**अथ प्राणप्रतिष्ठाविधानम्—**

**प्राणप्रतिष्ठामन्त्रस्य विधानमभिधीयते ।**
**येन प्रयोगा मन्त्राणां सिद्धिं यान्ति समीरिताः ॥ १२७ ॥**

अब प्राणप्रतिष्ठा का विधान कहते हैं—अब मैं प्राणप्रतिष्ठा मन्त्र की विधि कहता हूँ । इस विधि के करने से कहे गये मन्त्रों का प्रयोग (अनुष्ठानपूर्वक) सिद्ध होता है ॥ १२७ ॥

**प्राणमन्त्रस्योद्धारन्यासध्यानानि नवमपटलतो बोध्यानि ।**

**विनियोगमृषिन्यासं कृत्त्वा तद्वत् कराङ्गयोः ।**
**न्यासं ध्यात्वा यथोक्तेन लक्षमेनं जपेत् मनुम् ।**
**जुहुयात् तद्दशांशेन चरुभिर्घृतसंयुतैः ॥ १२८ ॥**

**तद्दशांशेनेत्यस्यायमर्थः—ॐ आं स्वाहा । ओं ह्रीं स्वाहा । ओं क्रों स्वाहा । ओं यं मृतायै स्वाहा । एवं टाद्यक्षरयुताभिर्वैवस्वताद्याभिः सकृत् सकृत् हुत्वा ओं क्षं सं हं सः ह्रीं ओं इत्यक्षरैरपि तथा हुत्वा मूलेनोक्तसंख्या तु जुहुयादिति ।**

प्राण मन्त्र का उद्धार कर न्यास करना चाहिए तथा नव पटल में साधक प्राणप्रतिष्ठा मन्त्र का प्रथम विनियोग एवं न्यास करे, फिर ऋषि आदि का न्यास कर करन्यास एवं हृदयादि अङ्गन्यास करे । फिर मन्त्रज्ञ साधक को ध्यान कर इस मन्त्र का एक लाख जप करना चाहिए । तदनन्तर घृतसंयुक्त चरु से तद् दशांश होम करना चाहिए ॥ १२८ ॥

यहाँ टीका में तद् दशांश का अर्थ इस प्रकार करते हैं—ॐ आँ स्वाहा, ॐ ह्रीं स्वाहा, ॐ क्रों स्वाहा, ॐ यं मृतायै स्वाहा एवं टाद्यक्षर युताभिवैर्वस्वताद्याभिः सकृत् सकृत् कृत्त्वा ॐ क्षं सं हं सः ह्रीं ॐ इत्यक्षरैरपि तथा हुत्वा मूलेनोक्त संख्या तु जुहुषात् ।

**षट्कोणाढ्ये शक्तिपीठे विधिनानेन पूजयेत् ।**

जयाख्या विजया पश्चात् अजिता चापराजिता ॥ १२९ ॥
नित्या विलासिनी दोग्ध्री अघोरा मङ्गलान्तिमा ।
मूलेन चासनं दत्त्वा मूर्त्तिं मूलेन कल्पयेत् ॥ १३० ॥
तस्यां सम्पूजयेद् देवीमित्थमावरणैः सह ।
अर्चयेत् षट्सु कोणेषु ब्रह्माणं विष्णुमीश्वरम् ॥ १३१ ॥
वाणीं लक्ष्मीमुमां पश्चात् षडङ्गानि प्रपूजयेत् ।
दलेषु मातरः पूज्या तद्बाह्ये लोकनायकाः ॥ १३२ ॥
एवं सम्पूजयेद् देवीं सुगन्धिकुसुमादिभिः ।
इति संसाधितो मन्त्रः षट्कर्मफलदो भवेत् ॥ १३३ ॥

षट्कोण पीठ पर जया, विजया, अजिता, अपराजिता, नित्या, विलासिनी, दोग्ध्री, अथोरा और मङ्गला की इस प्रकार पूजा करे । मूल से आसन प्रदान करे और मूल मन्त्र से मूर्त्ति की कल्पना करे । उस मूर्त्ति में आवरण के साथ देवी की इस प्रकार पूजा करनी चाहिए । षट्कोण में ब्रह्मा, विष्णु, ईश्वर, वाणी, लक्ष्मी और उमा की पूजा करनी चाहिए । फिर षडङ्ग की दलों पर मातृकाओं की पूजा करे, उसके बाहर लोकपालों की पूजा करे और इसी प्रकार सुगन्धित पुष्पों से देवी की पूजा करे । इस प्रकार से सिद्ध किया गया मन्त्र साधक को षट्कर्म का फल प्रदान करता है ॥ १२९-१३३ ॥

स्थापयेन्मनुनानेन प्राणान् सर्वत्र देशिकः ।
बीजान्तेऽमुष्य शब्दानामादौ दूतीः प्रयोजयेत् ॥ १३४ ॥

फिर आचार्य इस मन्त्र से सर्वत्र प्राणप्रतिष्ठा करे । बीजान्त में (पाशादि बीज के अन्त में) हंस मन्त्र अमुष्य शब्द के आदि में दूतियों की प्राण प्रतिष्ठा करनी चाहिए ॥ १३४ ॥

मृता वैवस्वता भूयो जीवहा प्राणहा ततः ।
आकृष्या ग्रथनी पश्चात् प्रमोदा विस्फुलिङ्गिनी ॥ १३५ ॥
क्षेत्रप्रतिहरीत्येताः प्राणदूत्यो नव स्मृताः ।
पाशेन बद्धचेष्टस्य शक्त्या स्वीकृतचेतसः ॥ १३६ ॥
अंकुशेनाहृतस्याभिः साध्यस्यासून् समाहरेत् ।
द्वादशाङ्गुलमानेन कृत्त्वा साध्यस्य पुत्तलीम् ॥ १३७ ॥
तस्यां प्राणात्मकं यन्त्रं सकीटं हृदये न्यसेत् ।
निशीथसमये साध्ये सुप्ते तस्य हृदम्बुजे ॥ १३८ ॥

मृता, वैवस्वता, जीवहा, प्राणहा, आकृष्णा, ग्रथनी, प्रमोदा, विस्फुलिङ्गिनी और क्षेत्रप्रतिहरी—ये नव प्राणदूतियाँ कही गई हैं । पाश के द्वारा बाधने से

चेष्टाहीन शक्ति के द्वारा, जिसकी चेष्टा अपहृत की जा चुकी है, अङ्कुश के द्वारा मारे गये साध्य शत्रु का प्राण इन यमदूतियों के द्वारा हरण करे। साध्य शत्रु की बारह-बारह अङ्गुल की प्रमाण में पुतली निर्माण कर उसमें कीट सहित प्राणात्मक यन्त्र शत्रु के हृदय में डाल देवे। शत्रु के हृत्कमल में यह क्रिया तब करे, जब आधी रात के समय वह सो रहा हो ॥ १३५-१३८ ॥

**दलेषु वायुवह्नीन्द्रवरुणानामतः परम्।**
**ईशराक्षसशीतांशुयमानां कर्णिकान्तरे ॥ १३९ ॥**
**यादीन् हंससमायुक्तान् भृङ्गाकाराननुस्मरन्।**
**शिरोबिन्दुसमुद्भूततन्तुसम्बद्धविग्रहान् ॥ १४० ॥**
**एवमात्महृदम्भोजे भृङ्गीरूपान् धिया स्मरेत्।**
**आत्महृत्पद्मगां भृङ्गीं प्रस्थाप्य श्वासवर्त्मना ॥ १४१ ॥**
**एकैकसाध्यहृत्पद्मात् भृङ्गमेकैकमानयेत्।**
**पुत्तल्यां स्थापयेन्मन्त्री स्वचित्ते वा विधानवित् ॥ १४२ ॥**
**तन्तुछेदं प्रकुर्वीत वह्निबीजेन संयतः।**
**आकृष्टान् साध्यहृद्भृङ्गान्भुवा संस्तम्भयेत् ततः ॥ १४३ ॥**

भुवा ग्लौमिति बीजेन—

**एवमेकादशावृत्तीः कुर्यात् सर्वेषु कर्मसु।**
**वश्याकर्षणयोर्प्यादीनरुणान् संस्मरेत् सुधीः ॥ १४४ ॥**

दल में वायु (यं), अग्नि (रं), इन्द्र (लं) और वरुण (वं) का इस प्रकार ईश्वर (शं), राक्षस (षं), चन्द्रमा (सं?) और यम का कर्णिका में न्यास करे। फिर मकारादि के शिर पर रहने वाले जो बिन्दु, उनसे उत्पन्न जो तन्तु, उससे सम्बद्ध विग्रह वाले, हंस समायुक्त भृङ्गाकार यकारादिं का स्मरण करते हुये, अपनी वृद्धि के द्वारा अपने हृदय कमल में स्थापित करे। फिर उसे अपने हृदय में स्थित भृङ्गी को श्वास मार्ग से प्रस्थापित करे। फिर साध्य के हृदय से एक-एक भृङ्ग निकाल कर मन्त्री उस पुतली में स्थापित करे। अथवा अपने चित्त में स्थापित करे। फिर सावधान होकर वह्निबीज (रं) से तन्तुच्छेद कर देवे। तदनन्तर साध्य के हृदय से निकाले गये उस भृङ्गी को युवा बीज (ग्लौम्) से संस्तम्भित करे। इस प्रकार सभी षट् कर्मों में एकादश आवृत्ति करे ॥ १३९-१४४ ॥

पुत्तलीप्रयोगेध्यानकथनम्

**मोहविद्वेषयोर्धूम्रान् कृष्णान् मारणकर्मणि।**
**पीतान् संस्तम्भने ध्यायेत् प्राणाकर्षणकर्मसु ॥ १४५ ॥**
**आकृष्टान् साध्यहृत्प्राणात् स्थापयेदात्मनो हृदि।**

**क्रूरकर्मसु पुत्तल्यां तेषां स्थापनमीरितम् ॥ १४६ ॥**
**प्राणान् साध्यस्य मण्डूकानात्मनस्तु भुजङ्गमान् ।**
**संस्मरेत् तत्र निपुणः सदा क्रूरेषु कर्मसु ॥ १४७ ॥**

१. वश्य, २. आकर्षण तथा ३. ईर्ष्यादि में उनको अरुण वर्ण से स्मरण करे। मोह विद्वेष में धूम्रवर्ण का, मारण कर्म में कृष्ण वर्ण का तथा संस्तम्भन एवं प्राणाकर्षण कर्म में पीतवर्ण में उनका ध्यान करना चाहिए। फिर साध्य के हृदय से निकाले गये प्राण को साधक अपने हृदय में स्थापित करे। क्रूर कर्म में उस प्राण का संस्थापन पुतली में कहा गया है। फिर साध्य के प्राण में मण्डूक की भावना और अपने में साँप की भावना कर विद्वान् क्रूर कर्म में इस प्रकार की भावना करे ॥ १४५-१४७ ॥

प्राणात्मयन्त्रकथनम्

**वाय्वग्निशक्रवरुणेश्वरराक्षसेन्द्र-**
**प्रेतेशपत्रलिखितैरथ यादिवर्णैः ।**
**बिन्द्वन्तिकैः क्षगतहंससमेतसाध्यं**
**प्राणात्मयन्त्रमथवर्णवृतं धरास्थम् ॥ १४८ ॥**

अब प्राण का यन्त्र कहते हैं—पाशादि मन्त्र के अ (ॐ आं क्रौं हौं) के अन्त में वायु (यं), अग्नि (रं), शक्रं (लं), 'वरुण' (वं), ईश्वर (शं), राक्षसेन्द्र (षं), फिर प्रेत (सं), ईश्वर (हौं), फिर स (क्षं) गत (सं), फिर हंसा ह्रीं, फिर साध्य का नाम लिखे। इस प्रकार मन्त्री प्राणात्मयन्त्र लिखे। इसके बाद भूपुर में समस्त वर्ण लिख कर उसे घेर देवे ॥ १४८ ॥

**इत्थं प्रयोगकुशलो मनुनाऽनेन मन्त्रवित् ।**
**वशयेत् सकलान् देवान् किं पुनः पार्थिवान् जनान् ॥१४९॥ इति ।**

प्रयोग कुशल मन्त्रवेत्ता इस प्रकार के मन्त्र युक्त यन्त्र से देवताओं को भी वश में कर लेता है फिर मनुष्यों की बात ही क्या? ॥ १४९ ॥

**'बीजान्तेऽमुष्यशब्दाना'मिति (१४४) श्लोकमारभ्य 'पार्थिवान् जनान्' (१५९) इत्यन्तानां षोडशश्लोकानां क्रमेणायमाशयः—**

**बीजान्ते पाशादिहंसमन्त्रान्ते। केचन बीजान्ते बीजत्रयान्त इत्याहुः, तदसम्बद्ध-माचार्यवचनविरोधात्। अमुष्यशब्दानामादाविति चासम्बद्धत्वात्। अमुष्यशब्दानामादा-विति साध्यनाम्न आदौ। तदुक्तम्—अथ यादीन् दूतीश्चोक्त्वा साध्यनामाथमन्त्रीति। आं ह्रीं क्रों यं रं लं वं शं षं सं हों ॐ क्षं सं हंसः ह्रीं ॐ मृते अमुष्य मृतात्मकान् प्राणानिहाहर प्राणा इह प्राणा इति वा इहैवेत्याद्योमन्तमुक्त्वा पुनरोमादि ओमन्त-मुक्त्वा यं मृते अमुष्य मृतात्मकं जीवमिहाहर जीव इह स्थित इति वा। इहैवेत्यादि**

ओमन्तमुक्त्वा पुनरादि ओमन्तमुक्त्वा यं मृते अमुष्य मृतात्मकानि सर्वेन्द्रियाणि इहाहर सर्वेन्द्रियाणि इह वा । पुनरिहेत्यादि । ओमन्तमुक्त्वा पुनरादि ओमन्तमुक्त्वा यं मृते अमुष्य मृतात्मकान् वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणान् इहाहर वाङ्मनश्चक्षुः श्रोत्रघ्राण-प्राणा इह वा । इहैवेत्यादि ओमन्तं वदेत् । एवं वैवस्वतादिमन्त्रा ऊहनीयाः ।

युगपद् वा प्राणप्रतिष्ठाप्रकारमाह—पाशेत्यादिना सर्वेषु कर्मस्वित्यन्तेन । आभि-दूतीभिः प्राणात्मकं यन्त्रं वक्ष्यमाणं सकीटं तत्र प्राणप्रतिष्ठारम्भात् प्रागेव साध्य-प्रतिकृतेर्हृदये यन्त्रं सजीवं कीटं च निःक्षिप्यातोद्य प्रयोगमारभेतेत्यर्थः । प्राणप्रतिष्ठायां कर्त्तव्यमाह—निशीथेति । पद्मपादाचार्यास्तु कालदण्डेन सन्ताड्य बोधनमाहुः । अन्यथा प्राणप्रतिष्ठायोगादिति । यच्च—

'बध्वा तं च निपीड्यमेव सहसा कालस्य यष्ट्या शिर-
स्याताड्य क्षुभिताखिलेन्द्रियगणं साध्यं स्मरेत् साधकः ।' इति

स्वहृदये साध्यहृदये पुत्तलीहृदये च । मृतादिदूतीनां स्थानमाह—दलेष्विति । भृङ्गाकाराननुस्मरेदिति । याद्यक्षररूपमृतादीन् साध्यहृत् पद्मपत्रेषु कर्णिकायां भृङ्ग-रूपान् स हृदयपद्मे भृङ्गीरूपान् ध्यायेदित्यर्थः ।

शिर इति । यकारादिबीजानां शिरसि ये बिन्दवस्तत्समुद्भूता ये तन्तवः तैः सम्बद्धविग्रहानिति ।

पुत्तल्यामिति । क्रूरकर्मणि स्वचित्तै इति वश्यादौ ।

विधानविदिति । स्ववहन्नाड्या प्रवेशनिर्गमकुशल इत्यर्थः ।

तत्र प्रकारः—साध्यस्य शक्तिपाशशक्तितेजोऽकुशमहाभ्रमरकालदण्डरूपेण पञ्चधा निःसार्य पाशबीजमुच्चरन् साध्यं पाशेन गले बध्वा शक्तिबीजेन तं स्ववशे कृत्वांकुशेनाकृष्याग्रतः संस्थाप्य याद्यष्टकमुच्चरन् साध्यस्य त्वगादीन् व्याप्यापक्रम्य महाभृङ्गेण साध्यं कवलीकृत्य कालदण्डताडनेन सुप्तं तं सम्बोध्य क्षमिति सपरिवार-मुन्मूलीकृत्य समिति स्वप्राणशक्तिरूपमहाभ्रमरेण मेलयित्वा हंस इति स्वैक्यं सम्भाव्य ह्रीमोमिति वश्यादौ जीवनाय प्लावनं कृत्वा यं मृतेत्यादिना स मृतां सम्बोध्य अमुष्य मृतात्मकाः इह प्राणा इत्यादिना स्वमृताप्राणानितरप्राणैः संयोज्य रमिति साध्य-मृतातन्तुच्छेदं विधाय सकीटहृदयायां पुत्तल्यामात्मनि वा साध्यमृता प्राणान् संस्थाप्य ग्लौमिति संस्तभ्य तस्य जीवादिकमप्येवमानयेत् ।

युगपदेव वा मृता प्राणादीन् स्थापयेत् । ततः स्वहृदि चेत् आं ह्रीं इत्यादि मयि प्राणा इह प्राणा मयि जीव इह स्थितः इत्यादिरूपम् । पुत्तल्यां चेत्, पुत्तल्यां प्राणा इह प्राणाः पुत्तल्यां जीव इह स्थित इति जपेत् । इति मृताप्रतिष्ठाक्रमः ।

एवं वैवस्वतादिप्राणा अपि स्थापनीयाः । ततो यादीन् होमान्तानुक्त्वा साध्यस्य धातून् जीवं च सपरिकरं च पुनः स्वमण्डले सङ्कोचितं कवलीकृत्य यादीन् दूतीश्च स्वस्य सम्बुद्ध्यन्तान् साध्यस्य वामुष्य प्राणानिहाहर अमुष्य प्राणा इह प्राणा इति चोक्त्वा पुनरपि अमुष्य धातूनिहाहरेत्यादि वदेत् । एवं जीवेऽपि । अयमेव प्रकारः पुत्तल्यामपि । तदुक्तम्—

'आकृष्टानां साध्यदेशादसूनां पुत्तल्यादावप्ययं स्यात् प्रकारः ।' इति

एवमितीति । पूर्वोक्तं कर्म एकादशावृत्तिं कुर्यात् । पद्मपादाचार्यास्तु एवं सति प्रयोगमन्त्रो भवतीति अमुष्यस्थाने यादीनां त्रिरावृत्तिरभिहिता प्राणजीवसर्वेन्द्रिया-कर्षणार्थम् । केचित् यादीनां चतुरावृत्तिं वर्णयन्ति । प्राणजीवेन्द्रियसामान्यत-द्विशेषाणामाकर्षणार्थम् । केचित् पञ्चावृत्तीः प्राणसामान्यजीवसामान्येन्द्रियसामान्य-इन्द्रियविशेषप्राणविशेषाणामाकर्षणार्थम् । केचित् नवावृत्तिमन्त्रोक्तानां सर्वेषां प्रत्येक-माकर्षणार्थमित्याहुः । एवं यथोपदेशं विधेयम् ।

यन्त्रमाह—वाय्विति यादिवर्णैरिति होमन्तैः ।

धरास्थमिति—बाह्ये भूगृहावृतमित्यर्थः ।

अत्रैवं सम्प्रदायविदां रहस्यम्—सर्वकर्मसु द्वादशाङ्गुलां पुत्तलीं वक्ष्यमाण-साध्यर्क्षजां कल्पोक्तां वा विधाय तन्मन्त्रेण कल्पोक्तद्रव्येण तस्या हृदये पूर्वोक्ताधारे यथोक्तं यन्त्रमष्टदलात्मकं विलिख्य तत्र वायव्याग्नेयपूर्ववरुणेशानराक्षसोत्तरयाम्यपत्रेषु सबिन्दुकान् यादीन् यं रं लं वं शं षं सं हों इत्यष्टाक्षराणि तत् कर्णिकायां क्षमिति तन्मध्ये हंस इति अमुकं वशमानयेत्यादिकर्मोपेतं विलिख्य बहिर्वृत्तं विधाय मातृकया वेष्टयेत् । तद्बहिर्भूगृहेण वेष्टयेत् । केचित् मातृकाभ्यन्तरतः प्राणप्रतिष्ठामन्त्रेण वेष्टनमाहुः । पुनः प्राणप्रतिष्ठां विधाय सम्पूज्य सकीटं यन्त्रं पुत्तल्या हृदये क्षिपेत् । वा पूर्वोक्तं यन्त्रं लिखित्वा षड्बिन्दुकीटं षट्कोणोपेतं निःक्षिपेत् । तत् प्रकारस्त्वयम्-अमुक प्राणा इत्युक्त्वा साध्यस्य प्राणानाकृष्य पुत्तल्यां निधापयेत् । यं मृतात्मने त्वचमाकर्षयामि । रं वैवस्वतात्मने रक्तमाकर्षयामि । लं जीवहात्मने मांस-माकर्षयामि । वं प्राणहात्मने मेद आकर्षयामि । शं आकृष्यात्मने अस्थीन्याकर्षयामि । षं ग्रथिन्यात्मने मज्जामाकर्षयामि । सं प्रमोदात्मने शुक्रमाकर्षयामि । हं विस्फुलिङ्गिन्यात्मने जीवमाकर्षयामि । क्षं क्षेत्रप्रतिहर्यात्मने सर्वधातूनाकर्षयामि । एवं वश्यादौ वशयामीत्यादि बोद्धव्यम् । एवं मृतादिप्रयोगो नववारं, तत्र साध्यं पाशेन बद्धचेष्टं अंकुशेनाकृष्टप्राणं भावयेत् । ततोऽर्धरात्रे यदा साध्यस्य सुषुप्तिर्भवति तदा साध्यहृदम्बुजेऽष्टदलेषु वायव्याग्नेयपूर्वपश्चिमेशाननैर्ऋत्योत्तरयाम्येषु कर्णिकायां च यं रं लं वं शं षं सं हूं क्षं इति नवधा मन्त्रगताक्षरं भ्रमररूपस्थितं ध्यायेत् ।

साध्यं तु ब्रह्मरन्ध्रतः प्रवृत्तसुषुम्णातन्तुबद्धबुद्ध्या ध्यायेत् । ततः स्वहृदये पुनः हृत्कमलवायव्यात् उक्तक्रमाष्टपत्रे कर्णिकामध्यस्थयादीन् वर्णान् भ्रमरीरूपान् ध्यायेत्। ततश्च प्रवहनिःश्वासनाडीमार्गेण यादीन् भ्रमर्येकैकं स्वकीयमुच्चरेत् । साध्यस्य हृद्गतं भ्रमरैकैकभ्रमर्येकैकासक्तचित्ताकृश्यानीय तां तां पुत्तल्या हृदयकमलेषु स्थापयेत् । तत्र वश्यादि शुभकर्मसु स्वहृदि स्थापयेत् । पुत्तलीं न कुर्यात् । ततः समस्तं नवधा भ्रमरानानीय सास्यस्य शिरोबिन्दुगतं यं सुषुम्णातन्तुरूपं षड्बिन्दुभ्रमरं ध्यायेत् । रमित्यग्निबीजेन निष्कासयेत् । एवं भ्रमरभ्रमरीध्यानहरणतन्तुच्छेदस्तम्भनं पुनः पुनरेकादशवारं कृत्वा सर्वकर्मस्वर्धरात्रे कर्त्तव्यप्रयोगे यथाकामं भ्रमराक्षराणां ध्यानम् । तत्र वश्याकर्षणकर्मादिषु स्वहृदये प्राणानानीय स्थापयेत् ।

षड्बिन्दुः कीटविशेषः । स च प्रथमजलपाते उत्पद्यते । तस्य पञ्चकुष्ठ इति

नामान्तरम् । तस्य पञ्चबिन्दवः श्वेता भवन्ति । एको बिन्दुर्भिन्नवर्णः । तदुक्तं नीतिनिर्णीतादौपनिषदि—

'पञ्चकुष्ठस्य कीटस्य पञ्च स्युः श्वेतबिन्दवः ।
भिन्नवर्णास्तथा चैकः सुस्निग्धश्चैव वर्णतः ॥
भवेत् स जलदारम्भे षड्बिन्दुरिति कीर्तितः ।

साध्यर्क्षवृक्षास्तु—

'कारस्करोऽथ धात्री स्यादुदुम्बरतरुः पुनः ।
जम्बूखदिरकृष्णाख्यौ वंशपिप्पलसञ्ज्ञकौ ॥
नागरोहिणनामानौ पलाशप्लक्षसञ्ज्ञकौ ।
अंवष्ठबिल्वार्जुनाख्यविकङ्कतमहीरुहाः ॥
बकुलः सरलः सर्जो वञ्जुलः पनसार्ककौ ।
शमीकदम्बनिम्बाम्रमधूका ऋक्षशाखिनः ॥ इति ।

अयमर्थः—कारस्करः—कुचिला । धात्री-आमलकी । मृगशिरसस्तु श्वेतसार एव खदिरः । आर्द्रायास्तु कृष्णसारः खदिरः । नागो-नागकेसरः । रोहिणो-वटः । प्लक्षः-पर्कटी । अंवष्ठः-आम्रातः । अर्जुनः-ककुमः । विकङ्कतः-स्त्रुवावृक्षः । सर्जः-सालः । वञ्जुलः-अशोकः । एषां फलं सामान्यत उक्तम् ।

'आयुःकामः स्वर्क्षवृक्षं छेदयेन्न कदाचन ।इति ।

तन्त्रान्तरे पुत्तलीनिर्माणे विशेष उक्तः—

आयामः पादयोस्तस्या आकट्याश्चतुरङ्गुलः ।
पादोनद्व्यङ्गुला कुक्षिस्तावानेवाङ्गुलोदरम् ॥ १५० ॥
अङ्गुलद्वयमावक्त्रात् कण्ठदेशस्य मानकम् ।
शिरसो वक्त्रमानं स्यात् सार्द्धद्वयमिहाङ्गुलैः ।
द्वादशाङ्गुलयः सर्वाः साध्यपुत्तलिका स्मृताः ॥१५१॥ इति ।

अन्य तन्त्रों में पुत्तली निर्माण के विषय में कुछ विशेष बाते कही गई हैं—पुत्तली की लम्बाई कटि से पैर पर्यन्त चार अङ्गुल दो अङ्गुली से चतुर्थांश कम, कुक्षि इतना ही अङ्गुल, उदर एवं वक्त्र दो अङ्गुल और उतना ही कण्ठ देश का मान होना चाहिये । शिर से वक्त्र का मान अढ़ाई अङ्गुल होना चाहिये । इस प्रकार साध्य की पुत्तली का मान बारह अङ्गुल कहा गया ॥ १५०-१५१ ॥

अन्यत्रापि विशेषः—

पञ्चांशेन मुखं कृत्वा तदर्धेन गलं पुनः ।
शिष्टेन सर्वाण्यङ्गानि पुत्तलीनां प्रकल्पयेत् ॥ १५२ ॥
मारणे दारुरूपां तां द्वादशाङ्गुलसंमिताम् ।

षण्णवत्यङ्गुलां वापि कुर्यान्मात्राङ्गुलैः क्रमात् ॥ १५३ ॥
होमार्थं कल्पितायास्तु तस्याः प्रोक्तो विधिस्त्वयम् ।
वश्याकर्षणयोः कुर्यात् तां प्रोक्तां द्वादशाङ्गुलैः॥ १५४॥इति

**॥ इतिश्रीमदागमरहस्ये सत्संग्रहे षट्कर्मनिरूपणं नाम पञ्चविंशः पटलः ॥२५॥**

अन्यत्र तन्त्रों में विशेष कथन इस प्रकार है—जितने में पुत्तली निर्माण करना हो उसके पञ्चमांश से मुख बनावे । उसके आधे से गला, शेष साध्य के सभी अङ्गों का निर्माण करे । मारण में काष्ठ की पुत्तली का निर्माण बारह अङ्गुल मान में करे, अथवा ९६ अङ्गुल की पुत्तली का निर्माण करे । होम कार्य के लिये जिस पुतली का निर्माण करना हो, अथवा वश्य आकर्षण के लिये जिसका निर्माण करना हो, उसकी मात्रा केवल बारह अङ्गुल होनी चाहिये ॥ १५२-१५४ ॥

**महाकवि पं० रामकुबेर मालवीय के द्वितीय आत्मज डॉ० सुधाकर मालवीय कृत आचार्य श्रीसरयूप्रसाद द्विवेद विरचित आगमरहस्य में षट्कर्मनिरूपण नामक पञ्चविंश पटल की सुधा नामक हिन्दी व्याख्या पूर्ण हुई ॥ २५ ॥**



# षड्विंशः पटलः

## मुद्राकथनम्

अथ मुद्राः प्रवक्ष्यामि नानातन्त्रोदिताः क्रमात् ।
याभिः कृताभिर्मोदन्ते मन्त्रदेवाश्च सर्वशः ॥ १ ॥

अब मैं अनेक तन्त्रों में कही गई क्रमशः मुद्राओं को कहता हूँ । जिनके करने से समस्त मन्त्रदेवता प्रसन्न हो जाते हैं ॥ १ ॥

**यामले—**

मुद्राशब्दव्युत्पत्तिकथनम्

मोदनात् सर्वदेवानां द्रावणात् पापसन्ततेः ।
तस्मान् मुद्रेयमाख्याता सर्वकामार्थसाधिनी ॥ २ ॥
मुदं रातीति मुद्रा स्यात् येनैका मुष्टिरेव तु ।
स्वल्पभेदात् कोपहर्षौ प्राणिनां जनयत्यतः ॥ ३ ॥
तेनैव सर्वदेवानां मुद्रा हर्षप्रदा मता ।
मुद्राकाले दर्शनीया मुद्रास्ताः सर्वदा शिवे ॥ ४ ॥
पृथिव्यादीनि भूतानि कनिष्ठादिक्रमान्मताः ।
तेषामन्योन्यसम्भेदप्रकारैस्तत् प्रपञ्चिता ॥ ५ ॥

**यच्चाकाशवाय्वग्निसलिलभूरूपाः स्वाङ्गुल्यो हि पञ्चभूतात्मिकाङ्गुष्ठाद्याः । तासां मिथः संयोगरूपसङ्केतात् देवताप्रगुणीभावपूर्वको मोदः सान्निध्यं करोतीत्यर्थः ।**

यामल में भी बतलाया गया है—सभी देवताओं के प्रसन्न करने के कारण और पापसन्तति को दूर भगा देने के कारण मुद्रा कही जाती है, जो सभी कामनायें सिद्ध करती है । जो प्रसन्नता प्राप्त करावे, उसी का नाम मुद्रा है । यह मात्र एक ही मुट्ठी में स्वल्पभेद करने से प्राणियों को क्रोध और हर्ष उत्पन्न करती है । (मुट्ठी से निर्मित विविधाकार मुद्रा है) इस कारण उस मुष्टि के विविधाकार में बनाने से मुद्रा देवताओं को हर्ष प्रदान करती है । हे शिवे! जब मुद्रा का समय आवे, तभी मुद्रा प्रदर्शित करनी चाहिये । कनिष्ठा से लेकर पाँचों अङ्गुलियाँ

क्रमशः पृथिव्यादि पञ्चभूत कही जाती हैं। उन्हीं पञ्चभूत रूप अङ्गुलियों के परस्पर भिन्न कर देने से वह मुद्रा प्रपञ्चित की जाती है ॥ २-५ ॥

ये आकाश, वायु, अग्नि, जल और पृथ्वी स्वरूप अङ्गुष्ठादि पञ्चभूतों के स्वरूप हैं। वस्तुतः वे अङ्गुलियाँ भिन्न-भिन्न संयोग रूप सङ्केत से देवता-प्रगुणीभाव पूर्वक देवताओं को मोद प्रदान करती हैं—

**अर्चने जपकाले तु ध्याने काम्ये च कर्मणि ।**
**तत्तन्मुद्राः प्रयोक्तव्याः देवतासन्निधायिकाः ॥ ६ ॥ इति ।**

अर्चन, जपकाल, ध्यान तथा काम्य कर्म करते समय तत्तत् मुद्राओं का प्रयोग करना चाहिये। यतः ये देवताओं का सान्निध्य करने वाली है ॥ ६ ॥

**मन्त्रदर्पणे—**

**नादीक्षितस्तु रचयेत् क्षुभ्यन्ति हि देवता यस्मात् ।**
**मुद्राः भवन्ति विफलाः सोऽपि च रोगी दरिद्रः स्यात् ॥ ७ ॥**

**१. अङ्कुशमुद्राकथनम्**

**अंकुशाख्या भवेन्मुद्रा तीर्थावाहनकर्मणि ।**

मन्त्रदर्पण में भी बतलाया गया है—बिना दीक्षा लिये मुद्रा निर्माण न करे। ऐसा न करने से देवता क्रुद्ध होते हैं, अदीक्षित द्वारा बनाई गई मुद्रा निष्फल होती है और मुद्रा बनाने वाला भी दरिद्र हो जाता है। तीर्थावाहन कर्म में अङ्कुश मुद्रा बनानी चाहिये ॥ ७-८ ॥

**तच्च मन्त्रदर्पणे—**

**अंकुशाख्या दक्षमुष्टिरंकुशीकृततर्जनी ॥ ८ ॥**
**मध्यमा सरलीभूता तीर्थावाहनकर्मणि ।**

**२. कुन्तमुद्राकथनम्**

**रक्षणे कुन्तमुद्रोक्ता तस्या लक्षणमुच्यते ॥ ९ ॥**

मन्त्रदर्पण में भी बतलाया गया है—जब दाहिने हाथ की तर्जनी अङ्कुश के रूप में करे और शेष मध्यमा सीधे रखे तब 'अङ्कुश मुद्रा' बन जाती है। यह मुद्रा तीर्थावाहन कर्म में बनावे। रक्षा कार्य में 'कुन्त मुद्रा' कही गई है। अब उसका लक्षण कहते हैं ॥ ८-९ ॥

**तन्त्रसमुच्चये—**

**मुष्ट्योरूर्ध्वीकृताङ्गुष्ठौ तर्जन्यग्रे तु विन्यसेत् ।**
**सर्वरक्षाकरी ह्येषा कुन्तमुद्रा प्रकीर्तिता ।**

### ३. कुम्भमुद्राकथनम्

**कुम्भमुद्राऽभिषेके स्यात् तस्या लक्षणमुच्यते ॥ १० ॥**

तन्त्रसमुच्चय में भी बतलाया गया है—दोनों हाथों की मुट्ठी बाँध कर दोनों अङ्गूठों को ऊपर करे। फिर दोनों तर्जनियों को अपने आगे स्थापित करे। यह सर्वरक्षाकरी 'कुन्त मुद्रा' कही गई। 'कुम्भ मुद्रा' अभिषेक में करे उसका लक्षण कहते हैं ॥ १० ॥

**मन्त्रदर्पणे—**

**वामाङ्गुष्ठे दक्षाङ्गुष्ठं क्षिप्त्वा हस्ताभ्यां चेत्।**
**मध्याकाशां मुष्टिं कुर्यात् कुम्भाख्येयं मुद्रा प्रोक्ता ॥ ११ ॥**

**मध्याकाशां मध्यशून्याम्—**

मन्त्रदर्पण में लक्षण इस प्रकार कहा है—दाहिने हाथ के अङ्गूठे को बायें हाथ के अङ्गूठे पर रखे। फिर दोनों हाथों से मध्य में आकाश रख कर मुष्टि बनावे, यह 'कुम्भ' नामक मुद्रा कही गई ॥ ११ ॥

मध्याकाश का अर्थ है दोनों मुट्ठी के भीतर शून्य रखे।

### ४. तत्त्वमुद्राकथनम्

**कथिता तत्त्वसञ्ज्ञा तु मुद्रा बहुषु कर्मसु।**

**ज्ञानार्णवे—**

**अङ्गुष्ठानामिकाभ्यां तु तत्त्वमुद्रेयमीरिता।**

### ५. कालकर्णीमुद्राकथनम्

**कालकर्णी प्रयोक्तव्या विघ्नप्रशमकर्मणि ॥ १२ ॥**

बहुत से काम्य कर्मों में तत्त्वमुद्रा निर्माण कहा है। ज्ञानार्णवतत्र में लक्षण इस प्रकार दिया गया है—अङ्गूठा और अनामिका मुद्रा झुका कर एक में मिला देवे तो वह 'तत्त्वमुद्रा' बन जाती है। विघ्न शान्ति कर्म में 'कालकर्णी मुद्रा' का प्रयोग करे ॥ १२ ॥

**मन्त्रदर्पणे—**

**कृत्त्वोन्नते च वृद्धे मुष्ट्योः संलग्नयोर्युगयोः।**
**ते त्वविवक्त्रे कुर्यात् विघ्नघ्नी कालकर्णिका मुद्रा ॥ १३ ॥**

मन्त्रदर्पण में कहा गया है—दोनों बद्ध (अङ्गूठों) अङ्गुलियों को ऊपर उठाकर उनका वक्त्र एक में मिला देवे और दोनों मुट्ठियों को एक में संलग्न करे। यह विघ्नघ्नी 'कालकर्णिका मुद्रा' कही गई है ॥ १३ ॥

### ६. अस्त्रमुद्राकथनम्

**प्रयोगसारे—**

**त्रिशूलाग्रौ करौ कृत्त्वा व्यत्यस्तावभियोजयेत् ।**
**अस्त्रमुद्रेयमाख्याता वह्निप्राकारलक्षणा ॥ १४ ॥**

प्रयोगसार में भी बतलाया गया है—दोनों हाथों को त्रिशूल के अग्रभाग के समान बनाकर उन्हें उलट कर एक में मिला देवे । इसे 'अस्त्र मुद्रा' कहते हैं जो अग्नि के प्राकार के समान होती है ॥ १४ ॥

### ७. वासुदेवमुद्राकथनम्

**मुद्रा तु वासुदेवाख्या ध्याने तल्लक्षणं यथा ।**
**अञ्जल्यञ्जलिमुद्रा स्यात् वासुदेवाह्वया च सा ॥ १५ ॥**

**अञ्जलीति विभक्तिलोपः छान्दसः ।**

वासुदेव नाम की मुद्रा ध्यान में बनानी चाहिये—उसका लक्षण इस प्रकार है । 'अञ्जलिमुद्रा' वह है जिसमें अञ्जली बाँधी जाय । वही अञ्जलि 'वासुदेव' नाम की मुद्रा कही गई है ॥ १५ ॥

यहाँ अञ्जलि के स्थान में विभक्ति लगाकर 'अञ्जलिर्' कहना चाहिये था किन्तु छान्दस होने के कारण विभक्ति का लोप कर दिया गया है ।

### ८. मातृकान्याससमुद्रालक्षणकथनम्

**मातृकान्याससमुद्राया लक्षणं वच्मि साम्प्रतम् ।**

**तन्त्रे—**

**ललाटेऽनामिकामध्ये विन्यसेत् मुखपङ्कजे ।**
**तर्जनीमध्यमानामा वृद्धानामे च नेत्रयोः ॥ १६ ॥**
**अङ्गुष्ठं कर्णयोर्न्यस्य कनिष्ठाङ्गुष्ठकौ नसोः ।**
**मध्यास्तिस्रो गण्डयोश्च मध्यमां चौष्ठयोर्न्यसेत् ॥ १७ ॥**
**अनामां दन्तयोर्न्यस्य मध्यमां चोत्तमाङ्गके ।**
**मुखेऽनामां मध्यमां च हस्ते पादे च पार्श्वयोः ॥ १८ ॥**
**कनिष्ठानामिकामध्यास्तासु पृष्ठे च विन्यसेत् ।**
**ताः साङ्गुष्ठा नाभिदेशे सर्वा कुक्षौ च विन्यसेत् ॥ १९ ॥**
**हृदये च तलं सर्वमंसयोश्च ककुत् स्थले ।**
**हृत्पूर्वहस्तपत्कुक्षिमुखेषु तलमेव च ॥ २० ॥**
**एताश्च मातृकामुद्राः क्रमेण परिकीर्तिताः ।**

**अज्ञात्वा विन्यसेद् यस्तु न्यासः स्यात्तस्य निष्फलः ॥ २१ ॥**

**मुखेनामां मध्यमामित्यत्र मुखपदं जिह्वापरमिति सर्वत्राविरोधः । व्योमेन्द्वौरस-नार्णकर्णिकमचामित्यादौ रसनापदेन विसर्गो गृह्यत इति शारदावचनादत्रावधेयम् । पार्श्वयोरित्यस्य कनिष्ठानामिकामध्या इत्यनेनैव सम्बन्धो नतु मध्यमामित्यनेन । तास्तु पृष्ठे च विन्यसेदित्यत्र ता इत्यस्य वैयर्थ्यापत्तेः । एवं च शीर्षोष्ठकरसन्धिपार्श्वेषु मध्यमा मतेति ।**

अब मैं इस समय मातृकान्यास मुद्रा का लक्षण कह रहा हूँ । अनामिका और मध्यमा को ललाट में, मुख कमल में, तर्जनी, मध्यमा, अनामिका नेत्र में, बद्ध (अङ्गूठा) और अनामिका अङ्गूठा दोनों कानों में, कनिष्ठा और अङ्गूठा दोनों नासिका छिद्रा में, मध्य की तीन अङ्गुलियों को दोनों गण्डस्थल पर, मध्यमा दोनों ओठों पर स्थापित करे । अनामिका को दोनों ओर के दाँतों पर, मध्यमा को शिर पर, मुख (जिह्वा) अनामिका और मध्यमा को हाथ पैर और दोनों पार्श्व पर, कनिष्ठा अनामिका और पीठ पर मध्यमा स्थापित करे । इस प्रकार यह 'मातृका मुद्रा' कही गई है । जो बिना समझे मातृका न्यास करता है उसका न्यास निष्फल हो जाता है ॥ १६-२१ ॥

### ९. कूर्ममुद्राकथनम्

**कूर्ममुद्रा समाख्याता देवताध्यानकर्मणि ।**

**तच्च मन्त्रदर्पणे—**

**वामे पैत्र्ये तीर्थे तस्याङ्गुष्ठेन तर्जन्याम् ॥ २२ ॥**
**दक्षस्याधो वदने मध्यानामे प्रदेशिनीं स्वल्पाम् ।**
**वामस्यान्यास्तिस्रो दक्षस्योर्ध्वाननाः पृष्ठे ॥ २३ ॥**
**उन्नतदक्षाङ्गुष्ठं कच्छपपृष्ठप्रभं दक्षम् ।**
**पाणिं कृत्त्वा ध्यायेत् कच्छपमुद्रा समाख्याता ॥ २४ ॥**

**अस्यार्थः—वामकरस्य तर्जन्यङ्गुष्ठमध्ये दक्षिणकरस्याधोमुखे मध्यमानामिके योजयेत् । पुनस्तस्य वामस्याङ्गुष्ठे दक्षस्य प्रदेशिनीं तर्जनीम् । पुनर्वामस्य तर्जन्यां दक्षस्य स्वल्पां कनिष्ठाम् । अन्या अवशिष्टास्तिस्रो मध्यमानामाकनिष्ठा ऊर्ध्वाग्रदक्षस्य पृष्ठे योजयेत् । पुनरुन्नतं दक्षिणाङ्गुष्ठं कृत्त्वा दक्षपाणितलं कूर्मपृष्ठवत् कुर्यादित्यर्थः ।**

देवताध्यानकर्म में कूर्म मुद्रा कही गई है । जैसा कि मन्त्र दर्पण में कहा है—बायें हाथ की तर्जनी और अङ्गूठा के मध्य में दाहिने हाथ के मध्यमा अनामिका को अधोमुख संलग्न करे । फिर उस बायें हाथ के अङ्गूठे के मध्य में दाहिने हाथ की प्रदेशिनी और तर्जनी रखें । फिर बायें हाथ की तर्जनी पर दाहिने हाथ के अङ्गूठे का स्वल्प भाग स्थापित रखे । शेष अन्य मध्यमा, अनामिका एवं कनिष्ठा तीन अङ्गुलियाँ ऊर्ध्वाग्र दाहिने अङ्गुलियों के पीठ पर स्थापित करे । फिर दाहिने

हाथ के अङ्गूठे को ऊँचा कर दाहिने हाथ के पाणितल पर कछुये की पीठ के समान स्थापित करे ॥ २२-२४ ॥

### १०. त्रिखण्डामुद्राकथनम्

**त्रिखण्डा त्रिपुरा ध्याने तस्या लक्षणमुच्यते ।**

**ज्ञानार्णवे—**

**पाणिद्वये महेशानि परिवर्तनयोगतः ।**
**योजयित्वा तर्जनीभ्यामनामे धारयेत् प्रिये ॥ २५ ॥**
**मध्यमे योजयेन्मध्ये कनिष्ठे तदधस्तथा ।**
**अङ्गुष्ठावपि संयोज्य त्रिधा युग्मकरेण तु ॥ २६ ॥**
**त्रिखण्डेयं समाख्याता त्रिपुराह्वानकर्मणि ।**

### ११. गालिनीमुद्राकथनम्

**शिखया गालिनीमुद्रामर्घ्यस्योपरि चालयेत् ॥ २७ ॥**

**शिखया वषट्कारेण ।**

त्रिपुरा ध्यान में त्रिखण्डा मुद्रा प्रदर्शित करनी चाहिये । अब उसका लक्षण कहते हैं—हे महेशानि! दोनों हाथों को उलट कर एक में मिलावे । फिर दोनों तर्जनियों से दोनों अनामिकायें धारण करे । मध्यमा को मध्य में युक्त करे । दोनों कनिष्ठा को नीचे रखे । दोनों अङ्गूठों को भी कनिष्ठा में मिला देवे । इस प्रकार तीन अङ्गुलियों को परस्पर मिला देने से 'त्रिखण्डा मुद्रा' होती है । इसका प्रयोग त्रिपुरावाहन कर्म में किया जाता है । शिखा से 'गालिनी मुद्रा' बनाकर अर्घ के ऊपर चलावे । यहाँ शिखा का अर्थ वषट्कार है ॥ २५-२७ ॥

**यामले—**

**कनिष्ठाङ्गुष्ठकौ शक्तौ करयोरितरेतरम् ।**
**तर्जनीमध्यमानामाः संहता भुग्नवर्जिताः ॥ २८ ॥**
**मुद्रैषा गालिनी प्रोक्ता शङ्खस्योपरि चालिता ।**

### १२. मत्स्यमुद्राकथनम्

**मत्स्याख्यमुद्रया त्वर्घ्यपात्रमाच्छादयेत् सुधीः ॥ २९ ॥**

यामल में भी बतलाया गया है—दोनों हाथों को उलटकर एक दूसरे के कनिष्ठा और अङ्गूठों को मिला देवे । तर्जनी, मध्यमा और अनामिका को बिना टेढ़ी किये एक में मिला देवे । यह 'गालिनी मुद्रा' कही गई है । जो शङ्ख एवं अर्घ स्थापित कर चलाई जाती है । फिर सुधी साधक 'मत्स्य मुद्रा' बनाकर अर्घ पात्र को आच्छादित करे ॥ २८-२९ ॥

**तच्च मन्त्रदर्पणे—**

**दक्षिणकरस्य पृष्ठे वामकरतलमथ विन्यस्य ।**
**सम्यक् चलिताङ्गुष्ठौ कुर्यान् मत्स्यस्वरूपिणीं मुद्राम्॥ ३० ॥**

मन्त्रदर्पण में भी मत्स्यमुद्रा का लक्षण इस प्रकार बतलाया गया है—दाहिने हाथ के पृष्ठ भाग पर वाम हाथ का करतल स्थापित करे और दोनों अङ्गूठों को चलावे तो 'मत्स्यमुद्रा' बन जाती है ॥ ३० ॥

**मुद्रा तु देवताह्वाने नव प्रोक्ता मनीषिभिः ।**
**आवाहनी स्थापनी च तृतीया सन्निधापनी ॥ ३१ ॥**
**सन्निरोधनिका तुर्या सम्मुखीकरणी परा ।**
**सकलीकरणी षष्ठी सप्तमी त्ववगुण्ठनी ॥ ३२ ॥**
**यामृतीकरणी प्रोक्ता धेनुप्रदा तु साष्टमी ।**
**परमीकरणी मुद्रा नवमी परिकीर्तिता ॥ ३३ ॥**

मनीषियों ने देवतावाहन में नव मुद्रायें कही हैं—आवाहनी, स्थापनी, तीसरी सन्निधापिनी, चौथी सन्निरोधिका, इसके बाद सम्मुखी, करणी, सकलीकरणी, सप्तमी अवगुण्ठिनी, आठवी अमृतीकरणी, जिसे 'धेनुमुद्रा' भी कहते हैं । इसके बाद नवमी 'परमीकरणी मुद्रा' कही गई है ॥ ३१-३३ ॥

**क्रमेण लक्षणान्यासां प्रोक्तं ज्ञानार्णवे च यत् ।**
**हस्ताभ्यामञ्जलिं कृत्त्वानामिकामूलपर्वणोः ॥ ३४ ॥**
**अङ्गुष्ठौ निक्षिपेत् सेयं मुद्रात्वावाहनी स्मृता ।**
**सेयं तु विपरीता स्यात् मुद्रास्थापनकर्मणि ॥ ३५ ॥**

**विपरीता अधोमुखीत्यर्थः ।**

इनका लक्षण ज्ञानार्णव तन्त्र में जिस प्रकार कहा गया है उसी को कहता हूँ—१. दोनों हाथों की अञ्जलि बनावे । फिर अनामिका के दो पर्वों में दोनों अङ्गूठों को स्थापित करे, यह 'आवाहनी मुद्रा' कही गई है । २. यही मुद्रा जब अधोमुखी कर दी जावे तो 'स्थापनी मुद्रा' हो जाती है ॥ ३४-३५ ॥

**बाह्याङ्गुष्ठद्वये मुष्टी मुद्रा स्यात् सन्निधापनी ।**
**अङ्गुष्ठगर्भिणी सैव मुद्रा स्यात् सन्निरोधनी ॥ ३६ ॥**
**उत्तानमुष्टियुगला सम्मुखीकरणी मता ।**
**अङ्गमन्त्रान् न्यसेद् देवि! देवाङ्गे साधकोत्तमः ॥ ३७ ॥**
**सकलीकरणं नाम मुद्रेयं व्याप्तिरूपिणी ।**
**सव्यहस्तकृतामुष्टिर्दीर्घाऽधोमुखतर्जनी ॥ ३८ ॥**

**अवगुण्ठनमुद्रेयमभितो भ्रामिता सती ।**
**अन्योन्याभिमुखश्लिष्टा कनिष्ठानामिका पुनः ॥ ३९ ॥**
**तथैव तर्जनीमध्या धेनुमुद्रा प्रकीर्तिता ।**
**अमृतीकरणं कुर्यात् तया साधकसत्तमः ॥ ४० ॥**

३. दोनों अङ्गूठों को बाहर रखकर दोनों मुट्ठी बाँधे तब 'सन्निधापनी मुद्रा' बन जाती है । ४. जब दोनों अङ्गूठों को भीतर रखकर दोनों मुट्ठी बाँधे तब 'सन्निरोधिनी मुद्रा' हो जाती है । ५. जब दोनों मुट्ठियों को उतान रखे तब 'सम्मुखीकरणी मुद्रा' हो जाती है । ६. हे देवि! देवता के अङ्ग में अङ्ग मन्त्रों का न्यास करे, इसे 'सकलीकरणी मुद्रा' कहते हैं, यह व्याप्ति स्वरूपा है । ७. बायें हाथ से मुट्ठी निर्माण करे अङ्गूठा और तर्जनी का मुख नीचे करे । इसे देवता के चारों ओर घुमावे, तब यह 'अवगुण्ठनी मुद्रा' कही जाती है । ८. कनिष्ठा और अनामिका दोनों अङ्गुलियों को आमने-सामने रख कर परस्पर मिला देवे । उसी प्रकार तर्जनी और मध्यमा को परस्पर सम्मुख कर मिला देवे तो उसे 'धेनुमुद्रा' कहते हैं । उत्तम साधक इसी धेनुमुद्रा से 'अमृतीकरण मुद्रा' करे ॥ ३६-४० ॥

**अन्योन्यग्रथिताङ्गुष्ठौ प्रसारितकराङ्गुलीः ।**
**महामुद्रेयमुदिता परमीकरणे बुधैः ॥ ४१ ॥**

९. दोनों अङ्गूठों को एक दूसरे में ग्रथित करे शेष अङ्गुलियों को फैला देवे । इसे महामुद्रा कहते हैं । बुद्धिमान् इस मुद्रा से 'परमीकरण' करे ॥ ४१ ॥

**खेचर्या वक्ष्यमाणाया मध्यमे करपृष्ठगे ।**
**तर्जन्यौ ऋजुसंश्लिष्टे मुद्रा प्रोक्ता नमस्कृतौ ।**

**लेलिहामुद्राकथनम्**

**लेलिहा नाम मुद्रेयं जीवन्यासे प्रकीर्तिता ॥ ४२ ॥।**

**गन्धादिनैवेद्यान्ता नवमुद्रा पूजापटले सर्वसाधारणत्वेनोक्ता ।**

वक्ष्यमाण खेचरी मुद्रा के मध्य में हाथ के पृष्ठ भाग को स्थापित कर, दोनों तर्जनी को सीधा कर, एक में मिला देवे । तब यह 'नमस्कृती मुद्रा' बन जाती है, यही 'लेलिहा' नाम की मुद्रा कही गई है । इसका प्रयोग जीवन्यास में कह दिया गया है ॥ ४२ ॥

**अत्र शक्तिविषये किञ्चिद् विशेषः तन्त्रसारे तन्त्रान्तरे च—**

**मध्यमानामिकाङ्गुष्ठैरङ्गुल्यग्रेण पार्वति ।**
**दद्याच्च विमलं गन्धं मूलमन्त्रेण साधकः ॥ ४३ ॥**

गन्धादि से लेकर नैवेद्य पर्यन्त की समस्त मुद्रायें पूजा पटल में सामान्य रूप

से कह दी गई है । यहाँ शक्ति के विषय में तन्त्रसार और तन्त्रान्तर में कुछ विशेष कहा है—हे पार्वति! मध्यमा, अनामिका और अङ्गुष्ठ के अग्रभाग से भगवती को साधक मूल मन्त्र से विमल गन्ध प्रदान करे ॥ ४३ ॥

**अङ्गुष्ठतर्जनीभ्यां च पुष्पं चक्रे निवेदयेत् ।**
**यथा गन्धं तथा देवि धूपं दद्याद् विचक्षणः ॥ ४४ ॥**
**मध्यमानामिकाभ्यां तु मध्यपर्वणि देशिकः ।**
**अङ्गुष्ठाग्रेण देवेशि धृत्वा धूपं निवेदयेत् ॥ ४५ ॥**

अङ्गुष्ठ और तर्जनी मिलाकर पुष्प चक्र में निवेदन करे । जिस प्रकार ऊपर गन्धदान की मुद्रा कही गई है । उसी मुद्रा से धूप भी देवी को प्रदान करना चाहिये । हे देवेशि! आचार्य के अग्रभाग से धूप लेकर मध्यमा और अनामिका के मध्यपर्व में स्थापित कर धूपदान करना चाहिये ॥ ४४-४५ ॥

दीपमुद्राकथनम्

**उत्तोलनं त्रिधा कृत्त्वा गायत्र्या मूलयोगतः ।**
**अङ्गुष्ठानामिकाभ्यां तु दीपमुद्रा प्रकीर्तिता ।**
**पुष्पं निवेदयेद् देवि मुद्रया ज्ञानसञ्ज्ञया ॥ ४६ ॥**

ज्ञानमुद्राकथनम्

**अङ्गुष्ठतर्जनीयोगाद् ज्ञानमुद्रा प्रकीर्तिता ।**
**तत्त्वाख्यमुद्रया देवि नैवेद्यं विनिवेदयेत् ॥ ४७ ॥**
**मूलेनाचमनं दद्यात् ताम्बूलं तत्त्वमुद्रया ।**

प्राणादिमुद्राकथनम्

**प्राणादिमुद्रा नैवेद्यं दत्त्वा सन्दर्शयेत् सुधीः ॥ ४८ ॥**

गायत्री के मूल से तीन भाग कर उसे पढ़ते हुये अनामिका और अङ्गूठा से दीप उठाकर देवता के ऊपर घुमावे तो 'दीपमुद्रा' बन जाती है । हे देवि! ज्ञानमुद्रा से देवता को पुष्प समर्पित करे । अङ्गुष्ठ और तर्जनी को एक में मिला देवे तब 'ज्ञान मुद्रा' बन जाती है । हे देवि! तत्त्व नामक मुद्रा से नैवेद्य अर्पित करना चाहिये (तत्त्वमुद्रा ज्ञानमुद्रा एक ही है) मूल मन्त्र से आचमन देवे और तत्त्वमुद्रा से ताम्बूल देवे । सुधी साधक नैवेद्य देकर प्राणादिमुद्रा प्रदर्शित करे ॥ ४६-४८ ॥

**ताश्च ललिताविलासे—**

**कनिष्ठानामिकेऽनामामध्ये मध्यां सतर्जनीम् ।**
**तर्जन्यादित्रयं तुर्यमङ्गुष्ठेन स्पृशेत् क्रमात् ॥ ४९ ॥**
**प्राणापानव्यानोदानसमानास्ते द्विठान्तिमाः ।**

**ताराद्याः प्राणादिमन्त्रा मुद्राः पूर्वोदिताः प्रिये ॥ ५० ॥**

**ग्रासमुद्राकथनम्**

**भुज्यमानं शिवं ध्यायन् ग्रासमुद्रां प्रदर्शयेत् ।**
**अङ्गुल्यः कुटिलीभूताः विरलाग्राः परस्परम् ॥ ५१ ॥**

**शिवमित्युपलक्षणम् ।**

**ग्रासमुद्रा समाख्याता सव्यपाणौ नियोजिता ।**
**शिवविष्णुदिनेशानां गणेशाम्बिकयोरपि ॥ ५२ ॥**

ये प्राणादिमुद्रायें ललिताविलासतन्त्र में इस प्रकार कही गई हैं—तर्जनी, मध्यमा और अनामिका इसके बाद कनिष्ठा को बारी-बारी अङ्गूठे में स्पर्श करावे और ॐ प्राणाया स्वाहा, ॐ अपानाय स्वाहा, ॐ समानाय स्वाहा, ॐ व्यानाय स्वाहा और ॐ उदानाय स्वाहा—इस प्राणादि मन्त्र को पढ़ता रहे जिसे हम पहले कह आये हैं, तब प्राणादि मुद्रा बन जाती है । भोजन करते हुये शिव का ध्यान कर 'ग्रास मुद्रा' प्रदर्शित करनी चाहिए । दाहिने हाथ की सभी अङ्गुलियों को विरल (अलग-अलग) कर उन्हें कुटिल (टेढ़ी) बनावे । फिर उसे बायें हाथ के हथेली पर स्थापित करे । तब 'ग्रासमुद्रा' बन जाती है । यहाँ शिव उपलक्षण हैं यही मुद्रा भगवान् शिव, विष्णु, सूर्य, गणेश और अम्बिका की भी ग्रास मुद्रा कही जाती है ॥ ४९-५२ ॥

**यच्च पूजापद्धतौ न्यासजालमुक्त्वा तत्तत् कल्पोक्तमुद्राः प्रदर्श्य ध्यानं कृत्त्वा मानसैः सम्पूज्य शङ्खस्थापनं कुर्यात् । तच्च मन्त्रदर्पण-सनत्कुमारीय-ज्ञानार्णव-गौतमीयसम्मतम् ।**

**शिवस्य दशमुद्राकथनम्**

**कथ्यन्ते मुद्रिकास्तत्र दशमुद्राः शिवस्य तु ।**
**लिङ्गयोनित्रिशूलाख्यामालेष्टाभीमृगाह्वयाः ।**
**खट्वाङ्गाख्या कपालाख्या तथा डमरुनामिका ॥ ५३ ॥ इति ।**

**तद्यथा—**

**न्यासजालं प्रविन्यस्य प्राणानायम्य वाग्यतः ।**
**कल्पोक्तां दर्शयेन् मुद्रां ध्यात्वा देवं च मानसैः ॥ ५४ ॥**

जो पूजापद्धति में न्यास जाल कहकर, तत् कल्पोक्त मुद्रा प्रदर्शित कर ध्यान कर मानस पूजा कर शङ्ख स्थापन करे, यह बात मन्त्रदर्पण, सनत्कुमारीय, ज्ञानार्णव और गौतमीय सम्मत है—अब मुद्रा के विषय में शिव की दशमुद्रायें कहता हूँ । १. लिङ्ग, २. योनि, ३. त्रिशूल, ४. माला, ५. वर, ६. अभय, ७. मृग, ८. खट्वाङ्ग, ९. कपाल, १०. डमरू उसका प्रकार कहते हैं—पहले

मौन होकर न्यास जाल कर प्राणायाम करे । फिर देवता का मानस ध्यान कर कल्पोक्त मुद्रा इस प्रकार प्रदर्शित करे ॥ ५३-५४ ॥

**पूज्य शङ्खादिकं स्थाप्य बाह्यपूजां समारभेत् ।**
**अथैतासां लक्षणानि निगद्यन्ते क्रमेण हि ॥ ५५ ॥**

ध्यान के अनन्तर पूजा कर, शङ्खादि स्थापित कर, बाह्यपूजा आरम्भ करे । इसके बाद इन दश मुद्राओं के लक्षण क्रमशः कह रहा हूँ ॥ ५५ ॥

### १. लिङ्गमुद्राकथनम्

**मन्त्रदर्पणे—**

**उच्छ्रितदक्षाङ्गुष्ठं वामाङ्गुष्ठेन दर्शयेद् धीमान् ।**
**वामाङ्गुलिश्च पश्चाद् दक्षाभिर्बन्धयेल्लिङ्गम् ॥ ५६ ॥**

**दक्षाभिरङ्गुलीभिः । लिङ्गमिति लिङ्गमुद्रेत्यर्थः ।**

जैसा कि मन्त्रदर्पण में कहा गया है—दाहिने हाथ के अङ्गूठे को ऊपर कर बाये हाथ के अङ्गूठे से दिखावे । इसके पश्चात् बायें हाथ की अङ्गुलि को दाहिने हाथ की अङ्गुलियों से बाँधे, तब 'लिङ्ग मुद्रा' बन जाती है ॥ ५६ ॥

इस प्रकार दश अङ्गुलियों से लिङ्ग मुद्रा बनाई जाती है ।

### २. योनिमुद्राकथनम्

**सम्मुखौ तु करौ कृत्वा मध्यमापृष्ठसंस्थिते ।**
**वक्राभ्यां तर्जनीभ्यां तु निबध्नीयादनामिके ॥ ५७ ॥**
**कनिष्ठे द्वे नियुञ्जीत मध्यमा क्रोडदेशके ।**
**कनिष्ठयोरग्रसंस्थावङ्गुष्ठौ योनिरीरिता ॥ ५८ ॥**

दोनों हाथों को अपने सामने रखकर, मध्यमा की पीठ पर, दोनों तर्जनियों को टेढ़ी कर, दोनों अनामिका को बाँधे । फिर दोनों कनिष्ठा अङ्गुलियों को, मध्यमा के बीच में स्थापित करे और दोनों कनिष्ठाओं के आगे दोनों अङ्गूठों को स्थापित करे । तब 'योनि मुद्रा' बन जाती है ॥ ५७-५८ ॥

### ३. त्रिशूलमुद्राकथनम्

**तिस्रः प्रसारयेच्चेदङ्गुष्ठेन च कनिष्ठिकां बध्वा ।**
**एषा त्रिशूलमुद्रा दक्षिणहस्तस्थिता कथिता ॥ ५९ ॥**

### ४. मालामुद्राकथनम्

**तर्जन्यङ्गुष्ठाग्रे ग्रथिते कृत्वा प्रसारयेदपराः ।**
**तिस्रोऽङ्गुलीश्च मिलिताः कविभिः कथिताक्षमालेयम् ॥ ६० ॥**

५. वरमुद्रा, ६. अभयमुद्राकथनम्

**कुरु वरदाभयमुद्रे वरदाभयवत्करौ कृत्त्वा ।**
**सरलाः सकलाऽङ्गुल्योऽङ्गुष्ठं निक्षिप्य तर्जनीमूले ॥ ६१ ॥**

७. मृगमुद्राकथनम्

**मध्यानामाशिरसि वृद्धा शिखरं नियुञ्जीत ।**
**एषेयं मृगमुद्रा यद्यवशिष्टे समुच्छ्रिते कुर्यात् ॥ ६२ ॥**

अङ्गूठे से कनिष्ठा को बाँधकर तीन अङ्गुलियों को प्रसारित करे । यह 'त्रिशूल मुद्रा' कही जाती है जो दाहिने हाथ में स्थित कही गई है । तर्जनी को अङ्गूठे के अग्रभाग में ग्रथन करे । शेष तीन अङ्गुलियों को मिलाकर फैला देवे । उसे कवियों ने 'अक्षमाला मुद्रा' कहा है । हाथ को वर देने की तरह तथा अभय देने की तरह बनाकर 'वरद मुद्रा' और 'अभय मुद्रा' बनानी चाहिए । अङ्गूठे को तर्जनी के मूल में स्थापित करे । शेष सभी अङ्गुलियों को सीधी रखकर मध्यमा एवं अनामा को शिर पर और अङ्गूठे को माथे पर स्थापित करे । यही 'मृग मुद्रा' कही गई है ॥ ५९-६२ ॥

८. खट्वाङ्गमुद्राकथनम्

**दक्षिणपञ्चाङ्गुलयो मिलितार्धसमुन्नताः कार्याः ।**
**खट्वाङ्गाख्या मुद्रा प्रियकृत् प्रोक्ता शिवस्यापि ॥ ६३ ॥**

९. कपालमुद्राकथनम्

**पात्रमिव वामहस्तं कृत्त्वाङ्के वामके न्यस्य ।**
**कुर्यादुच्छ्रितवच्चेत् कपालमुद्रा भवेदेषा ॥ ६४ ॥**

१०. डमरुमुद्राकथनम्

**दक्षिणमुष्टिं शिथिलां किञ्चित्सर्वां समुच्छ्रितां मध्याम् ।**
**सञ्चालयेच्च कर्णे प्रभवति खलु डमरुमुद्रेयम्॥ ६५ ॥**

दाहिने हाथ की पाँचों अङ्गुलियों को मिलाकर आधा ऊँचा करे तो यह 'खट्वाङ्ग मुद्रा' बन जाती है; यह शिव को भी प्रिय है । बायें हाथ को पात्र के समान बनाकर उसे बायें अङ्ग में स्थापित कर ऊँचा करे, तब वह 'कपालमुद्रा' बन जाती है । दाहिने हाथ की मुट्ठी कुछ शिथिल बनावे । सम्पूर्ण मध्यमा को ऊँची रखे, फिर उसे कान में सञ्चालन करे, तो वह 'डमरू मुद्रा' बन जाती है । यहाँ तक शिव की दश मुद्रायें कही गईं ॥ ६३-६५ ॥

विष्णोः एकोनविंशतिमुद्राकथनम्

**एकोनविंशतिर्मुद्रा विष्णोरुक्ता मनीषिभिः ।**

**शङ्खचक्रगदापद्मवेणुश्रीवत्सकौस्तुभाः ॥ ६६ ॥**
**वनमाला तथा ज्ञानमुद्रा विल्वाह्वया तथा ।**
**गरुडाख्या परा मुद्रा विष्णोः सन्तोषवर्धिनी ॥ ६७ ॥**
**नारसिंही च वाराही हयग्रीवी धनुस्तथा ।**
**बाणमुद्रा च परशुर्जगन्मोहिनिका परा ।**
**काममुद्रेत्यमूषां तु कथ्यन्ते लक्षणानि हि ॥ ६८ ॥**

मनीषियों ने विष्णु की उन्नीस मुद्रा बतलायी हैं । उनके नाम इस प्रकार हैं— १. शङ्ख, २. चक्र, ३. गदा, ४. पद्म, ५. वेणु, ६. श्रीवत्स, ७. कौस्तुभ, ८. वनमाला, ९. ज्ञान मुद्रा, १०. विल्वा, ११. गरुडा जो सर्वोत्तम होने के कारण विष्णु को सन्तुष्ट करने वाली कही गई है । १२. नारसिंही, १३. वाराही, १४. हयग्रीवी, १५. धनुषमुद्रा, १६. बाणमुद्रा, १७. परशु, १८. जगन्मोहिनिका और १९. काममुद्रा । अब इनके लक्षणों को कहता हूँ ॥ ६६-६८ ॥

### १. शङ्खमुद्राकथनम्

**यामले—**

**वामाङ्गुष्ठं च संगृह्य दक्षिणेन तु मुष्टिना ।**
**कृत्त्वोत्तानं ततो मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥ ६९ ॥**
**वामाङ्गुल्यस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः ।**
**दक्षिणाङ्गुष्ठसंस्पृष्टाः ज्ञेयैषा शङ्खमुद्रिका ॥ ७० ॥**

यामल में भी बतलाया गया है—दाहिने हाथ की मुट्ठी से बायें हाथ का अङ्गूठा पकड़कर मुट्ठी को उतान कर अङ्गूठे को फैला देवे । बायें हाथ की अङ्गुलियों को एक में मिलाकर फैला देवे और दाहिने हाथ के अङ्गूठे को पकड़े रखे तो यह 'शङ्ख मुद्रा' बन जाती है ॥ ६९-७० ॥

### २. चक्रमुद्रा, ३. गदामुद्रालक्षणम्

**हस्तौ तु सम्मुखौ कृत्त्वा सम्भुग्नौ सुप्रसारितौ ।**
**कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रैषा चक्रसंज्ञिका ॥ ७१ ॥**
**अन्योन्याभिमुखौ हस्तौ कृत्त्वा तु ग्रथिताङ्गुलीः ।**
**अङ्गुष्ठौ मध्यमे भूयः संलग्ने सुप्रसारिते ।**
**गदामुद्रेयमुदिता विष्णोः सन्तोषवर्धिनी ॥ ७२ ॥**

दोनों हाथों को सामने स्थापित कर कुछ टेढ़ी कर उन्हें फैलाये रखे और कनिष्ठा और अङ्गुष्ठ को एक में लगा देवे तो यह 'चक्र मुद्रा' बन जाती है । दोनों हाथों को एक दूसरे के सम्मुख रखे अङ्गुलियों का ग्रथन करे । दोनों अङ्गुठा

और दोनों मध्यमा को एक में मिलाकर फैलाये रखे, तब 'गदा मुद्रा' बन जाती है जो विष्णु के सन्तोष को बढ़ाने वाली कही गई है ॥ ७१-७२ ॥

### ४. पद्ममुद्रा, ५. वेणुमुद्रालक्षणम्

**हस्तौ तु सम्मुखौ कृत्वा सन्नतप्रोन्नताङ्गुलीः ।**
**तलान्तर्मिलिताङ्गुष्ठौ कृत्वैषा पद्ममुद्रिकः ॥ ७३ ॥**
**ओष्ठे वामकराङ्गुष्ठौ लग्नस्तस्य कनिष्ठिका ।**
**दक्षिणाङ्गुष्ठसंयुक्ता तत् कनिष्ठा प्रसारिता ॥ ७४ ॥**
**तर्जनीमध्यमानामा किञ्चित् सङ्कोच्य चालिता ।**
**वेणुमुद्रा भवत्येषा सुगुप्ता प्रेयसी हरेः ॥ ७५ ॥**

४. हाथ को सामने रखे, कुछ अङ्गुलियों को नीचे की ओर और कुछ को ऊपर की ओर करे । दोनों अङ्गूठों को हाथ के तलवे में मिलाये रखे । तब यह 'पद्ममुद्रा' बन जाती है । ५. ओठ पर बायें हाथ का अङ्गूठा लगावे । उसमें बायें हाथ की कनिष्ठा लगावे । उस कनिष्ठिका में दाहिने हाथ के अङ्गूठे को मिला देवे । फिर कनिष्ठा को फैला देवे । तर्जनी, मध्यमा और अनाना को मोड़कर चलाता रहे तब यह 'वेणुमुद्रा' बन जाती है, यह विष्णु को अत्यन्त प्रिय है, इसलिये इसे सुगुप्त रखे ॥ ७३-७५ ॥

### ६. श्रीवत्समुद्रालक्षणम्

**अन्योन्यस्पृष्टकरयोर्मध्यमानामिकाङ्गुलीः ।**
**अङ्गुष्ठेन तु बध्नीयात् कनिष्ठामूलसंस्थिते ॥ ७६ ॥**
**तर्जन्यौ कारयेदेषा मुद्रा श्रीवत्ससञ्ज्ञका ।**

६. दोनों हाथों को एक में मिलाकर मध्यमा एवं अनामिका अङ्गुली को अङ्गूठे से बाँध देवे । फिर उन्हें कनिष्ठा के मूल पर दोनों तर्जनियों को स्थापित करे, तब यह मुद्रा 'श्रीवत्स' नाम वाली हो जाती है ॥ ७६-७७ ॥

### ७. कौस्तुभमुद्रालक्षणम्

**अनामपृष्ठसंलग्ना दक्षिणस्य कनिष्ठिका ॥ ७७ ॥**
**कनिष्ठयाऽन्यया बध्वा तर्जन्या दक्षया तथा ।**
**वामाऽनामाञ्च बध्नीयाद् दक्षिणाङ्गुष्ठमूलके ॥ ७८ ॥**
**अङ्गुष्ठमध्यमे वामे संयोज्य सरलाः पराः ।**
**चतस्रोऽप्यग्रसंलग्ना मुद्रा कौस्तुभसंज्ञिका ॥ ७९ ॥**

७. दाहिने हाथ की कनिष्ठा को अनामा की पीठ में संलग्न करे । फिर बायें हाथ की कनिष्ठा से उसे बाँधे । फिर दाहिने हाथ की तर्जनी से बाँधे । बायें हाथ

की अनामिका को दाहिने हाथ के मूल में बाँधे । फिर बाँये हाथ के अङ्गूठे और मध्यमा को परस्पर संयुक्त करे । शेष चार अङ्गुलियों को आगे से संयुक्त करे, तब यह 'कौस्तुभ मुद्रा' बन जाती है ॥ ७७-७९ ॥

### ८. वनमालामुद्रालक्षणम्

**स्पृशेत् कण्ठादिपादान्तं तर्जन्यङ्गुष्ठया तथा ।**
**करद्वयेन मालावन्मुद्रेयं वनमालिका ॥ ८० ॥**

८. कण्ठ से लेकर पैर पर्यन्त तर्जनी और अङ्गुष्ठ को मिलाकर एक करे । पुनः दोनों हाथों से स्पर्श करे । इस प्रकार की मालावत् मुद्रा ही 'वनमाला' कही जाती है ॥ ८० ॥

### ९. ज्ञानमुद्रालक्षणम्

**तर्जन्यङ्गुष्ठकौ शक्तावग्रगौ विन्यसेद् हृदि ।**
**वामहस्ताम्बुजं वामजानुमूर्धनि विन्यसेत् ।**
**ज्ञानमुद्रा भवेदेषा रामचन्द्रस्य प्रेयसी ॥ ८१ ॥**

९. तर्जनी अङ्गूठा के अग्रभाग को एक में मिलाकर हृदय में स्थापित करे और बायें हाथ रूप कमल को वाम जानु के शिर पर स्थापित करे, तब 'ज्ञानमुद्रा' बन जाती है । यह मुद्रा भगवान् रामचन्द्र को अत्यन्त प्रिय है ॥ ८१ ॥

### १०. विल्वमुद्रालक्षणम्

**अङ्गुष्ठं वाममुद्दण्डितमितरकराङ्गुष्ठकेनापि बध्वा**
**तस्याग्रं पीडयित्वाङ्गुलिभिरपि च ता वामहस्ताङ्गुलीभिः ।**
**बध्वा गाढं हृदि स्थापयतु विमलधीर्व्याहरन् मारबीजं**
**बिल्वाख्या मुद्रिकैषा स्फुटमिह गदिता गोपनीया विधिज्ञैः॥८२॥**

इतरकराङ्गुष्ठकेन दक्षिणाङ्गुष्ठेन तस्य दक्षिणहस्तस्याङ्गुष्ठस्य अङ्गुलीभिर्दक्षिण-हस्ताङ्गुलीभिः ताः दक्षिणहस्ताङ्गुलीः । मारबीजं कामबीजम् ।

१०. बायें हाथ को अङ्गूठे को दण्डे के समान ऊपर उठावे । फिर उसे दाहिने हाथ के अङ्गूठे से बाँध देवे । उसके अग्रभाग को दाहिने हाथ की अङ्गुलियों से दबावे । फिर उसको भी बायें हाथ की अङ्गुलियों से दृढ़तापूर्वक बाँधे । तदनन्तर विमल बुद्धि वाला साधक काम बीज (क्लीं) का ध्यान करते हुये उसे हृदय में स्थापित करे । इस प्रकार 'विल्व' नामक मुद्रा हमने स्पष्ट रूप से कहा । विधानवेत्ती इसे गोपनीय रखे ॥ ८२ ॥

### ११. गरुडमुद्रालक्षणम्

**हस्तौ तु विमुखौ कृत्त्वा ग्रथयित्वा कनिष्ठिके ।**

**मिथस्तजनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ॥ ८३ ॥**
**मध्यमानामिके द्वौ तु पक्षाविव विचालयेत् ।**
**एषा गरुडमुद्रा स्याद् विष्णोः सन्तोषवर्धिनी ॥ ८४ ॥**

११. दोनों हाथों को उलट कर दोनों कनिष्ठाओं को ग्रथित करे और दोनों तर्जनी को आपस में सटावे । इसी प्रकार दोनों अङ्गूठों को भी परस्पर शिलष्ट करे । फिर मध्यमा, अनामिका को पङ्खे की भाँति चलावे, तब 'गरुड मुद्रा' बन जाती है, जो विष्णु को सन्तुष्ट करने वाली कही गई है ॥ ८३-८४ ॥

### १२. नारसिंहीमुद्रालक्षणम्

**जानुमध्ये करौ कृत्वा चिबुकोष्ठौ समावृतौ ।**
**हस्तौ तु भूमिसंलग्नकम्प्यमानौ पुनः पुनः ॥ ८५ ॥**
**मुखं विवृतकं कुर्याल्लेलिहानां च जिह्वकाम्।**
**अधोमुखीभिः स्वाभिर्मुद्रेयं नृहरेर्मता ॥ ८६ ॥**

१२. दोनों जानु के मध्य में दोनों हाथों को स्थापित करे । चिबुक (ठुड्डी) और ओष्ठ को परस्पर आच्छन्न रखे । हाथ को भूमि में सटाकर बारम्बार कम्पित करता रहे । मुख को अच्छी तरह खोल कर उसमें रहने वाली जिह्वा को लपलपाता रहे और साधक सम्पूर्ण जिह्वा को नीचे की ओर लटकावे । ऐसा करने से 'नारसिंही मुद्रा' बन जाती है ॥ ८५-८६ ॥

### १३. वाराहीमुद्रालक्षणम्

**दक्षोपरि करं वामं कृत्वोत्तानमधः सुधीः ।**
**नमयेदिति सम्प्रोक्ता मुद्रा वाराहसंज्ञिका ॥ ८७ ॥**

१३. दाहिने हाथ पर बायाँ हाथ उतान रखकर, उसे सुधी साधक नीचे की ओर लटका दे, तब 'वाराही' सञ्ज्ञक मुद्रा बन जाती है ॥ ८७ ॥

**अस्याः प्रकारान्तरमपि—**

**दक्षहस्तं चोर्ध्वमुखं वामहस्तमधोमुखम् ।**
**अङ्गुल्यग्रं तु संयुक्तं मुद्रा वाराहसंज्ञिका ॥ ८८ ॥**

इसका एक और प्रकार भी है । दाहिना हाथ ऊर्ध्वमुख ऊपर और बायाँ हाथ अधोमुख (नीचे) रखकर, समस्त अङ्गुलियों के अग्रभाग एक में मिला देवे, तब 'वाराह' सञ्ज्ञक मुद्रा बन जाती है ॥ ८८ ॥

### १४. हयग्रीवमुद्राकथनम्

**वामहस्ततले दक्षा अङ्गुलीस्तास्त्वधोमुखीः ।**

**संरोप्य मध्यमांतासामुन्नम्याधो विकुञ्चयेत् ॥ ८९ ॥**
**हयग्रीवप्रिया चैषा तन्मूर्तेरनुकारिणी ।**

१४. बायें हाथ के तलवे पर दाहिने हाथ की अङ्गुलियों को अधोमुख स्थापित करे । उसमें मध्यमा को ऊपर उठाकर नीचे की ओर सिकोड़ें । हयग्रीव की मूर्त्ति का अनुकरण वाली यह मुद्रा 'हयग्रीव' नाम वाली मुद्रा कही गई है । यह मुद्रा हयग्रीव भगवान् को अत्यन्त प्रिय है ॥ ८९-९० ॥

**१५. धनुषमुद्रा, १६. बाणमुद्राकथनम्**

**वामस्य मध्यमाग्रं तु तर्जन्यग्रेण योजयेत् ॥ ९० ॥**
**अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ।**
**दर्शयेद् वामके स्कन्धे धनुर्मुद्रेयमीरिता ॥ ९१ ॥**
**दक्षमुष्टेस्तु तर्जन्या दीर्घया बाणमुद्रिका ।**

१५. बायें हाथ के मध्यमा के अग्रभाग को तर्जनी के अग्रभाग से संयुक्त करे। फिर अनामिका और कनिष्ठा को बायें हाथ के अङ्गूठे से दबावे, उसे बायें कन्धे पर रख कर प्रदर्शित करे । यह 'धनुष मुद्रा' हो जाती है । १६. दाहिने हाथ की मुष्टि पर तर्जनी पर अङ्गूठा रखे तब 'बाणमुद्रा' बन जाती है ॥९०-९२॥

**यद्वा ज्ञानार्णवे—**

**यथा हस्तगतं चापं तथा हस्तं कुरु प्रिये ।**
**चापमुद्रेयमाख्याता वामहस्ते व्यवस्थिता ॥ ९२ ॥**

अथवा ज्ञानार्णव में भी बतलाया गया है—हे प्रिये! जिस प्रकार हाथ में धनुष धारण किया जाता है, उसी प्रकार हाथ को भी बनावे, इसे 'चापमुद्रा' कहते हैं । यह बायें हाथ पर व्यवस्थित की जाती है ॥ ९२ ॥

**यथा हस्तगता बाणा तथा हस्तं कुरु प्रिये ।**
**बाणमुद्रेयमाख्याता रिपुवर्गनिकृन्तनी ॥ ९३ ॥**

हे प्रिये! जिस प्रकार हाथ में बाण रखा जाता है, उसी प्रकार हाथ को बनावे, उसी को 'बाणमुद्रा' कहा जाता है, जो शत्रुवर्ग की विनाश करने वाली है ॥ ९३॥

**१७. परशुमुद्राकथनम्**

**तले तलं तु करयोस्तिर्यक् संयोज्य चाङ्गुलीः।**
**संहताः प्रसृताः कुर्यान्मुद्रा परशुसंज्ञिका ॥ ९४ ॥**

**१८. त्रैलोक्यमोहिनीमुद्राकथनम्**

**उच्छ्रिताङ्गुष्ठमुष्टी द्वे मुद्रा त्रैलोक्यमोहिनी ।**

१९. काममुद्रालक्षणम्

**हस्तौ तु सम्पुटौ कृत्त्वा प्रसृताङ्गुलिकौ तथा ॥ ९५ ॥**
**तर्जन्यौ मध्यमापृष्ठे अङ्गुष्ठौ मध्यमाश्रितौ ।**
**काममुद्रेयमुदिता सर्वदेवप्रियङ्करी ॥ ९६ ॥**

१७. एक हाथ के तलवे पर दूसरे हाथ का तलवा तिरछे कर संयुक्त अङ्गुलियों को एक में मिलाकर फैला देवे । ऐसा करने से 'परशुमुद्रा' बन जाती है। १८. मुट्ठी बाँधकर अङ्गूठे को बाहर रखे । इस प्रकार बनाई गई दो मुद्रा 'त्रैलोक्यमोहिनी' बन जाती है। १९. हाथ को सम्पुट बनाकर सभी अङ्गुलियों को फैला देवे तथा दोनों तर्जनी को मध्यमा के पीठ में लगा देवे और दोनों अङ्गूठो को मध्यमा में लगा देवे । यह 'कामदेवमुद्रा' कही गई है, जो सभी देवताओं को प्रिय है ॥ ९४-९६ ॥

**श्रीगोपालार्चने वेणुं नृहरेर्नारसिंहिकाम् ।**
**वराहस्य च पूजायां वाराहाख्यां प्रयोजयेत् ॥ ९७ ॥**
**हयग्रीवार्चने मुद्रां हयग्रीवीं प्रदर्शयेत् ।**
**रामार्चने धनुर्बाणमुद्रे परशुसंज्ञिकाम् ॥ ९८ ॥**
**जगन्मोहनसञ्ज्ञां तु परशुरामस्य पूजने ।**

गोपालार्चन में वेणु मुद्रा, नृसिंह के अर्चन में नारसिंही मुद्रा और वराह की पूजा में वराह मुद्रा का प्रयोग करे । हयग्रीव के अर्चन में हयग्रीवी मुद्रा प्रदर्शित करे तथा दाशरथि राम के अर्चन में धनुषबाण मुद्रा तथा जामदग्न्य राम के अर्चन में परशु सञ्ज्ञक मुद्रा तथा जगन्मोहिनी मुद्रा प्रदर्शित करे ॥ ९७-९९ ॥

**सूर्यस्येकैव पद्माख्या लक्षणं तत् प्रकीर्तितम् ॥ ९९ ॥**

सूर्य के अर्चन में केवल एक 'पद्म' नाम की मुद्रा प्रदर्शित करे, जिसका लक्षण पहले कहा जा चुका है ॥ ९९ ॥

गणेशस्य सप्तमुद्राकथनम्

**सप्त मुद्रा गणेशस्य दन्तपाशांकुशाह्वयाः ।**
**विघ्नं परशुसञ्ज्ञं च तथा लडुकसंज्ञिका ।**
**बीजपूराह्वया चासामुच्यन्ते लक्षणानि च ॥ १०० ॥**

१. दन्तमुद्राकथनम्

**उत्तानोर्ध्वमुखी मध्या सरला बद्धमुष्टिका ।**
**दन्तमुद्रा समाख्याता सर्वागमविशारदैः ॥ १०१ ॥**

अब गणेश की मुद्रा कहते हैं—गणेश की सात मुद्रायें १. दन्त, २. पाश, ३. अंकुश, ४. विघ्न, ५. परशु, ६. लड्डुक, ७. बीजपूर है। मुट्ठी उतान और ऊर्ध्वमुखी बनावे और मध्यमा को सीधे खड़ी रखे; इसे सर्वागम विशारदों ने 'दन्तमुद्रा' कहा है ॥ १००-१०१ ॥

### २. पाशमुद्राकथनम्

**वाममुष्टेस्तु तर्जन्या दक्षमुष्टेस्तु तर्जनीम् ।**
**संयोज्याङ्गुष्ठकाग्राभ्यां तर्जन्यग्रे स्वके क्षिपेत् ॥ १०२ ॥**
**एषा पाशाह्वया मुद्रा विद्वद्भिः परिकीर्तिता ।**

### ३. अङ्कुशमुद्राकथनम्

**ऋज्वीं च मध्यमां कृत्वा तर्जनीं मध्यपर्वणि ॥ १०३ ॥**
**संयोज्याकुञ्चयेदेतां मुद्रैषाङ्कुशसंज्ञिका ।**

### ४. विघ्नमुद्रा, ५. परशुमुद्रा एवं ६. लड्डुकमुद्राकथनम्

**परशुमुद्रा निगदिता प्रसिद्धा लडुका तथा ॥ १०४ ॥**
**बीजापूराह्वया मुद्रा प्रसिद्धत्वादुपेक्षिता ।**
**पाशांकुशवराभीतिखड्गचर्मधनुःशराः ॥ १०५ ॥**

बायें मुट्ठी की तर्जनी से दाहिने हाथ की मुट्ठी की तर्जनी को, दोनों हाथ के अङ्गूठों के अग्रभाग से मिला देवे । फिर उसे तर्जनी के आगे स्थापित करे । विद्वानों ने इसी को 'पाशमुद्रा' कहा है । मध्यमा को सीधी रखे, तर्जनी को उसके मध्यपर्व में संयुक्त करे, फिर तर्जनी को संकुचित करे । तब यह 'अंकुश मुद्रा' बन जाती है । 'परशु मुद्रा' पहले कह आये हैं । लड्डूक मुद्रा प्रसिद्ध ही है । वीजपूरा मुद्रा भी प्रसिद्ध ही है । इसलिये यहाँ नहीं कही गई है ॥ १०२-१०५ ॥

**मौशली च तथा दौर्गी महायोनिरिमाः प्रियाः ।**
**शक्तेर्मुद्रा अथैतासामुच्यन्ते लक्षणानि च ॥ १०६ ॥**

पाश, अंकुश, वर, अभय, खड्ग, चर्म, धनुष-बाण, मौशली, दौर्गी और महायोनि—ये सभी दस मुद्रायें शक्ति को अत्यन्त प्रिय हैं अब इनके लक्षणों को कहता हूँ ॥ १०६ ॥

**पाशांकुशौ पुरैवोक्तौ वराभीती निगद्यते ।**
**अधःस्थितो दक्षहस्तः प्रसृतोभयमुद्रिका ॥ १०७ ॥**

पाश अंकुश मुद्रा पहले कह आये हैं । अब वर और अभय मुद्रा कहता हूँ । दाहिना हाथ फैला कर नीचे की ओर कर ले तब 'वरमुद्रा' बन जाती है । बायाँ हाथ फैला कर ऊपर उठावे तब 'अभय मुद्रा' बन जाती है ॥ १०७ ॥

### असिमुद्राकथनम्

**ऊर्ध्वीकृतो वामहस्तः प्रसृतोभयमुद्रिका ।**
**बध्वा स्वस्यानामे दक्षाङ्गुष्ठेन यदि कुर्यात् ।**
**स्यादसिमुद्रा सरले संस्पृष्टे तर्जनीमध्ये ॥ १०८ ॥**

दाहिने हाथ के अङ्गूठे से साधक यदि अपनी अनामिका को बाँध लेवे और तर्जनी एवं मध्यमा को एक में मिलाकर सीधे खड़ी करे, तब 'असि मुद्रा' बन जाती है ॥ १०८ ॥

### चर्ममुद्रालक्षणम्

**वामं हस्तं तद्वत् तिर्यक् कृत्त्वा प्रसारयेत् पश्चात् ।**
**आकुञ्चिताङ्गुलिं चेत् कुर्यादिति चर्ममुद्रा स्यात् ॥ १०९ ॥**

बायें हाथ को तिरछे रखकर पश्चात् उसे फैला देवे और अङ्गुलियों को आकुञ्चित (मोड़) लेवे तब 'चर्म मुद्रा' हो जाती है ॥ १०९ ॥

### मुशलमुद्राकथनम्

**उपर्यधोदक्षिणवाममुष्टी**
**कुर्यात् तदा स्यान् मुशलाख्यमुद्रा ।**
**शिरःस्थिता चेदियमेव मुद्रा**
**दौर्गी प्रिया विघ्नविनाशिकाद्या ॥ ११० ॥**

बायी मुट्ठी नीचे और दाहिनी मुट्ठी ऊपर रखे तब 'मुशल मुद्रा' बन जाती है। यदि यही मुद्रा शिर पर धारण करे तो दुर्गा को प्रिय लगने वाली 'दौर्गी मुद्रा' बन जाती है जो आद्या विघ्नों का नाश करने वाली है ॥ ११० ॥

### योनिमुद्राकथनम्

**कृत्त्वा हस्तौ सम्मुखौ तर्जनीभ्यां**
**बध्वाऽनामे मध्यमापृष्ठसंस्थे ।**
**दीर्घे मध्ये क्रोडसंस्थे कनिष्ठे**
**योनिः प्रोक्ताङ्गुष्ठकौ चेत्तदग्रे ॥ १११ ॥**

**दीर्घे मध्ये कनिष्ठे च क्रोडसंस्थे मध्यमाक्रोडसंस्थे तदग्रे कनिष्ठयोरग्रद्वये इति ।**

**मूलेंऽगुष्ठौ च तयोर्भवति हि योनिर्महायोनिः ।**
**तस्या वक्त्रे मध्ये साङ्गुष्ठे भूतिनी सा स्यात् ॥ ११२ ॥**

दोनों हाथों को सामने रखकर दोनों तर्जनियों से दोनों अनामिकाओं को बाँधे। उसे मध्यमा की पीठ पर स्थापित करे। फिर अङ्गूठे को मध्य में और कनिष्ठा को कोड पर स्थापित कर, दोनों कनिष्ठा के आगे दोनों अङ्गूठों को

स्थापित करे। तब 'योनिमुद्रा' बन जाती है। मूल अङ्गुष्ठ में जब योनि हो जाती है तब यह 'महायोनि मुद्रा' बन जाती है। उसके वक्त्र में मध्य में अङ्गुठा डाल देने से वह 'भूतिनी मुद्रा' बन जाती है ॥ १११-११२ ॥

**मुण्डमुद्राकथनम्**

**कालीप्रिया मुण्डमुद्रा तस्या लक्षणमुच्यते।**
**मुष्टिं तु वामपाणेः कुर्यादभ्यन्तराङ्गुष्ठम् ॥ ११३ ॥**
**दक्षस्य मध्यमाग्रं संलम्ब्य तया तु तर्जन्याम्।**
**अङ्गुष्ठाग्रं योज्यं दक्षिणपाणिं च योजयेन् मुष्टौ ।**
**दर्शय दक्षिणभागे मस्तकमुद्रा स्मृता काल्याः ॥ ११४ ॥**

**मस्तकमुद्रा = मुण्डमुद्रा इति।**

मुण्डमुद्रा काली को अत्यन्त प्रिय है। अब उसका लक्षण कहता हूँ। बायें हाथ की मुट्ठी के भीतर अङ्गूठा स्थापित करे और दाहिने हाथ की मध्यमा में अग्र भाग को तर्जनी में लटका दे। अङ्गूठे को उसमें संयुक्त कर देवे तथा दाहिने हाथ को मुट्ठी में संयुक्त करे। फिर उसे दक्षिण भाग में दर्शित करे तब वह 'मुण्डमुद्रा' बन जाती है जो काली की मुद्रा है ॥ ११३-११४ ॥

**ताराप्रिया पञ्चमुद्राकथनम्**

**ताराप्रिया पञ्चमुद्रा योन्याख्या भूतिनी तथा ।**
**बीजाख्या च तथा दैत्यधूमिनी च तथापरा ॥ ११५ ॥**
**लेलिहानेति चासां तु कथ्यन्ते लक्षणान्यथ ।**
**लक्षणं योनिभूतिन्योः कथितं कथ्यतेऽपि च ॥ ११६ ॥**

तारा को योनि, भूतिनी, बीजा, दैत्यधूमिनी और लेलिहानी—ये पाँच मुद्रायें प्रिय हैं। अब इनके लक्षणों को कहता हूँ। यद्यपि योनि और भूतिनी का लक्षण कहा जा चुका है; फिर भी उसे कहता हूँ ॥ ११५-११६ ॥

**बध्वा तु योनिमुद्रां वै मध्यमे कुटिले कुरु ।**
**अङ्गुष्ठौ तु तदग्रे च मुद्रेयं भूतिनी मता ॥ ११७ ॥**

योनि मुद्रा बाँध कर दोनों मध्यमा को टेढ़ी बनावे और उसके आगे दोनों अङ्गूठा स्थापित करे। यह 'भूतिनी मुद्रा' बन जाती है ॥ ११७ ॥

**मिथश्चाङ्गुलीः सन्धिषु स्थापयित्वा**
**अनामे च बध्वा ततस्तर्जनीभ्याम्।**
**कनिष्ठे समृद्धे समाग्रेऽन्तराले**
**न्यसेन् मध्यमे दण्डरूपे च योनिः ॥ ११८ ॥**

**बीजमुद्रा तु वक्तव्या कथ्यते दैत्यधूमिनी ।**

अङ्गुलियों को परस्पर सन्धि में स्थापित करे । तदनन्तर दोनों तर्जनियों से दोनों अनामिका को बाँधे । दोनों मध्यमा को डण्डे के समान खड़ी कर, उनके अन्तराल में दोनों कनिष्ठा समान रूप से बनाकर, उनके अग्रभाग को स्थापित करे, तब 'योनि मुद्रा' बन जाती है । बीजमुद्रा आगे कही जायेगी ॥११८-११९॥

**संयोज्याथ कनिष्ठे पृष्ठेऽन्योन्यं त्वनामायाः ॥ ११९ ॥**
**अङ्गुष्ठाभ्यां बध्वा तौ बध्नीयात् स्वमध्याभ्याम् ।**
**क्षिप्त्वाऽनामे वक्त्रे वृद्धा मूले च तर्जन्यौ ॥ १२० ॥**
**सरले मिलिते कुर्यात् स्याद् दानवधूमिनीमुद्रा।**

प्रथम 'दैत्यधूमिनी मुद्रा' कहता हूँ। दोनों कनिष्ठा को संयुक्त करे । उसके पृष्ठ में अनामा को, दोनों अङ्गुठों से बाँधे । फिर उसे भी मध्यमा से बाँधें । फिर अनामा को, उसके ऊपर स्थापित करे । उसके मुख में अङ्गूठे के मूल में दोनों तर्जनी को स्थापित करे । दोनों सीधे अङ्गुलियों को एक में मिला देवे । तब 'दानवधूमिनी मुद्रा' बन जाती है ॥ ११९-१२१ ॥

**वक्त्रं विस्तारितं कृत्त्वाप्यधो जिह्वां च चालयेत् ।**
**पार्श्वस्थं मुष्टियुगलं लेलिहानेति कीर्त्यते ॥ १२१ ॥**
**योनिर्मायाधरः सेन्दुर्वधूः कूर्च क्रमाद् विदुः ।**
**बीजानि चोच्चरन् मन्त्री मुद्रावन्धनमाचरेत् ॥ १२२ ॥**

**योनिः = एकारः । माया = ह्रीं । अधरः = ऐकारः । सेन्दुः = सानुस्वारः। वधूः = स्त्रींकारः। कूर्चं = हूङ्कारः ।**

मुँह को बड़ा बना कर जीभ को नीचे की ओर लपलपावे एवं चलावे । उसके पार्श्व में दोनों मुट्ठियों को स्थापित करे, तब 'लेलिहाना मुद्रा' बन जाती है । योनिः (एकार), माया (ह्रीं), अधर (ऐकार), बिन्दु (सानुस्वार), वधूः (स्त्रींकार), कूर्च (हूङ्कार)—इन वीजों का उच्चारण करते हुये मन्त्री मुद्राबन्धन करे ॥१२१-१२२॥

**श्रीमत्त्रिपुरसुंदर्याः कथ्यन्ते नवमुद्रिकाः ।**

**ज्ञानार्णवे—**

**क्षोभणद्रावणाकर्षवश्योन्मादमहांकुशाः ॥ १२३ ॥**
**खेचरीबीजयोन्याख्या नवमुद्रास्त्वनुक्रमात् ।**

अब श्रीमत्त्रिपुरसुन्दरी की नवमुद्रा कहता हूँ । ज्ञानार्णवतन्त्र में भी बतलाया गया है—१. क्षोभण, २. द्रावण, ३. आकर्षण, ४. वश्य, ५. उन्माद, ६. महाङ्कुश, ७. खेचरी, ८. बीज और ९. योनि—ये त्रिपुरसुन्दरी की नव मुद्रायें कही गई हैं ॥ १२३-१२४ ॥

### १. क्षोभणीमुद्राकथनम्

**अथैतासां लक्षणानि निगद्यन्ते क्रमेण हि ।**
**मध्यमां मध्यगे कृत्त्वा कनिष्ठेंऽगुंष्ठरोधिते ॥ १२४ ॥**
**तर्जन्यौ दण्डवत् कृत्त्वा मध्यमोपर्य्यनामिके ।**
**एषा च प्रथमा मुद्रा सर्वसङ्क्षोभकारिणी ॥ १२५ ॥**

**कनिष्ठेऽङ्गुष्ठेति सन्धिः छान्दसः ।**

अब क्रमशः इनका लक्षण कहता हूँ । मध्यमा को मध्य पर स्थापित करे और दोनों कनिष्ठा को दोनों अङ्गूठों से रोके । दोनों तर्जनीयों को दण्डवत् कर मध्यमा के ऊपर दोनों अनामिका स्थापित करे । यह प्रथमा 'क्षोभणी' नाम की मुद्रा है जो सबको क्षुब्ध करने वाली है ॥ १२४-१२५ ॥

यहाँ 'कनिष्ठेऽङ्गुष्ठै' में सन्धि छान्दस है । क्योंकि एकार रूप द्विवचन होने के कारण 'इदूदेद्विवचनम्' से प्रगृह्य सञ्ज्ञा और प्रगृह्य सञ्ज्ञा के प्रकृतिभाव होने से सन्धि नहीं होनी चाहिये ।

**एतस्या एव मुद्राया मध्यमे सरले यदा ।**
**क्रियते परमेशानि सर्वविद्राविणी तदा ॥ १२६ ॥**

इसी मुद्रा के मध्यमा को, जब सरल (सीधे) रखे, तब हे ईशानि! यह 'सर्व-विद्राविणी मुद्रा' बन जाती है ॥ १२६ ॥

**मध्यमातर्जनीभ्यां च कनिष्ठानामिके समे ।**
**अंकुशाकाररूपाभ्यां मध्यमे परमेश्वरि ॥ १२७ ॥**
**अङ्गुष्ठं तु नियुञ्जीत कनिष्ठानामिकोपरि ।**
**इयमाकर्षिणी मुद्रा त्रैलोक्याकर्षणक्षमा ॥ १२८ ॥**

**अंकुशाकाररूपाभ्यां मध्यमातर्जनीभ्यां विशिष्टा मध्यमे तादृशमध्यमातर्जन्यो-र्मध्यवर्त्तिन्यौ कनिष्ठानामिके समे पूर्वमुद्रातुल्ये ।**

अंकुशाकार रूप मध्यमा तर्जनी से विशिष्ट जब दोनों मध्यमा तर्जनी के मध्यवर्त्ति कनिष्ठा नामिका को पूर्व मुद्रा के तुल्य बना दिया जाय, तब 'आकर्षिणी मुद्रा' बन जाती है, जो समस्त त्रैलोक्य के आकर्षण में सक्षम है ॥१२७-१२८॥

**पुटाकारौ करौ कृत्त्वा तर्जन्यावंकुशाकृती ।**
**परिवर्तक्रमेणैव मध्यमे तदधोगते ॥ १२९ ॥**
**क्रमेण देवि तेनैव कनिष्ठाऽनामिकादयः ।**
**संयोज्य निविडाः सर्वा अङ्गुष्ठावग्रदेशतः ।**
**मुद्रेयं परमेशानि सर्ववश्यकरी स्मृता ॥ १३० ॥**

**कनिष्ठानामिकादय इति । कनिष्ठानामिकापदं दक्षहस्तकनिष्ठानामिकापरम् । आदिपदेन वामहस्तकनिष्ठानामिकापरिग्रहः । अङ्गुष्ठावग्रदेशत इति । अंकुशाकारयोस्तर्जन्योरग्रदेशेंऽगुष्ठौ योजयेदिति शेषः ।**

दोनों हाथों को पुट के आकार का बनाकर, दोनों तर्जनियों को अंकुशाकार बनावे । फिर परिवर्त्त क्रम से दोनों मध्यमा को उसके नीचे रखे । हे देवि! उसी क्रम से कनिष्ठा एवं नामिका आदि को परस्पर संयुक्त कर सघन बना लेवे । फिर दोनों अङ्गूठों को उसके आगे मिला देवे । हे परमेश्वरि! यह मुद्रा 'सर्ववश्यकरी' कही गई है ॥ १२९-१३० ॥

'कनिष्ठानामिकादय इति' यहाँ कनिष्ठानामिका पद दाहिने हाथ के कनिष्ठा और अनामिका पद का बोधक है । आदि पद का अर्थ—बायें हाथ के कनिष्ठा और अनामिका का बोधक है । अङ्गुष्ठाग्रदेशतः का तात्पर्य—अंकुशाकार दोनों तर्जनियों के अग्रभाग में दोनों अङ्गुष्ठ को मिला देवे ।

**सम्मुखौ तु करौ कृत्त्वा बध्वा ते मध्यमेऽन्त्यजे ।**
**अनामिका तु सरले तद्बहिस्तर्जनीद्वयम् ॥ १३१ ॥**
**दण्डाकारं ततोंऽगुष्ठौ मध्यमा नखदेशगौ ।**
**मुद्रैषोन्मादिनी नाम क्लेदिनी सर्वयोषिताम् ॥ १३२ ॥**

**अंत्यजे कनिष्ठे दक्षिणहस्तकनिष्ठां वामहस्तमध्यमया बध्वा वामहस्तकनिष्ठां दक्षिणहस्तमध्यमया बध्वा मध्यमयोर्नखदेशयोः अङ्गुष्ठौ निःक्षिपेदित्यर्थः ।**

दोनों हाथ को सामने रखकर दाहिने हाथ की कनिष्ठा को बायें हाथ की मध्यमा से बाँध देवे । बायें हाथ की कनिष्ठा को दाहिने हाथ की मध्यमा से बाँध कर दोनों मध्यमा के नखदेश में दोनों अङ्गूठों को डाल देवे । यह 'उन्मादिनी मुद्रा' बन जाती है जो सभी स्त्रियों को स्त्रवित करने वाली कही गई है ॥ १३१-१३२॥

**अस्यास्त्वनामिकायुग्ममधःकृत्त्वांकुशाकृती ।**
**तर्जन्यावपि तेनैव क्रमेण विनियोजयेत् ॥ १३३ ॥**
**इयं महांकुशा मुद्रा सर्वकामार्थसाधिनी ।**
**सव्यं दक्षिणदेशे तु सव्यदेशे तु दक्षिणम् ॥ १३४ ॥**
**बाहुं कृत्त्वा महादेवि हस्तौ सम्परिवर्त्य च ।**
**कनिष्ठाऽनामिका देवि युक्तानेन क्रमेण तु ॥ १३५ ॥**
**तर्जनीभ्यां समाक्रान्ते सर्वोर्ध्वमपि मध्यमे ।**
**अङ्गुष्ठौ च महेशानि सरलावपि कारयेत् ॥ १३६ ॥**
**इयं सा खेचरी मुद्रा पार्थिवस्थानयोजिता ।**

**पार्थिवस्थानं ललाटं न तु मूलाधारमसम्भवादिति मन्त्रदर्पणः ।**

महाकुंशा मुद्रा में दोनों अनामिकाओं को अंकुशाकृति बनाकर नीचे करे। इसी प्रकार दोनों तर्जनियों को भी उसी क्रम से स्थापित करे, यही 'महाङ्कुशा मुद्रा' कही गई है, जो सब प्रकार की कामनायें देने वाली है। बायें बाहु को दाहिने बाहु पर रखे और बायें बाहु पर दाहिना बाहु रखे। फिर हाथों को उलट देवे, हे देवि! इसी क्रम से कनिष्ठा एवं अनामिका को एक में मिला देवे। फिर दोनों मध्यमा को ऊपर कर दोनों तर्जनियों से उसे आच्छादित करे। हे महेशानि! फिर दोनों अङ्गूठो को सीधा करे। तदनन्तर उसे अपने ललाट में स्थापित करे, तब यह 'खेचरी मुद्रा' बन जाती है ॥ १३३-१३६ ॥

यहाँ पार्थिवस्थान का अर्थ ललाट है मूलाधार अर्थ नहीं। क्योंकि वहाँ स्थापन असम्भव है।

**परिवर्त्य करौ स्पष्टावर्धचन्द्राकृतिः प्रिये।**
**तर्जन्यङ्गुष्ठयुगलं युगपत् कारयेत् ततः ॥ १३७ ॥**
**अधःकनिष्ठावष्टब्धे मध्यमे विनियोजयेत्।**
**तथैव कुटिले योज्ये सर्वाधस्तादनामिके।**
**बीजमुद्रेयमचिरात् सर्वसिद्धिप्रवर्धिनी ॥ १३८ ॥**

मन्त्रदर्पण के अनुसार—हे प्रिये! दोनों हाथों को उलट कर अर्धचन्द्राकृति में निर्माण करना चाहिए। फिर दोनों तर्जनी और अङ्गुष्ठ को एक साथ स्थापित करे। नीचे दोनों कनिष्ठा को स्थिर कर दोनों मध्यमा रखे। उसी प्रकार दोनों अनामिका को टेढ़ी कर सबके नीचे संयुक्त करे। यही बीजमुद्रा है जो सर्वसिद्धि-प्रदा है ॥ १३७-१३८ ॥

**मध्यमे कुटिले कृत्वा तर्जन्युपरिसंस्थिते।**
**अनामिके मध्यगते तथैव हि कनिष्ठिके ॥ १३९ ॥**
**सर्वा एकत्र संयोज्या अङ्गुष्ठपरिपीडिताः।**
**एषा तु प्रथमा मुद्रा योनिमुद्रेति कीर्तिता ॥ १४० ॥**

**योनिमुद्रा**—दोनों मध्यमा को टेढ़ी बनाकर, तर्जनी के ऊपर स्थापित करे और दोनों अनामिकाओं को मध्य में, उसी प्रकार दोनों कनिष्ठाओं को मध्य में रखकर सबको एक में मिला देवे। फिर उसे दोनों अङ्गूठों से दबा देवे, यह सर्वश्रेष्ठ 'योनिमुद्रा' कही गई है ॥ १३९-१४० ॥

**अन्या मुद्राऽपि पूजायां कुशलाद्युपचारके।**
**दर्शयेत् साधको भक्त्या सपर्याफलसिद्धये ॥ १४१ ॥**

कुशलादि उपाचार प्रदर्शन के लिये तथा पूजा में अन्य भी मुद्रायें कही गई हैं। साधक पूजा शिष्टाचारादि प्रदर्शन के लिये भक्तिपूर्वक प्रदर्शित करे ॥ १४१॥

**आसां लक्षणं लक्षसंग्रहे—**

**हस्तौ तु संहतौ कृत्त्वा संहतावुन्नताङ्गुलीः ।**
**तलान्तर्मिलिताङ्गुष्ठौ मुद्रैषा पद्मसंज्ञिका ॥ १४२ ॥**

इनका लक्षण लक्षसंग्रह में कहा गया है—दोनों हाथों को एक में मिला देवे । इसी प्रकार सभी अङ्गुलियों को एक में मिला देवे । फिर दोनों अङ्गूठों को दोनों करतल के भीतर मिला देवे । तब 'पद्म' सञ्ज्ञक मुद्रा बन जाती है ॥ १४२ ॥

**कनिष्ठानामिकामध्या व्यत्यस्ता पृष्ठतः क्रमात् ।**
**चलिता मूर्धयोगेन ऋजुतर्जनिकौ करौ ॥ १४३ ॥**

कनिष्ठा, अनामिका एवं मध्यमा—इन्हें पृष्ठ-क्रम से उलट देवे, फिर ऊपर से चलावे और दोनों हाथ की तर्जनियों को सीधा रखे ॥ १४३ ॥

**शक्त्युत्थापनमुद्रैषा जपपूजासमाधिषु ।**
**मूर्तीकरणमेतस्या रचनेन समीरितम् ॥ १४४ ॥**

यह शक्ति स्थापन मुद्रा है जिसका उपयोग जप, पूजा और समाधि में किया जाता है । इसकी रचना से मूर्त्तीकरण कहा गया है ॥ १४४ ॥

**आसने पद्ममुद्रा स्याद् हस्तद्वयमधोमुखम् ।**
**मुद्रैषा कुशलप्रश्ने तदेवोर्ध्वमुखं पुनः ॥ १४५ ॥**
**मुद्रा स्यात् स्वागते पाद्यमुद्रा चाञ्जलिरुच्यते ।**
**अनामाङ्गुष्ठयोगात् सा प्रोक्ता चार्घ्यस्य मुद्रिका ॥ १४६ ॥**

आसन के लिये 'पद्ममुद्रा' का उपयोग करे । दोनों हाथों को नीचे की ओर रखे यह 'कुशल प्रश्न' की मुद्रा है । पुनः उसे ऊर्ध्वमुख करे तब 'स्वागत मुद्रा' बन जाती है । अञ्जलि बाँध लेवे तब 'पाद्यमुद्रा' बन जाती है । अनामा अङ्गूठा को एक में मिला दे, तब 'अर्घमुद्रा' बन जाती है ॥ १४५-१४६ ॥

**उत्तानं दक्षिणं हस्तं कृत्त्वा निम्नतलं सुधीः ।**
**कनिष्ठहीनाः संयुक्ताश्चतस्रोऽगुल्य उत्तमाः ॥ १४७ ॥**
**मुद्रैषाचमने प्रोक्ताऽधोमुखी सा त्वनामया ।**
**मुष्ट्यङ्गुष्ठा भवेन्मुद्रा मधुपर्के वरानने ॥ १४८ ॥**
**अधोमुखीं दक्षहस्ते कृत्त्वा मुष्टिं कनिष्ठया ।**
**वियुक्ता स्नानमुद्रैषा गदिता परमेश्वरि ॥ १४९ ॥**

**आचमन, मधुपर्क और स्नानमुद्रा**—दाहिने हाथ को ऊपर उठावे, फिर कनिष्ठारहित अङ्गूठे सहित चार अङ्गुलियों को नीचे की ओर करे, यह मुद्रा

'आचमन' में कही गई है । यदि मुट्ठी बाँधकर अनामा के साथ अङ्गूठा को मिला देवे, तब हे वरानने! ऐसी मुद्रा 'मधुपर्क' में उपयुक्त की जाती है । कनिष्ठा को छोड़कर दाहिने हाथ की मुट्ठी अधोमुखी बनावे, तब हे परमेश्वरि! वह 'स्नान मुद्रा' बन जाती है ॥ १४७-१४९ ॥

**उत्तानं दक्षिणं हस्तं कृत्त्वा तन्मध्यमां पुनः ।**
**अङ्गुष्ठेन स्पृशेदेषा मुद्रा वस्त्रस्य कीर्तिता ॥ १५० ॥**

**वस्त्र मुद्रा**—दाहिने हाथ को उतान कर पुनः मध्यमा को अङ्गूठे से स्पर्श करे, तब यह वस्त्र की मुद्रा कही जाती है ॥ १५० ॥

**एषैवानामिकाहस्ता मुद्रा भूषणसञ्ज्ञका ।**
**कनिष्ठास्पर्शतो ह्येषा उपवीतस्य मुद्रिका ॥ १५१ ॥**

**भूषणमुद्रा, उपवीत मुद्रा**—यदि अङ्गूठे से अनामिका का स्पर्श करे, तब 'भूषण' सञ्ज्ञक मुद्रा बन जाती है, यदि अङ्गूठे से कनिष्ठा का स्पर्श करे तब 'उपवीत' की मुद्रा बन जाती है ॥ १५१ ॥

**ज्येष्ठाग्रेण कनिष्ठाग्रं स्पृशेद् गन्धस्य मुद्रिका ।**
**अधोमुखं करं कृत्त्वा तर्जन्यग्रे तु योजयेत् ।**
**अङ्गुष्ठाग्रं तु मुद्रैषा पुष्पाख्या परमेश्वरि ॥ १५२ ॥**

**गन्धमुद्रा, पुष्पमुद्रा**—अङ्गूठे से कनिष्ठा का स्पर्श करे, तब 'गन्ध मुद्रा' बन जाती है । हाथ को नीचे कर अङ्गूठे से तर्जनी के अग्रभाग से युक्त करे, तब हे परमेश्वरि! यह 'पुष्प मुद्रा' बन जाती है ॥ १५२ ॥

**अङ्गुष्ठाग्रेण तर्जन्या स्पृशेदग्रं महेश्वरि ।**
**धूपमुद्रेयमाख्याता सर्वदेवप्रियङ्करी ॥ १५३ ॥**

**धूपमुद्रा**—हे परमेश्वरि! जब अङ्गुष्ठ के अग्रभाग से तर्जनी के अग्रभाग का स्पर्श करे, तब 'धूपमुद्रा' बन जाती है, जो सभी देवों को प्रियकारक है ॥१५३॥

**ज्येष्ठाग्रेण स्पृशेदग्रं मध्यमायाः सुरार्चिते ।**
**दीपमुद्रेयमुदिता सर्वदेवप्रिया शिवे ॥ १५४ ॥**

**दीपमुद्रा**—हे सुरार्चिते! जब अङ्गूठे के अग्रभाग से मध्यमा के अग्रभाग का स्पर्श किया जाय, तब हे शिवे! यह 'दीपमुद्रा' कही जाती है, जो सर्वदेव प्रिया कही गयी है ॥ १५४ ॥

**अनामाग्रं स्पृशेद् देवि ज्येष्ठाग्रेण तु देशिकः ।**
**नैवेद्यमुद्रा कथिता देवानां प्रीतिदायिनी ॥ १५५ ॥**

**नैवेद्यमुद्रा**—जब आचार्य अङ्गूठे के अग्रभाग से अनामिका के अग्रभाग का स्पर्श करे, तब वह 'नैवेद्य मुद्रा' कही जाती है, जो देवताओं को अत्यन्त प्रीतिदायक है ॥ १५५ ॥

**पाशांकुशवराभीतिपुस्तकज्ञानमुद्रिकाः ।**
**योनिं च बीजमुद्रां च भुवनेशीं प्रदर्शयेत् ॥ १५६ ॥**

पाश, अंकुश, वर, अभय, पुस्तक, ज्ञानमुद्रा और योनिमुद्रा तथा बीजमुद्रा भुवनेशी को प्रदर्शित करनी चाहिये ॥ १५६ ॥

**कामेन मुद्रां बध्वा तु मूलेनैव प्रदर्शयेत् ।**
**कूर्चेनैव परित्यज्य बहिः पूजनमाचरेत् ॥ १५७ ॥**
**वाममुष्टिः स्वाभिमुखी करस्था पुस्तमुद्रिका ।**

**पुस्तमुद्रा पुस्तकेति ।**

काम (क्लीं) से मुद्रा बनाकर मूल मन्त्र से दिखावे और कूर्च (हुँ) का परित्याग करे । तब बाह्य पूजा आरम्भ करनी चाहिये । बायीं मुट्ठी अपने सामने रखे, तब 'पुस्तक मुद्रा' बन जाती है ॥ १५७-१५८ ॥

पुस्तमुद्रा ही पुस्तक मुद्रा है ।

**लक्ष्मीमुद्रा प्रिया लक्ष्म्यास्तस्या लक्षणमुच्यते ॥ १५८ ॥**
**चक्रमुद्रां तथा बध्वा मध्यमे द्वे प्रसार्य च ।**
**कनिष्ठिके तथानीय तदग्रेंऽगुष्ठकौ क्षिपेत् ॥ १५९ ॥**
**लक्ष्मीमुद्रा परा ह्येषा सर्वसम्पत्प्रदायिनी ।**

लक्ष्मी मुद्रा लक्ष्मी को अत्यन्त प्रिय है । अब उसका लक्षण कहता हूँ । चक्र मुद्रा बाँधकर, दोनों मध्यमा फैला देवे, फिर दोनों कनिष्ठा को सामने लाकर उसके अग्रभाग पर दोनों अङ्गूठा स्थापित करे । यह सर्वोत्तम लक्ष्मीमुद्रा है, जो सब प्रकार की सम्पत्ति प्रदान करने वाली है ॥ १५८-१६० ॥

**अक्षमाला तथा वीणा व्याख्या पुस्तकमुद्रिका ॥ १६० ॥**
**सरस्वत्याः प्रिया एता मुद्रा प्रोक्ता मनीषिभिः ।**
**अथैतासां लक्षणानि निगद्यन्ते क्रमेण हि ॥ १६१ ॥**

अक्षमाला, वीणा, व्याख्या और पुस्तक मुद्रा—ये मुद्रायें भगवती सरस्वती को प्रिय हैं, ऐसा मनीषियों ने बतलाया है, अब मैं आपसे क्रमशः उनके लक्षणों को कहता हूँ ॥ १६०-१६१ ॥

**मन्त्रदर्पणे—**

**किञ्चिद् वक्त्रा अपराः कर्त्तव्यास्तर्जनी सरला ।**

**मध्यममध्येंऽगुष्ठं दक्षस्य च मालिका मुद्रा ॥ १६२ ॥**

मन्त्रदर्पण में भी बतलाया गया है—१. अक्षमाला मुद्रा—दाहिने हाथ की तर्जनी को सीधे खड़ी रखे, शेष अङ्गुलियों को टेढ़ी कर, मध्यमा के मध्य में अङ्गूठे को स्थापित करे । तब 'अक्षमाला मुद्रा' बन जाती है ॥ १६२ ॥

**वीणावादनसदृशौ हस्तौ कृत्वैव चालयेत् शीघ्रम् ।**
**वीणामुद्रा वाण्याः प्रियङ्करी सा समाख्याता ॥ १६३ ॥**

२. वीणामुद्रा—दोनों हाथों को वीणा वादन के समान बनाकर शीघ्रता से चलावे, तब वाणी की प्रियङ्करी 'वीणामुद्रा' बन जाती है ॥ १६३ ॥

**दक्षिणकरमुत्तानं कृत्त्वा सरला कनिष्ठायाः ।**
**तर्जन्यङ्गुष्ठाग्रे कथिता व्याख्यानमुद्रैषा ॥ १६४ ॥**

**पुस्तकमुद्रालक्षणं पूर्वमेवोक्तम् ।**

३. व्याख्यानमुद्रा—दाहिने हाथ को उतान रखे और सरला कनिष्ठा को तर्जनी अङ्गुष्ठाग्र में स्थापित करे । तब यह 'व्याख्यान मुद्रा' कही जाती है । ४. 'पुस्तकमुद्रा' का लक्षण पहले ही कह चुके हैं ॥ १६४ ॥

**तन्त्रान्तरे—**

**प्रकुर्याद्दक्षिणं हस्तं मालया जपवत् प्रिये ।**
**मुद्रा मालाभिधा प्रोक्ता बालवाण्यो रतिप्रिया॥ १६५ ॥**

तन्त्रान्तर में भी कहा गया है—हे प्रिये! दाहिने हाथ को माला जप के समान बनावे, तब 'माला मुद्रा' बन जाती है यह बाला, वाणी और रति को प्रिय कही गयी है ॥ १६५ ॥

**तन्त्रसारेऽपि—**

**वीणावादनवद् हस्तौ कृत्त्वा सञ्चालयेत् शिरः ।**
**वीणामुद्रेयमाख्याता सरस्वत्याः प्रियङ्करी ॥ १६६ ॥**

तन्त्रसार में भी बतलाया गया है—वीणा वादन के समान दोनों हाथों को बनाकर शिरः सञ्चालन करे, यह 'वीणा मुद्रा' कही जाती है, जो सरस्वती को अत्यन्त प्रिय है ॥ १६६ ॥

**दक्षिणाङ्गुष्ठतर्जन्यावङ्गुष्ठाग्रेऽपरागुलीः ।**
**प्रसार्य संहतोत्ताना एषा व्याख्यानमुद्रिका ॥ १६७ ॥**
**श्रीरामस्य सरस्वत्या अत्यन्तं प्रेयसी मता ।**

दाहिने हाथ की तर्जनी और अङ्गूठे को एक में मिलावे । फिर अङ्गूठे के आगे

और अङ्गुलियों को फैला कर, एक में मिला कर, उतान करे । तब 'व्याख्यान मुद्रा' बन जाती है ॥ १६७-१६८ ॥

यह व्याख्यान मुद्रा श्रीराम और सरस्वती को अत्यन्त प्रिय मानी गई है ।

**मणिबन्धस्थितौ कृत्त्वा प्रसृताङ्गुलिकौ करौ ॥ १६८ ॥**
**कनिष्ठाङ्गुष्ठयुगले मिलित्वान्तःप्रसारयेत् ।**
**सप्तजिह्वाख्यमुद्रेयं वैश्वानरप्रियङ्करी ॥ १६९ ॥**

दोनों हाथ की अङ्गुलियों को फैलाकर एक दूसरे के मणिबन्ध पर स्थापित करे । फिर दोनों हाथ की कनिष्ठा और अङ्गूठे को मिलाकर भीतर फैला देवे । यह 'सप्तजिह्वा' नाम की मुद्रा अग्निदेव की अत्यन्त प्रियङ्करी है ॥ १६८-१६९॥

**न देवाः प्रतिगृह्णन्ति मुद्राहीनामथाहुतिम् ।**
**मुद्रयैव तु होतव्यं मुद्राहीनं न युज्यते ॥ १७० ॥**

देवता लोग मुद्रा हीन आहुति नहीं ग्रहण करते । इसलिये मुद्रा बना कर ही होम करे । मुद्रा के बिना होम करना उचित नहीं है ॥ १७० ॥

**मुद्राहीनं तु यो मोहाद् होतुमिच्छति मन्दधीः ।**
**यजमानं स चात्मानं पातयत्येव निश्चितम् ॥ १७१ ॥**

जो मूर्ख बिना मुद्रा के होम करने की इच्छा रखता है । वह यजमान को और अपने को भी निश्चित रूप से नरक में गिराता है ॥ १७१ ॥

**तिस्रो मुद्राः स्मृता होमे मृगी हंसी च शूकरी ।**
**प्रोक्ता होमप्रकरणे तेन चात्र न लिख्यते ॥ १७२ ॥**

होम में मृगी, हंसी एवं शूकरी—ये तीन मुद्रायें कही गई हैं, जिन्हें होम प्रकरण में हम कह आये हैं । इसलिये यहाँ नहीं लिखते ॥ १७२ ॥

**तन्त्रसारे—**

**तर्जन्यङ्गुष्ठयोगाद्धि शान्त्यर्थं जुहुयात् तदा ।**
**दाहज्वराभिचाराणामनामाङ्गुष्ठमुद्रया ॥ १७३ ॥**
**विद्वेषणोच्चाटने च मारणे च प्रशस्यते ।**
**प्रदेशिनीमध्यमाभ्यां बाधोपशमनं भवेत् ॥ १७४ ॥**

तन्त्रसार में भी बतलाया गया है—शान्ति के लिये तर्जनी और अङ्गूठे को मिलाकर ही होम करे । दाह, ज्वर एवं अभिचार में अनामिका अङ्गूठे को मिलाकर होम करे । विद्वेषण, उच्चाटन और मारण में प्रदेशिनी मध्यमा मिलाकर होम करे । इससे बाधा की शान्ति भी हो जाती है ॥ १७३-१७४ ॥

**वपुर्मेधा तथा कान्तिर्नीतिपुष्ट्यादिके तथा।**
**आकर्षणानि सर्वाणि दूरादनुगतानि च।**
**तर्जन्यनामिकायोगात् सद्य एव भवन्ति हि ॥ १७५ ॥**

शरीर, मेधा, कान्ति, नीति, पुष्ट्यादि सभी प्रकार के आकर्षण जो दूर के हों, अथवा सन्निकट के हों, वे सभी तर्जनी और अनामिका को मिलाकर होम करने से सिद्ध हो जाते हैं ॥ १७५ ॥

**मोहनं वश्यकामं च प्रीतिसंवर्धनं तथा।**
**प्रदेशिनीकनिष्ठाभ्यां सर्वमेतत् प्रसिद्ध्यति ॥ १७६ ॥**

मोहन, वशीकरण एवं प्रीतिसंवर्धन—ये सभी प्रदेशिनी और कनिष्ठा के योग द्वारा होम करने से सिद्ध हो जाते हैं ॥ १७६ ॥

**मोहनाकर्षणौ चैव क्षोभणोच्चाटने तथा।**
**कनिष्ठामध्यमाङ्गुष्ठयोगेन न तु लीलया ॥ १७७ ॥**

मोहन, आकर्षण, क्षोभण एवं उच्चाटन, कनिष्ठा, मध्यमा और अङ्गुष्ठ को मिलाकर होम करने से खेल ही खेल में सिद्ध हो जाते हैं ॥ १७७ ॥

**विधियुक्तेन होमेन तथा द्रव्यानुयोगतः।**
**सर्वे मन्त्राः प्रसिध्यन्ति मुद्रामन्त्रप्रयोगतः ॥ १७८ ॥**
**प्रार्थनायां तु विज्ञेया मुद्रा प्रार्थननामिका।**

विधि युक्त होम से, सद् द्रव्य के अनुयोग से तथा मुद्रा मन्त्र के ठीक तरह से प्रयोग से सभी मन्त्र सिद्ध हो जाते हैं। प्रार्थना में 'प्रार्थना' नामक मुद्रा का उपयोग करना चाहिये ॥ १७८-१७९ ॥

**तन्त्रसारे—**

**प्रसृताङ्गुलिकौ हस्तौ मिथःश्लिष्टौ च सम्मुखे।**
**कुर्यात् स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका ॥ १७९ ॥**

जैसा कि तन्त्रसार में कहा गया है—दोनों हाथों की अङ्गुलियों को फैलाकर, दोनों हाथों को एक में सटाकर सामने करे और हृदय पर स्थापित करे। तब वह 'प्रार्थना मुद्रा' बन जाती है ॥ १७९ ॥

**अङ्गुष्ठानामिकाभ्यां तु वटुकस्य बलिः स्मृतः।**
**तर्जनीमध्यमानामाङ्गुष्ठैः स्याद् योगिनीबलिः ॥ १८० ॥**

अनामिका अङ्गुष्ठा मिलाकर बटुक को बलि देनी चाहिये। तर्जनी, मध्यमा, अनामा और अङ्गूठा मिला कर योगिनियों को बलि देनी चाहिये ॥ १८० ॥

